॥ लक्ष्मीवेंकटेश्वराय नमः ॥

ज्योतिर्विद्दयादत्तात्मजरामदीनपंडितवर्यसंगृहीतं

# बृहद्दैवज्ञरंजनम् ।

तदेतत्

श्रीकृष्णदासात्मज-गंगाविष्णुना

स्वकीये "लक्ष्मीवेङ्कटेश्वर" यन्त्रालये

मुद्रयित्वा प्रकाशितम् ।

संवत् १९८१, शकाब्दाः १८४६.

कल्याण-मुंबई.

# भूमिका ।

स्वस्ति श्रीमन्महाराजाधिराजद्विजराजरमेश महेशचरण शरण गुणिगणमंडन परपक्षखंडन सर्वजनरंजन सर्वविद्याधारी सुजनसुखकारी करुणासागर राजकृत्यनागर गीतनृत्यादिसारपारं मारसमरूप भूपकृतयूप काशिराज श्री १०८ ईश्वरीप्रसाद नारायणसिंह० जी० सी० यस्० आईके पौत्र श्रीआदित्यप्रसाद नारायणसिंहजूके विवाहोत्सवमें एक नाडीकूटका ज्योतिर्विद्गणेशदत्तसे विवाह हुआ उक्तमहाराजकी आज्ञासे इस संसारमें अपनी इच्छासे भगवानने ज्योतिष शास्त्रको प्रगट कियाँ और पाराशरादि ऋषियोंने सहस्रों वर्ष तप करके शास्त्रसे अपने अपने नामका ज्योतिष शास्त्र निर्माण करके सब भारतवासियोंका अज्ञान दूर करनेके वास्ते यह ज्योतिषशास्त्र रचा वह ज्योतिषशास्त्रका पूर्ण विचार कर शिष्यजनोंकी मति विशद होनेके वास्ते तदाश्रितज्योतिर्विच्छिरोमणि श्रीपंडित गयादत्तात्मज रामदीनने श्रीपंडित भगवती प्रसादके सहायतासे इस बृहद्दैवज्ञरंजनका संग्रह किया इसमें नामकर्मादि सोलह संस्कारोंका विवरण सुगमताके किये गये हैं यह ग्रंथ देखनेसे सब विद्यार्थिजनोंका बहुत आनंदही होगा० जिसके हर प्रकरण देखनेसे विचित्रचमत्कार देख पडता है जिसको श्रीलक्ष्मीवेंकटेश्वरका कृपापात्राधिकारी सज्जन जनोंका हितकारी गोब्राह्मणप्रतिपालक सर्वोपकारी निजमित्रसहचारी दुष्टाशयध्वंसी धर्ममार्गमें प्रशंसायोग्य शुभवंशी गंगाविष्णु श्रीकृष्णदासजीने पंडितों द्वारा अतिशुद्ध कराय अपने 'श्रीलक्ष्मीवेंकटेश्वर' छपाखानामें मुद्रित कराके प्रकाश किया संवत् १९८१.

पुस्तक मिलनेका ठिकाना—

गङ्गाविष्णु श्रीकृष्णदास,
"लक्ष्मीवेङ्कटेश्वर" छापाखाना,
कल्याण–मुंबई.

अथ

# बृहद्दैवज्ञरञ्जनस्य विषयानुक्रमाणिका ।

विषयाः .... पृष्ठांकाः

इति बृहद्दैवज्ञरञ्जनस्यानुक्रमणिका समाप्ता।


पुस्तक मिलनेका ठिकाना—

गङ्गाविष्णु श्रीकृष्णदास,

" लक्ष्मीवेंकटेश्वर " छापाखाना,

कल्याण-मुंबई.

॥ श्रीगणेशाय नमः ॥

अथ

ज्योतिर्वित्पंडितरामदीनेन संगृहीतं

# बृहद्दैवज्ञरंजनम् ।

## अथ ज्योतिःशास्त्रप्रशंसा नाम प्रथमं प्रकरणम् ।

मंगलाचरणम् । वर्णैश्चतुर्भिर्विलसंति यत्र क्रमेण शक्तीनविनायकाच्युताः । अंगी शिवश्च प्रणवेन यत्समं ददातु तन्मे शिवनाम मंगलम् ॥ १ ॥ वंदे शैलसुतापतिं शशिधरं विघ्नौघविध्वंसनं विद्यादानविधानदायकपरं सेव्यं सदा सूरिभिः । श्रीकाशीशसभानिवासनिपुणः श्रीरामदीनः सुधीः कुर्याद्रंजनसंग्रहं बृहतरं दैवज्ञपूर्वान्वितम् ॥ २ ॥ विविधमुनिजनोक्तं ग्रंथपद्यातिगद्यैः श्रुतिसदृशसुवाक्यैः सारवाद्भिः सुधीनाम् । सकलजनहितार्थं सर्वशास्त्रार्थवेत्ता रचयति स तु शास्त्रं दैवविद्रंजनाख्यम् ॥ ३ ॥ ज्योतिषाचार्य्याः । नारदः—ब्रह्मा चार्यो वसिष्ठोत्रिर्मनुः पौलस्त्यरोमशौ । मरीचिरंगिरा व्यासो नारदः शौनको भृगुः ॥ ४ ॥ च्यवनो यवनो गर्गः कश्यपश्च पराशरः । अष्टादशैते गंभीरा ज्योतिःशास्त्रप्रवर्त्तकाः ॥ ५ ॥ वराहमिहिराचार्य्यः श्रीपतिः सत्यभास्करौ । लल्लसूरिर्ब्रह्मगुप्तौ वैद्यनाथश्च रेणुकः ॥ ६ ॥ एषां शास्त्राणि संवीक्ष्य सारमादाय यत्नतः । तदुक्तितोप्यहं कुर्वे बृहद्दैवज्ञरंजनम् ॥ ७ ॥ ज्योतिःशास्त्रप्रवृत्तिः । तत्त्वविवेके—ब्रह्मा प्राह च नारदाय हिमगुर्यच्छौनकायामलं मांडव्याय वसिष्ठसंज्ञकमुनिः सूर्यो मयायाह यत् । प्रत्यक्षागमयुक्तिशालि तदिदं शास्त्रं विहायान्यथा यत् कुर्वंति नराधमास्तु सदसद्वेदोक्तिशून्या भृशम् ॥ ८ ॥ रोमकः—ब्रह्मणा गदितं भानोर्भानुना यवनाय यत् । यवनेन च यत्प्रोक्तं ताजिकं तत्प्रकाशितम् ॥ ९ ॥ सूर्यसिद्धांते—दिव्यं ज्योतिर्मयं ज्ञानं साधु मां परिपृच्छसि । कथितं ब्रह्मणा पूर्वमवशेषं ब्रवीमि ते ॥ १० ॥ नारदोपि—विनैतदखिलं श्रौतस्मार्तकर्म न सिद्ध्यति । तस्माज्जगद्धितायेदं ब्रह्मणा रचितं पुरा ॥ ११ ॥ सिद्धांतसंहिताहोरारूपस्कंधत्रयात्मकम् । ज्योतिःशास्त्रं विनैतन्न श्रौतस्मार्तं च सिद्ध्यति ॥ १२ ॥ ज्योतिःशास्त्रं स्वर्णगर्भात् ज्ञात्वा ब्रह्मा ततो मुनीन् । अध्यापयामास पुनस्तैः पृथिव्यां प्रकाशितम् ॥ १३ ॥ वेदांगत्वानिरूपणम् । इदानीं ज्योतिःशास्त्रस्य वेदांगत्वं निरूप्यते भास्करीयसिद्धांते—वेदास्तावद्यज्ञकर्मप्रवृत्ता यज्ञाः प्रोक्तास्ते तु कालाश्रयेण । शास्त्रादस्मात्कालबोधो

यतः स्याद्वेदांगत्वं ज्योतिषस्योक्तमस्मात् ॥ १४ ॥ शब्दशास्त्रं मुखं ज्योतिषं चक्षुषी श्रोत्रमुक्तं निरुक्तं च कल्पः करौ । या तु शिक्षास्य वेदस्य सा नासिका पादपद्मद्वयं छंद आद्यैर्बुधैः ॥ १५ ॥ वेदचक्षुः किलेदं स्मृतं ज्योतिषं मुख्यता चांगमध्येऽस्य तेनोच्यते । संयुतोपीतरैः कर्णनासादिभिश्चक्षुषांगेन हीनो न किंचित्करः ॥ १६ ॥ अतः वेदांगत्वादवश्यमध्येतव्यं द्विजैरेव उक्तम् । ब्राह्मणपाठेऽधिकारः । तस्माद्द्विजैरध्ययनीयमेतत्पुण्यं रहस्यं परमं च तत्त्वम् । यो ज्योतिषं वेत्ति नरः स सम्यक् धर्मार्थकामान् लभते यशश्च ॥ १७ ॥ वसिष्ठोपि—अध्येतव्यं ब्राह्मणैरेव तस्मात् ज्योतिःशास्त्रं पुण्यमेतद्रहस्यम् । एतद्बुध्वा सम्यगाप्नोति यस्मादर्थं धर्मं मोक्षमग्र्यं यशश्च ॥ १८ ॥ अथ वेदांगत्वाच्छूद्राद्यध्ययने निषेधः । उक्तं च—स्नेहाद्वा लोभतो वापि शूद्रं पाठयति द्विजः । स याति नरकं घोरं यावदाभूतसंप्लवम् ॥ १९ ॥ लग्नं ददाति यः शूद्रो सकृत्षोडशकर्मणाम् । अधो युगसहस्राणि जायते श्वानयोनिषु ॥ २० ॥ सम्यगाचारयुक्तोपि यः शूद्रः सर्वशास्त्रवित् । वर्जयेद्वचनं तस्य कपालस्थोदकं यथा ॥ २१ ॥ विप्रवाक्यप्रशंसा । दुष्टो वापि विशिष्टो वा मूर्खो वा पंडितोपि वा । साक्षाद्ब्रह्म परं दैवविप्रवाक्यं सदा शुचिः ॥ २२ ॥ याज्ञवल्क्यः—पुराणन्यायमीमांसा धर्मशास्त्रांगमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥ २३ ॥ वृद्धमनुः—वेदोपवेदवेदांगमीमांसावेदसंहिताः । पुराणानि च धर्मस्य स्थानान्याहुः षडेव हि ॥ २४ ॥ मनुः—यज्ञाध्ययनसंक्रांतिग्रहषोडशकर्मणाम् । प्रयोजनं च विज्ञेयं तत्तत्कालविनिर्णयम् ॥ २५ ॥ अप्रत्यक्षाणि शास्त्राणि विवादस्तेषु केवलम् । प्रत्यक्षं ज्योतिषं शास्त्रं चंद्रार्कौ यत्र साक्षिणौ ॥ २६ ॥ अनुभूतिप्रदं नाम ज्योतिषं शास्त्रमुत्तमम् । निर्गमान्निर्गतं लोके वंद्यं विजयतेतराम् ॥ २७ ॥ मूलसूत्रे—यथा शिखा मयूराणां नागानां मणयो यथा । तद्वद्वेदांगशास्त्राणां ज्योतिषं मूर्ध्नि संस्थितम् ॥ २८ ॥ ज्योतिषे ग्रहणं सारं गारुडे विषभक्षणम् । शैवे घटवती दीक्षा कौलवे ग्रहनिग्रहौ ॥ २९ ॥ मन्वर्थमुक्तावल्याम्—चातुर्वर्ण्यं त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक् । भूतं भव्यं भविष्यं च सर्वं वेदात्प्रसिद्ध्यति ॥ ३० ॥ पितृदेवमनुष्याणां वेदचक्षुः सनातनम् । तच्चक्षुर्ज्योतिषं शास्त्रं दिव्यं ज्ञानमतींद्रियम् ॥ ३१ ॥ दिव्यं ज्ञानमिदं विप्रैः श्रौतस्मार्तक्रियापरैः । वेदवत्पठनीयं हि कर्मपाकप्रकाशकैः ॥ ३२ ॥ धूर्तदुर्जनदुर्द्वेषिकृतघ्नानां कदाचन । न प्रकाश्यमिदं शास्त्रं रहस्यं केवलं यतः ॥ ३३ ॥ गारुडे भूतवादे च ज्योतिषे वैद्यके तथा । कारणं प्रत्ययस्तत्र न तु शब्दविचारणा ॥ ३४ ॥ पितामहः—पुराणां नवमो धर्मः सांगो वेदचिकित्सितम् । आज्ञासिद्धानि चत्वारि न हंतव्यानि हेतुभिः ॥ ३५ ॥ वराहः—विरचितामिदमेतद्यापि तत्तेनेनाधुनाधुनिककृत्यम् । तुल्येर्थेक्षरभेदो दमात्रके का विशेषोक्तिः ॥ ३६

धरणिसुतदिवसचारो न शुभकृदिति यत्पितामहेनोक्तम् । कुजदिनमनिष्टमिति वा कोत्र विशेषो नृदिव्यकृतेः ॥ ३७ ॥ आर्ष्टिषेणिः–यथा क्षारादिसंतापैर्हेम्नोधिकतरा द्युतिः । तथैव नूतनोपायैः शास्त्रं निर्मलतां व्रजेत् ॥ ३८ ॥ भो बुधाधुनिकविप्रनिर्मितं शास्त्रमेतदिति मावजीगणः । केवलं तु कृत एव सूरिभिर्भाषितस्य मथितार्थसंग्रहः ॥ ३९ ॥ इति श्रीज्योतिर्विद्वयादत्तात्मजरामदीनकृते संग्रहे बृहद्दैवज्ञरंजने ज्योतिषशास्त्रप्रशंसा नाम प्रथमं प्रकरणं समाप्तम् ॥ १ ॥

---

## अथ दैवज्ञलक्षणं नाम द्वितीयं प्रकरणम् ।

अथ दैवज्ञलक्षणम् । नारदः–स्कंधत्रयात्मकं शास्त्रमाद्यं सिद्धांतसंज्ञकम् । द्वितीयं जातकं स्कंधं तृतीयं संहिताह्वयम् ॥ १ ॥ त्रिस्कंधज्ञो दर्शनीयः श्रौतस्मार्तक्रियापरः । निर्दांभिकः सत्यवादी दैवज्ञो दैववित्स्थिरः ॥ २ ॥ अत्रिः–शांतो विनीतः शुद्धात्मा देवब्राह्मणपूजकः । विमुखः परनिन्दासु वेदपाठी जितेंद्रियः ॥ ३ ॥ देवताराधनासक्तः स्वरशास्त्रविशारदः । सिद्धांतसंहितावेत्ता जातके च कृतश्रमः ॥ ४ ॥ प्रश्नज्ञः शकुनज्ञश्च प्रशस्तो गणकः स्मृतः । प्रमाणं वचनं तस्य भवत्येव न संशयः ॥ ५ ॥ कौमुद्याम्–व्यक्तांगः फलकालवित्सुकृतवान् पूर्वापरस्मारकः पाटीकुट्टकबीजशास्त्रकुशलः सिद्धांतवित्प्रांजलिः । भिन्नाभिन्नसवर्णनानुगुणने भूयो महानुद्यमी धीकोट्याद्विरहस्यवित्स गणकः श्लाघ्यो विदां संसदि ॥ ६ ॥ अथ दैवज्ञदोषाः । विश्रुतो विधनो लुब्धः कुचैलः कर्कशः शठः । कुष्ठी च वधिरश्चांधः पंगुर्निष्ठुरभाषकः ॥ ७ ॥ बंधुद्विट् बकवृत्तिश्च सदाचारविवर्जितः । कृतादेशो न सर्वत्र प्रष्टव्यो नैव दैववित् ॥ ८ ॥ अथ दैवज्ञप्रशंसा । वराहः–अप्रदीपा यथा रात्रिरनादित्यं यथा नभः । तथा सांवत्सरो लोके भ्रमत्यंध इवाध्वनि ॥ ९ ॥ गुरुः–दैवज्ञो दैववत्पूज्यो सर्वकार्येषु वृत्रहन् । यो दैवज्ञमनुज्ञाय किंचु कुर्यात्स नश्यति ॥ १० ॥ दैवं पुरस्कृतं कर्म भवेदुत्सवमैहिकम् । दैवज्ञं स्यावमन्याय पृष्टं नाशनमिच्छति । तस्मात्संपूज्य दैवज्ञं श्रुत्वा कुर्यात्सदा क्रियाम् ॥ ११ ॥ वराहः–नासांवत्सरिके देशे वस्तव्यं भूतिमिच्छता । चक्षुर्भूतो हि यत्रैषां तत्र पापं न विद्यते ॥ १२ ॥ ग्रंथतश्चार्थतश्चैव कृत्स्नं जानाति यो द्विजः । अग्रभुक्स भवेच्छ्राद्धे पूजितः पंक्तिपावनः ॥ १३ ॥ यस्तु सम्यग्विजानाति होरागणितसंहिताः । अभ्यर्च्यः स नरेंद्रेण स्वकर्तव्यो जयैषिणाम् ॥ १४ ॥ न सांवत्सरपाठी च नरकेषूपपद्यते । ब्रह्मलोके प्रतिष्ठां च लभते दैवचिंतकः ॥ १५ ॥ न तत्सहस्रं करिणां वाजिनां च चतुर्गुणम् । करोति विजयं राजा यथैको दैवचिंतकः ॥ १६ ॥ न तथेच्छति भूपतेः पिता जननी वा स्वजनोथ वा सुहृत् ।

स्वयशोभिविवृद्धये यथा हितमाप्तः सबलस्य। दैववित् ॥ १७ ॥ मुहूर्तं तिथिनक्ष मृतवश्चायनं तथा । अरण्ये व्याकुलानि स्युर्न स्यात्सांवत्सरो यदि ॥ १८ ॥ तस्माद्राज्ञाधिगन्तव्यो विद्वान् सांवत्सरोग्रणीः । जयं यशः श्रियो भोगान् श्रेयः समभीप्सता ॥ १९ ॥ गर्गः–कृत्स्नांगोपांगकुशलं होरागणितनैष्ठिकम् । यो पूजयते राजा स नाशमुपगच्छति ॥ २० ॥ वनं समाश्रिता ये न निर्ममा निःपा ग्रहाः । अपि ते परिपृच्छंति ज्योतिषां गतिकोविदम् ॥ २१ ॥ म्लेच्छा यवनास्तेषु सम्यक् शास्त्रमिदं स्थितम् । ऋषिवत्तेपि पूज्यंते किं पुनर्दैववि द्विजः ॥ २२ ॥ ज्योतिषे ताजिकाचार्या उक्ताः । टोडरानंदे–खतः खुतो रोमक हिल्लाजो धिषणाह्वयः । दुर्मुखाचार्य इत्येते ताजिकस्य प्रवर्तकाः ॥ २३ ॥ अथ नक्षत्रसूचिलक्षणम् । तिथ्युत्पत्तिं न जानाति ग्रहाणां नैव साधनम् । परवाक्येन वर्तंते ते वै नक्षत्रसूचकाः ॥ २४ ॥ अविदित्वैव यः शास्त्रं दैवज्ञत्वं प्र द्यते । स पंक्तिदूषकः पापो ज्ञेयो नक्षत्रसूचकः ॥ २५ ॥ दशदिनकृतपापं हंति सिद्धां तवेत्ता त्रिदिनजनितदोषं तंत्रविद्दृष्ट एव । करणभगणवेत्ता हंत्यहोरात्रदोषं जनय घनमंधस्तत्र नक्षत्रसूची ॥ २६ ॥ वसिष्ठः–त्रिस्कंधपारंगम एव पूज्यः श्राद्धे स भूसुरवृंदमध्ये । नक्षत्रसूची खलु पापरूपो हेयः सदा सर्वसु धर्मकृत्ये ॥ २७ ॥ न त्रसूचको दिष्टमुपवासं करोति यः । स व्रजत्यंधतामिस्रं सार्द्धमृक्षं विडंबिना ॥ २८ ज्योतिषं गारुडं चैव धर्मशास्त्रं चिकित्सितम् । विना शास्त्रेण यो ब्रूयात्तमाहुर्ब्रह्मघा कम् ॥ २९ ॥ इति श्रीज्योतिर्विद्वर्यादत्तात्मजरामदीनकृते संग्रहे बृहद्दैवज्ञरंजने दैवज्ञा लक्षणं नाम द्वितीयं प्रकरणं समाप्तम् ॥ २ ॥

## अथ कालादिमानं नाम तृतीयं प्रकरणम् ।

तच्च कालादिमानज्ञानं सूर्यसिद्धांते–शृणुष्वैकमनाः पूर्वं यदुक्तं ज्ञानमुत्तमम् । युगे महर्षीणां स्वयमेव विवस्वता ॥ १ ॥ शास्त्रमाद्यं तदेवेदं यत्पूर्वं प्राह च भास्करः । युगानां परिवर्तेन कालभेदोत्र केवलम् ॥ २ ॥ भूतानामंतकृत्कालः कालोन्यः कल त्मकः । स द्विधा स्थूलसूक्ष्मत्वान्मूर्तश्चामूर्त उच्यते ॥ ३ ॥ प्राणादिकथितो स्त्रुटयाद्योऽमूर्तसंज्ञकः । सूच्या भिन्ने पद्मपत्रे त्रुटिरित्यभिधीयते ॥ ४ ॥ तत्ष च भवेद्रेणुः रेणुषष्ट्या लवं स्मृतम् । तत्षष्ट्या लेशकं प्रोक्तं तत्षष्ट्या प्राण च्यते ॥ ५ ॥ षष्टिप्राणैर्विनाडी स्यात्तत्षष्ट्या नाडिका स्मृता । नाडीषष्ट्या तु न त्रमहोरात्रं प्रकीर्तितम् ॥ ६ ॥ ज्योतिर्विदाभरणे–गुर्वक्षराणामुदितं च षष्ट्या पलानां घटिका किलैका । षष्ट्या घटीनां भदिनं तथार्यैस्तिथ्यैकया चंद्रमसो स्यात् ॥ ७ ॥ खरमरीच्युदयद्वयजांतरं यदिह सावनसंज्ञदिनं भवेत् । प्रति

स्फुटभुक्तिमितिः सदा खगभस्तिदिनं विबुधैः स्मृतम् ॥८॥ सूर्यसिद्धांते—तत्रिंशता भवेन्मासः सावनोर्कोदयैस्तथा । ऐंदवस्तिथिभिस्तद्वत्संक्रांत्या सौर उच्यते ॥ ९ ॥ तैर्द्विकुभिश्च वर्षमिति भास्करीये । अथ वर्षैकमध्ये दिनसंख्या । ज्योतिर्विदाभरणे—वर्षैकमध्ये शशिनो दिनानि हिमांशुसप्ताग्निमितानि तज्ज्ञाः । सार्द्धद्विबाणांबुपलैर्युतेन घटीत्रयेणैव युतान्यथाहुः ( ३७१।३।५२।३० ) ॥ १० ॥ भवासरास्तत्र शरांगरामाः सार्द्धद्विपस्त्रान्वितखाग्नितुल्यैः । पलैर्युताभिस्तिथिनाडिकाभिर्युक्ता ( ३६५।१५।३०।२२।३० ) विधूना रविसावनाः ( ३५९ ) स्युः ॥ ११ ॥ सौरा नभोंगाग्निमितानि वासराः ( ३६० ) स्मृता बुधैः सर्वसु कर्मसु ध्रुवम् ॥ १२ ॥ अथ पितृदिनस्योदयास्तकालानाह । भास्करीये—विधूर्ध्वभागे पितरो वसंति स्वाधः सुधादीधितिमामनंति । पश्यंति तेऽर्कं निजमस्तकोर्ध्वे दर्शे यतोस्मात् द्युदलं प्रदेषाम् ॥ १३ ॥ भार्द्धांतरत्वान्न विधोरधस्थं तस्मान्निशीथः खलु पौर्णमास्याम् । कृष्णे रविः पक्षदलेभ्युदेति शुक्लेस्तमेत्यर्थत एव सिद्धम् ॥ १४ ॥ सूर्यसिद्धांते देवमानमाह—मासैर्द्वादशभिर्वर्षं दिव्यं तदहमुच्यते । सुरासुराणामन्योन्यमहोरात्रं विपर्ययात् ॥ १५ ॥ तत्षष्टिः षड्गुणा दिव्यवर्षमासुरमेव च । तद्द्वादशसहस्राणि (४३२००००) चतुर्युगमुदाहृतम् ॥ १६ ॥ भास्करीये—खखाभ्रदंतसागरै ( ४३२००० ) युगा ( ४ ) ग्नि ( ३ ) युग्म ( २ ) भू ( १ ) गुणैः क्रमेण सूर्यवत्सराः कृतादयो युगांघ्रयः ॥ १७ ॥ कृतमानम् १७२८००० त्रेतामानम् १२९६००० द्वापरमानम् ८६४००० कलिः ४३२००० । ससंध्यकास्तदंशकैर्निजार्कभागसंमितिर्युगांघ्रि तद्युतौ युगं रदाब्धयो युता हताः ॥ १८ ॥ तथा च सूर्यसिद्धांते—सूर्याब्दसंख्यया द्वित्रिसागरैरयुताहतैः ( ४३२०००० ) । संध्यासंध्यांशसहितं विज्ञेयं चतुर्युगम् ॥ १९ ॥ युगानां सप्ततिः सैका ( ७१ ) मन्वंतरमिहोच्यते । कृताब्दसंख्या ( १७२८००० ) स्तस्यांते संधिः प्रोक्तो जलप्लवः ॥ २० ॥ ससंधयस्ते मनवो कल्पे ज्ञेयाश्चतुर्दश । कृतप्रमाणं कल्पादौ संधिः प्रोक्तो जलप्लवः ॥ २१ ॥ इत्थं युगसहस्रेण भूतसंहारकारकः । कल्पो ब्राह्ममहः प्रोक्तं शर्वरी तस्य तावती ॥ २२ ॥ ब्रह्मणः पलम् २४००००० घटीमानम् १४४०००००० दिनमानम् ४३२००००००० रात्रिः ४३२००००००० अहोरात्रम् ८६४००००००० मासः २५९२०००००००० वर्षमानम् ३११०४०००००००० शताब्दाः ३११०-४००००००००००० । परमायुःशतं तेषां तयाहोरात्रसंख्यया । आयुषोर्द्धगतं तस्य शेषात्कल्प्योयमादितः ॥ २३ ॥ भास्करीये—तथा वर्तमानस्य कस्यायुषोर्द्धं गतं सार्द्धवर्षाष्टकं केचिदूचुः । भवत्वागमः कोपि नास्योपयोगो ग्रहावर्तमानद्युपातात् प्रसाध्याः ॥ २४ ॥ स्वायंभुवो मनुरभूत्प्रथमस्ततोमी स्वारोचिषोत्तमजतामससैवताख्याः । षष्ठस्तु चाक्षुष इति प्रथितः पृथिव्यां वैवस्वतस्तदनु संप्रति सप्तमो-

यम् ॥ २५ ॥ याता षण्मनवो युगानि अमितान्यन्यद्युगांघ्रित्रयं नंदाद्रींदु गुणा ( ३१७९ ) स्तथा नृपशकस्यांते कलेर्वत्सराः । गोद्रीन्द्वद्रिकृतांकदस्रनगगोचंद्राः ( १९७२९४७१७९ ) शकाब्दान्विताः सर्वे संकलिताः पितामहदिने स्युर्वर्तमाने गताः ॥ २६ ॥ खत्रयाब्धिरसाभ्राद्रिरूप ( १७०६४३० ) संवत्सरोनिता । कल्पाब्दा स भवत्येव सृष्ट्याब्दा सूर्यमानतः ॥ २७ ॥ नंदाद्रींदुगुणाष्टाष्टबाणपंचनवेंदवः ( १९५५८८३१७९ ) । संयुक्ताः शककालेन सृष्टिसंवत्सरा गताः ॥ २८ ॥ संवज्ज्ञपनम् । यदा गतकलेरब्धिवेदाभ्रपावकै ( ३०४४ ) र्गताः । श्रीविक्रमार्कराज्यस्य' संवत्प्रारंभकः स्मृतः ॥ २९ ॥ शकानयनम् । विक्रमादित्यराज्येषु पंचत्र्यंशोत्तरं शतम् ( १३५ ) । पातयित्वा भवेच्छाकः स शाकः शालिवाहनः ॥ ३० ॥ इसवीशकानयनम् । शालिवाहनशाकेषु गजसप्तान्विते कृते । बादशाहगुरण्डानामीशाख्यस्य शको भवेत् ॥ ३१ ॥ हिजरीशकानयनम् । ईशाख्यशाकेषु त्रिनागबाणमूनं भवेद्धिजरिनाम्नि शाकः । फसलीशकानयनम् । तच्छाककेष्वूनितमत्र दिङ्मितं शाको भवेत्सः फसलीभिधाख्यः ॥ ३२ ॥ बंगलाशकानयनम् । एकोनितं फासिलिनाम्नि शाके शाको भवेत्स बंगलाभिधाख्यः ॥ ३३ ॥ रघुनाथः—शून्येन गुणितं शून्यं भक्तेनाद्यं यथा स्थितम् । भागावशेषितं तष्टमंकानां वामतो गतिः ॥ ३४ ॥ कृतयुगादिसंवत् । अथ तिथ्यादिनिर्माणविषये शकज्ञानमावश्यकम् अतस्तत्कारकाण्याह । सत्ये ब्रह्मशको मुनेर्विरचितस्त्रेतायुगे वामनं तत्पश्चाज्जमदग्निपुत्रनिहते रामः सहस्रार्जुने । रामो रावणहंतृशाक उदितो यौधिष्ठिरो द्वापरे पश्चाद्विक्रमशालिवाहनशकौ जातौ युगेस्मिन् कलौ ॥ ३५ ॥ षट् शककारकाः । युधिष्ठिरो विक्रमशालिवाहनौ तथैव राजा विजयाभिनंदनः । नागार्जुनश्चेति तथ च कल्किरेते कलौ षट् शककारका नृपाः ॥३६॥ क्रमेण वेदाब्धिखवह्नय ( ३०४४ ) स्ततः शराग्निचंद्रा ( १३५ ) खखखाहिभूमयः ( १८००० ) । ततोयुतं (१०००० लक्षचतुष्टयं च ( ४००००० ) चंद्रद्विनागाः ( ८२१ ) शकसंमितः कलौ ॥ ३७ ॥ ज्योतिर्विदाभरणे—युधिष्ठिरोभूद्भुवि हस्तिनापुरे ततोज्जयिन्यां पुरि विक्रमाह्वयः । शालेयधाराभृतशालिवाहनः सुचित्रकूटे विजयाभिनंदनः ॥ ३८ ॥ नागार्जुनो रोहितके क्षितौ कलिर्भविष्यतींद्रो भृगुकच्छपत्तने । कृतप्रवृत्तिस्तदनंतरं भवेत्तद भविष्यत्यवनीभृतोर्कतः ॥ ३९ ॥ निहंति यो भूतलमंडले शकान् स पंचकोट्यब्जदलप्रमान् कलौ ( ५५०००००००० ) । स राजपुत्रः शककारको भवेन्नृपाधिराजो द्युशाककर्तृहा ॥ ४० ॥ अथ मेदिनीमानम् । त्रियवैरंगुलं प्रोक्तं मुष्टिश्च चतुरंगुलम् । मुष्टिषट्कैर्भवेद्दंडः षट्दंडेन धनुर्भवेत् ॥ ४१ ॥ सहस्रधनुषैःक्रोशश्चतुःक्रोशैस्तु योजनम् । शतयोजनमांडल्यं द्वीपं च शतमंडलैः ॥ ४२ ॥ शतद्वीपैर्भवेत्खंडं नवखंडा च

मेदिनी ॥ ४३ ॥ अथार्यावर्तमानम् । मनुः–आसमुद्रात्तु वै पूर्वमासमुद्रात्तु पश्चिमम् । तयोरेवांतरं गिर्योरार्यावर्तं विदुर्बुधाः ॥ ४४ ॥ मध्यदेशमानं च तत्रैव । हिमवद्विंध्ययोर्मध्यं यत्प्राक्कुविनशनादपि । प्रत्यगेव प्रयागाच्च मध्यदेशं विदुर्बुधाः ॥ ४५ ॥ भास्करः–प्रोक्तो योजनसंख्यया कुपरिधिः सप्तांगनंदाब्धय ( ४९६७ ) स्तद्व्यासः कुभुजंगसायकभुवो ( १५८१ ) थ प्रोच्यते योजनम् ॥ ४६ ॥ अथ ब्रह्मांडमानम् । भास्करीये–कोटिघ्नैर्नखनंदषट्कनखभूभृद्भुजंगेंदुभि- ( १८७१२०६९२०००००००० ) र्ज्योतिःशास्त्रविदो वदंति नभसः कक्षामिमां योजनैः । तद्ब्रह्मांडकटाहसंपुटतटे केचिज्जगुर्वेष्टनं केचित्प्रोचुरदृश्यदृश्यकगिरिं पौराणिकाः सूरयः ॥ ४७ ॥ करतलकलितामलकवदमलं सकलं विदंति ये गोलम् । दिनकरकरनिकरनिहतस्य तमसो नभसः परिधिरुदितस्तैः ॥ ४८ ॥ अथ पृथ्वीमध्यतो चंद्रसूर्योच्चमानम् । नगनगाग्निनवाष्टरसारवे ( ६८९३७७ ) रसरसेषु महीषु मिता विधोः ( ५१५६६ ) । निगदितावनिमध्यत उच्छ्रितिश्रुतिरियं किल योजनसंख्यया ॥ ४९ ॥ अथ ग्रहाणां बिंबमानम् । बिंबं रवेर्द्विद्विशरर्तु- संख्या ( ६५२२ ) नींदोः खनागांबुधि ( ४८० ) योजनानि ॥ ५० ॥ अथ ग्रहाणां मानम् । व्यंग्नीषवः ( ४१४५ ) सचरणा ऋतवः ( ६।१५ ) त्रिभागयुक्ताद्रयो ( ७।२० ) नव ( ९ ) स च त्रिलवेषवश्च ( ५।२० ) । स्युर्मध्यमास्तनुकलाः क्षितिजादिकानां त्रिज्याशु कर्णविवरेण पृथग्विनिघ्ना ॥ ५१ ॥ अथानेककालज्ञानम् । द्विधा त्रिधा चतुर्धा वा पंचधा दिवसः स्मृतः । तत्र मध्याह्नतः पूर्वं पूर्वाह्णः परतः परः ॥ ५२ ॥ द्युमानस्य त्रिभागेन भास्करोदयतः क्रमात् । पूर्वाह्णश्चैव मध्याह्नो ह्यपराह्णः स्मृतो बुधैः ॥ ५३ ॥ मनुस्मृतौ–पूर्वाह्णप्रहरं सार्द्धं मध्याह्नप्रहरं तथा । आतृतीयोपराह्णः स्यात्सायाह्नश्च ततः परम् ॥ ५४ ॥ मुहूर्तत्रितयं प्रातस्तावानेवतु संगवः । मध्याह्नस्त्रिमुहूर्तः स्यादपराह्णोपि तादृशः ॥५५ ॥ सायाह्नस्त्रिमुहूर्तोथ क्षणोह्नः पंचशूलवः । आवर्तनो च मध्याह्नः पूर्वाह्णः संगवोत्तमः ॥ ५६ ॥ स्कंदपुराणे–उदयात्प्राक्तनी संध्या घटिकात्रयमुच्यते । सायंसंध्या त्रिघटिका अस्तादुपरि भानुतः ॥ ५७ ॥ त्रिमुहूर्तः प्रदोषः स्याद्रवावस्तंगते ततः । महानिशा निशीथस्य मध्यस्थघटिकाद्वयम् ॥ ५८ ॥ पराशरस्मृतौ–महानिशा तु विज्ञेया मध्यस्थं प्रहरद्वयम् ॥ ५९ ॥ नाडिका षट् च पंचाशत्प्रातस्त्वेकोधिकोऽरुणः । उषःकालोष्टपंचाशत् शेषः सूर्योदयः स्मृतः ॥ ६० ॥ नवधा मानम् । सूर्यसिद्धांते–ब्राह्मं दैवं तथा पैत्र्यं प्राजापत्यं गुरोस्तथा । सौरं च सावनं चांद्रमार्क्ष्यं मानानि वै नव ॥ ६१ ॥ पौलस्त्यः–ब्राह्मं दैवं मनोर्मानं पैत्र्यं सौरं च सावनम् । नाक्षत्रं च तथा चांद्रं जैवं मानानि वै नव ॥ ६२ ॥ एवं पृथक्कु मानुषदैवजैवपैत्र्यर्क्षसौरेंदवसावनानि । ब्राह्मयं च काले नवमप्रमाणं ग्रहाश्च साध्या मनुजैः

स्वमानात् ॥ ६३ ॥ व्यवहारप्रदीपे-सौरमैंदवमार्क्ष्यं च दैवं जैवं च सावनम् । पैत्र्यं च मानुषं ब्राह्ममिति मानानि वै नव ॥ ६४ ॥ इति श्रीमद्दयादत्तज्योतिर्विदात्मजरामदीनज्योतिर्वित्कृते संग्रहे बृहद्दैवज्ञरंजने कालादिमानज्ञानं नाम तृतीयं प्रकरणं समाप्तम् ॥ ३ ॥

---

## अथ चतुर्थं संवत्सरप्रकरणं प्रारभ्यते ।

नारदः-गृह्यते सौरमानेन प्रभवाद्यब्दलक्षणम् ॥ १ ॥ वेदांगज्योतिषे तु-माघशुक्लप्रपन्नस्य पौषकृष्णसमापिनः । इति चांद्रमासेन प्रभवादिषष्टिसंवत्सराणां प्रवृत्तिरुक्ता । भानुग्रभागादिसमैरहोभिस्तस्य प्रवृत्तिः प्रथमं क्रियात्स्यात् । इत्यनेन क्वचित्सौरमानेनोक्ता । इति त्रिविधा प्रभवादिषष्टिसंवत्सराणां प्रवृत्तिर्दृश्यते तत्र साधुपक्षो विचार्यते । अत्र प्रभवादिप्रवृत्तिः बार्हस्पत्यमानेनैव शोभना । तदाह सूर्यसिद्धांते-मानांतरं तदा पूर्वकबार्हस्पत्यमानेनैव षष्ट्यब्दगणनोक्तेति तत्र द्रष्टव्यम् । यथा-बार्हस्पत्येन षष्ट्यब्दं ज्ञेयं नान्यैस्तु नित्यशः ॥ २ ॥ लघुवसिष्ठसिद्धांते-मध्यगत्या भभोगेन गुरोर्गौरववत्सराः ॥ ३ ॥ भास्कराचार्योपि-बृहस्पतेर्मध्यमराशिभोगं सांवत्सरं सांहितिका वदंति । इति । अनेन मध्यमगुरुराशिपूरणसमय एव प्रभवादिषष्ट्यब्दप्रवृत्तिरिति सूचितम् । फलनिर्देशस्तु गुरुमानोत्पन्नप्रभवादिसंवत्सराणामित्येवाह । वसिष्ठोपि-षष्ट्यब्दजन्मप्रभवादिकानां फलं च सर्वं गुरुमानतः स्यात् ॥ ४ ॥ इति वेदांगज्योतिषवचनं तु ततोन्यविषयं यदाह गर्गः-माघशुक्लं समारभ्य चंद्रार्कौ वासवर्क्षगौ । जीवशुक्रौ यदा स्यातां षष्ट्यब्दादिस्तदा भवेत् ॥ ५ ॥ श्रीपतिनापि-इयं हि षष्टिः परिवत्सराणां बृहस्पतेर्मध्यमराशिभोगात् । उदाहृता पूर्वमुनिप्रवीणैर्नियोजनीया गणना क्रमेण ॥ ६ ॥ तपसि खलु यदासावुद्गमं याति मासि प्रथमलवगतः सन् वासवे वासवेज्यः । निखिलजनहितार्थं वर्षवृंदे वरिष्ठः प्रभव इति स नाम्ना जायतेब्दस्तदानीम् ॥ ७ ॥ तृतीयपक्षस्तु फलाभावादुपेक्ष्य इत्युपरम्यते । वराहः-आद्यं धनिष्ठांशमभिप्रवृत्तो माघे यदा यात्युदयं सुरेज्यः । षष्ट्यब्दपूर्वः प्रभवः स नाम्ना प्रपद्यते भूतहितस्तदाब्दः ॥ ८ ॥ पैतामहसिद्धांते-प्रमाथी प्रथमं वर्षं कल्पादौ ब्रह्मणा स्मृतम् । तदा हि षष्टिहृच्छाके शेषं चांद्रोत्र वत्सरः ॥ ९ ॥ व्यवहारिकसंज्ञोयं कालः स्मृत्यादिकर्मसु । योज्यः सर्वत्र तत्रापि जैवो वा नर्मदोत्तरे ॥ १० ॥ आर्ष्टिषेणिः-स्मरेत्सर्वत्र कर्मादौ चांद्रसंवत्सरं तदा । नान्यं यस्माद्वत्सरादौ प्रवृत्तिस्तस्य कीर्तिता ॥ ११ ॥ मकरंदे-द्विवेदपंचेंदुविहीनशाके ग्रहाग्रहाणां दशयुक्त्रिभागः । लवा ग्रहाः स्वीयद्विगंशहीना लिप्ता विलिप्ता रसकुंजरांगम् ॥ १२ ॥ तष्टानि खांगैर्भवनानि भूमि-

युतानि शुक्लादिह वत्सरः स्यात् । भानुघ्नभागादिसमैरहोभिस्तस्य प्रवृत्तिः प्रथमं क्रियात्स्यात् ॥ १३ ॥ उदाहरणं तु ग्रंथविस्तरभयान्नात्रास्माभिर्लिखितं तच्चैव मकरंदात् कर्तव्यं द्रष्टव्यं चेति । शाकः सार्कः षष्टितष्टो नर्मदादक्षिणे भवेत् । संवत्सरोन्यदेशे स्यात्स एव भवसंयुतः ॥ १४ ॥ अथ संवत्सरनामानि । श्रीपतिः—प्रभवो विभवः शुक्लः प्रमोदोथ प्रजापतिः । अंगिराः श्रीमुखो भावो युवा धाता तथेश्वरः ॥ १५ ॥ बहुधान्यः प्रमाथी च विक्रमो वृषसंज्ञकः । चित्रभानुः सुभानुश्च तारणः पार्थिवो व्ययः ॥ १६ ॥ सर्वजित्सर्वधारी च विरोधी विकृतः खरः । नंदनो विजयश्चैव जयो मन्मथदुर्मुखौ ॥ १७ ॥ हेमलंबो विलंबश्च विकारी शार्वरी प्लवः । शुभकृच्छोभनः क्रोधी विश्वावसुपराभवौ ॥ १८ ॥ प्लवंगः कीलकः सौम्यः साधारण विरोधकृत् । परिधावी प्रमाथी च आनंदो राक्षसोनलः ॥ १९ ॥ पिंगलः कालयुक्तश्च सिद्धार्थौ रौद्रदुर्मती । दुंदुभी रुधिरोद्गारी रक्ताक्षः क्रोधनः क्षयः ॥ २० ॥ युगं भवेद्वत्सरपंचकेन युगानि च द्वादशवर्षसंख्या । भवंति तेषामधिदेवताश्च क्रमेण वक्ष्यामि मुनिप्रणीतम् ॥ २१ ॥ विष्णुर्जीवः शक्रो दहनस्त्वष्टा चाहिर्बुध्न्यः पितरः । विश्वे सोमश्चेंद्रो ज्वलनौ नासत्याख्यावंतश्च भगः ॥ २२ ॥ वराहः—चत्वारि मुख्यानि युगानि तेषां विष्ण्वद्रजीवानलदैवतानि । चत्वारि मध्यानि च मध्यमानि प्रांत्यानि चत्वार्यधमानि विद्यात् ॥ २३ ॥ श्रीपतिः—संवत्सरः प्रथमकः परिवत्सरोन्यस्तस्मादिदान्विदितपूर्वपरापरे स्युः । एवं युगेषु सकलेषु तदीयनाथा वह्नचम्बुशीतगुविरिंचिशिवाः क्रमेण ॥ २४ ॥ वराहः—विष्णुः सुरेज्यो बलिभिर्हुताशो त्वष्टोत्तरप्रोष्ठपदाधिपश्च । क्रमाद्युगेशाः पितृविश्वसोमशक्रानलाख्याश्च भगाः प्रादिष्टाः ॥ २५ ॥ वृष्टिः समाद्ये बहुला द्वितीये प्रभूततोया कथिता तृतीये । पश्चाज्जलं मुंचति यच्चतुर्थे स्वल्पोदकं मुंचति पंचमश्च ॥ २६ ॥ मतांतरम्—आनंदादेर्भवेद्ब्रह्मा भवादेर्विष्णुरेव च । जयादेः शंकरः प्रोक्ताः सृष्टिपालननाशकाः ॥ २७ ॥ बाष्पोत्पत्तिः । तत्त्वविवेके—ऊर्ध्वं कुगोलादध एव चाग्नेर्भूर्वायुरस्त्यत्र सदैव शीतम् । महत्कुतः कैरपि योजनैस्तद्बाष्पांबुदाद्यं जनयत्यपूर्वम् ॥ २८ ॥ तद्बाष्परूपं कथयामि सम्यग्यतोन्यवैचित्र्यमपीह स्वस्थम् । अग्न्यंबुवायुप्रभवाः सदोर्ध्वं बाष्पाः कुपृष्ठाद्गगनं प्रयांति ॥ २९ ॥ अनेकवर्णं वियतीन्द्रचापं ग्रहात्समंतात्परिवेष उक्तः । तथैव भानां पतनं च विद्युत्तथैव गंधर्वपुरं विचित्रम् ॥ ३० ॥ ये केतवोरिष्टफलप्रदाः खेंबुदाश्च भूकंप इहास्ति लोके । मारी महाख्या करका प्रयाताद्यं सर्वमित्थं किल बाष्पतोत्र ॥ ३१ ॥ विरलावयवैर्बाष्पैर्मिश्रितैः सूर्यरश्मिभिः । अधोधः संस्थितैश्चित्रान्वर्णान्नश्यंति भूस्थिताः ॥ ३२ ॥ बाष्पैः साकं गंधकादिपरागा अपि भूमितः । गच्छंत्यूर्ध्वं ततश्चाग्निप्रयोगादग्निशस्त्रवत् ॥ ३३ ॥ तारारूपाः सुगोलाग्निकणा भूमिं प्रयांति हि । तथा शैत्यप्रयोगेण

बाष्पा एव घना घनाः ॥ ३४ ॥ इतस्ततो वायुवशाद्गच्छंति वियति स्थिताः । पाषाणैः कठिना भूमिर्यत्र तत्र कुतो बलात् ॥ ३५ ॥ बाष्पनिःसरणात्कंपः शब्दोपि सततं भुवि । अत एवान्यभूमौ तु विनायासात्कुतः किल ॥ ३६ ॥ वाष्प निःसरतो तत्र कदाचित् दृष्टदोपि सः । भूमिकंपः पर्वतादौ सर्वदैवोति निर्णयः ॥ ३७ ॥ दुष्टदिष्टवशाद्भूस्थविषसंबंधतोत्र ये । वाष्पा नृदेहे लग्नास्तद्दशेन मरणं यतः ॥ ३८ ॥ महामारीति नाम्ना वै ख्याता लोके प्रजायते । अथ बाष्पांबुगं बिंबमुदयेर्केस्य पश्यति ॥ ३९ ॥ तेन दृश्यं भवेद्रक्तवर्णं भूपृष्ठगस्य तत् । वेलाहीनं कालहीनं खगजं ग्रहणादिकम् ॥ ४० ॥ कदाचित्कुत्रचिद्धान्योत्पातजं तद्धि बाष्पजम् । वेलाहीनंतरं यत्तद्बीजं मत्वैव कालजम् ॥ ४१ ॥ कर्माहं खचरं शुद्धं नाशयंत्यधमा बलात् । इत्थं संक्षेपतः प्रोक्तं विस्तारोस्यान्यशास्त्रतः ॥ ४२ ॥ इति श्रीमज्ज्योतिर्विद्वर्यगयादत्तात्मजश्रीरामदीनज्योतिर्विद्विरचिते संग्रहे बृहद्दैवज्ञरंजने चतुर्थं संवत्सरप्रकरणं समाप्तम् ॥ ४ ॥

---

## अथ पञ्चमं वर्षाप्रकरणं व्याख्यायते ।

तत्रादौ वायुपरीक्षा । लल्लः—निर्घातोल्कापरिवेषविद्युच्छक्रचापसलिलमुचः । गंधर्वनगरपूर्वा मध्ये भूवायुकक्षायाम् ॥ १ ॥ भास्करोपि—भूमेर्बहिर्द्वादश योजनानि भूवायुरत्रांबुदविद्युदाद्यम् । इति ॥ २ ॥ आषाढ्यां भास्करास्ते सुरपतिककुभे वाति वाते सुवृष्टिः सस्यध्वंसं प्रकुर्याद्यदि दहनदिशि मंदवृष्टिर्यमेन । नैर्ऋत्यां मध्यमा स्याद्वरुणबहुजला वायवे वायुकोपः कौबेर्यां सस्यपूर्णा भवति वसुमती तद्वदीशानकोणे ॥ ३ ॥ अन्यः—आषाढमासस्य च पौर्णमास्यां सूर्यास्तकाले यदि वाति वातः । पूर्वस्तदा सस्ययुता धरित्री नंदंति लोकाः सजला घनाः स्युः ॥ ४ ॥ कृशानुवाते मरणं प्रजानामन्नस्य नाशः खलु वृष्टिनाशः । याम्ये मही सस्यविवर्जिता स्यात् परस्परं यांति नृपा विनाशम् ॥ ५ ॥ नैशाचरो वाति यदात्र वातो न वारिदो वर्षति भूरि वारि । प्रत्यक्समीरे सुखिनो मनुष्या जलान्नपूर्णा च वसुंधरा स्यात् ॥ ६ ॥ वायव्यवाते जलदागमे स्यादभ्रस्य नाशः पवनैः प्रचण्डैः । सौम्येऽनिले धान्यजलाकुला धरा नंदंति लोका भयदुःखवर्जिताः ॥ ७ ॥ ऐशेऽन्नवृद्धिर्बहुवारिपूरिता धरा च गावो बहुदुग्धसंयुताः । भवंति वृक्षाः फलपुष्पदायिनो नंदंति भूपाश्च परस्परं तदा ॥ ८ ॥ आषाढ्यां पूर्णिमायां च वायुर्वहति चाष्टदिक्ष । प्रजानां सर्वसौख्यं च राज्ञां सौख्यं परस्परम् ॥ ९ ॥ आषाढ्यां यदि वा वायुर्न वहति कदाचन । तदा सर्वत्र वृष्टिः स्यात्सस्यवृद्धिः प्रजायते ॥ १० ॥ आषाढ्यां खंडवायुः स्याद्धरी च वहते यदि ।

रसाज्यशर्करावृद्धिः सर्वसौख्यं प्रजायते ॥ ११ ॥ आषाढीयोगोयं सम्यक् प्रोक्तो मुनिमतं समालोक्य । यं ज्ञात्वा दैवविदो लोके ख्यातिं समायांति ॥ १२ ॥ त्रैलोक्यप्रकाशे-आषाढ्यां घटिकाषष्ट्या मासद्वादशनिर्णयः । द्वादशपंचका पृष्टिरित्येवं क्रममादिशेत् ॥ १३ ॥ पंचनाडी भवेन्मासो मासि मासि फलं पृथक् । यत्र नाड्यां शुभो वातो विद्युदभ्रादिगर्जनम् ॥ १४ ॥ तत्र मासि भवेद्वृष्टिरित्यं कालस्य निर्णयः । पूर्णिमायां विनष्टायां विनष्टं वर्षमादिशेत् ॥ १५ ॥ अथ सद्योवृष्टिलक्षणं प्रश्नं चाह । मयूरचित्रके-शुक्ले पक्षे शशिनि तनुगे तोयराशिस्थिते वा केंद्रे याते प्रचुरमुदकं सौम्यदृष्टिप्रदिष्टम् । पापैर्दृष्टे न च बहुजलं प्रश्नकालेपि तज्ज्ञैर्वाच्यं सर्वं फलमविकलं चंद्रवद्भार्गवोपि ॥ १६ ॥ वर्षाप्रश्ने स्पृशति सलिलं वारिकार्योन्मुखो वा पृच्छाकाले सलिलमिति वा श्रूयते तन्मुखे वा । दृष्टः कूपो विमलसलिलं चेद्वदेद्वारिवृष्टिमेतत्सर्वं भवति च फलं व्यत्ययं व्यत्ययेन ॥ १७ ॥ प्रष्टुर्ब्रूयाज्जलमविरलं दुर्निरीक्ष्योतिसूर्यः प्रातःकाले भवति जलदः स्निग्धवैडूर्यकांतिः ॥ १८ ॥ प्रातःकाले पीतरश्मिर्दुर्निरीक्ष्यो भवेद्रविः । स्निग्धवैडूर्यकांतिश्चेन्मेघो वृष्टिप्रदः स्मृतः ॥ १९ ॥ प्रावृट्काले यदा सूर्यो मध्याह्ने दुःसहो भवेत् । तद्दिने वृष्टिदः प्रोक्तो द्रुतस्वर्णसमप्रभः ॥ २० ॥ यदा जलं च विरसं वियद्गोनेत्रसंनिभम् । दिशश्च विमलाः सर्वा काकांडाभं यदा नभः ॥२१॥ न यदा वाति पवनः स्थलं यांति झषादयः । शब्दं कुर्वंति मंडूकास्तदा स्याद्वृष्टिरुत्तमा ॥ २२ ॥ नखैर्लिखंति मार्जाराः पृथिवीं च यदा भृशम् । लोहानां मलनिचयो विस्रगंधो यदा भवेत् ॥ २३ ॥ सेतुं कुर्वंति रथ्यायां शिशवो मिलिता यदा । शुद्धांजनाभा गिरयो बाष्पमुद्रितकंदराः ॥ २४ ॥ पिपीलिका यदांडानि गृहीत्वोच्चैः प्रयांति वै । सर्पा वृक्षं समायांति तदा बहुजलप्रदाः ॥ २५ ॥ गावः सूर्यं निरीक्षंति कृकलासगणास्तथा । गेहान्निर्गच्छन्ति पशवो निर्गमाः कुकुरास्तथा ॥ २६ ॥ लताश्चोर्ध्वमुखाः सर्वाः स्नानं कुर्वंति पक्षिणः । पांसुभिश्च तृणाग्राणि सेवंते च सरीसृपाः ॥ २७ ॥ वियत्तित्तिरपक्षाभमलिपक्षनिभं तथा । तदा वृष्टिः समादेश्या निश्चितं दैवचिंतकैः ॥ २८ ॥ अवातवातस्तपशीत उष्णं रटंति मंडूकशिवाहिचातकाः । मयूरकंठद्युतिसूर्यमंडले त्रिभिर्दिनैर्वारि पतंति भूतले ॥ २९ ॥ प्रावृट्काले शीतरश्मिर्यदा स्यात्सूर्यादस्ते सौम्यदृष्टो यदा स्यात् । बुद्धिस्थाने सप्तमे च त्रिकोणे वृष्टिर्वाच्या दैवविद्भिः पुराणैः ॥ ३० ॥ शुभाश्च जलराशिस्थाः केंद्रगाः स्वीयगेहगाः । जलप्रदाः सिते पक्षे विधौ चोदयगे जले ॥ ३१ ॥ सप्तमगौ रविचंद्रौ सितरविजौ रसातले लग्नात् । प्रावृट्काले जलदौ भवतो वा द्वितीयसहजस्थौ ॥ ३२ ॥ प्रश्नलग्नात्तोयराशिर्यदि वित्ततृतीयगः । तोयसंज्ञो ग्रहस्तत्र भवत्यत्र जलप्रदः ॥ ३३ ॥ समागमे ज्ञसितयोस्तथा च गुरुशुक्रयोः । तथैव

जीवबुधयोर्वृष्टिः स्यान्नात्र संशयः ॥ ३४ ॥ यदा भवंति सूर्यस्य ग्रहाः पृष्ठावलंबिनः । पुरतो वा यदा यांति तदा त्वेकार्णवा मही ॥ ३५ ॥ बुधशुक्रयोर्मध्यगतः सूर्यः स्याज्जलशोषकः । तयोर्यदि समीपस्थस्तदा बहुजलप्रदः ॥ ३६ ॥ अग्रे याति यदा भौमः पश्चाच्चलति भास्करः । तदा वृष्टिर्न बहुला जायते नात्र संशयः ॥ ३७ ॥ बुधो यदि समीपस्थो न कुजन्मा पुरो यदि । अनंतपदविन्यासश्चातुर्थ्यां सरसं कवेः ॥ ३८ ॥ वराहः—व्रजति यदि कुजः पतंगमार्गे घट इव भिन्नतरे जलं ददाति । अथ भवति यदा दिवाग्रगश्च प्रलयघनानपि शोषयेद्धरित्रीम् ॥ ३९ ॥ लल्लः—बुधशुक्रौ समीपस्थौ सजलां कुरुते महीम् । तयोर्मध्यगतो भानुः समुद्रमपि शोषयेत् ॥४०॥ यदारसौरी सुरराजमंत्री यदैकराशौ समसप्तके च । अयोध्यलंकापुरमध्यदेशे भ्रमंति लोकाः क्षुधया प्रपीडिताः ॥ ४१ ॥ वराहः—प्रावृषि शीतकरो भृगुपुत्रः सप्तमराशिगतः शुभदृष्टः । सूर्यसुतान्नवपंचमगो वा सप्तमगश्च जलागमनाय ॥ ४२ ॥ प्रायो ग्रहाणामुदयास्तकाले समागमे मंडलसंक्रमे च । पक्षक्षये तीक्ष्णकरायनांते वृष्टिर्गतेर्के नियमेन चार्द्राम् ॥ ४३ ॥ समागमे पतति जलं ज्ञशुक्रयोर्ज्ञजीवयोर्गुरुसितयोश्च संगमे । यमारयोः पवनहुताशजं भयं न दृष्टयोरसहितयोश्च सद्ग्रहैः ॥ ४४ ॥ अग्रतः पृष्ठतो वापि ग्रहाः सूर्यावलंबिनः । यदा तदा प्रकुर्वंति महीमेकार्णवामिवं ॥ ४५ ॥ अथ त्रिनाडीचक्रम् । सर्पचक्रं तथा लेख्यमाश्विन्यादित्रिनाडिकम् । नवनंदनवर्क्षाणि स्वर्गपातालभूमिषु ॥ ४६ ॥ एकनाडीस्थिताः सर्वे क्रूराः सौम्याश्च खेचराः । सद्यो वृष्टिं विजानीयात्प्रभूतं जलमादिशेत् ॥ ४७ ॥ स्वर्गनाडीगताः क्रूराः सौम्या पातालचारगाः । तद्वृष्टिर्जायते तत्र क्षिप्रं तोयं समुद्रगम् ॥ ४८ ॥ नपुंसकानां योगः स्याद्वायुः स्त्रीयोगतो ध्रुवम् । पुंस्त्रीसंयोगतो वृष्टिर्ग्रहाश्चेत्सबलास्तदा ॥ ४९ ॥ क्लीबस्त्रीयोगतः शीतं पुंयोगे वाततो भयम् । वातनाड्यादिगाः खेटाः कुर्युर्नाडीभवं फलम् ॥ ५० ॥ बुधशुक्रमहीसूनुगुरवश्चैकनाडिगाः । निस्संशयं तदा काले जायते वृष्टिरुत्तमा ॥ ५१ ॥ चलत्यंगारके वृष्टिरुदये च बृहस्पतौ । शुक्रस्यास्तमने वृष्टिर्वक्रांते च शनेर्भवेत् ॥ ५२ ॥ मयूरचित्रके—शुक्रस्यास्तमये. वृष्टिरिज्ये चोदयमागते । संचरत्यवनीसूनौ वृष्टिमिदे त्रिधा मता ॥ ५३ ॥ अंगारको यदा मार्गी तदा संचरते रविः । तुषारं वर्षते देवः खंडं खंडं च वर्षति ॥ ५४ ॥ चंद्रास्त्रिकोणे द्यूने वा शुक्रो वा धरणीसुतः । तदा काले भवेद्वृष्टिर्नात्र कार्या विचारणा ॥५५॥ जलयोगे समायाते यदा चंद्रसितौ ग्रहौ । क्रूरदृष्टैर्युतौ वापि तदा मेघोल्पवृष्टिदः ॥ ५६ ॥ भानोरग्रे मही-

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| अ | आ | पु | उ | ह | ज्ये | मू | श | पू | स्वर्ग |
| भ | मृ | पु | पू | चि | अ | पू | ध | उ | पाताल |
| कृ | रो | श्ले | म | स्वा | वि | उ | श्र | रे | भूमि |

पुत्रो जलशोषकः प्रजायते । भानोः पश्चान्महीपुत्रो वृष्टिर्भवति भूयसी ॥ ५७ ॥ अथ सप्तनाड्यः । अथातः संप्रवक्ष्यामि यदुक्तं सप्तनाडिकम् । येन विज्ञानमात्रेण वृष्टिं जानंति साधकाः ॥ ५८ ॥ कृत्तिकादि लिखेद्धानि साभिजित्तु क्रमेण च । सप्तनाडी-व्यधस्तत्र कर्त्तव्यः पन्नगाकृतिः ॥ ५९ ॥ ताराचतुष्कं वेधेन नाडिकैका प्रजायते । तासां नामान्यहं वक्ष्ये तथा चैव फलानि च ॥ ६० ॥ कृत्तिका च विशाखा च मैत्राख्यं भरणी तथा । ऊर्ध्वाद्या शनिनाडी स्याच्चण्डनाड्यभिधा मता ॥ ६१ ॥ रोहिणी स्वातिज्येष्ठाश्विद्वितीया नाडिका मता । आदित्यप्रभवा नाडी वायु-नाडी तथैव च ॥ ६२ ॥ सौम्यं चित्रा तथा मूलं पौष्णर्क्षं च चतुर्थकम् । तृतीयां-गारनाडी च दहनाख्या तथैव च ॥ ६३ ॥ रौद्रं हस्तं पूर्वाषाढं तथा भाद्रपदोत्तराः । चतुर्थी जीवनाडी स्यात्सौम्यनाडी प्रकीर्त्तिता ॥ ६४ ॥ पुनर्वसूत्तराफाल्गुन्यु-त्तराषाढतारकाः ॥ पूर्वभाद्रा च शुक्राख्या पंचमी नीरनाडिका ॥ ६५ ॥ पुष्यर्क्षं फाल्गुनी पूर्वा अभिजिच्छततारका । षष्ठीनाडी च विज्ञेया बुधाख्या जलनाडिका॥६६॥ आश्लेषार्क्षं मघा कर्णं धनिष्ठाभं तथैव च । अमृताख्या हि सा ज्ञेया सप्तमी चंद्रनाडिका ॥ ६७ ॥ मध्यमार्गे स्थिता सौम्या नाडी तस्याग्रपृष्ठतः ।

| चंडा | वायु | दह० | सौम्या | नीरा | जल | अमृ० |
|---|---|---|---|---|---|---|
| शनि | सूय | मंगल | जीव | शुक्र | बुध | चंद्र |
| कृ | रो | मृ | आ | पु | पु | श्ले |
| वि | स्वा | चि | ह | उ | पू | म |
| अ | ज्ये | मू | पू | उ | ऽभि | श्र |
| भ | अं | रे | उ | पू | श | ध |

सौम्या याम्यगता ज्ञेयं नाडि-कानां त्रिकं त्रिकम् ॥६८॥ क्रूरया-म्यगता नाड्यः सौम्यासौम्यदि गाश्रिताः । मध्यनाडी च मध्यस्था ग्रहरूपफलप्रदाः ॥६९॥ एकनाडी-गता द्वाद्या ग्रहाः क्रूराः शुभा यदि । ततो नाडीफलं वाच्यमशुभं यदि वा शुभम् ॥ ७० ॥ ग्रहाः कुर्युर्महावातं गताश्चंडाख्यनाडिकाः । वायुनाडीगता वायुं दहनाम-तिदाहकाः ॥ ७१ ॥ सौम्यनाडीगता मध्या नीरस्था मेघवाहकाः । जलायां वृ-ष्टिदश्चंद्रश्चंद्रनाडीगते यदि ॥ ७२ ॥ एकोप्येतत्फलं दत्ते स्वनाडीसंस्थितो ग्रहः । भूसुतः सर्वनाडीषु दत्ते नाडीसमं फलम् ॥ ७३ ॥ प्रावृट्काले समायाते रौद्रऋक्षगते रवौ । नाडीवेधसमायोगे जलयोगं वदाम्यहम् ॥ ७४ ॥ यत्र नाड्यां स्थितश्चंद्रः तत्रस्थाः खेचरा यदि । क्रूराः सौम्याश्च मिश्रा वा तद्दिने वृष्टिरुत्तमा ॥ ७५ ॥ एकऋक्षे समायुक्ता जायंते यदि खेचराः । तत्र काले महावृष्टिर्यावत्तस्यांशके शशी ॥ ७६ ॥ केवलैः सौम्यपापैर्वा गृहे विद्धो यदा शशी । तदा तुच्छं च पानीयं दुर्दिनं च भवेद्ध्रुवम् ॥ ७७ ॥ यस्य ग्रहस्य नाडिस्थश्चंद्रमा तद्ग्रहेन च । दृष्टो युक्तः करोत्यंभः यदि क्षीणो न जायते ॥ ७८ ॥ पीयूषनाडिगश्चंद्रस्तत्र खेटाः शुभाशु-

भम् । त्रिचतुःपच पानीयं दिनान्येकात्रिसप्तकम् ॥ ७९ ॥ एवं जलाख्यनाडीस्थे चंद्रे मिश्रग्रहान्विते ॥ दिनार्द्धं दिवसं पंच दिनानि जायते जलम् ॥ ८० ॥ अमृतादित्रिनाडीषु जायंते सर्वखेचराः । तत्र वृष्टिः क्रमाज्ज्ञेया धृत्या ( १८ ) र्क ( १२ ) रस ( ६ ) संख्यया ॥ ८१ ॥ नीरनाडीस्थिते चंद्रे तत्रस्थैः पूर्ववद् ग्रहैः । यामं दिनार्द्धकं त्रीणि दिनानि जायते जलम् ॥ ८२ ॥ सौम्यनाडीगताः सर्वे वृष्टिदास्ते दिनत्रयम् । शेषनाड्यां महावाता दुष्टवृष्टिप्रदा ग्रहाः ॥ ८३ ॥ निर्जला जलदा नाडी भवेद्योगे शुभाधिके । क्रूराधिके समायोगे जलदा अपि दाहकाः ॥ ८४ ॥ यस्य नाडीस्थिताः क्रूरा अनावृष्टिप्रदा ग्रहाः । शुभयुक्ता जलासंस्थास्तेतिवृष्टिप्रदा ग्रहाः ॥८५॥ एकनाडीसमारूढौ चंद्रमाधरणीसुतौ । यदि तत्र भवेज्जविस्तदा वारिमयी मही ॥८६॥ बुधशुक्रौ यदैकत्र गुरुणा च समन्वितौ । चंद्रयोगस्तदा काले जायते वृष्टिरुत्तमा॥८७॥ जलयोगे समायाते यदा चंद्रसितौ ग्रहौ । क्रूरैर्दृष्टौ युतौ वापि तदा मेघाल्पवृष्टिदाः ॥ ८८ ॥ सौम्यनाडीगता मध्या नीरस्था मेघवाहकाः । जलानां वृष्टिदश्चंद्रश्चंद्रनाडीगते यदि ॥ ८९ ॥ उदयास्तगता मार्गे वक्रे युक्ताश्च संगमे । जलनाडीगताः खेटा अतिवृष्टिप्रदायकाः ॥ ९० ॥ आर्द्रादिदशकं स्त्रीणां विशाखात्रि नपुंसकम् । मूलाच्चतुर्दश पुंसां नक्षत्राणि क्रमाद्बुधैः ॥ ९१ ॥ वायुर्नपुंसके भे च स्त्रीणां भे चाभ्रदर्शनम् । स्त्रीणां पुरुषसंयोगे वृष्टिर्भवति निश्चितम् ॥ ९२ ॥ रविभौमार्कजाः शुष्काः सजलौ चंद्रभार्गवौ । बुधवाचस्पतिर्ज्ञेयौ सजलौ जलराशिगौ ॥ ९३ ॥ कुंभकर्कटकौ मीनमकरालितुलाधराः । सजला राशयः प्रोक्ता निर्जलाः शेषराशयः ॥ ९४ ॥ इति श्रीमज्ज्योतिर्विद्वर्यगयादत्तात्मजरामदीनज्योतिर्विद्विरचिते संग्रहे बृहद्दैवज्ञरंजने पंचमं वृष्टिप्रकरणं समाप्तम् ॥ ५ ॥

---

## अथ षष्ठं फलकुसुमलताप्रकरणं प्रारभ्यते ।



वाराहीये–फलकुसुमसंप्रवृद्धिं वनस्पतीनां विलोक्य विज्ञेयम् । सुलभत्वं द्रव्याणां निष्पत्तिश्चापि सस्यानाम् ॥ १ ॥ शालेन कलमशालि रक्ताशोकेन रक्तशालिश्च । पांडूकः क्षीरिकया नीलाशोकेन सूकरकः ॥ २ ॥ न्यग्रोधेन तु यवकास्तिंदुकवृद्ध्या च षष्टिको भवति । अश्वत्थेन ज्ञेया निष्पत्तिः सर्वसस्यानाम् ॥ ३ ॥ जंबूभिस्तिलमाषाः शिरीषवृद्ध्या च कंगुनिष्पत्तिः । गोधूमाश्च मधूकैर्यववृद्धिः सप्तपर्णेन ॥ ४ ॥ अतिमुक्तककुंदाभ्यां कर्पासं सर्षपान्वदेदसनैः । बदरीभिश्च कुलत्थांश्चारविल्वेनादिशेन्मुद्गान् ॥ ५ ॥ अतसीवेतसपुष्पैः पलाशकुसुमैश्च कोद्रवा ज्ञेयाः । तिलकेन शंखमौक्तिकरजतान्यथ चेंगुदेन शणः ॥ ६ ॥ करिणश्च हस्तिकर्णैरादेश्या वाजिनोश्वकर्णेन । गावश्च पाटलाभिः कदलीभिरजाविकं भवति ॥ ७ ॥ चंपककुसुमैः कनकं विद्रुमसंपच्च वंधुजीवेन । कुरुबकवृद्ध्या वज्रं वैडूर्यं नंदिकावर्तैः ॥ ८ ॥

विद्याच्च सिंदुवारेण मार्त्तंक कुंकुम कुसुंभेन । रक्तोत्पलेन राजा मंत्री नीलोत्पलेनोक्तः ॥ ९ ॥ श्रेणी सुवर्णपुष्पैः पद्मैर्विप्राः पुरोहिताः कुमुदैः । सौगंधिकेन बलपतिरर्केण हिरण्यपरिवृद्धिः ॥ १० ॥ आम्रैः क्षेमं भल्लातकैर्भयं पीलुभिस्तथारोग्यम् । खदिरशमीभ्यां दुर्भिक्षमर्जुनैः शोभना वृष्टिः ॥ ११ ॥ पिचुमंदनागकुसुमैः सुभिक्षमारुतः कपित्थेन । निचुलेनावृष्टिभयं व्याधिभयं भवति कुटजेन ॥ ॥ १२ ॥ दूर्वाकुशकुसुमाभ्यामिक्षुर्वह्निश्च कोविदारेण । श्यामालताभिवृद्ध्या बंधक्यो, वृद्धिमायांति ॥ १३ ॥ यस्मिन्देशे स्निग्धनिच्छिद्रपत्राः संदृश्यंते वृक्षगुल्मा लताश्च । तस्मिन्वृष्टिः शोभना संप्रदिष्टा रूक्षैश्छिद्रैरल्पमंभः प्रदिष्टम् ॥ १४ ॥ मुहूर्तगणपतौ–वृक्षादौ बहुभिः पुष्पैर्महावृष्टिः प्रजायते । यत्र स्वल्पतरा वृष्टिर्दूर्वाभिश्चेक्षवोधिकाः ॥ १५ ॥ मधूकैर्बहुगोधूमा यवाः स्युर्वटजैः फलैः । सुभिक्षं नागनिंबैः स्याच्छालवृक्षैस्तु शालयः ॥ १६ ॥ अश्वत्थादधिकं धान्यमर्जुनादाधिकं जलम् । क्षेममाम्रैश्च पालाशैः कोद्रवा जंबुतस्तिलाः ॥ १७ ॥ दुर्भिक्षं खदिरे रोगाः कुटजैः परिकीर्तिताः ॥ १८ ॥ अथार्द्रादिनक्षत्राणां जलवर्षणे फलम् । जलमार्द्रापुनर्वस्वोः पुष्ये शालीमधूकयोः । विष श्लेषा मघा प्रोक्ता जलं अमृतसन्निभम् ॥ १९ ॥ सर्पिः पूर्वा दधिश्चैव उत्तरफाल्गुनी भवेत् । त्वाष्ट्रेक्षुरससंपत्तिः स्वात्यां स्यादधिकं मधु ॥ २० ॥ इति श्रीज्योतिर्विद्वर्यादत्तात्मजरामदुनिज्योतिर्विद्विरचिते संग्रहे बृहद्दैवज्ञरंजने षष्ठं फलकुसुमलताप्रकरणं समाप्तम् ॥ ६ ॥

## अथ ग्रहाणां योगकथनं नाम सप्तमं प्रकरणं प्रारभ्यते ।



मयूरचित्रके–रौद्रनक्षत्रगावेतौ यदि सूर्यमहीसुतौ । मास महर्घतां यांति धान्यानि स्वस्थता पुनः ॥ १ ॥ भानुकेतू च भरणीं मृगं वा यदि चास्थितौ । लवणं महर्घतां याति सिंधुदेशोद्भवं विडम् ॥ २ ॥ बुधशुक्रमहीपुत्रा भुजंगर्क्षे समाश्रिताः । नंदंति लोकाः सुखिनः सुभिक्षं जनयंति च ॥ ३ ॥ स्वातीं याति यदा भौमो रेवतीं याति भास्करः । चलचित्ता महीपालाः प्रजा नाशं प्रयांति च ॥ ४ ॥ अनुराधां गतः सौरिर्ज्येष्ठायां च बृहस्पतिः । पश्चिमायां तदा युद्धं प्रजानाशं प्रयाति च ॥ ५ ॥ मूले मंदो बुधः स्वात्यां मघायां चंद्रमा यदि । संग्रहे सर्वधान्यानां लाभो भवति नान्यथा ॥ ६ ॥ त्रिश्वेशभे भगे मंदाः सप्तमर्क्षे यदा रविः । तदा जलविनाशः स्यात्प्रजानां कदनं तथा ॥ ७ ॥ श्रवणर्क्षे यदा क्रूरो ग्रहः कश्चित्समाश्रितः । अन्नं महर्घतां याति गोधूमाश्च विशेषतः ॥ ८ ॥ वासवर्क्षे यदा सौरिर्भूमिपुत्रेण संयुतः । न वर्षंति जलं मेघाः सस्यहानिश्च जायते ॥ ९ ॥ वारुणे च यदा जीवश्चित्रायां धरणीसुतः । तदा नश्यंति गोधूमाः सस्यहानिर्महर्घता ॥ १० ॥

भानुर्भौमो भृगुश्चैव शनिक्षेत्रे समाश्रिताः। यदा निशापतिस्तत्र तदा दुर्भिक्षतो भयम् ॥ ११ ॥ वृषे राहुर्यदा भौमो षष्ठे मासि महद्भयम् । भवत्यत्र न संदेहस्तदा दुर्भिक्षपीडनम् ॥ १२ ॥ मिथुनर्क्षे सूर्यपुत्रो राहुर्वा यदि संस्थितः । दुर्भिक्षं जायते तत्र पश्चिमायां नृपक्षयः ॥ १३ ॥ रविराहुमहीपुत्राः शशिशुक्रशनैश्चराः। एकराशिं गता ह्येते तदा पृथ्वी भयाकुला ॥ १४ ॥ पूर्वदेशे महापीडा नृपाणां संक्षयो भवेत् । प्रजानाशो व्याधिभयं तस्मिन्काले न संशयः ॥ १५ ॥ सूर्यचंद्रारमंदाश्च राहुश्चंद्रसुतो यदि । एकराशिं गता ह्येते दक्षिणस्यां भयप्रदाः ॥ १६ ॥ एकराशिगता ह्येते कुजार्कशनिराहवः । शुक्रो गुरुश्च तत्रैव तदा भयविवर्द्धनाः ॥ १७ ॥ उत्तरे छत्रभंगः स्यान्नात्र कार्या विचारणा । रविचंद्रकुजा जीवमंदचंद्रसुता यदि ॥ १८ ॥ समाश्रिता ह्येकराशिं तदा पृथ्वी भयाकुला । राज्ञां नाशो व्याधिभयं प्रजानां संक्षयो भवेत् ॥ १९ ॥ कुजार्कजीवशुक्राश्च यदैकत्र समाश्रिताः। भयं व्याधिं प्रकुर्वंति सर्वधान्यमहर्घता ॥ २० ॥ कुजकेंदुज्ञजीवाश्च सिंहराशिं समाश्रिताः । छत्रभंगः प्रजानाशो भयभीता च मेदिनी ॥ २१ ॥ एकराशिस्थिता ह्येते सौम्यशुक्रदिनाधिपाः । सर्वधान्यमहर्घत्वं मेघाः स्वल्पजलप्रदाः ॥ २२ ॥ एकनक्षत्रगा ह्येते तदा भयविवर्द्धनाः । यदा जीवयुतो मंदो जीवाद्वा सप्तमे स्थितः । तदा प्रजा विनश्यंति भूपाश्चान्नपरिक्षयः ॥ २३ ॥ कर्कमीनमृगस्त्रीषु शनिभौमौ यदा स्थितौ । तदा युद्धाकुला पृथ्वी धनधान्यविवर्जिता ॥ २४ ॥ मिथुनस्त्रीधनुर्मीनराशौ मंदो यदा भवेत् । तदा भूपा विनश्यंति पृथ्वी शोणितपूरिता ॥ २५ ॥ रविशुक्रसुराचार्या यदैकत्र समाश्रिताः। राज्यभ्रंशः प्रजानाशः सर्वसस्यमहर्घता ॥ २६ ॥ रविभार्गवभौमाश्च राशिमेकं समाश्रिताः । घृततैलमसूरान्नं महर्घाति महाभयम् ॥ २७ ॥ सुरेज्यकविमंदाश्च राहुरेकत्र संस्थिताः । मेघा जलं प्रमुंचंति सर्वधान्यमहर्घता ॥ २८ ॥ रविज्ञगुरुमंदाश्च राहुयुक्ता यदा स्थिताः । सुभिक्षं क्षेममारोग्यं तस्मिन्काले न संशयः ॥ २९ ॥ एकराशिगता ह्येते भौमभार्गवसूर्यजाः । तदा भूपा विनश्यंति प्रजानां संक्षयो भवेत् ॥ ३० ॥ शुक्रमंदारजीवाश्च यदैकत्र समाश्रिताः । मेघा जलं न मुंचंति दुर्भिक्षं जायते तदा ॥ ३१ ॥ गुरुमंदारशुक्राश्च यदा सौम्यसमन्विताः । देशभ्रंशः प्रजानाशो वस्त्रधात्वोर्महर्घता ॥ ३२ ॥ दिननाथेंदुगुरवो यदैकत्र समाश्रिताः । उत्तरस्यां दिशि भयं प्रजाः क्रंदंति नित्यशः ॥ ३३ ॥ यवान्नमुद्गवस्त्राणां संग्रहे च कृते सति । मासे सप्तमके चैव लाभो भवति पुष्कलः ॥ ३४ ॥ रवींदुशुक्रेज्यशशांकपुत्रा यदैकराशौ सहिता भवंति । मेघाः प्रवर्षंति महर्घता स्यात्प्रजाविनाशो दिशि निर्ऋतेः स्यात् ॥ ३५ ॥ जीवार्कशुक्रार्कसुता यदैकराशिं गता भूमिसुतेन युक्ताः । भूपालपीडान्नमहर्घता स्यात् क्रंदंति लोकास्त्रभयाभितप्ताः ॥ ३६ ॥

शनिराहू यदैकत्र भवेतां सहितौ तदा । सर्वधान्यमहर्घत्वं राजानो भयविह्वलाः ॥ ३७ ॥ एकराशिगतावेतौ धरापुत्रांगिरःसुतौ । तदा मेघा न वर्षंति वर्षाकाले न संशयः ॥ ३८ ॥ महीसुतो दैत्यपुरोहितो गुरुर्यदैकनक्षत्रसमाश्रिता ग्रहाः । तदा सुभिक्षं च यवान्नसंग्रहे मासे चतुर्थे विपुलो हि लाभः ॥ ३९ ॥ सप्त ग्रहा यदैकस्था गोलयोगस्तदा भवेत् । दुर्भिक्षं राष्ट्रपीडा च तस्मिन् योगे न संशयः ॥ ४० ॥ अग्रे याति दिवानाथः पृष्ठे च भृगुनंदनः । मध्ये सोमसुतो याति भवत्यन्नमहर्घता ॥ ४१ ॥ गच्छतोग्रे शुक्रशनी बुधः षष्ठं समाश्रितः । धनधान्याकुला पृथ्वी प्रजा नंदंति सर्वशः ॥ ४२ ॥ भौमस्य पृष्ठतो याति भानुश्चेज्जलशोषकः । भवत्यत्र न संदेहो विपरीतो जलप्रदः ॥ ४३ ॥ मेषे समाश्रितो भानुर्वृषे च धरणीसुतः । भयव्याधियुता लोका नृपाणां विग्रहो महान् ॥ ४४ ॥ मेषे शनैश्चरो भानुर्भार्गवो भूमिजस्तथा । दुर्भिक्षं लोकपीडा च भवेत्पृथ्वी भयाकुला ॥ ४५ ॥ वृषराशिं यदा प्राप्ताः शनिभार्गवभूमिजाः । दुर्भिक्षं राष्ट्रभंगश्च लोकानां भयमादिशेत् ॥ ४६ ॥ वृषे भानुः कुजः सौरिस्तदा युद्धं समादिशेत् । न वर्षंति जलं मेघा दुर्भिक्षं लोकपीडनम् ॥ ४७ ॥ मीनराशिगते मंदे कर्कटस्थे बृहस्पतौ । तुलाराशिगते भौमे तदा दुर्भिक्षमादिशेत् ॥ ४८ ॥ शुक्रार्किभूमिपुत्रा हि तुलाराशिसमाश्रिताः । तदा युद्धं महाघोरं राज्ञां चैव परस्परम् ॥ ४९ ॥ चंद्रभार्गवधरासुता यदा मीनराशिमुपयांति वै तदा । दुर्लभं भवति सर्वधान्यकं वारिदश्च न जलं प्रमुंचति ॥ ५० ॥ गुरुयुक्तः शनिर्वक्रं करोति च यदा तदा । नवमे मासि गोधूमतिलतैलमहर्घता ॥ ५१ ॥ गुरुशुक्रावेकराशिं गतौ दुर्भिक्षदुःखदौ । युद्धदौ शनिमाहेयौ तदा दुर्भिक्षकारकौ ॥ ५२ ॥ यदा शुभग्रहः कश्चिदतिचारं करोति च । तदा नृपाः क्षयं यांति दुर्भिक्षं तत्र दारुणम् ॥ ५३ ॥ अतिचारं यदा क्रूरो ग्रहः कश्चित्करोति च । तदा नंदंति राजानो धनधान्याकुला धरा ॥ ५४ ॥ यदातिचारगो मंदो वक्रीभूतोंगिरःसुतः । तदा नंदंति राजानो धनधान्याकुला धरा ॥ ५५ ॥ यदा क्रूरग्रहो वक्री शुभश्चैवातिचारगः । तदा भवति दुर्भिक्षं राज्ञां युद्धं परस्परम् ॥ ५६ ॥ यस्मिन्मासे पूर्णिमायां यदा वर्षति वारिदः । गोधूमघृतधान्यानां तस्मिन्मासे महर्घता ॥ ५७ ॥ यदा मलिम्लुचे भौमोंगिरा राश्यंतरे व्रजेत् । गुरुर्वा महती वृष्टिरथवा लोकसंक्षयः ॥ ५८ ॥ कार्तिके मार्गशीर्षे च संक्रांतौ वारिवर्षणम् । तदा महर्घता पौषे सस्यवृद्धिश्च मध्यमा ॥ ५९ ॥ गुरुशुक्रार्किशशिजा यदैकत्र समाश्रिताः । घातयोगं विजानीयात्पांसुवृष्टिस्तदा भवेत् ॥ ६० ॥ सूर्याद्विधुः पंचमसप्तमः स्यात्क्षोणीसुतो याति तथारिगेहे । दिग्दाहयोगो मुनिना प्रदिष्टो संजातउल्कापतनादिकारी ॥ ६१ ॥ उपप्लुवात्सप्तमगो महीजो महीसुतात्पंचमगो यदा बुधः । बुधाद्विधुः स्याच्च चतुष्टय-

स्थितः स चेह भूकंपनयोग ईरितः ॥ ६२ ॥ मेषे वृषे कुलीरार्द्धे यदोत्पाता भवंति हि । दक्षिणस्यां तदा युद्धं प्रजाः क्षुद्दुःखपीडिताः ॥ ६३ ॥ मिथुनेऽर्केऽन्ननाशः स्याद्विन्ध्ये सिंहलके भयम् । कान्यकुब्जे महापीडा कन्यायां संस्थिते रवौ ॥ ६४ ॥ तौलिन्यर्के च दुर्भिक्षं देशभंगोथ पिंगले । वृश्चिके च मृगे सूर्ये दुर्भिक्षं नर्मदातटे ॥ ६५ ॥ धनुष्यर्के विनश्यंति देशाः कालिंजरादयः । मद्रदेशस्य नाशः स्यात् कुंभेऽर्के सस्यपीडनम् ॥ ६६ ॥ शुक्रसौर्योर्द्वयोरस्तमेकराशौ यदा भवेत् । अन्नपीडा महायुद्धं देशे देशे च विग्रहाः ॥ ६७ ॥ चत्वारः पंचषाः खेटा बलिनस्त्वेकराशिगाः । राज्ञां बहुभयं दद्युरारिभिर्दुःखदा मताः ॥ ६८ ॥ यदा प्रतीपगौ खेटौ नृपं क्षोभयतस्तदा । प्रतीपगास्त्रयः खेटा युद्धवृष्टिभयप्रदाः ॥ ६९ ॥ राज्यभंगं हि कुर्वंति चत्वारो यदि वक्रिणः । प्रतीपगाः पंच खेटा भंगदा राज्यराष्ट्रयोः ॥ ७० ॥ अर्कसौरी भौमसौरी तमस्सौरीज्यमंगलौ । गुरुसौरी महायोगो महीनाशाय कल्पते ॥ ७१ ॥ पंच ग्रहा घ्नंति चतुष्पदानां ते षट् ग्रहा घ्नंति समस्तभूपान् । सप्तग्रहा घ्नंति समस्तदेशान् अष्टग्रहैः स्यात्खलु कूटयोगः ॥ ७२ ॥ इति श्रीज्योतिर्विद्वर्यादत्तात्मजरामदीनकृते संग्रहे बृहद्दैवज्ञरंजने ग्रहाणां योगकथनं नाम सप्तमं प्रकरणं समाप्तम् ॥ ७ ॥

## अथ अष्टमं ग्रहाणामुत्पातप्रकरणं प्रारभ्यते ।

मत्स्यपुराणे—अथ प्रवक्ष्ये द्विजपुंगवानां ज्ञानं सुदिव्यं तरुभूमिवारिजम् । उत्पातसंज्ञान् विविधान् विकारान् जातांश्च देशे नृपराज्यभंगान् ॥ १ ॥ भूकंपनिर्घातरजोतिपाता आसप्तरात्राद् ग्रहणाद्रवींद्वोः । उल्कानिपाताः परिवेषचापाः स्युर्यत्र तद्देशनृपस्य नाशः ॥ २ ॥ यस्यां शिखा स्याद्दिशि धूमकेतोः प्रयाति यस्यामुदितोथ केतुः । रौद्रः स्पृशेद्भानि च यानि यानि तेषां सदेशान्नृपतीन्निहन्यात् ॥ ३ ॥ ज्येष्ठास्थितोर्केण कुजेन युक्तो राहुः शनिर्वाप्युदितश्च केतुः । यदा तदानीं भुवि सार्वभौमो रोगाद्रणाद्वा लभते प्रभंगम् ॥ ४ ॥ निरंतरा सप्तदिनानि वृष्टिर्वर्षी विनाल्पा प्रचुराथ वा स्यात् । अंगारमांसास्थिघृतादिवृष्टिर्वा यत्र तद्देशनृपस्य भंगः ॥ ५ ॥ प्रावृट्काले च सप्ताहाद्वर्षणात्खलु भूपतेः । सैन्यक्षोभो भवेन्नूनं दीर्घकालान्न संशयः ॥ ६ ॥ रक्तादिवर्णैर्वसनैः प्रवेष्टितान् पश्यंति यस्मिन् विषये नरास्तरून् । शुष्काः प्ररोहंति पतंति नीरुजो वृक्षाश्च तद्देशनृपस्य विच्युतिः ॥ ७ ॥ रुदंति जल्पंति हसंति वाप्यः शुष्यंत्यशोष्याः सलिलाशयाश्च । यांति प्रतीपं सरितश्च कूपा नश्यंति वा भंगभयाय राज्ञाम् ॥ ८ ॥ प्रासादकोटध्वजहर्म्यतोरणाः पतंत्यकस्माच्च विना निमित्ततः । रुदंत्यभीक्ष्ण

रजनीषु कुक्कुरा यस्मिंश्च तस्मिन्विषये नृपच्युतिः ॥ ९ ॥ रूक्षः । क्षपायां परिवेष इंदोर्भानोर्यदा सर्वदिने दशाहान् । चतुस्त्रिखेटाः परिवेषगा वा स्युर्यत्र तद्देशनृपस्य भंगः ॥ १० ॥ गर्भो विचित्रो महिषीतुरगीतारागवं द्वित्रिसमुद्भवो वा । चतुस्त्रिशीर्षांघ्रिसुजैर्नृजन्म यस्मिन्पुरे तस्य नृपस्य भंगः ॥ ११ ॥ पृथ्वीविदारश्च विनांबुपातात्स्रावो जलस्यांबुविहीनदेशात् । सरित्तडागादिषु रक्ततोयं राज्ञः प्रभंगाय भवेत्समाधौत्॥ १२॥ ग्रस्तं विधुं वाप्युदयस्थमर्कं लग्नस्थमिंदुं परिवेषगं वा । उल्का निहन्याद्विषये च यस्मिंस्तस्य क्षितीशो मरणं प्रपद्येत् ॥ १३ ॥ प्रबंधकाकासितकीलकाद्या ये केतवस्ते रविमंडलस्थाः । सूर्यग्रहे वास्तमयोदये स्युर्यस्मिन्पुरे तस्य नृपस्य भंगः॥ १४॥ विना वारिप्रवाहाद्वै वर्धंते सलिलाशयाः । यत्र तत्र नृपभ्रंशः सस्यवृद्धेरथ क्षयात् ॥ १५ ॥ संध्याद्वयेऽर्कः परिवेषकारी रक्तैश्च मेघैः स्थगितो रणाय । खंडोऽतिकृष्णस्तपनोऽतिरूक्षो यस्मिन् पुरे तस्य पुरस्य हानिः ॥ १६ ॥ सुनिर्मलेऽर्के घनरेणुहीने छाया प्रतीपाथ न दृश्यते वा । यस्मिंश्च देशे सुमहद्भयं च तस्मिन्समायात्यचिरादरिभ्यः ॥ १७ ॥ भंगः पातो जल्पनं रोदनं वा नृत्यं हास्यं देवतानां च यत्र । धूमज्वालास्वेदभस्मप्रमोक्षो दुर्भिक्षार्तिर्भूपभंगोऽथ तत्र ॥ १८ ॥ नरा विहंगाः पशवः प्रदीप्ता नदंति युद्ध्यंति विना निमित्तात् । व्रजात वा मैथुनमन्यजातां यस्मिन्पुरे तस्य नृपस्य भंगः ॥ १९ ॥ आरण्यसत्वः प्रविशेदभीतो श्वा च यस्मिन्नगरे विशेषात् । सूर्योदये वास्तमये शृगालाः प्राच्यां प्रतीच्यां नृपतेर्भयाय ॥ २० ॥ अतिप्रचंडः पवनः सशर्करो निरंतरं सप्तदशाष्टवासरान् । नैर्ऋत्यजो दक्षिणपश्चिमोद्भवो यस्मिन्पुरे तत्र रिपोर्भयं भवेत् ॥ २१ ॥ गावस्तुरंगा द्विरदा क्षपायां क्रंदंति हर्षंति नदंति दीनम् । संत्यक्तधाराश्रुविलोचनाश्च यस्य क्षितीशस्य च तस्य भंगः ॥ २२ ॥ प्रासादयानालयपादपाद्या वह्निं विना यत्र परिज्वलंति । धूमोऽथ वा स्यादनलैर्विनैव यस्मिन्पुरे तस्य नृपस्य भंगः ॥ २३ ॥ अनाहतास्तूर्यमृदंगभेरीशब्दा भवेयुर्नृपतेश्च यस्य । भेर्यादिशब्दा गिरिकुंजवाप्यां यस्मिन्पुरे तस्य नृपस्य भंगः ॥ २४ ॥ तारागणो यत्र विभाति वासरे सुनिर्मले खे न विभाति वा निशि । सविस्फुलिंगस्त्वथ धूमसंयुतो यस्मिन् पुरे तस्य नृपस्य भंगः ॥ २५ ॥ माहेंद्रचापो जलदैर्विना दिवा रात्रौ समेघोपि महेंद्रदिग्भवः । स राज्यपीडां कुरुते विशेषतो जले तरौ भाति जगत्यवृष्टिकृत् ॥ २६ ॥ वृष्टिस्तडिद्वारिदगर्जनस्वना विना पयोदैः प्रभवंति यत्र वा । चलाः स्थिराः स्युः प्रचलं च निश्चला यस्मिन्पुरे तस्य नृपस्य विच्युतिः ॥ २७ ॥ सदा निर्भरजलार्द्रः स्थिरता देवतालयपाषाणः । प्रतिमादेरानयनं वा राज्ञो राज्यभंगाय स्यात् ॥ २८ ॥ अट्टालकोटध्वजतोरणाद्यमुदेति गांधर्वपुरं हि रक्तम् । प्रधूमितायां दिशि यस्य राज्ये तस्य प्रविद्यात्क्षितिपस्य भंगः ॥ २९ ॥ काष्ठदाहः

पीतवर्णोग्निवर्णः स्पष्टां छायां व्यंजयेत्सूर्यवद्यः । पक्षान्मासाद्वा स भूपं निहन्या-द्दुर्भिक्षार्तिं मानवानां च कुर्यात् ॥ ३० ॥ रोहिणीशकटे केतुर्भिन्द्यात्सौरोथ वा कुजः । यदा तदा जगत्सर्वं संक्षयं यात्यसंशयः ॥ ३१ ॥ पूर्वे द्वितीये प्रहरे दिवानिशं पृथ्वीप्रकंपः पवनाग्निमंगले । दुर्भिक्षचौरानलभूमिविग्रहामयैः प्रजां हंति नरेंद्रभंगदः ॥ ३२ ॥ तुर्ये तृतीये प्रहरे दिवानिशं भूमिप्रकंपो वरुणेंद्रमंडले । सस्यार्धवृद्धिः प्रचुरांबुवृष्टिदो हन्यान्नरान्कंठमुखामयज्वरैः ॥ ३३ ॥ सौम्यां दिशि श्रावणकार्तिकाश्विने भानोर्हिमांशोर्ग्रहणं यदा भवेत् । पादांशमर्द्धं च सुरेज्यवीक्षितं तदा भवेत्क्षेमसुवृष्टिवृद्धिभाक् ॥ ३४ ॥ याम्यां च सर्वं ग्रहणं रवींद्वोर्ग्रस्तोदयास्तौ च यदा भवेताम् । कुजार्कजाभ्यां च निरीक्षितौ स्तस्तदा जगत्क्षुद्भयकष्टमेति ॥ ३५ ॥ प्रासादकोटध्वजतोरणान्वितं स्कंदेति गंधर्वपुरं सितप्रभम् । प्रशांतदिश्यस्तमयोदये रवेस्तद्भूपतेर्वृद्धिजयार्थसौख्यदम् ॥ ३६ ॥ स्निग्धः समग्रः परिवेष इंदोर्भानोर्यदा माक्षिकशांभकांतिः । अखंडितो रौप्यनिभोथ वा स्यात्प्रावृष्यलं क्षेमसुभिक्षवृष्ट्यै ॥ ३७ ॥ सूर्योदये वास्तमये दिने वा तमोनिभो भूरिरजोनिपातः । पक्षाद्दशद्वादशवासराद्वा यस्मिन्पुरे तस्य नृपस्य भंगः ॥ ३८ ॥ उल्कानिपाता बहवः क्षपायां रूक्षाश्च रक्ता चितपन्नगाभाः । एकाथ वोग्रा नियतेर्दिवोल्का यस्मिन्पुरे तस्य नृपस्य भंगः ॥ ३९ ॥ दिवाथ रात्रौ तरणेः पुरस्तान्निर्घातपातः समहीप्रकंपः । उल्कान्वितो वा स्वयमेव वा स्याद्यस्मिन् पुरे तस्य नृपस्य भंगः ॥ ४० ॥ महीप्रकंपाश्चः पुनस्तृतीये तुर्येथ वा सप्तमवासरे वा । पक्षेथ मासे भवति द्वितीयः पृथ्वीप्रकंपो मरणाय राज्ञाम् ॥ ४१ ॥ सहस्ररश्मेर्ग्रहणात् सुधांशोः पक्षावसाने ग्रहणं यदा स्यात् । तदा नरेन्द्राः स्वबलप्रकोपैर्यांति क्षयं सौख्यमुपैति लोकः ॥ ४२ ॥ तुषाररश्मेर्ग्रहणाच्च भानोः पक्षावसाने ग्रहणं यदा स्यात् । तदा नरेंद्राः स्वबलप्रकोपैर्यांति क्षयं कष्टमुपैति लोकः ॥ ४३ ॥ तुषाररश्मेर्ग्रहणाच्च भानोः पक्षावसाने ग्रहणं यदा स्यात् । तदा क्षितीशाः स्वचमूप्रकोपैर्यांति क्षयं कष्टमुपैति लोकः ॥ ४४ ॥ आसप्तरात्राद्ग्रहणाद्रवींद्वोः स्यात्खेटयुद्धात्परिवेषचापात् । दिग्दाहकंपात्कदवृष्टियुद्धरोगाप्रशांतिश्च जलप्रपातात् ॥ ४५ ॥ रात्रौ धनुर्दिने उल्का तारा चैव दिने तथा । रात्रौ तु धूमकेतुश्च भूकंपश्च तथैव हि ॥ ४६ ॥ एतानि दुष्टचिह्नानि देशक्षयकराणि च ॥ ४७ ॥ इति श्रीज्योतिर्विद्वर्यादत्तात्मजरामदीनकृते संग्रहे बृहद्दैवज्ञरंजने ग्रहाणां उत्पातकथनं नाम अष्टमं प्रकरणं समाप्तम् ॥ ८ ॥

---

# अथ नवमं परिवेषादिप्रकरणं प्रारभ्यते ।

वाराहीये-संमूर्च्छिता रवींद्वोः किरणाः पवनेन मंडलीभूताः । नानावर्णाकृतयस्तन्वभ्रे व्योम्नि परिवेषाः ॥ १ ॥ रविशशिपरिवेषे पूर्वयामे च पीडा रविशशिपरिवेषे मध्ययामे च वृष्टिः । रविशशिपरिवेषे धान्यनाशस्तृतीये रविशशिपरिवेषे राज्यभंगश्चतुर्थे ॥ २ ॥ ते रक्तनीलपांडुरकपोताभ्राभशवलहरिशुक्लाः । इंद्रयमवरुणनिर्ऋतिश्वसनेशपितामहाग्निकृताः ॥ ३ ॥ धनदः करोति मेचकमन्योन्यगुणाश्रयेण चाप्यन्ये । प्रविलीयते मुहुर्मुहुरल्पफलः सोपि वायुकृतः ॥ ४ ॥ चाषशिखिरजततैलक्षीरजलाभः स्वकालसंभूतः । अविकलवृत्तः स्निग्धः परिवेषः शिवसुभिक्षकरः ॥५ ॥ सकलगगनानुचारी नैकाभः क्षतजसन्निभो रूक्षः । असकलशकटशरासनशृंगाटकवत् स्थितः पापः ॥ ६ ॥ शिखिगलसमेतिवर्षं वहुवर्णे नृपवधो भयं धूम्रे । हरिचापनिभे युद्धान्यशोककुसुमप्रभे चापि ॥ ७ ॥ वर्णेनैकेन यदा वहुलस्निग्धः क्षुराभ्रकाकीर्णः । स्वस्तौ सद्यो वर्षं करोति पीतश्च दीप्तार्कः ॥ ८ ॥ दीप्तविहंगमृगरुतः कलुषः संध्यात्रयोत्थितोतिमहान् । भयकृत्तडिदुल्काद्यैर्हतो नृपं हंति शस्त्रेण ॥ ९ ॥ प्रतिदिनमर्कहिमांशोरहर्निशं रक्तयोर्नरेंद्रवधः । परिविष्टयोरभीक्ष्णं लग्नास्तमयस्थयोस्तद्वत् ॥ १० ॥ सेनापतेर्भयकरो द्विमंडलो नातिशस्त्रकोपकरः । त्रिप्रभृति शस्त्रकोपं युवराजभयं नगररोधम् ॥ ११ ॥ वृष्टिस्त्र्यहेण मासे न विग्रहो वा ग्रहेंदुभनिरोधे । होराजन्माधिपयोर्जन्मर्क्षे चाशुभो राज्ञः ॥ १२ ॥ परिवेषमंडलगतो रवितनयः क्षुद्रधान्यनाशकरः । जनयति च वातवृष्टिं स्थावरकृषिकृन्निहंता च ॥ १३ ॥ भौमे कुमारपविपतिसैन्यानां विद्रवोग्निशस्त्रभयम् । जीवे परिवेषगते पुरोहितामात्यनृपपीडा ॥ १४ ॥ मंत्रिस्थावरलेखकपरिवृद्धिश्चंद्रजे सुवृष्टिश्च । शुक्रे यायिक्षत्रियराज्ञीपीडाप्रियं चान्नम् ॥ १५ ॥ क्षुदनलमृत्युनराधिपशस्त्रेभ्यो जायते भयं केतौ । परिविष्टे गर्भभयं राहौ व्याधिर्नृपभयं च ॥ १६ ॥ युद्धानि विजानीयात्परिवेषाभ्यंतरे द्वयोर्ग्रहयोः । दिवसकृतः शशिनो वा क्षुदवृष्टिभयं त्रिषु प्रोक्तम् ॥ १७ ॥ याति चतुर्षु नरेंद्रः सामात्यपुरोहितो वशं मृत्योः । प्रलयमिव विद्धि जगतः पंचादिषु मंडलस्थेषु ॥ १८ ॥ ताराग्रहस्य कुर्यात्पृथगेव समुत्थितो नरेंद्रवधम् । नक्षत्राणामथ वा यदि केतोर्नोदयो भवति ॥ १९ ॥ विप्रक्षत्रियविट्शूद्रहा भवेत्प्रतिपदादिषु क्रमशः । श्रेणीपुरकोशानां पंचम्यादिष्वशुभकारी ॥ २० ॥ युवराजस्याष्टम्यां परतस्त्रिषु पार्थिवस्य दोषकरः । पुररोधो द्वादश्यां सैन्यक्षोभस्त्रयोदश्याम् ॥ २१ ॥ नरपतिपत्नीपीडा परिवेषोभ्युत्थितश्चतुर्दश्याम् ॥ कुर्यात्तु पंचदश्यां पीडां मनुजाधिपस्यैव ॥ २२ ॥ नागरकाणामभ्यंतरस्थिता यायिनां च बाह्यस्था ॥ परिवेषमध्यरेखा विज्ञेयाक्रंदसाराणाम् ॥ २३ ॥

रक्तः श्यामो रूक्षश्च भवति येषा पराजयस्तेषाम् । स्निग्धः श्वेतो द्युतिमान् येषां भागो जयस्तेषाम् ॥ २४ ॥ इति श्रीमद्दयादत्तज्योतिर्विदात्मजरामदीनज्योतिर्वित्कृते संग्रहे बृहद्दैवज्ञरंजने परिवेषकथनं नाम नवमं प्रकरणं समाप्तम् ॥ ९ ॥

## अथ दशमं निर्घातप्रकरणं प्रारभ्यते ।

तत्र वाराहीये–पवनः पवनाभिहतो गगनादवनौ यदा समापतति । भवति तदा निर्घातः स च पापो दीप्तविहगरुतः ॥ १ ॥ अर्कोदयेधिकरणिकनृपधनियोधांगना वणिग्वेश्याः । आप्रहरांशेजाविकमुपहन्याच्छूद्रपौरांश्च ॥ २ ॥ आमध्याह्नाद्राजोपसेविनौ ब्राह्मणांश्च पीडयति । वैश्यजलदांस्तृतीये चौरान्प्रहरे चतुर्थे च ॥ ३ ॥ अस्तं याते नीचान् प्रथमे यामे निहंति सस्यान् । रात्रौ द्वितीययामे पिशाचसंघान्निपीडयति ॥ ४ ॥ तुरगकिरणस्तृतीये विनिहन्याद्यायिनश्चतुर्थे । भैरवजर्जरशब्दो याति यतस्तां दिशं हंति ॥ ५ ॥ इति श्रीमद्दयादत्तज्योतिर्विदात्मजरामदीनज्योतिर्वित्कृते संग्रहे बृहद्दैवज्ञरंजने निर्घातलक्षणं नाम दशमं प्रकरणं समाप्तम् ॥ १० ॥

## अथैकादशं इंद्रधनुःप्रकरणं प्रारभ्यते ।

तत्तु वाराहीये–सूर्यस्य विविधवर्णाः पवनेन विघट्टिताः कराः साभ्राः । वियति धनुःसंस्थानां ये दृश्यंते तदिंद्रधनुः ॥ १ ॥ केचिदनंतकुलोरगनिश्वासोद्भूतमाहुराचार्याः । कश्यपस्तु–अनंतकुलयाता ये पन्नगाः कामरूपिणः । तेषां निश्वाससंभूतमिंद्रचापं प्रचक्षते ॥ २ ॥ तद्यायिनां नृपाणामाभिमुखमजयावहं भवति । अच्छिन्नमवनिगाढं द्युतिमत्स्निग्धं घनं विविधवर्णम् ॥ ३ ॥ द्विरुदितमनुलोमं च प्रशस्तमंभः प्रयच्छति च ॥ ४ ॥ विदिगुद्भूतं दिक्स्वामिनाशनं व्यभ्रजं मरककारि । पाटलपीतकनीलैः शस्त्राग्निक्षुत्कृता दोषाः ॥ ५ ॥ जलमध्येऽनावृष्टिर्भुवि सस्यवधस्तरौ स्थिते व्याधिः । वल्मीके शस्त्रभयं निशि सचिववधाय धनुरैंद्रम् ॥ ६ ॥ वृष्टिं करोत्यवृष्ट्यां वृष्टिरवृष्ट्यां निवारयत्यैंद्याम् । पश्चात्सदैव वृष्टिं कुलिशभृतश्चापमाचष्टे ॥ ७ ॥ चापं मघोनः कुरुते निशायामाखंडलायां दिशि भूपपीडाम् । याम्यावरोदक्प्रभवं निहन्यात्सेनापतिं नायकमंत्रिणौ च ॥ ८ ॥ निशि सुरचापं सितवर्णाभं जनयति पीडां द्विजपूर्वाणाम् । भवति च यस्यां दिशि तद्दृश्यं नरपतिमुख्यं न चिराद्धन्यात् ॥ ९ ॥ वाराहीतः कृतमिदमिंद्रचापविलक्षणम् । ग्रंथविस्तारभयतो रामदीनेन धीमता ॥ १० ॥ इति श्रीमद्दयादत्तज्योतिर्विदात्मजरामदीनज्योतिर्वित्कृते संग्रहे बृहद्दैवज्ञरंजने इंद्रचापलक्षणं नाम एकादशं प्रकरणं समाप्तम् ॥ ११ ॥

# अथ द्वादशं भूमिकंपप्रकरणं प्रारभ्यते।

वाराहीये-क्षितिकंपमाहुरेके बृहदंतर्जलनिवासिसत्वकृतम्। भूभारखिन्नदिग्गजविश्रामसमुद्भवं चान्ये॥ १॥ अनिलोनिलेन निहतः क्षितौ पतन्सस्वनं करोत्येके। केचित्त्वदृष्टकारि इदमन्ये प्राहुराचार्याः॥ २॥ गिरिभिः पुरा सपक्षैर्वसुधा प्रपतद्भिरुत्पतद्भिश्च। आकंपिता पितामहामरसदसि सव्रीडम्॥ ३॥ भगवन्नाम ममैतत्त्वया कृतं यदचलेति तन्न तथा। क्रियते चलैश्चलद्भिः शक्ताहं नास्य खेदस्य॥ ४॥ तस्याः सगद्गदगिरं किंचित्स्फुरिताधरं विनतमीषत्। साश्रुविलोचनमाननमवलोक्य पितामहः प्राह॥ ५॥ मन्युं हरेंद्र धात्र्याः क्षिप कुलिशं शैलपक्षभंगाय। शक्रः कृतमित्युक्त्वा मा भैरिति वसुमतीमाह॥ ६॥ किंत्वनिलदहनसुरपतिवरुणाः सदसत्फलावबोधार्थम्। प्राग्द्वित्रिचतुर्भागेषु दिननिश्योः कंपयिष्यंति॥ ७॥ चत्वार्यर्यम्णां धान्यादित्यं मृगशिरोऽश्वियुक्च चेति। मंडलमेतद्वायव्यमस्य रूपाणि सप्ताहात्॥ ८॥ धूमाकुलीकृताशो नभसि नभस्वान् रजः क्षिपन् भौमम्। विरुजन् द्रुमांश्च विचरति रविरपटुकरावभासी च॥ ९॥ वायव्ये भूकंपो सस्यांबुवनौषधिक्षयोभिहितः। श्वपथुश्वासोन्मादज्वरकासभवो वणिक्पीडा॥ १०॥ रूपायुधभृद्वैद्यस्त्रीकविगांधर्वपण्यशिल्पिजनाः। पीडचंते सौराष्ट्रककुरुमगधदशार्णमत्स्याश्च॥ ११॥ पुष्याग्नेयविशाखाभरणीपित्र्याश्च भाग्यसंज्ञानि। वर्गो हौतभुजोयं करोति रूपाण्यथैतानि॥१२॥ तारोल्कापातावृतमादीप्तमिवाम्बरं सदिग्दाहम्। विचरति मरुत्सहायः सप्तार्चिः सप्तदिवसास्तः॥ १३॥ आग्नेयेंबुदनाशः सलिलाशयसंक्षयो नृपतिवैरम्। दद्रूविचर्चिकाज्वरविसर्पिकाः पांडुरोगश्च॥ १४॥ दीप्तौजसः प्रचंडाः पीडचंते चाश्मकांगबाह्लीकाः। तंगणकलिंगवंगद्रविडाः शबराश्च नैकविधाः॥ १५॥ अभिजिच्छ्रवणधनिष्ठाप्राजापत्यैंद्रवैश्वमैत्राणि। सुरपतिमंडलमेतद्भवंति चाप्यस्य रूपाणि॥ १६॥ चलिताचलवर्ष्माणो गंभीरविराविणस्तडित्वंतः। गवलालिकुलाहिनिभा विसृजंति पयः पयोवाहाः॥ १७॥ ऐंद्रं श्रुतिकुलजातिख्यातावनिपालगणपविध्वंसि। अतिसारगलग्रहवदनरोगकृच्छर्दिकोपाय॥ १८॥ काशियुगंधरपौरवकिरातकीराभिसारहलमद्राः। अर्बुदसुवास्तुमालवपीडाकरमिष्टवृष्टिकरम्॥ १९॥ पौष्णाप्याद्रीश्लेषामूलाहिर्बुध्न्यवरुणदैवानि। मंडलमेतद्वारुणमस्यापि भवंति रूपाणि॥ २०॥ नीलोत्पलालिभिन्नांजनत्विषो मधुरराविणो बहुलाः। तडिदुद्भासितदेहा धारांकुरवर्षिणो जलदाः॥ २१॥ वारुणमर्णवसरिदाश्रितघ्नमतिवृष्टिदं विगतवैरम्। गोनर्दचेदिकुकुरान् किरातवैदेहिकान् हंति॥ २२॥ षड्भिर्मासैः कंपो द्वाभ्यां पाकं च याति निर्घाताः। अन्यानप्युत्पातान् जगुरन्ये मंडलैरेतैः॥ २३॥ उल्का हरिश्चंद्रपुरं रजश्च

निर्घातभूकंपककुप्प्रदाहाः । वातोतिचंडो ग्रहणं रवींद्वोर्नक्षत्रतारागणवैकृतानि ॥ २४ ॥ व्यभ्रे वृष्टिर्वैकृते चातिवृष्टिर्धूमोनग्निर्विस्फुलिंगार्चिषो वा । वन्यं सत्वं ग्राममध्ये विशेद्वा रात्रावैंद्रं कार्मुकं दृश्यते वा ॥ २५ ॥ संध्याविकारा परिवेषखंडा नद्यः प्रतीपा दिवि तूर्यनादाः । अन्यच्च यत्स्यात्प्रकृतेः प्रतीपं तन्मंडलैरेव फलं निगद्यम् ॥ २६ ॥ दैत्येंद्रो वायव्यं वायुश्चाप्यैंद्रमेवमन्योन्यम् । वारुणहौतभुजावपि वेलानक्षत्रजाः कंपाः ॥२७॥ प्रथितनरेश्वरमरणव्यसनान्याग्नेयवायुमंडलयोः । क्षुद्भयकरकावृष्टिभिरुपताप्यंते जनाश्चापि ॥ २८ ॥ वरुणपौरंदरयोः सुभिक्षशिववृष्टिहार्दयो लोके । गावोतिभूरिपयसो निवृत्तवैराश्च भूपालाः ॥ २९ ॥ पक्षैश्चतुर्भिरनिलस्त्रिभिरग्निर्देवराट् च सप्ताहात् । सद्यः फलति च वरुणो येषु न कालोद्भूतेषूक्तः ॥ ३० ॥ चलयति पवनः शतद्वयं शतमनलो दशयोजनान्वितम् । सलिलपतिरशीतिसंयुतं कुलिशधरोभ्यधिकं च षष्टितः ॥ ३१ ॥ त्रिचतुर्थसप्तमदिने मासे पक्षेथ वा त्रिपक्षे च । यदि भवति भूमिकंपः प्रधाननृपनाशनो भवति ॥ ३२ ॥ वाराहमतमालोक्य भूकंपस्यापि लक्षणम् । व्यलिखत्संग्रहेप्यस्मिन् रामदीनसुधीरयम् ॥ ३३ ॥ इति श्रीमद्दयादत्तज्योतिर्विदात्मजरामदीनज्योतिर्वित्कृते संग्रहे बृहद्दैवज्ञरंजने भूकंपलक्षणं नाम द्वादशं प्रकरणं समाप्तम् ॥ १२ ॥

## अथ त्रयोदशं दिग्दाहलक्षणप्रकरण प्रारभ्यते ।

दाहो दिशां राजभयाय पीतो देशस्य नाशाय हुताशवर्णः । यश्चारुणः स्यादपसव्यवायुः सस्यस्य नाश स करोति दृष्टः ॥ १ ॥ योतीव दीप्त्या कुरुते प्रकाशं छायामपि व्यंजयतेर्कवद्यः । राज्ञो महद्वेदयते भयं च शस्त्रप्रकोपं क्षतजानुरूपः ॥ २ ॥ प्राक् क्षत्रियाणां च नरेश्वराणां प्राग्दक्षिणे शिल्पिकुमारपीडा । याम्ये सहोग्रैः पुरुषैस्तु वैश्या दूताः पुनर्भूप्रमदाश्च कोणे ॥ ३ ॥ पश्चात्तु शूद्राः कृषिजीविनश्च चौरास्तुरंगैः सह वायुदिक्स्थे । पीडां व्रजंत्युत्तरतश्च विप्राः पाषंडिनो वाणिजकाश्च शार्व्याम् ॥ ४ ॥ नभः प्रसन्नं विमलानि भानि प्रदक्षिणं वाति सदागतिश्च । दिशां च दाहः कनकावदातो हिताय लोकस्य सपार्थिवस्य ॥ ५ ॥ इति श्रीमद्दयादत्तज्योतिर्विदात्मजरामदीनज्योतिर्वित्कृते संग्रहे बृहद्दैवज्ञरंजने दिग्दाहलक्षणं नाम त्रयोदशं प्रकरणं समाप्तम् ॥ १३ ॥

## अथ चतुर्दशं उल्कालक्षणप्रकरणं प्रारभ्यते ।

दिवि भुक्तशुभफलानां पतता रूपाणि तान्युल्काः । धिष्ण्योल्काशनिविद्युत्तारा इति पंचधा भिन्नाः ॥ १ ॥ उल्का पक्षेण फलं तद्वद्धिष्ण्याशनीस्त्रिभिः पक्षैः । विद्युदहोभिः

भ्रष्टाभिस्तद्वत्तारा विपाचयति ॥ २ ॥ तारा फलपादकरी फलार्द्धदात्री प्रकीर्तिता धिष्ण्या । तिस्रः संपूर्णफला विद्युदथोल्काशनिश्चेति ॥ ३ ॥ अथ निस्वनेन महता नृगजाश्वमृगाश्मवेश्मतरुपशुषु । न पतति विदारयंती धरातलं चक्रसंस्थानाम् ॥ ४ ॥ विद्युत्सत्वत्रासं जनयंती तटतटस्वना सहसा । कुटिलविशाला निपतति जीवेंधनराशिषु ज्वलिता ॥ ५ ॥ धिष्ण्या कृशाल्पपुच्छा धनूंषि दश दृश्यतेंतराभ्याधिकम् । ज्वलितांगारनिकाशा द्वौ हस्तौ सा प्रमाणेन ॥ ६ ॥ तारा हस्तं दीर्घा शुक्ला ताम्राब्जतंतुरूपा वा । तिर्यगधश्चोर्ध्वं वा याति वियत्यूह्यमानेव ॥ ७ ॥ उल्का शिरसि विशाला निपतंती वर्धते प्रतनुपुच्छा । दीर्घा भवति च पुरुषं भेदा बहवो भवंत्यस्याः ॥ ८ ॥ प्रेतप्रहरणखरकरभनक्रकपिदंष्ट्रिलांगलमृगाभाः । गोधाहिधूमरूपा पापा या चोभयशिरस्का ॥ ९ ॥ ध्वजझषकरिगिरिकमलेंदुतुरगसंतप्तरजतहंसाभाः । श्रीवत्सवज्रशंखस्वस्तिकरूपाः शिवसुभिक्षाः ॥ १० ॥ अंबरमध्याद्बह्व्यो निपतंत्यो राजराष्ट्रनाशाय । बभ्रमती गगनोपरि विभ्रममाख्याति लोकस्य ॥ ११ ॥ संस्पृशती चंद्रार्कौ तद्विसृतावासभूप्रकंपा च । परचक्रागमनृपभयदुर्भिक्षावृष्टिभयजननी ॥ १२ ॥ पौरेतरघ्नमुल्कापसव्यकरणं दिवाकराहिमांश्वोः । उल्का शुभदा पुरतो दिवाकरविनिःसृता या तु ॥ १३ ॥ शुक्ला रक्ता पीता कृष्णा चोल्का द्विजादिवर्णघ्नी । क्रमशश्चैतान् हन्युर्मूर्द्धोरःपार्श्वपुच्छस्थाः ॥ १४ ॥ उत्तरादिगादिपतिता विप्रादीनामनिष्टदा रूक्षा । ऋज्वी स्निग्धा खंडा नीचोपगता च तद्वृद्ध्यै ॥ १५ ॥ श्यावारुणनीलासृग्दहनासितभस्मसंनिभा रूक्षा । संध्या दिनजा वक्रा दलिता च परागमभयाय ॥ १६ ॥ नक्षत्रग्रहघातैस्तद्भक्तीनां क्षयाय निर्दिष्टा । उदये घ्नती रवींदू पौरेतरमृत्यवेस्ते वा ॥ १७ ॥ भाग्यादित्यधनिष्ठामूलेषूल्काहतेषु युवतीनाम् । विप्रक्षत्रियपीडा पुष्यानिलविष्णुदेवेषु ॥ १८ ॥ ध्रुवसौम्येषु नृपाणामुग्रेषु सदारुणेषु चौराणाम् । क्षिप्रेषु कलाविदुषां पीडा साधारणे वहते ॥ १९ ॥ कुर्वंत्येताः पतिता देवप्रतिमासु राजराष्ट्रभयम् । शक्रोपरि नृपतीनां गृहेषु तत्स्वामिनां पीडा ॥ २० ॥ आशाग्रहोदघाते तद्देश्यानां खले कृषिरतानाम् । चैत्यतरौ संपतिता सत्कृतपीडां करोत्युल्का ॥ २१ ॥ द्वारि पुरस्य पुरक्षयमथेंद्रकीले जनक्षयोभिहितः । ब्रह्मायतने विप्रान् विनिहन्याद्गोमिनो गोष्ठे ॥ २२ ॥ क्ष्वेडास्फोटितवादितगीतोत्क्रुष्टस्वना भवंति यदा । उल्कानिपातसमये भयाय राष्ट्रस्य सनृपस्य ॥ २३ ॥ यस्याश्चिरं तिष्ठति खनुखङ्गो दंडाकृतिः सा नृपतेर्भयाय । या चोह्यते तं तु धृतेन खस्था या वा महेंद्रध्वजतुल्यरूपा ॥ २४ ॥ श्रेष्ठिनः प्रतीपगा तिर्यगा नृपांगना । हंत्यधोमुखी नृपान् ब्राह्मणानथोर्ध्वगा ॥२५॥ बर्हिपुच्छरूपिणी लोकसंक्षयावहा । सर्पवत्प्रसर्पिणी योषितामनिष्टदा ॥ २६ ॥ हंति मंडलापुरं छत्रवत्पुरोहितम् । वंशगुल्मवत् स्थिता राष्ट्रदोषकारिणी ॥ २७ ॥ व्यालसूकरोपमा विस्फुलिंगमालिनी । खंडशोथ वा गता सस्वना च पापदा ॥२८॥ सुरपतिचा-

तिमा राज्यं नभसि विलीना जलदान् हंति । पवनविलोमा कुटिलं याता न भवति शस्ता विनवृत्ता वा ॥ २९ ॥ अभिभवति यतः पुरं बलं वा भवति भयं तत एव पार्थिवस्य । निपतति यया दिशा प्रदीप्ता जयति रिपूनचिरात्तया प्रयातः ॥ ३० ॥

इति श्रीमद्र यादत्तज्योतिर्विदात्मजरामदीनज्योतिर्वित्कृते संग्रहे बृहद्दैवज्ञरंजने उल्कालक्षणं नाम चतुर्दशं प्रकरणं समाप्तम् ॥ १४ ॥

## अथ पंचदशं वर्षेशनिर्णयप्रकरणं प्रारभ्यते ।



कल्पलतायाम्—संवत्सरस्य चांतस्य कुहूर्भवति यद्दिने । अपरो वासरो योसौ सोयं राजा विनिर्दिशेत् ॥ १ ॥ रत्नावल्याम्—चैत्रशुक्लप्रतिपदि यो वारोर्कोदये स वर्षेशः । उदयद्वितये पूर्वो नोदययुगलेपि पूर्वः स्यात् ॥ २ ॥ दर्शांतेनल्पेपि पूर्वो राजा तदागमोपि विज्ञेयः । यस्माच्चैत्रसितादेरुदयाद्भानोः प्रवृत्तिरब्दादेः ॥ ३ ॥ दर्शप्रतिपत्संधौ चैत्रादौ यो भवेद्वारः । सोब्दपतिर्विज्ञेयः प्रतिपदि मध्याह्नकाले यः ॥ ४ ॥ बहुभिः कीततो राजा रवेरुदयकालिकः । तत्र भूपद्वये वृद्धौ भूपाभावस्तिथिक्षये ॥ ५ ॥ गर्गः—अमाप्रतिपदोः संधिर्मध्याह्नात्पूर्वतो यदि । तदा तद्दिनपो राजा परतश्चेत् परो भवेत् ॥ ६ ॥ मकरंदे—यस्मिन्वारेपराह्ले स्यात्प्रतिपन्मधुशुक्लजा । स एव नृपतिर्ज्ञेयो वराहाद्यवहारतः ॥ ७ ॥ अन्ये तु यत्र वारे किंस्तुघ्नकरणं स्यात्तमेव राजानमूचुः । एवं मतभेदे सति पूर्वं व्यवस्थामाहुः ॥ कांबोजखार्जूरकिरातसिंधुदेशेषु बिल्वेष्वपि दर्दुरेषु । किंस्तुघ्नमध्याह्नगतेब्दपः स्यादन्येषु सूर्योदयगो दिनेशः ॥ ८ ॥ चैत्रादिमेषादिकुलीरतौलिमृगादिवाराधिपतिक्रमेण । राजा चमूपो ह्यथ सस्यनाथो रसाधिपो नीरसनायकश्च ॥ ९ ॥ फलोदये—चैत्रस्य शुक्लप्रतिपत्तिथौ यो वारः स उक्तो नृपतिस्तदाब्दे । मेषप्रवेशे किल भास्करस्य यस्मिन्दिने स्यात्स तु राजमंत्री ॥ १० ॥ कर्कसंक्रांतेर्यो वारः स अग्रधान्येश्वरः । धनसंक्रांतेर्यो वारः स पाश्चिमधान्येश्वरः ॥ ११ ॥ कर्कप्रवेशे दिनपस्य उक्ते सस्यस्य नाथो मुनिभिः पुराणैः । आर्द्राप्रवेशे दिननाथ उक्तो मेघाधिपः प्राक्तनविप्रवर्यैः ॥ १२ ॥ सिंहसंक्रांतिवारेशो दुर्गेशः परिकीर्तितः । कन्यासंक्रांतिदिनपो धनेशः परिकीर्तितः ॥ १३ ॥ तुलाप्रवेशेहनि यस्य वारो रसाधिपोयं नियत प्रदिष्टः । चापप्रवेशे दिवसाधिनाथे धान्याधिपो वै कथितो मुनींद्रैः ॥१४॥ नक्रसंक्रांतिवारेशो नीरसेशः प्रकीर्तितः । मीनसंक्रांतिदिनपः फलेशः परिकीर्तितः ॥१५॥ रामघ्नशाको नग ( ७ ) भक्तशेषः पक्षण ( २ ) युक्तो भवतीह राजा । बाणेन मंत्री वसुभिश्च वर्षा नाथश्चतुर्भि ( ४ ) र्यदि सस्यनाथः ॥ १६ ॥ अथ विंशोपकानयनम् । शक त्रिघ्ने हृते शैलैर्लब्धं स्थाप्यं पृथक् पृथक् । शेषं द्विघ्नं शरै ( ५ ) र्युक्तं वर्षं स्याच्च ततः पुनः ॥ १७ ॥ लब्धं शाकं प्रकल्प्यैवं कर्तव्याः प्रोक्तवत्क्रियाः । धान्यं

तृणं ततः शीतमुष्णं मारुतवृद्धयः । नाशोऽथ विग्रहश्चैवं जायंते क्रमतास्त्विमे ॥१८॥ वर्षादिनवकस्याथ योगं दशहृते युतः । तल्लब्धं निष्पत्तिरुक्ता सार्धार्धे धर्मसप्तके ॥ १९ ॥ अथ क्षुदानयनम् । शाके सप्तगुणे नंदै (९) र्भक्ते लब्धं तु तत्क्वचित् । निधाय द्विगुणं शेषं सैकं क्षुत्स्यात्ततः पुनः ॥ २० ॥ लब्धं शाकं प्रकल्प्यैवं कर्तव्या प्रोक्तवत्क्रिया ॥ २१ ॥ तृषा निद्रा तथालस्यमुद्यमः शांतिरेव च । क्रोधो दंडोथ मित्रत्वमुत्सवः पापपुण्यके ॥ २२ ॥ अथ प्रकारांतरेण क्षुदानयनम् । शाके वेदै (४) र्हते शैलै (७) र्भक्ते लब्धं च पूर्ववत् । शेषं च द्विगुणं सैकं क्षुधा तृष्णा सुषुप्तिका ॥२३॥ आलस्यमुद्यमः शांतिः क्रोधो लाभोथ भेदकः । दंडोथ मैथुनं चौर्यं रसनिष्पत्तिरेव च ॥ २४ ॥ फलनिष्पत्तिरुत्साहः पुण्यं पापं तथैव च । सर्वनिष्पत्तिरित्येवं संपत्तिश्च यथाक्रमात् ॥ २५ ॥ अथोग्रत्वाद्यानयनम् । शाकश्चाष्ट (८) गुणैः खेटै (९) र्भक्तो लब्धं च पूर्ववत् । द्विघ्नं शेषं त्रिभिर्युक्तमुग्रत्वं च रसोद्भवः ॥ २६ ॥ फलोत्पत्तिस्तथा व्याधी रोगनाशस्तथैव च । आचारश्चाप्यनाचारो मृतिर्जन्म ततः परम् । चौरोपशमनं वह्नेर्भीतिरग्निशमः क्रमात् ॥ २७ ॥ अथ शलभाद्यानयनम् । शाके त्रिघ्ने हृते नंदै (९) र्लब्धं स्थाप्यं तदुक्तवत् । द्विघ्नं शेषं त्रिभिर्युक्तं शलभो मूषकस्तथा ॥ २८ ॥ दैविकं पीतताम्रे च चक्रं च परचक्रकम् ॥ २९ ॥ अथ प्रकारांतरम् । शैलघ्नो नवहृच्छाकः शेषं द्विघ्नं युतं त्रिभिः । शलभो मूषको दैवं पीतं ताम्रं स्वचक्रकम् ॥ ३० ॥ परचक्रागमश्चैवं क्रमाज्ज्ञेयं च पूर्ववत् ॥ ३१ ॥ अथोद्भिज्जादिप्राण्यानयनम् । शाके बाणैर्नगैरर्कैरीशै (५।७।१२।११) र्निघ्ने पृथक् पृथक् । सप्तभक्तेऽवशेषं यद्द्विघ्नं पंचयुतं क्रमात् ॥ ३२ ॥ उद्भिज्जः स्वेदजश्चैव जरायुःप्रभवोंडजाः ॥ ३३ ॥ अथ धर्मानयनम् । खाभ्रखाभ्रांकवेदै (४९००००) श्च कालिशेषसमा युतिः । कलिमानेन संभक्ता यल्लब्धं धर्मराशयः ॥ ३४ ॥ अथ प्रकारांतरम् । रसा-(६) स्तिथ्यो (१५) गजाः शैलचंद्रा (१७) नंदेंदव (१९) स्तथा । स्वर्गा (२१) दिशः (१०) क्रमाज्ज्ञेया रव्यादीनां ध्रुवा इमे ॥ ३५ ॥ निजराशिपतेर्वर्षे स्वामिनो ध्रुवयोगके । त्रिघ्ने बाणयुते भुक्ते तिथि (१५) भिः शेषसंमिताः ॥३६॥ आयाः स्युः त्रिगुणे लब्धे शराढ्यास्तिथि (१५) भिर्हृते । शेषे व्ययाः क्रमात्स्वस्य राशीनां कथितं बुधैः ॥ ३७ ॥ अथ संवत्सरादत्र सुभिक्षादिज्ञानमनुक्रमादाह । त्रिघ्नं संवत्सरैर्युक्तं शरैर्भक्तेथ सप्तभिः । चतुर्द्वित्रिमिते शेषे सुभिक्षं विपुलं भवेत् ॥ ३८ ॥ त्रिपंचके च दुर्भिक्षं षट्भूसंस्थे च मध्यमम् । शून्ये तु रौरवं ज्ञेयं फलं वर्षे बुधैः स्मृतम् ॥ ३९ ॥ अन्यच्च-द्विघ्नः संवत्सरै रामैर्हीनो भक्ते नगैस्ततः । शेषे बाणमितैर्युग्मैः सुभिक्षं हायने भवेत् ॥ ४० ॥ वेदचंद्र-

गमिते ज्ञेयं दुर्भिक्षं खे तु रौरवम् । रसानलमिते मध्यमेतद्वाच्यं फलं बुधैः ॥ ४१ ॥ अथ वर्तमानसंवत्सरस्य नामसंख्यांकात्सुभिक्षादिज्ञानम् । प्रभवाद्द्विगुणं कृत्वा त्रिभिन्यूनं च कारयेत् । सप्तभिस्तु हरेद्भागं शेषं ज्ञेयं शुभाशुभम् ॥ ४२ ॥ एकचत्वारि दुर्भिक्षं पंचद्वाभ्यां सुभिक्षकम् । त्रिषष्ठे तु समं ज्ञेयं शून्ये पीडा न संशयः ॥ ४३ ॥ अथ शकात्सुभिक्षादिज्ञानमत्राह । शाके त्रिघ्ने युते बाणैः शैलैर्भक्तेऽथ शेषके । क्रमाद्बोध्यं सुभिक्षं च दुर्भिक्षं च सुभिक्षकम् ॥ ४४ ॥ महर्षे समता ज्ञेया चैकतो रौरवं तु खे ॥ ४५ ॥ अथ वर्षस्यात्र शुभाशुभविचारः। तिथिवारर्क्षयोगानां युतिः संवत्सरान्वितः । प्रष्टुर्नामाक्षरैर्युक्तस्त्रिहृतः शेषके फलम् ॥ ४६॥ एकेन क्लेशं समता च द्वाभ्यां सुखं त्रिशेषे मुनयो वदंति ॥ ४७ ॥ अथ शकाद्वृष्टिज्ञानम् । त्रिघ्नः शाको द्वित्रियुक्तो भक्तो वेदैश्च शेषके । विषमे प्रचुरा वृष्टिः समांके स्वल्पिका भवेत् ॥ ४८ ॥ इति श्रीमद्दयादत्तज्योतिर्विदात्मजरामदीनज्योतिर्वित्कृते संग्रहे बृहद्दैवज्ञरंजने वर्षेशादिनिर्णयो नाम पंचदशं प्रकरणं समाप्तम् ॥ १५ ॥

---

## अथ षोडशमयनप्रकरणं प्रारभ्यते ।

तच्च सौरमेव । उक्तं च भास्करीयसिद्धांते-'वर्षायनर्तुयुगपूर्वकमत्र सौरात्' इति । सोमसिद्धांते-यावदर्को न कर्कादि स्पृशेत्तावत्पुरायनः । सौम्याख्यमथ तिग्मांशुर्यावन्न मकरादिगः ॥ १ ॥ तावद्याम्यायनं तत्स्यात् । इति । सूर्यसिद्धांते-भानोर्मकरसंक्रांतेः षण्मासा उत्तरायणम् । कर्कादेस्तु तथैव स्यात् षण्मासा दक्षिणायनम् ॥ २ ॥ अत्र केचित्सायनार्कवशादेव अयनप्रवृत्तिरिति वदंति तन्न यतो निरयनगणनयैव लोके सकलव्यवहारो दृश्यते । तद्यथा वसिष्ठसंहितायाम्-षट् पौष्णभाद्द्वादश रौद्रधिष्ण्यात्सुराधिपाद्भानि नव क्रमेण । पूर्वार्धमध्यापरभागमिंदुर्भुंक्तेऽखिलं व्योमचरास्तथैव ॥३॥ ग्रहाणां पूर्वार्धमध्यापरभागयोगित्वं निरयनगणनैव प्रत्यक्षतो गणितागतनक्षत्रे दृश्यते । सायनत्वेपि ग्रहः कदाचिदेकनक्षत्रांतरे नक्षत्रद्वयांतरे वोपलभ्यते एवं सति यात्रादिशुभकार्यमुहूर्तेषु भरण्यादिदुष्टनक्षत्राणां गुरुपुष्यादिसिद्धियोगानां च व्यवहारो निरयनेनैवोपपद्यते । सायनगणना तु नियतविषया ॥ उक्तं च ब्रह्मसिद्धांते-अयनांशा प्रदातव्या लग्ने क्रांतौ चरागमे । वित्रिभे सत्रिभे पाते तथा दिक्कर्मपातयोः ॥ ४ ॥ इति । अतएव शिष्टाः सायनमकरसंक्रमवशेन प्रवृत्तोत्तरायणे विवाहादि शुभकर्म न कुर्वंति ॥ रात्रिभागः समाख्यातः खरांशोर्दक्षिणायनम् । व्रतबंधादिकं तत्र चूडाकर्म च वर्जयेत् ॥ ५ ॥ जलाशयसुरारामप्रतिष्ठा व्रतबंधनम् । अग्न्याधानं विवाहं च चौलं राज्याभिषेचनम् । नवगेहप्रवेशादीन् न कुर्याद्दक्षिणायने ॥ ६ ॥

गृहप्रवेशस्त्रिदशप्रतिष्ठा विवाहचौलव्रतबंधदीक्षा । सौम्यायने कर्म शुभं विधेयं यद्गर्हितं तत्खलु दाक्षिणायने ॥ ७ ॥ इति श्रीमद्दयादत्तज्योतिर्विदात्मजरामदीनज्योतिर्वित्कृते संग्रहे बृहद्दैवज्ञरंजने अयनकथनं नाम षोडशं प्रकरणं समाप्तम् ॥ १६ ॥

## अथ सप्तदशं ऋतुप्रकरणं प्रारभ्यते ।

अत्र पूर्वोक्तसिद्धांतवाक्यादृतवः सौरा एव ज्ञेयास्तेषां च गणनाक्रम उक्तो रत्नमालायाम्–मृगादिराशिद्वयभानुभोगात्षडर्तवः स्युः शिशिरो वसंतः । ग्रीष्मश्च वर्षा च शरच्च तद्वद्धेमंतनामा कथितोत्र षष्ठः ॥ १ ॥ सूर्यसिद्धांते–द्विराशिमाना ऋतवस्ततोपि शिशिरादयः । मेषादयो द्वादशैते मासास्तैरेव वत्सरः ॥ २ ॥ गणपतिः–मीनमेषगते सूर्ये वसंतः परिकीर्तितः । वृषभे मिथुने ग्रीष्मो वर्षा सिंहेऽथ कर्कटे ॥ ३ ॥ कन्यायां च तुलायां च शरदृतुरुदाहृतः । हेमंतो वृश्चिकद्वंद्वे शिशिरो मृगकुंभयोः ॥ ४ ॥ मेषादितो द्विद्विभभानुभोगाद्वसंतपूर्वा ऋतवः षडुक्ताः ॥ ५ ॥ चैत्रादिद्विद्विमासाभ्यां वसंताद्दतवश्च षट् । दाक्षिणात्याः प्रगृह्णंति दैवे पित्र्ये च कर्मणि ॥ ६ ॥ सुश्रुतौ–तत्र पूर्वाह्णे वसंतः मध्याह्ने ग्रीष्मः अपराह्णे प्रावृट् प्रदोषे वार्षिकं शरदमर्धरात्र्ये प्रत्यूषसि हेमंतमुपलक्षयेत् । कामरत्नेपि–वसंतश्चैव पूर्वाह्णे ग्रीष्मो मध्याह्न उच्यते । वर्षा ज्ञेयापराह्णे तु प्रदोषे शिशिरः स्मृतः ॥ ७ ॥ अर्धरात्रौ शरत्काल उषा हेमंत उच्यते । ऋतवः कथिता ह्येते शास्त्रज्ञैः पूर्वसूरिभिः ॥ ८ ॥ अथ ऋतूनामधिपाः । सर्वार्थचिन्तामणौ–भृगोर्वसंतः क्षितिसूनुभान्वोर्ग्रीष्मः शशांकस्य ऋतुः प्रवर्षः । विदुः शरद्देवगुरोस्तु हेमऋतुः शने: स्याच्छिशिरस्तु कालः ॥ ९ ॥ इति श्रीमद्दयादत्तज्योतिर्विदात्मजरामदीनज्योतिर्वित्कृते संग्रहे बृहद्दैवज्ञरंजने ऋतुकथनं नाम सप्तदशं प्रकरणं समाप्तम् ॥ १७ ॥

## अथाष्टादशं मासप्रकरणं प्रारभ्यते ।

ते मासाश्चतुर्विधाश्चांद्रसौरसावननाक्षत्रभेदात् । उक्तं च बृहस्पतिना–चतुर्विधास्तु विज्ञेया मासा वर्षाश्च तैस्तथा । वर्षे तु द्वादशे पूर्णे वर्षमासविशेषता ॥ १ ॥ सौरश्चान्द्रश्च नाक्षत्रः सावनश्च चतुर्विधः । राशौ राशौ रवेर्योगात्सौरमासः प्रकीर्तितः ॥ २ ॥ कुहोर्यदावसानं स्याच्चान्द्रस्याद्यंतकस्तथा । नक्षत्रचैके चंद्रस्य योगावृत्त्या यद् तदा ॥ ३ ॥ मासो नाक्षत्रनामायं व्यवहारप्रसिद्धिदः । त्रिंशद्भानूदयादेव मासः सावन उच्यते ॥ ४ ॥ श्रीपतिनापि–दर्शावधिं मासमुशंति चान्द्रं सौरं तथा भास्करराशिचा-

रात् । त्रिंशद्दिनं सावनसंज्ञमायां नाक्षत्रमिंदोर्भगणभ्रमाच्च ॥ ५ ॥ लोमशसिद्धांतेपि-चांद्रो दर्शावधिर्मासः स च सूर्येंदुसंगमः । तयोर्विश्लेषसमयेग्रिमो मास उदाहृतः ॥ ६ ॥ तेषामैंदवमासानां चैत्राद्याख्याश्च संस्मृताः ॥ ७ ॥ आर्ष्टिषेणिः—दर्शांते वैदिको मासो राकांतः स्मार्त उच्यते । पौराणो हरिघस्रांतः श्रौत उत्पत्तिपूर्वकः ॥ ८ ॥ वृद्धगर्गः—विवाहादौ स्मृतः सौरो यज्ञादौ सावनः स्मृतः । वार्षिके पितृकार्ये च मासश्चांद्रोभिधीयते ॥ ९ ॥ श्रीपतिः—चांद्रे विवाहाध्वरपूर्वकार्यं स्त्रीगर्भवृद्ध्यादि च सावनाख्ये । सौरेखिलं खेचरकर्म कुर्यान्नाक्षत्रमासे घनगर्भपूर्वम् ॥ १० ॥ बृहस्पतिः—पराश्रयाणां यद्वत्स्यात्स्वाश्रयश्च शुभं कथम् । तस्मात्स्थिराणि कार्याणि शुभकर्माणि मानवैः ॥ ११ ॥ दैवोत्सवश्च कर्तव्यो सौरेण नैव चान्द्रतः । श्राद्धादयश्च सौरेण मासेन नैव चान्द्रतः ॥ १२ ॥ नारदः— ग्रहाणां निखिलश्चारो गृह्यते सौरमानतः । वृद्धेर्विधानं स्त्रीगर्भे सावनेन च गृह्यते ॥ १३ ॥ प्रकर्षणं मेघगर्भे नाक्षत्रेण प्रगृह्यते ॥ १४ ॥ वसिष्ठः—उद्वाहयज्ञोपनयनप्रतिष्ठातिथिव्रतक्षौरमहोत्सवाद्यम् । पर्वक्रिया वास्तुगृहप्रवेशः सर्वं हि चांद्रेण विगृह्यमेतत् ॥ १५ ॥ अन्यः—तापनीकृष्णयोर्मध्ये चांद्रमासः प्रशस्यते । अन्येषु सर्वदेशेषु सौरो व्रतविवाहयोः ॥ १६ ॥ विंध्याद्रेर्दक्षिणे भागे चांद्रो मासः प्रशस्यते । उदग्भागे तु विंध्यस्य सौरमानं विधीयते ॥१७॥ अन्येषु सर्वदेशेषु मिश्रमानं प्रकल्पयेत् ॥ १८ ॥ नारदः—यस्मिन्मासे पौर्णमासी येन धिष्ण्येन संयुता । तन्नक्षत्राह्वयो मासः पौर्णमासस्तथाह्वयः ॥ १९ ॥ सूर्यसिद्धांते—कार्तिकादिषु मासेषु कृत्तिकादि द्वयं द्वयम् । अंत्योपांत्यौ पंचमश्च त्रिभमासत्रयं स्मृतम् ॥ २० ॥ गुरुः—नक्षत्रद्वितयेष्विंदौ पूर्णे त्वाष्ट्रद्वये ततः । मासाश्चैत्रादयः षड्भिः षट्सप्तांत्यात्त्रिभिर्दिनैः ॥ २१ ॥ रघुनाथोपि— द्वे द्वे चित्रादिताराणां परिपूर्णेंदुसंगमे । मासाश्चैत्रादिका ज्ञेयास्त्रिभैः षष्ठांत्यसप्तमाः ॥ २२ ॥ तेषां नामानि मुहूर्तगणपतौ—मासश्चैत्रोथ वैशाखो ज्येष्ठश्चाषाढसंज्ञकः । ततस्तु श्रावणो भाद्रपदोथाश्विनसंज्ञकः ॥ २३ ॥ कार्तिको मार्गशीर्षश्च पौषो माघोथ फाल्गुनः ॥ २४ ॥ मधुश्च माधवश्चैव शुक्रः शुचिरथो नभाः । नभस्यश्चैष ऊर्जश्च सहश्चाथ सहस्यकः ॥ २५ ॥ तपास्तथा तपस्यश्च माससंज्ञाः क्रमादमूः ॥ २६ ॥ मासेश्वरास्त्रैलोक्यप्रकाशे—आषाढो भास्करो ज्ञेयो ज्येष्ठमासः कुजः पुनः । श्रावणः सबलः शुक्रश्चन्द्रो भाद्रपदः स्मृतः ॥ २७ ॥ पौषश्च मार्गशीर्षश्च गुरुर्ज्ञेश्विनकार्तिकौ । चैत्रवैशाखकौ राहौ मंदेथ माघफाल्गुने ॥ २८ ॥ इति श्रीमद्दयादत्तज्योतिर्विदात्मजरामदीनज्योतिर्वित्कृते संग्रहे बृहद्दैवज्ञरंजने मासकथनं नाम अष्टादशं प्रकरणं समाप्तम् ॥ १८ ॥

---

# अथैकोनविंशं अधिमासप्रकरणं प्रारभ्यते ।

तल्लक्षणं सिद्धांतशिरोमणौ—असंक्रांतिमासोधिमासः स्फुटः स्याद्विसंक्रांतिमासः क्षयाख्यः कदाचित् । क्षयः कार्तिकादित्रये नान्यतः स्यात्तदा वर्षमध्येऽधिमासद्वयं स्यात् ॥१॥ मुहूर्तमार्तंडे—एकस्मिन्वर्षे अधियुगे अधिकद्वये सति पूर्वोधिमासो प्रथमोधिमासः प्राकृतः प्राकृतवज्ज्ञेयः अधिकवन्न त्याज्यः । आर्योद्युत्तरोधिकमासो मलमासस्तदुक्तम् । मासद्वयेब्दमध्ये च संक्रमो न भवेद्यदा । प्राकृतस्तत्र पूर्वः स्यादुत्तरस्य मलिम्लुचः ॥ २ ॥ पितामहः—अष्टाधिमासः स्युर्नित्यं प्रोच्यंते फाल्गुनादयः । सौम्यपौषौ क्षयौ नित्यं भवेतामिति निश्चितम् ॥ ३ ॥ क्षयो वाप्यधिमासो वा स्यादूर्जे इति निश्चितम् । न क्षया नाधिमासः स्यान्माघो वै परिकीर्तितः ॥४॥ चंडेश्वरः—दर्शद्वयमतिक्रम्य यदा संक्रमते रविः । मलमासः स विज्ञेयः सर्वकर्मसु गर्हितः ॥ ५ ॥ षष्टिभिर्दिवसैर्मासः कथितो बादरायणैः । आद्यो मालिम्लुचः पक्षो द्वितीयः प्राकृतः स्मृतः ॥ ६ ॥ पौलस्तिसिद्धांते—स्फुटगत्या यदा चंद्रो रविमंडलमध्यगः । तदूर्ध्वं संक्रमो भानोर्मासः स्यात्स मलिम्लुचः ॥ ७ ॥ ब्रह्मसिद्धांते—चांद्रो मासो ह्यसंक्रान्तो मलमासः प्रकीर्तितः ॥८॥ कालनिर्णये—संक्रमो यदि भवेद्रवेस्ततो मंडलाद्बहिरनिर्गते विधौ । उच्यतेथ स हि संक्रमो बुधैः शुद्धमास इतरो मलिम्लुचः ॥ ९ ॥ मुहूर्तमार्तंडेपि—ब्रह्माद्यैरिनमंडलांत उदितश्चान्द्रस्त्वमांतः परैर्मासो संक्रमणो द्विसंक्रमणको ज्ञेयोधिकोथो क्षयः ॥१०॥ अन्यत्रापि—शकुन्यादिचतुष्कं तु रवेर्मलमुदाहृतम् । तदूर्ध्वं क्रमते भानोर्मासः स्यात्तु मलिम्लुचः ॥ ११ ॥ द्वात्रिंशतागतैर्मासैर्दिनैः षोडशभिस्तथा । घटिकानां चतुष्केण पतत्येकोधिमासकः ॥ १२ ॥ गर्गः—यदा चंद्रोर्कबिंबस्थस्ततः संक्रमते रविः । दानव्रतादि यज्ञादि वर्ज्यं तत्राधिमासके ॥ १३ ॥ लल्लः—यदा शशी याति गभस्तिमंडलं दिवाकरः संक्रमणं करोत्यनु । विवाहयज्ञोत्सवनाशहेतुकस्तदाधिमासः कथितः स्वयंभुवा ॥ १४ ॥ शार्ङ्गधरफलग्रंथे—चंद्रार्कयोस्तु बिंबैक्यं प्रतिपद्दर्शसंधिषु । तिथ्यंतादुभयतो रसनाड्योर्कमंडलात् ॥ १५ ॥ तन्मंडलाच्छशी गच्छेत्ततः सूर्यस्य संक्रमः । मासोसौ मलिनः प्रोक्तो न तद्धीनोधिकः स्मृतः ॥ १६ ॥ पितामहः—प्रतिपद्दर्शसंधौ तु बिंबैक्यं चंद्रसूर्ययोः । जवांतरासषष्टिघ्नं नाडिका अर्कमंडलम् ॥ १७ ॥ ज्योतिःप्रकाशे—दर्शांत एकैः कथितोत्र मासः परैः प्रदिष्टो रविमंडलांतः । मतद्वये चेद्रविसंक्रमः स्यात्स एव पूर्वस्य न चापरस्य ॥ १८ ॥ श्रीपतिः—सवितृमंडलमेति यदा शशी तदनु संक्रमणं कुरुते रविः । मखमहोत्सवनाशकरस्तदा मुनिवरैः कथितोधिकमासकः ॥ १९ ॥ गर्गः—अग्न्याधेयं प्रतिष्ठां च यज्ञो दानव्रतानि च । वेदव्रतवृषोत्सर्गचूडाकरणमेखलाः ॥ २० ॥ गमनं

देवतीर्थानां विवाहमभिषेचनम् । यानं च गृहकर्माणि मलमासे विवर्जयेत् ॥ २१ ॥ तथा च सूर्योदये-आवश्यकर्म मासाख्यं मलमासमृताब्दिकम् । तीर्थेभच्छाययोः श्राद्धमाधानांगापितृक्रियाम् ॥ २२ ॥ कुर्यान्मलिम्लुचे वर्षे मध्ये चेत्सर्वदाधिकम् । तत्र स्यान्मासिकं मृत्युं मासात्स द्वादशो यदि ॥ २३ ॥ प्रेतक्रियां समाप्यात्र कुर्वीताभ्युदयं तथा । श्यामाकाग्रयणं कृच्छ्रेण स्याद्वर्ज्यमतोन्यथा ॥ २४ ॥ काम्यारंभं वृषोत्सर्गं पर्वोत्सवमुपाकृतिम् । मेखलाचौलमांगल्याग्न्याधानोद्यापनाक्रियाः ॥ २५ ॥ वेदव्रतमहादानाभिषेकान्वर्द्धमानकम् । इष्टं पूर्तं तथा यस्य विघ्यलोपोन्यदा कृतौ ॥२६॥ स्मृतिरत्नावल्याम्-प्रवृत्तं मलमासात्प्राग्यत्काम्यमसमापितम् । आगते मलमासेपि तत्समाप्यमसंशयम् ॥ २७ ॥ फलविवेके-मलमासे तु यो यात्रां कुर्यान्मोहेन भूपतिः । पराजयो भवेत्तस्य कलहो जीवनाशनम् ॥ २८ ॥ गर्गः-सोमयागादिकर्माणि नित्यान्यपि मलिम्लुचे । तथैवाग्रयणाधानचातुर्मास्यादिकान्यपि ॥ २९ ॥ महालयाष्टकाश्राद्धोपाकर्माद्यपि कर्म यत् । स्पष्टमासे विशेषाढ्याविहितं वर्जयेन्मले ॥३०॥ बृहस्पतिः-अग्न्याधानप्रतिष्ठां च यज्ञदानव्रतानि च । वेदव्रतवृषोत्सर्गचूडाकरणमेखलाः ॥ ३१ ॥ मांगल्यमभिषेकं च मलमासे विवर्जयेत् ॥ ३२ ॥ मरीचिः-ग्रहप्रवेशगोदानस्थानाश्रयमहोत्सवम् । न कुर्यान्मलमासे तु ससर्पांहस्पतौ तथा ॥ ३३ ॥ वसिष्ठः-वापीकूपतडागादिप्रतिष्ठा यज्ञकर्म च । न कुर्यान्मलमासे तु ससर्पांहस्पतौ तथा ॥ ३४ ॥ मनुस्मृतौ-तीर्थश्राद्धं दर्शश्राद्धं प्रेतश्राद्धं सपिंडनम् । चंद्रसूर्यग्रहे स्नानं मलमासे विधीयते ॥ ३५ ॥ पराशरः-गर्भे वार्धुषिके भृत्ये प्रेतकर्मणि मासिके । सापिंडीकरणे नित्ये नाधिमासं विवर्जयेत् ॥ ३६ ॥ कात्यायनस्मृतौ-गर्भाधानादिका अन्नप्राशनांता मलिम्लुचे । कर्तव्या कर्णवेधादिक्रिया नान्या कदाचन ॥ ३७ ॥ गणपतिः-गर्भाधानादिसंस्कारे तथान्नप्राशने शिशोः । न तत्र गुरुशुक्रास्तमलमासादिदूषणम् ॥ ३८ ॥ अथाधिमासफलम् । सूर्यपुराणे-सुभिक्षं क्षेममारोग्यं चैत्रे तु सुहितप्रजाः । वृष्टिः सुभिक्षं वैशाखे ज्वरातीसारसंभवाः ॥ ३९ ॥ रोगपीडा भवेज्ज्येष्ठे यज्ञदानादिकं बहु । यशः पुण्यं सुभिक्षं च द्विराषाढे महत्सुखम् ॥ ४० ॥ सर्वकामसमृद्धिः स्यात् श्रावणे शूद्रवृद्धयः । विरोधः क्षत्रियाणां तु युद्धं भाद्रपदे विदुः ॥ ४१ ॥ आश्विने परचक्रेण तस्करैः पीडिताः प्रजाः । सुभिक्षं क्षेममारोग्यं दुर्भिक्षं दक्षिणापथे ॥ ४२ ॥ राजानस्तत्र नश्यंति वृद्धिर्ब्राह्मणजातिषु । द्विकार्तिकं शुभं धान्यं संतुष्टाः सकलाः प्रजाः ॥ ४३ ॥ नानायज्ञाः प्रवर्तंते विप्रेभ्यो वृद्धिरुत्तमा । मार्गशीर्षे सुभिक्षं तु नीरोगाः सकलाः प्रजाः ॥ ४४ ॥ राजान्यत्वं सुभिक्षं च फाल्गुने जायते सुखम् ॥ ४५ ॥ अथ कस्मिन् वर्षे कोधिमासो भविष्यतीति ज्ञानार्थमुक्तं च मकरंदे-शाकः षड्रसभूपकै ( १६६६ ) र्विरहितो नन्देंदु (१९) भिर्भाजितः शेषग्नौ (३) च मधुः शिवे (११) तदपरो ज्येष्ठंबरे (१०) चाष्टके (८)। आषाढो

नृपते ( १६ ) नभश्च शरके ( ५ ) विश्वे ( १३ ) नभस्यस्तथा बाहू ( २ ) चाश्विनसंज्ञको मुनिवरैः प्रोक्तोधिमासः क्रमात् ॥ ४६ ॥ अन्यः–अष्टाश्विनंदै ( ९२८ ) र्वियुते च शाके नवेंदुभिर्भाजितशेषमंकम् । ख ( ० ) रुद्र (११ ) अष्टा ( ८ ) विषु (५) विश्व ( १३ ) युग्मं ( २ ) चैत्रादितः सप्त सदाधिमासः ॥ ४७ ॥ अन्यस्तु--शशि-मुनिविधुवाह्निर्मि ( ३१७१ ) श्रिता शाककाले द्विगुणमनु ( १४३२ ) विहीनो नंदचंद्रै ( १९ ) र्विभक्तः । यदि भवति स शेषः सध्रुवेंको विलोक्य गणकमुनिभिरुक्तं चात्र चैत्रादिमासः ॥ ४८ ॥ यदा षोडशके शेषे समासं च द्वितीयकम् । आषाढमासकं कार्यं ब्रह्मसिद्धांतभाषितम् ॥ ४९ ॥ अन्यः–मेघेषुभू ( १५१७ ) हीनशकोंकचन्द्रैः ( १९ ) शेषोधिमासा मधुतश्च सप्त । रामो ( ३ ) महेशो ( ११ ) वसु ( ८ ) ख ( ० ) नृपो ( १६ ) र्थो ( ५ ) विश्वे( १३ ) भुजः (२) कार्तिकपंचनष्टा ॥५०॥ अन्यत्रापि–शाके भानु ( १२ ) मिते गुण्यभागमेकोन ( १९ ) विंशतिः । चैत्राद्या गणनीयाश्च अधिमासाः प्रकीर्तिताः ॥ ५२ ॥ पंच मासास्तु वैशाखादधिकाः संव्यव-स्थिताः । भवंति चाष्टभिर्वर्षैः भवैर्वांकनिशाकरैः ॥ ५१ ॥ तथैव फाल्गुनश्चैत्र आ-श्विनः कार्तिकोधिकः । एते क्विन्द्रैः ( १४१ ) शरांगै ( ६५ ) र्वा कदाचिद्गोकुवा त्सरैः ॥ ५३ ॥ मार्गपौषौ क्षयौ स्यातां कदाचित्कार्तिको भवेत् । अधिमासस्तदा ज्येष्ठे-भवेन्नित्यं क्षयो भवेत् ॥ ५४ ॥ क्षयात्प्रागाधिमासः स्यान्नित्यं भाद्रपदत्रये । आश्विनार्जौ सदा स्यातामादौ भाद्रपदः सकृत् ॥५५॥ यस्मिन्वर्षे कार्तिकक्षयो भवेत्त-स्मिन्वर्षे ज्येष्ठोधिमासो भवेत् । अत्र ज्येष्ठशब्देन भाद्रपदो ज्ञेयः ॥

| संवत्. | अधिमास | संवत् | अधिमास | संवत् | अधिमास |
|---|---|---|---|---|---|
| १९५५ | आश्विन | २००२ | चैत्र | २०४२ | श्रावण |
| १९५८ | आषाढ | २००४ | श्रावण | २०४५ | ज्येष्ठ |
| १९६१ | ज्येष्ठ | २००७ | आषाढ | २०४८ | वैशाख |
| १९६४ | चैत्र | २०१० | वैशाख | २०५० | भाद्रपद |
| १९६६ | श्रावण | २०१२ | भाद्रपद | २०५३ | आषाढ |
| १९६९ | आषाढ | २०१५ | श्रावण | २०५६ | ज्येष्ठ |
| १९७३ | वैशाख | २०१८ | ज्येष्ठ | २०५८ | आश्विन |
| १९७४ | भाद्रपद | २०२० | आश्विन | २०६१ | श्रावण |
| १९७७ | श्रावण | २०२७ | चैत्र | २०६४ | ज्येष्ठ |
| १९८० | ज्येष्ठ | २०२३ | श्रावण | २०६७ | वैशाख |
| १९८३ | चैत्र | २०२६ | आषाढ | २०६९ | भाद्रपद |
| १९८५ | श्रावण | २०२९ | वैशाख | २०७२ | आषाढ |
| १९८८ | आषाढ | २०३१ | भाद्रपद | २०७५ | ज्येष्ठ |
| १९९१ | वैशाख | २०३४ | आषाढ | २०७७ | आश्विन |
| १९९३ | भाद्रपद | २०३७ | ज्येष्ठ | २०८० | श्रावण |
| १९९६ | श्रावण | २०३९ | आश्विन | २०८३ | ज्येष्ठ |
| १९९९ | ज्येष्ठ | २०३९ | फाल्गुन | २०८५ | कातक |

| संवत् | अधिमास | संवत् | अधिमास | संवत् | अधिमास |
|---|---|---|---|---|---|
| २०८६ | चैत्र | २१४५ | श्रावण | २२८३ | कार्तिक |
| २०८८ | भाद्रपद | २१४८ | आषाढ | | फाल्गुन |
| २०९१ | आषाढ | २१५१ | वैशाख | २३०२ | आश्विन |
| २०९४ | ज्येष्ठ | २१५३ | भाद्रपद | २३६७ | फाल्गुन |
| २०९६ | आश्विन | २१५६ | आषाढ | २३६८ | आश्विन |
| २०९९ | भाद्रपद | २१५९ | ज्येष्ठ | २४२३ | चैत्र |
| २१०२ | ज्येष्ठ | २१६१ | आश्विन | २५०८ | कार्तिक |
| २१०४ | फाल्गुन | २१६२ | चैत्र | २५०९ | आश्विन |
| २१०७ | श्रावण | २१६४ | श्रावण | २६४९ | चैत्र |
| २११० | आषाढ | २१६७ | आषाढ | २६५० | ाश्विन |
| २११३ | वैशाख | २१७० | वैशाख | २६६८ | चत्र |
| २११५ | भाद्रपद | २१७२ | भाद्रपद | | आश्विन |
| २११८ | आषाढ | २१७५ | आषाढ | २७९० | फाल्गुन |
| २१२१ | ज्येष्ठ | २१७८ | वैशाख | २७९१ | अ.श्विन |
| २१२३ | फाल्गुन | २१८० | भाद्रपद | | चैत्र |
| २१२६ | श्रा[illegible]ण | २१८१ | फाल्गुन | २८०९ | आश्विन |
| २१२९ | आषाढ | २१८३ | श्रावण | | फाल्गुन |
| २१३२ | वैशाख | २१८६ | ज्येष्ठ | २९३१ | आश्विन |
| २१३४ | भाद्रपद | २१८९ | वैशाख | २९३२ | चैत्र |
| २१३७ | आषाढ | २२२६ | कार्तिक | २९५० | आश्विन |
| २१४० | ज्येष्ठ | २२२७ | चैत्र | | फाल्गुन |
| २१४२ | कार्तिक | २२५५ | कार्तिक | २९९६ | कार्तिक |
| २१४२ | फाल्गुन | २२५५ | फाल्गुन | २९९७ | चैत्र |

इति श्रीमद्दयादत्तज्योतिर्विदात्मजरामदीनज्योतिर्वित्कृते संग्रहे बृहद्दैवज्ञरंजने अधिमासकथनं नाम एकोनविंशं प्रकरणं समाप्तम् ॥ १९ ॥

## अथ विंशं क्षयमासप्रकरणं प्रारभ्यते ।

माहेश्वरः—यत्र मासि रविसंक्रमद्वयं तत्र मासयुगुलं क्षयाह्वयम् । व्योमरामदिवसैर्भवेच्छुभे यज्ञकर्माणि च वर्जयेत्तु तम् ॥ १ ॥ भास्करीयसिद्धांते—गतोऽब्ध्यद्रिनंदै(९७४)र्मिते शाककाले तिथीशै (१११५) र्भविष्यत्यथांगाक्षसूर्यैः (१२५६)। गजाद्र्यग्निभूमि (१३७८) स्तथा प्रायशोयं कुवेदेंदुवर्षैः (१४१) क्वचिद्गोकुभिश्च (१९)॥ २ ॥ स्मृतिरत्नावल्याम्—एक एव यदा मासः संक्रांतिद्वयसंयुतः । मासद्वयगतं श्राद्धं तस्मिन्नेव प्रशस्यते ॥३॥ क्षयमासो भवेद्यस्मिन्तस्मिन्वर्षेऽतिविग्रहम् ।

दुर्भिक्षं वाथवा पीडा छत्रभंगं करोति वा ॥ ४ ॥ पक्षस्य मध्ये द्वितिथी विनष्टे महाहवो रौरवविग्रहं च । पक्षे विनष्टे नृपती विनष्टे मासक्षयश्चेत्क्षयती वसुंधरा ॥ ५ ॥ बृहत्कालनिर्णये-तिथ्यर्धे प्रथमे पूर्वो द्वितीयेर्धे तथोत्तरः । मासाविति बुधैर्ज्ञेयौ क्षय मासस्य मध्यगौ ॥ ६ ॥

| संवत् | क्षयमास | संवत् | क्षयमास | संवत् | क्षयमास |
|---|---|---|---|---|---|
| २०२० | मार्गशीर्ष | २१८० | पौष | २६४९ | मार्गशीर्ष |
| २०२९ | पौष | २२२६ | मार्गशीर्ष | २६६८ | ״ |
| २०८५ | मार्गशीर्ष | २२४५ | पौष | २७९० | मार्गशीर्ष |
| २१०४ | मार्गशीर्ष | २२८३ | मार्गशीर्ष | २८०९ | पौष |
| २१२९ | मार्गशीर्ष | २३०२ | मार्गशीर्ष | २९३१ | मार्गशीर्ष |
| २१४२ | कार्तिक | २३६७ | मार्गशीर्ष | २९५० | पौष |
| २१६१ | मार्गशीर्ष | २५०८ | मार्गशीर्ष | २९९६ | मार्गशीर्ष |

इति श्रीज्योतिर्विद्वर्यादत्तात्मजरामदीनकृते संग्रहे बृहद्दैवज्ञरंजने क्षयमासकथनं नाम विंशं प्रकरणं समाप्तम् ॥ २० ॥

## अथ एकविंशं पक्षप्रकरणं प्रारभ्यते ।

तल्लक्षणमुक्तं सिद्धांतसारे-सूर्येंदुसंगमस्यैव विश्लेषसमयाद्बुधैः । शुक्लपक्षोथ राकांतस्तदग्रे कृष्णपक्षकः ॥ १ ॥ श्रीपतिः-स्वनामनक्षत्रसमाननामा मासाश्च पक्षावपि देवपित्र्यौ । उक्तौ निरुक्तौ खलु शुक्लकृष्णौ शुभाशुभे कर्मणि तौ प्रशस्तौ ॥ २ ॥ अन्यः-पूर्वापरौ मासदलं हि पक्षौ पूर्वापरौ तौ सितनीलसंज्ञौ । पूर्वस्तु देवस्त्वपरश्च पैत्र्यः केचित्तु कृष्णे सितपंचमीतः ॥ ३ ॥ आदौ शुक्लः प्रवक्तव्यः केचित्कृष्णेपि मासके ॥ ४ ॥ केचिन्मतेन-कृष्णाष्टमीदलादूर्ध्वं यावच्छुक्लाष्टमी भवेत् । तावत्क्षीणशशी ज्ञेयः संपूर्णस्तदनंतरम् ॥ ५ ॥ अन्योपि-कृष्णाष्टमी त्वष्टमि-शुक्ल यावत्तावदपूर्णा शशिनो वदंति । केचिद्वचुः कृष्णशिवाख्यतिथ्यादमांतयावत प्रवदंति तावत् ॥ ६ ॥ इति श्रीज्योतिर्विद्वर्यादत्तात्मजरामदीनकृते संग्रहे बृहद्दैवज्ञ-रंजने पक्षकथनं नाम एकविंशं प्रकरणं समाप्तम् ॥ २१ ॥

## अथ द्वाविंशं तिथिप्रकरणं प्रारभ्यते ।

तल्लक्षणमुक्तं वसिष्ठसिद्धांते-सूर्यान्निर्गत्य यत्प्राचीं शशी याति दिने दिने । लिप्तादिसाम्ये सूर्येंदू तिथ्यंतेकांशकैस्तिथिः ॥ १ ॥ सूर्यसिद्धांते-अर्काद्विनिःसृतः प्राचीं यद्यात्यहरहः शशी । तच्चान्द्रमानमंशैस्तु ज्ञेया द्वादशभिस्तिथिः ॥ २ ॥ अथ तिथिप्रशंसा । संहिताप्रदीपे-तिथिः शरीरं मन इंदुवीर्यं विलग्नमात्मावयवास्तु भावाः । शुद्धे शरीरेऽन्यतरद्विचिंत्यं न क्वापि कुड्येन विनास्ति चित्रम् ॥ ३ ॥

केनापि दोषेण तिथौ प्रदुष्टे दुष्यंति लग्नेंदुबलर्क्षवाराः । सौंदर्यकांत्यादिमुखा गुणाश्च नासाविहीनस्य भवंत्यसाराः ॥ ४ ॥ सर्वत्र कार्येषु शुभाशुभेषु पृच्छंति लोके तिथिमेव पूर्वम् । न क्वापि योगं करणं ग्रहं वा तस्मात्तिथिर्मुख्यतरत्वमुक्तम् ॥ ५ ॥ वारर्क्षचंद्रोदयशुद्धिलाभे तिथिः सदोषापि भवेददोषा । सौरभ्यकांत्यादिगुणैः सरोजं सकंटकत्वेपि यतो गुणाढ्यम् ॥ ६ ॥ विशुद्धमृक्षं सबलं च लग्नं यथा प्रयत्नेन विलोकयंति । तथा न योगं करणं तिथिं वा दोषो गुणो वापि तिथेर्यतोल्पः ॥ ७ ॥ तिथिरेकगुणा प्रोक्ता नक्षत्रं च चतुर्गुणम् । वारश्चाष्टगुणः प्रोक्तः करणं षोडशान्वितम् ॥ ८ ॥ द्वात्रिंशल्लक्षणो योगस्ताराः षष्टिगुणाः स्मृताः । चन्द्रः शतगुणः प्रोक्तो लग्नं कोटिगुणं स्मृतम् ॥ ९ ॥ नारदः—गुणस्य दोषस्य च तारतम्यं विचारणीयं विदुषा प्रयत्नात् । कश्चिद्गुणो दोषशतं निहंति दोषो गुणानामपि हंति लक्षम् ॥ १० ॥ पूर्वापराभ्यां सहितस्तिथिभ्यां निहंति दर्शो निचयं गुणानाम् । तमेव हित्वामृतसिद्धियोगस्तिथेरशेषानपि हंति दोषान् ॥ ११ ॥ वृंदावने—अमातिथिः पार्श्वतिथिद्वयेन समं न मांगल्यमुपादधीत । लोके प्रणस्तत्र तिथेः प्रणेता तस्मान्न पीयूषवपुर्वपुष्मान् ॥ १२ ॥ स्यातामुभौ दोषगुणौ महांतौ यदा तदा हीनतरो गुणः स्यात् । पुण्ये कृते पातकिनाधिकेन नोपैति पापीति जनापवादः ॥ १३ ॥ चण्डेश्वरः—वह्निर्ब्रह्मा पार्वती विघ्नराजो नागः स्कन्दो भास्करस्त्र्यम्बकश्च । दुर्गा देवी चांतकृद्विष्णुविष्णू कामश्चेशश्चेन्दुरेतैः पुराणैः ॥ १४ ॥ श्रीपतिः—तिथौ हि दर्शसंज्ञके पितॄनुशंत्यधीश्वरान् । त्रयोदशीतृतीययोः स्मृतस्तु वीतपीपरैः ॥१५॥ ज्योतिःप्रकाशे—स्वस्य देवप्रतिष्ठायां मंत्रसंग्रहणे तथा । पवित्रदमनारोपे ग्राह्यास्तस्य तिथिर्बुधैः ॥ १६ ॥ श्रीपतिस्तु—नंदा च भद्रा च जया च रिक्ता पूर्णेति सर्वास्तिथयः क्रमात्स्युः । कनिष्ठमध्येष्टफलास्तु शुक्ले कृष्णे भवंत्युत्तममध्यहीनाः ॥ १७ ॥ वृद्धिः सुमंगलपदा च बलाबला च लक्ष्मीवती त्वथ यशा ।परतस्तु मित्रा । तद्वद्बलासु महती तिथिरुग्रकर्मा स्याद्धर्मिणी प्रतिपदादि तथैव नंदा ॥ १८ ॥ क्रमाद्यशोवत्यपरा जयोग्रा सौम्याह्वया पंचदशी तिथिश्च । फलानि नाम्ना सदृशानि तासां महर्षिभिर्नूनमुदाहृतानि ॥ १९ ॥ नंदासु चित्रोत्सववास्तुतंत्रक्षेत्रादि कुर्वीत तथैव नृत्यम् । विवाहभूषाशकटाध्वयाने भद्रासु कार्याण्यपि पौष्टिकानि ॥ २० ॥ जयासु संग्रामबलोपयोगिकार्याणि सिद्ध्यंति हि निर्मितानि । रिक्तासु विद्विड्विषबंधघातविषाग्निशस्त्राणि च यांति सिद्धिम् ॥ २१ ॥ पूर्णासु मांगल्यविवाहयात्रा सपौष्टिकं शांतिककर्म कार्यम् । सदैव दर्शे पितृकर्म मुक्त्वा नान्यद्विदध्याच्छुभमंगलानि ॥ २२ ॥ षष्ठ्यष्टमी चतुर्थी चतुर्दशी द्वादशा च नवमी च । कृष्णस्य तु पंचदशी शुभकर्मसु वर्जितास्तिथयः ॥ २३ ॥ एकादशी द्वितीया पंचमी सप्तमी तृतीया च । प्रतिपद्दशमी चेष्टा त्रयोदशी पौर्णमासी च ॥२४॥ राकानुमत्याविति पौर्णमास्यौ रात्रींदुदृष्टेंदुवशाद्भवेताम् । कुहूः सिनीवाल्यपि नष्टदृष्टे

चंद्रे स्मृते चासितपंचदश्यौ ॥ २५ ॥ स्नातुर्जनस्य दशमी तनयान् त्रयोदश्यर्थं निहं-त्युभयमेतदपि द्वितीया । सप्तम्यनिंद्रुनवमीषु च संपदित्सुः स्नायात्कदाचिदपि नाम-लकैर्मनुष्यः ॥२६॥ रामः—षष्ठ्यष्टमीभूतविधुक्षयेषु नो सेवेत ना तैलपले क्षुरं रतिम् । नाभ्यंजनं विश्वदशद्विके तिथौ धात्रीफलैः स्नानममाद्रिगोष्वसत् ॥ २७ ॥ परिहारमाह-शनौ षष्ठ्यां स्मृतं तैलं महाष्टम्यां पलाशनम् । क्षौरं शुक्लचतुर्दश्यां दीपमाल्यां तु मैथुनम् ॥ २८ ॥ वैशाखे शुक्लपक्षे तु तृतीयायां कृतं युगम् । कार्तिके शुक्लपक्षे तु त्रेतायां नवमेहनि ॥ २९ ॥ भाद्रकृष्णत्रयोदश्यां प्रवृत्तिर्द्वापरस्य च । माघे तु पौर्णमास्यां हि घोरं कलियुगं तथा ॥ ३० ॥ युगारंभे तु तिथयो युगाद्यास्तेन कीर्तिताः । तासु दत्तं हुतं किंचित्सर्वं बहुफलं भवेत् ॥ ३१ ॥ अश्वयुक्शुक्लनवमी द्वादश्यूर्जे मधौ तृतीया च । भाद्रपदेपि तृतीया श्रावणमासे त्वमावास्या ॥ ३२ ॥ एकादशी च पौषे शुचि सितदशमी च सप्तमी माघे । बहुलाष्टमी नभस्येथाषाढी कार्तिकी तद्वत् ॥ ३३ ॥ फाल्गुनसितपंचदशी चैत्री ज्येष्ठस्य पौर्णमासी च । मन्व-न्तराद्य इमे चतुर्दशोक्ता बुधैः पुण्याः ॥ ३४ ॥ श्रीपतिः—यत्रैकः स्पृशति तिथि-द्वयावसानं वारश्चेदवमदिनं तदुक्तमाद्यैः । यः स्पर्शाद्भवति तिथित्रयस्य चाह्नां त्रिद्युस्पृक्स पुनीरदं द्वयं च नेष्टम् ॥ ३५ ॥ ज्ञानमंजर्याम्—तिथित्रयं स्पृशत्येको

**तिथ्यंशचक्रम् ।**

| | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ४ | ८ | १२ | १६ | २० | २४ | २८ | ३२ | ३६ | ४० | ४४ | ४८ | ५२ | ५६ | ६० |
| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ |
| २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १ |
| ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १ | २ |
| ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १ | २ | ३ |
| ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १ | २ | ३ | ४ |
| ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १ | २ | ३ | ४ | ५ |
| ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १ | २ | ३ | ४ | ५ | ६ |
| ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १ | २ | ३ | ४ | ५ | ६ | ७ |
| ९ | १० | ११ | १२ | १३ | १४ | १५ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ |
| १० | ११ | १२ | १३ | १४ | १५ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |
| ११ | १२ | १३ | १४ | १५ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० |
| १२ | १३ | १४ | १५ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ |
| १३ | १४ | १५ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ |
| १४ | १५ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ |
| १५ | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ |

वारश्चेदवमं हि तत् । त्रिवारस्पृक्‌ तिथिर्यत्र त्रिदिनस्पृक्च उच्यते ॥ ३६ ॥ कृतं यन्मङ्गलं तत्र त्रिषु स्पृगवमे दिने । भस्मीभवति तत्क्षिप्तमग्नौ सम्यग् यथेंधनम् ॥ ३७ ॥ नारदः—तिथेः पंचदशो भागः क्रमात्प्रतिपदादितः । क्षणसंज्ञा तदर्द्धानि तासामर्द्धप्रमाणतः ॥ ३८ ॥ ज्योतिषसारे—मासभाच्चन्द्रभं यावद्गणयेत्तावदेव तु । यावंति गणनार्द्धानि तावंत्यस्तिथयः क्रमात् ॥ ३९ ॥ गुरुः—दर्शे प्रतिपदष्टम्यां मांसस्त्रीतैलसेवनात् । चतुर्दश्यां तथाष्टम्यां चाण्डालो जायते नरः ॥ ४० ॥ कूष्मांडी बृहतीफलानि लवणं वर्ज्यं तिलाम्लं तथा तैलं चामलकं दिवप्रसवताशीर्षं कपालांत्रकम् । निष्पावांश्च मसूरिकाफलमथो वृन्ताकसंज्ञं मधु द्यूतस्त्रीगमनं क्रमात्प्रतिपदादिष्वेवमाषोडश ॥ ४१ ॥

इति श्रीमद्दयादत्तज्योतिर्विदात्मजरामदीनज्योतिर्वित्कृते संग्रहे बृहद्दैवज्ञरंजने तिथिकथनं नाम द्वाविंशं प्रकरणं समाप्तम् ॥ २२ ॥

---

## अथ त्रयोविंशं वारप्रकरणं प्रारभ्यते ।

तन्मानलक्षणमुक्तं पुलस्तिसिद्धांते—अथ सावनमानेन वाराः सप्त प्रकीर्तिताः । ते चार्कोदययोरेव विवरे तु समाः स्मृताः ॥ १ ॥ वसिष्ठोपि—वारप्रवृत्तिविज्ञानं क्षणवारार्थमेव हि । अखिलेष्वन्यकार्येषु दिनानि उदयाद्भवेत् ॥ २ ॥ वारः स्वदेशार्कोदयादिति वसिष्ठसिद्धान्ते—राश्यादिसाम्यं मासांते पक्षांतेंशादिकौ समौ । सर्वेषामेव मानानां दिनमर्कस्य दर्शनात् ॥ ३ ॥ तेषां नामानि—रविः सोमो मङ्गलश्च बुधो जीवः सितः शनिः । एतेषां नामतो वाराः सप्तैव कथिताः पुरा ॥ ४ ॥ शुक्रेंदुबुधजीवानां वाराः सर्वत्र शोभनाः । भानुभूसुतमंदानां शुभकर्मसु केष्वपि ॥ ५ ॥ श्रीपतिः—राजाभिषेकोत्सवयानसेवागोवह्निमंत्रौषधिशस्त्रकर्म । सुवर्णताम्रौर्णिकचर्मकाष्ठसंग्रामपण्यादि रवौ विदध्यात् ॥ ६ ॥ शंखाब्जमुक्तारजतेक्षुभोज्यस्त्रीवृक्षकृष्यंबुविभूषणाद्यम् । गीतक्रतुक्षीरविकारशृंगीपुष्पाक्षरारंभणमिंदुवारे ॥ ७ ॥ भेदानृतस्तेयविषाग्निशस्त्रबंधाभिघाताहवशाठ्यदंभान् । सेनानिवेशाकरधातुहेमप्रवालकार्यादि कुजेह्नि कुर्यात् ॥ ८ ॥ नैपुण्यपण्याध्ययनं कलाश्च शिल्पादिसेवालिपिलेखनानि । धातुक्रियाकांचनयुक्तिसंधिव्यायामवादाश्च बुधे विधेयाः ॥ ९ ॥ धर्मक्रिया पौष्टिकयज्ञविद्यमांगल्यहेमांबरवेश्मयात्रा । रथाश्वभैषज्यविभूषणाद्यं कार्यं विदध्यात्सुरमंत्रिणोह्नि ॥१०॥ स्त्रीगीतशय्यामणिरत्नगंधं वस्त्रोत्सवालंकरणादि कर्म । भूपण्यगोकोशकृषिक्रियाश्च सिध्यंति शुक्रस्य दिने समस्तम् ॥ ११ ॥ लोहाश्मसीसत्रपुशस्त्रदासपापानृतस्तेयविषासवाद्यम् । गृहप्रवेशो द्विपबंधदीक्षा स्थिरं च कर्मार्कसुतेह्नि कुर्यात् ॥१२॥ रविः स्थिरः शीतकरश्चरश्च महीज उग्रः शशिजश्च मिश्रः । लघुः सुरेज्यो

भृगुजो मृदुश्च शनिश्च तीक्ष्णः कथितो मुनींद्रैः ॥ १३ ॥ शस्तो हि लाक्षारसरंजनेर्को मांजिष्ठकौसुंभकरागयोश्च । महीसुतः काञ्चनभूषणेषु पतंगसूनुः खलु लोहकृत्ये॥१४॥ गर्गः-लाक्षाकौसुंभमांजिष्ठरोगकांचनभूषणे । प्रशस्तौ भौममार्तंडौ रविजो लोहकर्मणि ॥ १५ ॥ सोमसौम्यगुरुशुक्रवासराः सर्वकर्मसु भवंति सिद्धिदाः । भानुभौमशनिवासरेषु तु प्रोक्तमेव खलु कर्म सिध्यति ॥ १६ ॥ क्षीणेंदुसौरिकुजवक्रिदिने न शस्तं शस्तं च कर्म यदि चोपचयस्थिताः स्युः । अस्तंगतस्य विकृतस्य च नेष्टमह्नि सर्वं प्रशस्तमिह शेषदिनेश्वराणाम् ॥ १७ ॥ चण्डेश्वरः-न वारदोषाः प्रभवंति रात्रौ विशेषतो भौमशनैश्वराणाम् । मध्याह्नकालादुपरि प्रवृत्ताः फलं न दद्युः करणानि चैवम् ॥ १८ ॥ न वारदोषाः प्रभवंति रात्रौ देवेज्यदैत्येज्यदिवाकराणाम् । दिवा शशांकार्कजभूसुतानां सर्वत्र निंद्यो बुधवार उक्तः ॥ १९ ॥ अथात्र रेखापुराणि देशांतरं चाह-पुरी राक्षसी देवकन्याथ कांची सितः पर्वतः पर्वतौ वत्सगुल्मौ । पुरी चोज्जयिन्याह्वया गर्गराठं कुरुक्षेत्रमेरुर्भुवो मध्यरेखा ॥ २० ॥ रेखा स्वदेशांतरयोजनघ्नी गतिर्ग्रहस्याग्रगजैर्विभक्ता । लब्धा विलिप्ताः खचरे विधेयाः प्राच्यामृणं पश्चिमतो धनं ताः ॥ २१ ॥ श्रीपतिः-वारप्रवृत्तिं मुनयो वदंति सूर्योदयाद्रावणराजधान्याम् । ऊर्ध्वं तथाधोप्यपरत्र तस्माच्चरार्धदेशांतरनाडिकाभिः ॥ २२ ॥ चरार्धदेशांतरयोर्वियोगो योगेथ पानीयपलैश्च सम्यक् । सूर्योदयादूर्ध्वमृणे धनेधो वारप्रवृत्तिं मुनयो वदंति ॥२३॥ सिद्धांतसारे-याम्ये सौम्य क्रमाद्गोले चरनाड्यो धनर्णकाः । प्रत्यक्प्राग्देशयोस्तद्वत्स्युर्देशांतरनाडिकाः ॥ २४ ॥ चरार्द्धदेशांतरनाडिकानां धनर्णतैक्ये युतिरन्यथान्या । सूर्योदयादूर्ध्वमथो घटीभिः स्वदेशजाभिर्दिनपप्रवृत्तिः ॥ २५ ॥ शिरोमणिसिद्धान्ते-सूर्योदयादूर्ध्वमधश्च ताभिः प्राच्यां प्रतीच्यां दिनपप्रवृत्तिः । ऊर्ध्वं तथाधश्चरनाडिकाभी रवावुदग्दक्षिणगोलजाते ॥ २६ ॥ ज्योतिःसारे-देशांतरचरार्धाभ्यां सौम्ये गोल इनोदयात् । ऊर्ध्वं वारप्रवृत्तिः स्याद्याम्ये चाधः प्रकीर्तितः ॥ २७ ॥ श्रीपतिः-वारे ग्रहस्योपचयावहस्य कार्यं यथोद्दिष्टमुपैति सिद्धम् । भवेत्तदेवापचयावहस्य प्रयत्नतो निर्मितमप्यसाध्यम् ॥ २८ ॥ चण्डेश्वरः-मीनालिमेषकलशेषु दिनांतमात्रं गोकर्ककार्मुकघटेष्वपि चार्धरात्रम् । स्त्रीयुग्मसिंहमकरेषु निशावसानं वारस्य भोगमिह यन्मुनयो वदंति ॥ २९ ॥ लल्लोपि-मेषालिकुंभमीनार्के वारभोगं दिनांतके । गोधनुष्कर्कटे चार्धरात्रे शेषे निशांतकम् ॥ ३० ॥ कल्पतरौ-नाभ्यंगमर्के न च भूमिपुत्रे क्षौरं च शुक्रेऽथ कुजे च मांसम् । बुधे च योषा परिवर्जनीया शेषेषु सर्वाणि समाचरेच्च ॥ ३१॥ ज्योतिःसारे-ऋणं भौमे न गृह्णीयान्न देयं बुधवासरे । ऋणच्छेदं कुजे कुर्यात्संचयं सोमनंदने ॥ ३२ ॥ यस्य ग्रहस्य वारे यत्किंचित्कर्म प्रकीर्तितम् । तत्तस्य कालहोरायां सर्वमेव विधीयते ॥ ३३ ॥ अन्यदपि-यस्य खेटस्य यत्कर्म वारे प्रोक्तं विधीयते । ग्रहस्य क्षणवारेपि तस्य तत्कर्म सर्वदा ॥ ३४ ॥ श्रीपतिः-

वारप्रवृत्तेर्घटिका द्विनिघ्नाः कालाख्यहोरापतयः शराप्ताः । दिनाधिपाद्या रविशुक्रसौम्यशशांकसौरेज्यकुजाः क्रमेण ॥ ३८ ॥ नारदः—यस्मिन्वारे क्षणे वार इष्टस्तद्वासराधिपः । आद्यः षष्ठो द्वितीयोस्मात्तस्मात्षष्ठस्तृतीयकः ॥ ३६ ॥ षष्ठः षष्ठश्चेतरेषां कालहोराधिपाः स्मृताः । सार्धनाडीद्वयेनैव दिवारात्रं यथाक्रमात् ॥ ३७ ॥

| रविवारे होरा | चंद्रवारे होरा | भोमवारे होरा | बुधवारे होरा | गुरुवारे होरा | भृगुवारे होरा | शनिवारे होरा |
|---|---|---|---|---|---|---|
| सू २।३० | चं २।३० | मं २।३० | बु २।३० | बृ २।३० | शु २।३० | श २।३० |
| शु ५।० | श ५।० | सू ५।० | चं ५।० | मं ५।० | बृ ५।० | बृ ५।० |
| बु ७।३० | बृ ७।३० | शु ७।३० | श ७।३० | सू ७।३० | चं ७।३० | मं ७।३० |
| चं१०।० | मं १०।० | बु १०।० | बृ १०।० | शु १०।० | श १०।० | सू १०।० |
| श १२।३० | सू १२।३० | चं १२।३० | मं १२।३० | बु १२।३० | बृ १२।३० | शु १२।३० |
| बृ १५।० | शु १५।० | श १५।० | सू १५।० | चं १५।० | मं १५।० | बु १५।० |
| मं १७।३० | बु १७।३० | बृ १७।३० | शु १७।३० | श १७।३० | सू १७।३० | चं १७।३० |
| सू २०।० | चं २०।० | मं २०।० | बु २०।० | बृ २०।० | शु २०।० | श २०।० |
| शु २२।३० | श २२।३० | सू २२।३० | चं २२ ३० | मं २२।३० | बु २२।३० | बृ २२।३० |
| बु २५।० | बृ २५।० | शु २५।० | श २५।० | सू २५ ० | चं २५।० | मं २५।० |
| चं २७।३० | मं २७ ३० | बु २७।३० | बृ २७।३० | शु २७।३० | श २७।३० | सू २७।३० |
| श ३०।० | सू ३०।० | चं ३०।० | मं ३०।० | बु ३०।० | बृ ३०।० | शु ३०।० |
| बृ ३२।३० | शु ३२ ३० | श ३२।३० | सू ३२।३० | चं ३२।३० | मं ३२।३० | बु ३२।३० |
| मं ३५।० | बु ३५।० | बृ ३५।० | शु ३५।० | श ३५।० | सू ३५।० | चं ३५।० |
| सू ३७।३० | चं ३७।३० | मं ३७।३० | बु ३७।३० | बृ ३७।३० | शु ३७।३० | श ३७।३० |
| शु ४०।० | श ४०।० | सू ४०।० | चं ४०।० | मं ४०।० | बु ४०।० | बृ ४०।० |
| बु ४२।३० | बृ ४२।३० | शु ४२।३० | श ४२।३० | सू ४२।३० | चं ४२।३० | मं ४२।३० |
| चं ४५।० | मं ४५।० | बृ ४५।० | बृ ४५।० | शु ४५।० | श ४५।० | सू ४५।० |
| श ४७।३० | सू ४७।३० | चं ४७।३० | मं ४७ ३० | बु ४७।३० | बृ ४७।३० | शु ४७।३० |
| बृ ५०।० | शु ५०।० | श ५०।० | सू ५०।० | चं ५०।० | मं ५०।० | बु ५०।० |
| मं ५२।३० | बु ५२।३० | बृ ५२।३० | शु ५२।३० | श ५२।३० | सू ५२।३० | चं ५२।३० |
| सू ५५।० | चं ५५।० | म ५५।० | बृ ५५।० | बृ ५५।० | शु ५५।० | श ५५।० |
| शु ५७।३० | श ५७।३० | सू ५७।३० | चं ५७।३० | मं ५७।३० | व ५७।३० | बृ ७।५३० |
| बु ६०।० | बृ ६०।० | शु ६०।० | श ६०।० | सू ६०।० | चं ६०।० | मं ६०।० |

इति श्रीमद्दयादत्तज्योतिर्विदात्मजरामदीनज्योतिर्वित्कृते संग्रहे बृहद्दैवज्ञरंजने वारकथनं नाम त्रयोविंशं प्रकरणं समाप्तम् ॥ २३ ॥

# अथ चतुर्विंशं नक्षत्रप्रकरणं प्रारभ्यते।



संहिताप्रदीपे-सर्वत्र कार्येषु हि शोभनेषु नक्षत्रशुद्धिं मृगयंति पूर्वाः। यत्कर्म यस्मिन्करणीयमुक्तं तत्र प्रदेयं विदुषा विदित्वा ॥ १ ॥ गुरुः-नक्षत्राणां प्रवक्ष्यामि रूपताराश्च संख्यया। देवताश्च तथा गोत्रं स्वभावं तद्भवं ततः ॥ २ ॥ कृत्तिका क्षुर-संस्थाना षट्तारा चाग्निदेवता। अग्निवेश्यश्च गोत्रेण विज्ञेया मृदुदारुणा ॥ ३ ॥ अग्न्याधानादिकर्माणि पाकयज्ञक्रतुक्रियाम्। आरामविषघातांश्च चुल्लिकर्म च कार-येत् ॥ ४ ॥ इष्टिं च पशुबंधं च चौलोपनयनानि च। यावंति चोग्रकर्माणि पशूनाम-र्चनानि च ॥ ५ ॥ तेजस्विनां च कर्माणि आयुधानि च कारयेत्। ऋणं दद्यान्न गृह्णी-यात्तेजस्वी चात्र कथ्यते ॥ ६ ॥ इति कृत्तिका। रोहिणी शकटाकारा संस्थाना पंचतारका। नक्षत्रं स्थावरं विद्धि दैवतं च प्रजापतिः ॥ ७ ॥ गोत्रेण गौतमी ज्ञेया बंधनानि प्रकारयेत्। आरामं च विवाहं च गोपुराट्टालिकानि च ॥ ८ ॥ यावंति ध्रुव-कर्माणि मंगलानि च कारयेत्। प्राकाराणि च कुर्वीत प्रासादभवनानि च ॥ ९ ॥ पत्तनं नगरग्रामं स्थापयेद्देशमेव च। क्षेत्रारंभं च कुर्वीत आरामं चाभिषेचयेत् ॥ १० ॥ ऋणं तद्वन्न गृह्णीयात्क्षुरकर्म न कारयेत्। कल्याणानि प्रकुर्वीत नाशुभाश्चात्र जायते ॥११॥ इति रोहिणी। त्रितारं सोमदैवत्य मृदु मृगशिरो विदुः। कात्यायनीति गोत्रेण गार्हस्थ्यं चात्र कारयेत् ॥ १२ ॥ राज्याभिषेकं कुवीत शयनान्यासनानि च। अंजनं कारयेत्तत्र गोदानं पौष्टिकानि च ॥ १३ ॥ वाहनानि च कर्माणि शुभदान्य-शुभानि च। गतास्वानां गृहारंभे प्रवेशादीनि कारयेत् ॥ १४ ॥ यथोक्तं कर्म रोहिण्यां सर्वमस्मिन् प्रकारयेत्। धर्मकर्मादिदानानि विद्यारंभादि कारयेत् ॥ १५ ॥ कर्मशीलश्च दानी च मृदुश्चैवात्र जायते ॥ १६ ॥ इति मृगशिरा। एकतारा भवेदार्द्रा रुद्रश्चैवात्र देवता। घातयेन्नगरं ग्रामं पुरदेशं तथैव च ॥ १७ ॥ यावंति पापकर्माणि दारुणानि च कारयेत्। गोष्ठागारादि कुर्वीत कृषिकर्म च कारयेत् ॥ १८ ॥ यावंति धान्यक-र्माणि यशस्वी चात्र जायते। शौद्यपि चैव गोत्रेण मेधावी चात्र जायते ॥ १९ ॥ इत्यार्द्रा। पुनर्वसु द्वितारा च कुंडल्याभ्यामिवालवत्। अदितिर्देवता चात्र मंत्रयोगं च कारयेत् ॥ २० ॥ पुनर्भवाय युंज्याना मंगलानि तथा शुभम्। पुनः कर्माणि यावंति चिकित्सा चात्र कारयेत् ॥ २१ ॥ इंद्राणीं स्थापयेच्चात्र इंद्रस्थानं च कारयेत्। वात्स्यायनी च गोत्रेण मेधावी चात्र जायते ॥ २२ ॥ इति पुनर्वसुः। त्रितारामिषु-संस्थानामिष्टां क्षिप्रप्रदं शुभम्। पुरोहितमुपाध्यायं दैवज्ञं नागवं तथा ॥ २३ ॥ एवमादौ निमित्तानि यात्रां चैवात्र कारयेत्। यावद्विशोग्रकर्माणि पुष्ये प्राकारमंडपान् ॥ २४ ॥ पौष्टिकानि च कर्माणि चौलोपनयनानि च। विवाहकर्मवर्ज्यानि शुभकर्माणि

कारयेत् ॥ २५ ॥ अंजनं प्रेषयेदत्र दैवतं च बृहस्पतिः । राज्याभिषेकः कर्तव्यः प्रासादादीनि कारयेत् ॥ २६ ॥ आयुष्मान्धनवांश्चात्र पुण्यकर्मा च जायते ॥ २७ ॥ इति पुष्यम् । आश्लेषा सार्पदैवत्या षट्तारा तु विसंस्थिता । आग्रायणीति गोत्रेण शकटादीनि कारयेत् ॥ २८ ॥ पुनर्भवाय युंज्याना तडागादीनि कारयेत् । यावंति चोग्रकर्माणि शत्रुनाशादि कारयेत् ॥ २९ ॥ विषवृद्ध्या निमंत्राणि धनवांश्चात्र जायते । मेधावी बहुपुत्रश्च वसुमान् जायते नरः ॥ ३० ॥ गोगणं वाधिकं कुर्यात्कल्याणादीनि संपदम् । यावंति धान्यकर्माणि पितृकर्माणि कारयेत् ॥ ३१ ॥ इत्याश्लेषा । चतुस्तारा मघा ज्ञेया कुट्टाकारं च यष्टिवत् । पितरो देवताश्चात्र कार्याण्याश्लेषवद्भवेत् ॥ ३२ ॥ इति मघा । द्वितारा फाल्गुनी पूर्वा उग्रा च भगदेवता । पर्यंकसंस्थिता वापि गोत्रं विंद्यात्पराशरम् ॥ ३३ ॥ उग्रकर्माणि कुर्वीत उग्रं चैवात्र जायते । मघायामुदितं सर्वमस्यामपि विधीयते ॥ ३४ ॥ इति पूर्वाफाल्गुनी । द्वितारोत्तरफाल्गुन्या स्थिराख्यार्यमदेवता । पर्यंकसंस्थिता चात्र गोत्रेण च पराशरः ॥ ३५ ॥ कन्यासुवर्णविद्यान्नपुष्टिस्थानं तथैव च । नपुंसकानि वस्त्राणि वेश्यावादं च कारयेत् ॥ ३६ ॥ यावंति भगकार्याणि मंगलानि च कारयेत् । चौलोपनयनं कार्यं स्थावराणि च कारयेत् ॥ ३७ ॥ गोगणं निगडं चैव शयनान्यासनानि च । भवंति पुष्टिमाप्नोति गृहकर्माणि कारयेत् ॥ ३८ ॥ खादसत्यं च गोत्रेण दंति चैवात्र जायते ॥ ३९ ॥ इत्युत्तराफाल्गुनी । सावित्रं पंचतारा स्याद्धस्तं हस्तांगसंस्थितम् । कुंडिनी चैव गोत्रेण क्षिप्रकर्मात्र कारयेत् ॥ ४० ॥ सदा सव्यं च कुर्वीत महातंत्रं तथैव च । सारस्वतादिकर्माणि विद्यादानं गृहाणि च ॥ ४१ ॥ वाहनानां च कर्माणि गृहारंभप्रवेशने । गजाश्वरथशस्त्राणां पूजाकर्माणि कारयेत् ॥ ४२ ॥ यावंति वज्रकर्माणि मंगलानि च कारयेत् । चौलोपनयनं चैव विवाहादीनि वाससाम् ॥ ४३ ॥ आच्छादनं च वाप्यां च मेधावी चात्र जायते ॥ ४४ ॥ इति हस्तः । एकतारा भवेच्चित्रा त्वष्टा चैवात्र देवता । पत्यन्नासंस्थितं चापि अत्रिगोत्रं च गोत्रतः ॥ ४५ ॥ कर्णयोर्वेधनं कुर्यात्सेतूनां चैव बंधनम् । पानभूमिं च कुर्वीत गोपुरास्थानमंडपान् ॥ ४६ ॥ गवां निलयरक्षां च मंगलानि च कारयेत् । विचित्राणि च वस्त्राणि क्षुरकर्माणि कारयेत् ॥ ४७ ॥ यावंति शस्त्रकर्माणि सपण्यानि च कारयेत् । भांडागारादि कुर्वीत औषधानि शुभानि च ॥ ४८ ॥ गोष्ठागारायुधागारान्गृहरक्षादि कारयेत् । राजप्रसादान् गृह्णीयाच्छत्रवाहनपूर्वकान् ॥ ४९ ॥ रोगी स्नानादि कुर्वीत सुभगश्चैव जायते ॥ ५० ॥ इति चित्रा । प्रत्येकं संस्थिता स्वाती वायव्यां चैकतारकी । मांडव्येति च गोत्रेण प्रस्थाने चापि गर्हिता ॥ ५१ ॥ नावारंभं च कुर्वीत नावप्रस्थानमेव च । अश्ववन्याश्च पुण्यांश्च कारयेद्भेरितूर्यकान् ॥ ५२ ॥ मृदंगपणवाद्यांश्च कवचादीनि कारयेत् । वाहनं च विवाहं च सफलं चात्र जायते ॥ ५३ ॥ इति स्वाती । विशाखेंद्राग्निदैवत्यां मृदंगफणमेव च ।

कौशिकी च चतुस्तारा संस्थानं तोरणोपमम् ॥ ५४ ॥ स्थापयेत्सर्वबीजानि मंगलानि च कारयेत् । इष्टं च पशुबंधं च चौलोपनयनानि च ॥ ५५ ॥ यावंति मिश्रकर्माणि तेजस्वी चात्र जायते । मेधावी तीक्ष्णवीर्यश्च विषमं चात्र जायते ॥ ५६ ॥ इत्येतत्समवर्गं च दक्षिणद्वारसंस्थितम् । यदि पीडा भवेदत्र पीडयते च यदि स्वयम् ॥ ५७ ॥ इति विशाखा । षट्तारा तु भवेन्मैत्रं रथानामिव संस्थितः । अपरद्वारकं श्रेष्ठं विवाहकरणे शुभः ॥ ५८ ॥ आयुषः कर्म कुर्वीत ऐन्द्राग्निस्थावराणि च । मैत्रमुक्तानि सर्वाणि गंधकर्म च कारयेत् ॥ ५९ ॥ लेख्यकर्म च कुर्वीत अक्ष वेलां च कारयेत् । विशेषस्वामिसन्मानं कर्मणा स्वामिदर्शने ॥ ६० ॥ श्रेष्ठमेतत्परिज्ञेयं मुहूर्ते मैत्रसाह्वये । अश्वोष्ट्रगजकर्माणि शाला तेषां प्रवेशनम् ॥ ६१ ॥ कुर्यात्त्वगस्थिविद्यादीन्यारभेन्मैत्रदैवते । अत्र पावकगोत्रेण जायते मनुजाधिपः ॥ ६२ ॥ इत्यनुराधा । त्रितारं चेंद्रदैवत्यं ज्येष्ठा कुंडलसंस्थिता । राज्याभिषेकं कुर्वीत सेनापत्यं तथैव च ॥ ६३ ॥ स्थापयेन्नगरग्रामाधिपत्या नायकादिका । दर्शनं स्वामिभूपानां ज्येष्ठा श्रेष्ठासु कर्मणाम् ॥ ६४ ॥ वाहनानां च कार्याणां खर्वटाद्वास्तुमेव च । अभिचाराणि कार्याणि मघा स्यात्तद्वदेव हि ॥ ६५ ॥ काश्यपी चैव गोत्रेण दारुणा चात्र जायते ॥ ६६ ॥ इति ज्येष्ठा । तारा द्वादश मूलोग्रा निर्ऋतिस्तत्र देवता । कौशिकी चैव गोत्रेण संगविक्रयकर्मणि ॥६७॥ यावंति भेदकर्माणि स्थैर्याणि च शुभानि च । स्थितानि वाहनादीनां स्वामिदर्शनपूर्वकम् ॥ ६८ ॥ यावंति चोग्रकर्माणि दारुणानि च कारयेत् । विवाहं चाभिषेकं च चौलोपनयनानि च ॥ ६९ ॥ स्वामिकर्म च कुर्वीत मंगलानि तथैव च । मूलका मूलकर्माणि शास्त्रविद्यादि कारयेत् ॥ ७० ॥ नगरग्रामराष्ट्रादिप्रवेशं च विशेषतः । एतत्कार्यं बुधाः श्रेष्ठमुग्रं चैवात्र जायते ॥ ७१ ॥ इति मूलम् । पूर्वाषाढं चतुस्तारामापश्चैवात्र देवता । दाक्षायणं च गोत्रेण सिंहपुच्छसदृक् तनुः ॥ ७२ ॥ नवारंभं च कुर्वीत जलकर्म तथैव च । हुडयानश्च देवाश्च तडागादीनि कारयेत् ॥ ७३ ॥ यावंति चोग्रकर्माणि तावत्यत्र शुभप्रदम् । अग्निकर्माणि कुर्वीत कूपांश्चैवात्र खानयेत् ॥ ७४ ॥ निगडत्वबंधनागारदारुणाश्चत्र जायते ॥७५॥ इति पूर्वाषाढा । आषाढा ह्युत्तरा ज्ञेया विश्वेदेवा द्वितारका । गजापीतसमास्थाना गार्गी गोत्रं च स्थावरम् ॥७६॥ छत्रध्वजपताकाश्च मुकुटं कुंडलानि च । यानभूमिं च कुर्वीत शालिव्रीहींश्च वापयेत् ॥७७॥ स्थावराणि च कुर्वीत शांतिहोमं च कारयेत् । यानि राजन्ययोग्यानि राज्ञां चैवाभिषेचनम् ॥ ७८ ॥ गोगणं नृगणं कुर्यात् दैवतस्थावराणि च । सर्वाणि शुक्लशालानि हस्तिबंधं च कुर्वते ॥ ७९ ॥ गजाश्वनरवत्कर्म कौतुकी चापि जायते ॥८०॥ इत्युत्तराषाढा । अभिजिद्ब्रह्मदैवत्यं त्रीणि ताराणि कारयेत् । यात्रागारसमुद्दिश्य ब्रह्मणो वचनं यथा ॥ ८१ ॥ इत्यभिजित् । वैष्णवं श्रवणं विंद्याद्द्तुलं त्रीणि तारकम् । अगस्त्यं चैव गोत्रेण सर्वकर्माणि कारयेत् ॥ ८२ ॥ यज्ञशालां च कुर्वीत चौलोपन-

यनानि च । क्षेत्रारंभं च कुर्वीत विवाहं च विवर्जयेत् ॥ ८३ ॥ प्रत्यक्रू द्वाराणि सप्तैते नक्षत्राणि विभागशः । यदि पठियत चैव सार्वदिक्षु च मनीषिणः ॥८४॥ इति श्रवणम् । धनिष्ठा वसुदैवत्या चतुस्तरास्तु सा स्मृता । मृदंगसंस्थिता चैव गोत्रं संख्यानकं स्मृतम् ॥ ८५ ॥ यात्रापेक्षं च कुर्वीत चौलोपनयनानि च । यज्ञारंभं च कुर्वीत विवाहं च विवर्जयेत् ॥ ८६ ॥ स्वामिदर्शनसन्मानं कारयेद्ग्राहयेत्क्रमात् । सर्वविद्यासमारंभवाहनानि प्रजानि च ॥ ८७ ॥ कुर्वीत गोवृषं चात्र जायते बीजवापने । कर्माणि चात्र मुख्यं च जायते कुलसंभवः ॥ ८८ ॥ इति धनिष्ठा । उदग्द्वारं शतभिषक्च वारुणं चात्र दैवतम् । कात्यायनी च गौत्रेण ताराश्चैव शतं भवेत् ॥ ८९ ॥ आदानं संप्रदानं च मधुमेधं तथैव च । गोगराणि च कुर्वीत नानारंभं च कारयेत् ॥ ९० ॥ बीजवापनकार्याणि यात्राक्षेत्रं तथैव च । मित्रदर्शनसन्मानं स्वामिदर्शनपूर्वकान् ॥ ९१ ॥ गोशालाश्वशाला च गजशालादि कारयेत् । एषां भैषज्यकर्माणि शुभं चैषां च कारयेत् ॥९२॥ जयप्रवचनं कुर्यात्तेजस्वी चात्र जायते । मत्या च शौर्यसंपन्नो गुणवान्नृपसंयुतः ॥ ९३ ॥ इति शतभिषा । अजैकपाद्द्वितारं च पूर्वं प्रोष्ठपदं स्मृतम् । गोत्रेण हारितश्चैव सर्वं चैवात्र जायते ॥ ९४ ॥ तोयदैवतनक्षत्रे यान्युक्तान्यत्र कारयेत् ॥ ९५ ॥ इति पूर्वाभाद्रपदा । अहिर्बुध्न्यं द्वितारं च उत्तर प्रोष्ठपाद्विदुः । आरंभाणि च कुर्वीत गोत्रेण त्वषमाण च ॥ ९६ ॥ परित्यागं च गेहानि वानप्रस्थालयानि च । कुर्याच्चाश्वनिकांश्चैव वाहनानि च कारयेत् ॥ ९७ ॥ स्वामिदर्शनसन्मानं कारयेद्ग्राहयेत्क्रमात् । अश्वोष्ट्रगजशालादीन् कारयेद्वै समानि च ॥ ९८ ॥ गोत्रेण काश्यपी चैव अश्वशालादि कारयेत् । कर्म कुर्वीत यात्रादि लेपनानि शुभानि च ॥ ९९ ॥ विवाहमैत्रसंबंधं स्वामिदर्शनमेव च । एवमादीनि कर्माणि शुभान्यत्र प्रयोजयेत् ॥ १०० ॥ हस्ते पुष्ये च मूले च श्रवणे कथितान् शुभान् । सर्वाण्यत्र प्रयुंजीत अहिर्बुध्न्ये सुराधिप ॥ १०१ ॥ इत्युत्तराभाद्रपदा । रेवती पौष्णदैवत्या द्वात्रिंशत्तारका विदुः । मनीषिणं व्रजं कुर्याद्विवाहकरणानि च ॥ १०२ ॥ पौष्णमैत्रमुहूर्ते च ब्राह्मे वा पैतृकानले । स्वामिदर्शनसन्मानं शुभं राज्याभिषेचनम् ॥ १०३ ॥ वर्जयेद्याम्यदिग्यानं शवदाहं च वर्जितम् । मृदुं च मर्दलाकारं गर्गगोत्रं च भं तथा ॥ १०४ ॥ स्थावराणि च कुर्वीत देवस्थानान्यनुग्रहात् । प्रतिष्ठादीनि कुर्वीत विशेषात्स्थावराणि च ॥ १०५ ॥ क्षेत्रारंभं च कुर्वीत यात्रारंभं तथैव च । अंजनं वस्त्रमांगल्यं विद्यारंभं च कारयेत् ॥ १०६ ॥ तेजस्वी वा विशुभ्रश्च पंडितश्चात्र जायते । अहिर्बुध्न्ये तु यत्प्रोक्तं तत्सर्वं चात्र कारयेत् ॥ १०७ ॥ इति रेवती । आश्विनी दवत क्षिप्रं आश्विनाद्वित्रितारकम् । क्षिप्रकर्माणि सर्वाणि चौलोपनयनानि च ॥ १०८ ॥ स्वामिदर्शनसन्मानं कर्माण्यत्र प्रयोजयेत् । यात्रान्नप्राशनादीनि गजाश्वानां शुभानि च ॥ १०९ ॥ एषां स्थानानि चारंभः प्रवेशादीनि कारयेत् । ज्येष्ठः श्रेष्ठश्च सूरश्च मेधावी चात्र जायते ॥ ११० ॥

इत्यश्विनी । याम्यं त्रितारं चोग्रं च भरणीयमदैवतम् । मौद्गल्याय च गोत्रेण क्रूरकर्माणि कारयेत् ॥ १११ ॥ जायते वरुणश्चात्र सर्वकर्माणि कारयेत् । विषनाड्यां भरण्यां च क्रूरवारेण संयुते ॥ ११२ ॥ रिक्तातिथियुते तत्र क्रूरकर्माणि कारयेत् । जायते अभिकुर्वीत सर्वकर्माणि साधयेत् ॥ ११३ ॥ त्रिपूर्वे चैव नक्षत्रे पूर्वोक्तं कर्म दारुणम् । तत्सर्वं याम्यनक्षत्रे कुर्वीत मघवन् क्रमात् ॥ ११४ ॥ उदग्द्वाराणि सर्वाणि सप्तैतानि न संशयः । उद्धृत्तश्चैव पीड्यते उत्तराश्वादिशस्तथा ॥ ११५ ॥ इति भरणी । एवं कर्मगुणं प्रोक्तं तारायाश्चानुसंख्यया । देवताश्चैव गोत्रेण नक्षत्राणां समासतः ॥ ११६ ॥ अथ नक्षत्रे वृक्षोत्पत्तिः । तदाह नारदः—वृक्षोश्विभाद्याम्याधिष्ण्यजो मकरस्तरुः । उदुंबरश्चाग्निधिष्ण्ये रोहिण्यां जंबुकस्तरुः ॥ ११७ ॥ इंदुभात्खदिरो जातः कृष्णपक्षस्तु रौद्रभात् । संभूतो दितिभाद्वंशः पिप्पलः पुष्पसंभवः ॥ ११८ ॥ सार्पधिष्ण्यान्नागवृक्षो वटः पितृभसंभवः । पलाशो भाग्यभाज्जातः प्लक्षश्चार्यमसंभवः ॥ ११९ ॥ ॥ अरिष्टवृक्षो रविभाच्छ्रीवृक्षस्त्वाष्ट्रसंभवः । स्वात्यर्क्षजोर्जुनो वृक्षो द्विदैवत्याद्विकंकतः ॥ १२० ॥ मित्रभाद्बकुलो जातोरिष्टः पौरंदरर्क्षजः । सर्ववृक्षो मूलभाच्च जंबुश्चांबुनिधिः स्मृतः ॥ १२१ ॥ पनसो वैश्वभाज्जातश्चार्कवृक्षश्च विष्णुभात् । वसुधिष्ण्याच्छमीजातः कदंबो वरुणर्क्षजः ॥ १२२ ॥ अजैकपाच्चूतवृक्षोहिबुध्न्यादेव मडुकः ॥ मधुवृक्षः पौष्ण्यधिष्ण्याद्धिष्णवृक्षं प्रपूजयेत् ॥ १२३ ॥ अथ नक्षत्रव्यूहः । वाराहीसंहितायाम्—आग्नेये सितकुसुमाहिताग्निमंत्रज्ञसूत्रभाष्यज्ञाः । आकीरकनापितद्विजघटकारपुरोहिताब्दज्ञाः ॥ १२४ ॥ रोहिण्यां सुव्रतपुण्यभूपधनियोगयुक्तशाकटिकाः । गोवृषजलचरकर्षकशिलोच्चयैश्वर्यसंपन्नाः ॥ १२५ ॥ मृगशिरसि सुरभिवस्त्राब्जकुसुमफलरत्नवनचरविहंगाः । मृगसोमपीथिगांधर्वकासुकालेहहाराश्च ॥ १२६ ॥ रौद्रे वधबंधानतपरदारस्तेयशाठ्यभेदरताः । तुषधान्यतीक्ष्णमंत्राभिचारवेतालकर्मज्ञाः ॥ १२७ ॥ आदित्ये सोत्यौदार्यशौचकुलरूपधीयशोर्थयुताः । उत्तमधान्यं वणिजः सेवाभिरताः सशिल्पिजनाः ॥ १२८ ॥ पुष्ये यवगोधूमाः शालीक्षुवनानि मंत्रिणो भूपाः । सलिलोपजीविनः साधवश्च यज्ञेष्टिसक्ताश्च ॥ १२९ ॥ अहिदेवे कृत्रिमकंदमूलफलकीटपन्नगविषाणि । परधनहरणाभिरतास्तुषधान्यं सर्वभिषजश्च ॥ १३० ॥ पित्र्ये धनधान्याढ्याः कोष्ठागाराणि पर्वताश्रयिणः । पितृभक्तिवणिक्स्सूराः क्रव्यादाः स्त्रीद्विषो मनुजाः ॥ १३१ ॥ प्राक् फाल्गुनीषु नटयुवतीसुमनगांधर्वशिल्पिपण्यानि । कार्पासलवणमाक्षिकतैलानि कुमारकाश्चापि ॥ १३२ ॥ अर्यम्णो मार्दवशौचविनयपाखंडिदानशास्त्ररताः । शोभनधान्यमहाधनधर्मानुरताः समनुजेंद्राः ॥ १३३ ॥ हस्ते तस्करकुंजररथिकमहामंत्रशिल्पिपण्यानि । तुषधान्यं श्रुतयुक्ता वणिजस्तेजोयुताश्चात्र ॥ १३४ ॥ त्वाष्ट्रे भूषणरागलेख्यगांधर्वगंधियुक्तज्ञाः । गणितपटुतंतुवायाः शालक्या राजधान्यानि ॥ १३५ ॥ स्वातौ खरमृगतुरगा

वणिजो धान्यवातबहुलानि । अस्थिरसौहृदलघुसत्वतापसाः पण्यकुशलाश्च॥ १३६॥ इंद्राग्निदैवते रक्तपुष्पफलशाखिनः सतिलमुद्राः । कार्पासमाषचणकाः पुरंदरहुताश-भक्ताश्च ॥ १३७ ॥ मैत्रे शौर्यसमेता गणनायकसाधुगोष्ठियानरताः । ये साधवश्च लोके सर्वं च शरत्समुत्पन्नम् ॥ १३८ ॥ पौरंदरेतिशूराः कुलवित्तयशो न्विताः परस्वहृताः । विजिगीषवो नरेंद्राः सेनानां चापि नेतारः ॥ १३९ ॥ मूले भेषज-भिषजो गणमुख्याः कुसुममूलफलवार्ताः । बीजान्यतिधनयुक्ताः फलैर्मूलैर्ये च वर्तंते ॥ १४०॥ आप्ये मृदवो जलमार्गगामिनः सत्यशौचधनसंयुक्ताः । सेतुकरवारिजी-वकफलकुसुमान्यंबुजातानि ॥ १४१ ॥ विश्वेश्वरे महामात्रे मल्लकरितुरगदेवताभक्ताः। स्थावरयोधा भोगान्विताश्च ये चौजसा युक्ताः ॥ १४२ ॥ श्रवणे मायापटवो नित्योद्यु-क्ताश्च कर्मसमर्थाः । उत्साहिनः सधर्मा भागवताः सत्यवचनाश्च ॥ १४३ ॥ वसुभे मानो-न्मुक्ताः क्लीवाश्चलसौहृदाः स्त्रियां द्वेष्याः । दानाभिरता बहुवित्तसंयुताः शमपराश्च नराः ॥ १४४ ॥ वरुणेशे पाशिकमत्स्यध्वजबंधजलजानि जलचरा जीवाः । सौकरिकर-जकशौंडिकशाकुनिकाश्चापि वर्गेऽस्मिन् ॥ १४५ ॥ आजे तस्करपशुपालहिंस्रकनाशनी-चशठचेष्टाः । धर्मव्रतैर्विरहिता नियुद्धकुशलाश्च ये मनुजाः ॥ १४६ ॥ आहिर्बुध्न्ये विप्राः क्रतुदानतपोयुता महाविभवाः । आश्रमिणः पाखंडा नरेश्वराः सारधान्यं च ॥ १४७॥ पौष्ण्ये सलिलजफलकुसुमलवणमणिशंखमौक्तिकाब्जानि । सुरभिकुसुमानि गंधा वणिजो नौकर्णधाराश्च ॥ १४८ ॥ अश्विन्यामहिश्वारा सेनापतिवैद्यसेवकास्तुरगाः । तुरगा-रोहाश्च वणिग्रूपोपेतास्तुरगरक्षाः ॥ १४९ ॥ याम्येसृक्पीडितभुजाः क्रूरा वधबंधताडना-सक्ताः । तुषधान्यं नीचकुलोद्भवा विहीनाश्च सत्वेन ॥ १५० ॥ पूर्वात्रयं सानलमग्र-जानां राज्ञां तु पुष्येण सहोत्तराणि । सपौष्णमैत्रं पितृदैवतं च प्रजापतेर्भं च कृषीवला नाम् ॥ १५१ ॥ आदित्यहस्ताभिजिदाश्विनानि वणिग्जनानां प्रवदंति भानि । मूलत्रिनेत्रा निलवारुणानि भान्युग्रजातेः प्रभविष्णुतायाः ॥ २५२ ॥ सौम्यैंद्रचित्रावसुदैवतानि सेवा-जनस्वाम्यमुपागतानि । सार्पं विशाखा श्रवणो भरण्यश्चांडालजातेरिति निर्दिशंति॥१५३॥ रविरविसुतभोगमागतं क्षितिसुतभेदनवक्रदूषितम् । ग्रहणगतमथोल्कया हतं नियत-मुखाकरपीडितं च यत् ॥ १५४ ॥ तदुपहतमिति प्रचक्षते प्रकृतिविपर्ययपातमेव वा। निगदितपरवर्गदूषितं कथितविपर्ययगं समृद्धये ॥ १५५ ॥ विद्धं व्योमचरैर्विभिन्नमपि यल्लत्ताहतं राहुणा युक्तं क्रूरयुतं विमुक्तमथ यद्भोग्यं तथोपग्रहैः । दुष्टं यद्ग्रहणोपगं पशुपतेश्चंडायुधेनाहतं चोत्पातग्रहयुद्धपीडितमथो यद्धूमितं केतुना ॥ १५६ ॥ पश्चात् संध्याहतं चोल्काभिहितं पातदूषितम् । यच्चैकार्गलविद्धं तत्पीडितं भं विनिर्दि-शेत् ॥ १५७ ॥ वाराहः—नक्षत्रजमुद्वाहे फलमब्दैस्तारकामितैः सदसत् । दिवसैर्ज्वरस्य नाशो व्याधेरन्यस्य वा वाच्यः ॥ १५८ ॥ अथ पुष्यस्यैव प्रशंसा । ज्योतिषतत्वे-ग्रहेण विद्धोऽप्यशुभान्वितोपि विरुद्धतारोपि विलोमगोपि । करोति पुंसां सकलार्थसिद्धिं

विहाय पाणिग्रहणं हि पुष्यः ॥ १५९ ॥ पुष्यः परकृतं हंति न च पुष्यकृतं परः । अपि द्वादशगे चन्द्रे पुष्यः सर्वार्थसाधकः ॥ १६० ॥ परकृतमखिलं निहंति पुष्यो न खलु निहंति परस्तु पुष्यदोषम् । ध्रुवममृतकरेऽष्टमेपि पुष्ये विहितमुपैति सदैव कर्मसिद्धिः ॥ १६१ ॥ मुहूर्तगणपतौ—पापैर्विद्धयुते हीने चन्द्रताराबलान्विते । पुष्ये सिद्ध्यंति कार्याणि सर्वाणि मंगलानि च ॥ १६२ ॥ सिंहो यथा सर्वचतुष्पदानां तथैव पुष्यो बलवानुडूनाम् ॥ चन्द्रे विरुद्धेप्यथ गोचरेपि सिद्ध्यंति कार्याणि कृतानि पुष्ये ॥ १६३ ॥ अथ शकटभेदः । ग्रहलाघवे ग्रहस्य रोहिणीशकटभेदं, तत्फलं चाह—गविनगकुलवे (१७) खगोस्य चेद्यमदिगिषुः खशरांगुलाधिकः । क्रमशकटमसौ भिनत्त्यसृक्कुशनिरुडुपो यदि चेज्जनक्षयः ॥ १६४ ॥ अथ चन्द्रस्य शकटभेदसमयमाह । स्वर्भानावदितिभतोऽष्टऋक्षसंस्थे शीतांशुः क्रमशकटं सदा भिनत्ति । भौमार्क्योः शकटभिदा युगांतरे स्यात् सेदानीं नहि भवतीदृशि स्वपाते ॥ १६५ ॥ सूर्यसिद्धान्ते—वृषे सप्तदशे भागे यस्य याम्योंशकद्वयात् । विक्षेप्योऽभ्यधिको भिंद्याद्रोहिण्याः शकटं तु सः ॥ १६६ ॥ रोहिणी शकटाकारा संस्थाना पंचतारका । इति बृहस्पतिः ॥ १६७ ॥ रोहिणीशकटं पंचतारात्मकं पंचाशदंगुलं यदस्ति तन्मध्ये ग्रहस्य प्रवेशः दक्षिणशरे पंचाशदधिक एव भवति यतो रोहिणीशरः शतांगुलो याम्यः अत्र योगतारा याम्यास्ति चन्द्रो वृषभो सप्तदशभागमितस्तस्य शरो दक्षिणः पञ्चाशदंगुलाधिकः पुनर्वस्वाद्यष्टनक्षत्रे राहोर्वर्त्तं भवतीति प्रत्यक्षं भौमशन्योरेतादृशे पाते दक्षिणः शरः पंचाशदंगुलाधिको न भवत्येव । अथ धनिष्ठादिपंचकविचारः । दैवज्ञवल्लभे—कुर्यान्न दारुतृणसंग्रहमंतकाशायानंमृतस्य दहनं गृहगोपनं च । शय्यावितानमिह वासनपंचके च केचिद्वदंति परतो वसुदैवतोर्द्धात् ॥१६८॥रत्नमालायाम्—वासवोत्तरदलादिपंचके याम्यदिग्गमनगेहगोपनम् । प्रेतदाहतृणकाष्ठसंग्रहं शय्यकावितननं च वर्जयेत् ॥ १६९ ॥ ज्योतिःसागरे—छेदनं संग्रहं चैव काष्ठादीनां न कारयेत् । श्रवणादौ बुधः षट्कां न गच्छेद्दक्षिणां दिशि ॥ १७० ॥ अग्निदाहो भयं रोगो राजपीडा धनक्षयः । संग्रहे तृणकाष्ठानां कृते वस्वादिपंचके ॥ १७१ ॥ राजमार्तंडे—गृहार्थं तृणकाष्ठादिसंग्रहादग्निभिः कलिः । रोगो दंडोर्थहानिः स्यात्क्रमाद्वस्वादिपंचके ॥ १७२ ॥ गर्गः—धनिष्ठापंचके चन्द्रे सूर्ये पैत्र्यादिपंचके । छेदनानि न कर्तव्यं गृहार्थं तृणकाष्ठयोः ॥ १७३ ॥ पूर्वार्धे नातिदोषाय दाहतक्षणसंग्रहे । यानगोपनशय्यायां संपूर्णं वासवं त्यजेत् ॥ १७४ ॥ केप्याहुः संकटे घोरे पंचके पंच नाडिकाः । त्याज्याः क्रमात्तृतीयाद्यमंत्यपादावसानगः ॥१७५॥ अथैधनकरणम् । निर्णयसिंधौ—ब्रह्मानिलार्कमघमूलविशाखपूर्वारौद्रानुराधगुरुपौष्णश्रवर्क्षयुक्ते । वारे कुजार्कभृगुनंदनसोमजानां भेष्विधनस्य करणं भवति प्रशस्तम् ॥ १७६ ॥ तत्स्थापनचक्रम् ।। रामदैवज्ञः—सूर्यर्क्षाद्रसभैरधःस्थलगतैः

पाको रसैः संयुतः शीर्षे युग्ममितैः शवस्य दहन मध्ये युगैः सर्पभिः । प्रागाशादिषु वेदभैः स्वसुहृदां स्यात्संगमो रोगभीः क्राथादेः करणं सुखं निगदितं काष्ठादिसंस्थापने ॥ १७७ ॥ अथ त्रिपुष्करद्विपुष्करयोगौ तत्फलं चाह । भूपालवल्लभे—रविमंदभौमवारे भद्रातिथित्रिपादके धिष्ण्ये । योगस्त्रिपुष्कराख्यो द्विपादके यमलनामा स्यात् ॥ १७८ ॥ रत्नकोशे—गुरुभौममंदवारे भद्रायां विषमपादर्क्षे । योगस्त्रिपुष्करोयं त्रिगुणफलो यमलभे द्विगुणम् ॥ १७९ ॥ रामस्तु—भद्रातिथी रविजभूतनयार्कवारे द्वीशार्यमाजचरणादितिवह्निविश्वे । त्रैपुष्करो भवति मृत्युविनाशवृद्धौ त्रैगुण्यदो द्विगुणकृद्वसुतक्षचान्द्रे ॥ १८० ॥ गर्गः—पंचके पंचगुणितं त्रिगुणं च त्रिपुष्करे । यमले द्विगुणं सर्वं हानिवृद्ध्यादिकं भवेत् ॥ १८१ ॥ ज्योतिःप्रकाशे—नष्टं दृष्टं मृतं घातं कलहो डिंभ एव च । उपघातश्च योत्र स्यात्त्रिगुण सोनुवर्तते ॥ १८२ ॥

रामः—गिरिशभुजगमित्रा पितृवस्वंबुविश्वेऽभिजिदथ च विधातापींद्र इंद्रानलौ च । निर्ऋतिरुदकनाथोप्यर्यमाथो भगः स्युः क्रमत इह मुहूर्ता वासरे बाणचंद्राः ॥ १ ॥ नारदः—अह्नः पंचदशो भागस्तथा रात्रिप्रमाणतः । मुहूर्तमानं द्वावेव क्षणर्क्षाणि समे स्वराः ॥ २ ॥

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| आर्द्रा | आश्लेषा | अनुराधा | मघा | धनिष्ठा | पूर्वाषाढ | उत्तराषाढ | अभिजित | रोहिणी | ज्येष्ठा | विशाखा | मूल | शतभिष | उत्तराफा | पूर्वाफा | | दिवा मुहूर्ताः |

शिवोजपादादष्टौ स्युर्भेशा अदितिजीवकौ ।
विष्ण्वर्कत्वष्ट्मरुता मुहूर्ता निशि कीर्तिताः ॥ २ ॥

| १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| आर्द्रा | पूर्वाभाद्र | उत्तरभाद्र | रेवती | अश्विनी | भरणी | कृत्तिका | रोहिणी | मृगशिर | पुनर्वसु | पुष्य | श्रवण | हस्त | चित्रा | स्वाती | | रात्रौ मुहूर्ताः |

इति श्रीमद्दयादत्तज्योतिर्विदात्मजरामदीनज्योतिर्वित्कृते संग्रहे बृहद्दैवज्ञरंजने नक्षत्रकथनं नाम चतुर्विंशं प्रकरणं समाप्तम् ॥ २४ ॥

## अथ पंचविंशं योगप्रकरणं प्रारभ्यते ।

चंडेश्वरः—यस्मिन्नृक्षे स्थितो भानुर्यत्र तिष्ठति चन्द्रमाः । एकीकृत्य त्यजेदेकं योगा विष्कंभकादयः ॥ १ ॥ गर्गेणोक्तास्त्विमे योगा आनंदाद्या निमित्तजाः । विष्कंभाद्यास्तथा नित्या अन्ये नैमित्तिकाः पुनः ॥ २ ॥ वाक्पतेरर्कनक्षत्रं श्रवणाच्चान्द्र-

मेव च । गण्यते तद्युतिं कुर्याद्योगः स्याद्दक्षशेषितः ॥ ३ ॥ वसिष्ठः—विष्कंभः प्रीतिरायुष्मान् सौभाग्यः शोभनाह्वयः । अतिगण्डः सुकर्माख्यो धृतिः शूलोऽथ गण्डकः ॥ ४ ॥ वृद्धिर्ध्रुवाख्यो व्याघातो हर्षणो वज्रसंज्ञकः । सिद्धियोगो व्यतीपातो वरीयान् परिघः शिवः ॥ ५ ॥ सिद्धिः साध्यः शुभः शुक्लो ब्रह्मेंद्रो वैधृतिः स्मृतः । सप्तविंशति योगास्ते स्वनामफलदाः स्मृताः ॥ ६ ॥ नारदः—योगेशा यमविष्ण्विदुधातृजीवनिशाकराः । इंद्रतोयाहिवह्न्यर्कभूमरुद्रगतोयपाः ॥ ७ ॥ गणेशरुद्रधनदत्वष्टृमित्रषडाननाः । सावित्री कमला गौरी नासत्यौ पितरो दितिः ॥ ८ ॥ विरुद्धयोगेषु च आद्यपादः शुभेषु कार्येषु विवर्जनीयः । स वैधृतस्तु व्यतिपातयोगः सर्वोप्यनिष्टः परिघस्य चार्द्धम् ॥ ९ ॥ तिस्रस्तु योगे प्रथमे सवज्रे व्याघातसंज्ञे नव पंच शूले । गंडातिगण्डे च षडेव नाड्यः शुभेषु कार्येषु विवर्जनीयाः ॥ १० ॥ अथ पातानयनम् । सूर्यसिद्धान्ते—स्थिरीकृता दीर्घरात्रेंद्वोर्द्वयोर्विवरलिप्तिकाः । षष्टिघ्ना चंद्रभुक्त्याप्ता पातकालस्य नाडिकाः ॥ ११॥ वसिष्ठसिद्धान्ते—चक्रे चक्रार्द्धतुल्यो वा कियद्भागाधिकोनके । सायनार्केदुसंयोगे चेत्तदा पातसंभवः ॥ १२॥ शुभमंगलकर्माणि लोकानां च विनाशयेत् । स्नानदानादिकास्तत्र जपश्राद्धादिकाः क्रियाः ॥ १३ ॥ सूर्यसिद्धांते—व्यतीपातः प्रसिद्धोस्ति संज्ञाभेदेन वैधृतिः । स कृष्णो दारुणवपुर्लोहिताक्षो महोदरः ॥ १४ ॥ यच्छुभानां विनाशाय नदन्निव पतत्ययम् । विनाशयति पातोस्मिल्लोकानामसकृद्यतः । सर्वानिष्टकरो रौद्रो भूयो भूयोभिजायते ॥ १५ ॥ वसिष्ठः—योगस्य सप्तविंशांशो योगमानं भवेदिति । एकस्मिन्नपि योगेपि सर्वे योगा भवंति हि ॥ १६ ॥

| २।१३ | ४।२६ | ६।४० | ८।५३ | ११।६ | १३।२० | १५।३३ | १७।४६ | २०।० | २२।१३ | २४।२६ | २६।४० | २८।५३ | ३१।६ | ३३।२० | ३५।३३ | ३७।४६ | ४०।० | ४२।१३ | ४४।२६ | ४६।४० | ४८।५३ | ५१।६ | ५३।२० | ५५।३३ | ५७।४६ | ६०।० |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| वि | प्री | आ | सौ | शो | अ | सु | धृ | शू | गं | वृ | ध्रु | व्या | ह | व | सि | व्य | व | प | शि | सि | सा | शु | श | ब्र | ऐं | वै |
| प्री | आ | सौ | शो | अ | सु | स | शू | गं | वृ | ध्रु | व्य | ह | व | सि | व्य | व | प | शि | सि | सा | श | शु | ब्र | ऐं | वै | वि |
| आ | सौ | शो | अ | सु | धृ | शू | गं | वृ | ध्रु | व्या | ह | व | सि | व्य | व | प | शि | सि | सा | शु | शु | ब्र | ऐं | वै | वि | प्री |
| सौ | शो | अ | सु | धृ | शु | गं | वृ | ध्रु | व्या | ह | व | सि | व्य | व | प | शि | सि | सा | श | शु | ब्र | ऐं | वै | वि | प्री | आ |
| शो | अ | सु | धृ | शू | गं | वृ | ध्रु | व्या | ह | व | सि | व्य | व | प | शि | सि | सा | शु | शु | ब्र | ऐं | वै | वि | प्री | आ | सौ |
| अ | सु | धृ | शू | गं | वृ | ध्रु | व्या | ह | व | सि | व्य | व | प | शि | सि | सा | श | शु | ब्र | ऐं | वै | वि | प्री | आ | सौ | शो |
| सु | धृ | शू | गं | वृ | ध्रु | व्या | ह | व | सि | व्य | व | प | शि | सि | सा | शु | श | ब्र | ऐं | वै | वि | प्री | आ | सौ | शो | अ |
| धृ | श | गं | वृ | ध्रु | व्या | ह | व | सि | व्य | व | प | शि | सि | सा | शु | शु | ब्र | ऐं | वै | वि | प्री | आ | सौ | शो | अ | सु |
| शु | गं | वृ | ध्रु | व्या | ह | व | सि | व्य | व | प | शि | सि | सा | शु | शु | ब्र | ऐं | वै | वि | प्री | आ | सौ | शो | अ | सु | धृ |
| गं | वृ | ध्रु | व्या | ह | व | सि | व्य | व | प | शि | सि | सा | शु | शु | ब्र | ऐं | वै | वि | प्री | आ | सौ | शो | अ | सु | धृ | शु |
| वृ | ध्रु | व्य | ह | व | सि | व्य | व | प | शि | सि | सा | श | शु | ब्र | ऐं | वै | वि | प्री | आ | सौ | शो | अ | सु | धृ | शु | गं |
| ध्रु | व्या | ह | व | सि | व्य | व | प | शि | सि | स | शु | श | ब्र | ऐं | वै | वि | प्री | आं | सौ | शो | अ | सु | धृ | शु | गं | वृ |
| व्या | ह | व | सि | व्य | व | प | शि | सि | सा | शु | शु | ब्र | ऐं | वै | वि | प्री | आ | सौ | शो | अ | स | धृ | शु | गं | वृ | ध्रु |

| | | | | | | | | | | | | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | | सि | व्य | व | प | शि | सि | सा | शु | शु | ब्र | ऐं | वै | वि | प्रा | आ | सो | शौ | अ | स | धृ | शू | गं | वृ | ध्रु | व् | |
| ह | च | सि | व्य | व | प | शि | सि | सा | शु | शु | ब्र | ऐं | व | वि | प्री | आ | सा | शो | अ | सु | धृ | शू | गं | वृ | ध्रु | व्या | ह |
| व | सि | व्य | व | प | शि | सि | सा | शु | शु | ब्र | ऐं | वै | वि | प्री | आ | सौ | शो | अ | सु | धृ | शू | | वृ | ध्र | व्या | ह | व |
| सि | व्य | व | प | शि | सि | सा | शु | शु | ब्र | ऐं | वै | वि | प्री | आ | सौ | | अ | सु | धृ | शू | गं | वृ | ध्र | व्या | ह | व | |
| व्य | व | प | शि | सि | सा | शु | शु | ब्र | ऐं | वै | वि | प्री | आ | सौ | शा | अ | सु | धृ | शू | गं | वृ | ध्रु | व्या | ह | व | सि | |
| व | प | शि | सि | सा | शु | शु | ब्र | ऐं | वै | वि | प्री | आ | सौ | शो | अ | सु | धृ | शू | गं | वृ | ध्रु | या | ह | व | सि | व्य | |
| प | शि | सि | सा | शु | शु | ब्र | ऐं | वै | वि | प्री | सौ | सौ | शो | अ | सु | धृ | शू | ग | वृ | ध्रु | व्या | ह | व | सि | व्य | व | |
| शि | सि | सा | शु | शु | ब्र | ऐं | वै | वि | प्री | आ | आ | शो | अ | सु | धृ | शू | गं | वृ | ध्रु | व्या | ह | व | सि | व्य | द | प | |
| सि | सा | शु | शु | व | ऐं | वै | वि | प्री | आ | सै | शा | अ | सु | धृ | शू | गं | वृ | ध्रु | व्या | ह | व | सि | व्य | व | प | शि | |
| सा | शु | शु | ब्र | ऐं | वै | वि | प्री | आ | सौ | शो | अ | सु | धृ | शू | गं | वृ | ध्रु | व्या | ह | व | सि | व्य | व | प | शि | सि | |
| शु | शु | ब्र | ऐं | वै | वि | प्री | आ | सौ | शो | अ | सु | धृ | शू | गं | वृ | ध्रु | व्या | ह | व | सि | व्य | व | प | शि | सि | सा | |
| शु | ब्र | ऐं | वै | वि | प्री | आ | सौ | शो | अ | सु | धृ | शू | गं | व | ध्रृ | व्या | ह | व | सि | व्य | व | प | शि | सि | सा | शु | |
| ब्र | ऐं | वै | वि | प्री | आ | सौ | शा | अ | सु | धृ | शू | गं | वृ | ध्रु | व्या | ह | व | सि | व्य | व | प | शि | सि | सा | शु | शु | |
| ऐं | वै | वि | प्री | आ | सौ | शा | अ | सु | धृ | शू | गं | वृ | ध्रु | व्या | ह | व | भि | व्य | व | प | शि | सि | सा | शु | शु | ब्र | |

इतिश्रीज्योतिर्विद्वयादत्तात्मजरामदीनकृते संग्रहे बृहद्दैवज्ञरंजने योगकथनं नाम पंचविंशं प्रकरणं समाप्तम् ॥ २५ ॥

## अथ षड्विंशं करण प्रकरणं प्रारभ्यते ।

गततिथयो द्विनिघ्नाश्च शुक्लप्रतिपदादितः । एकोना सप्तहृच्छेषा करणं स्याद्बवादिकम् ॥ १ ॥ श्रीपतिः—बवाह्वयं बालवकौलवाख्यं ततो भवेत्तैतिलनामधेयम् । गराभिधानं वणिजं च विष्टिरित्याहुरार्याः करणानि सप्त ॥ २ ॥ चतुर्दशी या शशिना प्रहीना तस्यादिभागे शकुनी द्वितीये । दर्शार्द्धयोस्तश्चतुरंघ्रिभागे किंस्तुघ्नमाद्ये प्रतिपद्दले च ॥ ३ ॥ इंद्रो ब्रह्मा मित्रनामार्यमाभः श्रीः कीनाशश्चेति तिथ्यर्धनाथाः । कल्युक्षाख्यौ सर्पवायू तथैव ये चत्वारस्ते स्थिराणां चतुर्णाम् ॥ ४ ॥ चण्डेश्वरः— बववालवकौलवतैतिलगरवणिजविष्टिसंज्ञानाम् । पतयः स्युरिंद्रकमलजमित्रार्यमभूश्रियः सयमाः ॥ ५ ॥ कृष्णचतुर्दश्यर्द्धात् ध्रुवाणि शकुनिचतुष्पदो नागः । किंस्तुघ्नमिति च तेषां कलिवृषभफणिमारुताः पतयः ॥ ६ ॥ कुर्याद्बवे शुभचरस्थिरपौष्टिकानि धर्मक्रिया द्विजहितानि च बालवाख्ये । संप्रीतिसिद्धिकरणानि च कौलवे स्युः सौभाग्यसंश्रुतिशुभानि च तैतिलाख्ये ॥ ७ ॥ कृषिबीजगृहाश्रयजानि गरे वणिजे ध्रुवकार्यवणिक्पतयः । नहि विष्टिहतं विदधाति शुभं परघातविषादिषु सिद्धिकरम् ॥ ८ ॥ कार्यं पौष्टिकमौषधादि शकुनौ मूलानि मंत्रास्तथा गोकार्याणि चतुष्पदे पितृसुरानुद्दिश्य राज्यानि च । नागे स्थावरदारुणानि हरणं दौर्भाग्यकर्माण्यतः किंस्तुघ्ने शुभ-

वृद्धिपुष्टिकरणं मांगल्यसिद्धिक्रिया ॥ ९ ॥ शुक्ले प्रतिपदस्त्वर्द्धे द्वितीये करणे ववे । कुर्य्यान्मंगलकर्माणि शेषेष्वेवं विचिंतयेत् ॥ १० ॥ जलानलेंदुक्रूरेशधर्मवातेंद्रदिक्कु क्रमात् । संख्यासमानैः प्रहरैर्विष्टिर्दुष्टमुखं यतः ॥ ११ ॥ अन्यः–भूतदस्रस्वरांभोधिषडग्निवसुरूपकाः । यस्य दिक्संख्यया ह्येषु क्रमात्तिथ्यर्द्धविष्टिषु ॥ १२ ॥ श्रीपतिनापि–जलशिखिशशिरक्षःसर्वकीनाशवायुत्रिदशपतिककुप्सु प्रोक्तमास्यं हि विष्टेः । नियतमृषिभिराशासंख्ययामैः क्रमेण स्फुटमिह परिहार्यं मंगलेष्वेतदेव ॥ १३ ॥ चण्डेश्वरः–कराली नंदिनी रौद्री सुमुखी दुर्मुखी तथा । त्रिशिरा वैष्णवी हंसी अष्टावेतास्तु विष्टयः ॥ १४ ॥ सर्पिणी च सिते पक्षे वृश्चिकी च सितेतरे । सर्पिणी मुखतो त्याज्या लांगूले वृश्चिकी त्यजेत् ॥ १५ ॥ श्रीपतिः–दैत्येंद्रैः समरेऽमरेषु विजितेष्वीशः क्रुधा दृष्टवान् स्वं कायात्किल निर्गता खरमुखी लांगूलिनी च त्रिपात् । विष्टिः सप्तभुजा मृगेंद्रगलका क्षामोदरी प्रेतगा दैत्यघ्नी मुदितैः सुरैस्तु करणं प्रांत्ये नियुक्ता तु सा ॥ १६ ॥ मूलर्क्षे शूलयोगे रविदिनदशमी फाल्गुने कृष्णपक्षे याता विष्टिर्निशायां प्रभवति नियतं शंकरं पाहि चांगे ॥ १७ ॥ मुहूर्तगणपतौ–पुरा देवासुरे युद्धे शंभुकायाद्विनिर्गता । दैत्यघ्नी रासभास्या च विष्टिर्लांगूलिनी क्रमात् ॥ १८ ॥ सिंहग्रीवा शवारूढा सप्तहस्ता कृशोदरी । अमरैः श्रवणप्रांते सा नियुक्ता शिवाज्ञया ॥१९॥ महोग्रा विकरालास्या पृथुदंष्ट्रभयानका । कार्यघ्नी भुवमायाति वह्निज्वालासमाकुला ॥ २० ॥ चण्डेश्वरः–असितजलदवर्णा दीर्घनासोग्रदंष्ट्रा विपुलहनुकपोला पिंडकोद्बद्धजंघा । अनलशतसहस्रं चोद्धरंती समंतात्पतति भुवनमध्ये कार्यनाशाय विष्टिः ॥२१॥ मुखे तु घटिकाः पंच द्वे कंठे तु सदा स्थिते । हृदि चैकादश प्रोक्ताश्चतस्रो नाभिमंडले ॥ २२ ॥ नारदः–मुखे पंच गले त्वेका वक्षस्येकादश स्मृताः । नाभौ चतस्रः षट् श्रोणौ तिस्रः पुच्छाख्यनाडिकाः ॥ २३ ॥ दैवज्ञवल्लभे–मुखे कार्यहानिर्गले प्राणनाशो हृदि द्रव्यनाशः कलिर्नाभिदेशे । कटावर्थविध्वंसनं पुच्छभागे जयश्चेति भद्राशरीरे फलं स्यात् ॥ २४ ॥ शुक्ले पूर्वार्द्धेऽष्टमीपंचदश्योर्भद्रैकादश्यां चतुर्थ्यां परार्द्धे । कृष्णेंत्यार्द्धे स्यात्तृतीयादशम्योः पूर्वे भागे सप्तमीशंभुतिथ्योः ॥ २५ ॥ भृगुः–कृष्णे च त्रिदशा रात्रौ दिवा सप्तचतुर्दशी । शुक्ले तुर्येकादशी रात्रावष्टमी पूर्णिमा दिवा ॥ २६ ॥ रामः–पंचद्व्यद्रिकृताष्टरामरसभूयामादिघट्यः शराः विष्टेरास्यमसद्गजेंदुरसरामाद्र्यश्विबाणाब्धिषु । यामेष्वंत्यघटित्रयं शुभकरं पुच्छं तथा वासरे विष्टिस्तिथ्यपरार्द्धजा शुभकरी रात्रौ तु पूर्वार्द्धजा ॥ २७ ॥ बृहस्पतिः–विष्टिस्तु सर्वथा त्याज्या क्रमेणैवागता तु या । अक्रमेण गता भद्रा सर्वकार्येषु शोभना ॥ २८ ॥ ब्रह्मयामले–दिवाभद्रा यदा रात्रौ रात्रिभद्रा यदा दिवा । न तत्र भद्रादोषः स्यात्सा भद्रा भद्रदायिनी ॥ २९ ॥ लल्लः–भेष्वर्कनखनाडीभ्यो भद्रापुच्छं घटित्रयम् । क्रमेण धवले पक्षे व्युत्क्रमेण सितेतरे ॥ ३० ॥ पृथिव्यां यानि कर्माणि शुभान्यप्यशु-

भानि वा । तानि सर्वाणि सिद्धचंति विष्टिपुच्छे न संशयः ॥ ३१ ॥ युद्धे भूपतिदर्शने भयपदे घाते च पाते हठे वैद्यस्यागमने जलप्रतरणे शत्रोः समुच्चाटने । संघट्टे गदमज्जने गजमृगोष्ट्राश्वादिके संग्रहे स्त्रीसेवा ऋतुमज्जने च शकटे भद्रा सदा गृह्यते ॥ ३२ ॥ अन्यः--विवादे शत्रुहनने भयार्थे राजदर्शने । इक्षुदंडे तथा प्रोक्ता भद्रा श्रेष्ठा विधीयते ॥ ३३ ॥ वधबंधविषाग्न्यस्त्रच्छेदनोच्चाटनादि यत् । तुरंगमहिषोष्ट्राविकर्म विष्ट्या तु सिद्धचति ॥ ३४ ॥ कालीदासः--स्यादभद्राय भद्रा न शंभोर्जये मीनराशौ न मेशेनयोः योगस्तथाप्यर्चने । होमकाले शिवायास्तमीस्तदुद्भवः साधने सर्वकाले न दानकर्मणि । दाहघातादिके भद्रा ॥ ३५ ॥ गणपतिः–खराश्वाप्रसवे दुर्गा पूजने दानकर्मणि । दाहघातादिके भद्रा शस्ता नान्यत्र शोभना ॥ ३६ ॥ लल्लः–कुंभांत्यालिहरौ मर्त्ये स्वर्गे चात्र चतुष्टये । स्त्रीधनुर्जूकनक्रेऽधो भद्रा यत्रैव तत्फलम् ॥ ३७ ॥ भृगुः--सिंहालिमीनकुंभादौ भुवि भद्रास्तु मृत्युदाः । मेषाच्चतुष्टये स्वर्गे कन्याजूकधनद्वये । पाताले संचरेद्भद्रा सुखदा सा प्रकीर्तिता ॥ ३८ ॥ गणपतिः--अजत्रयेऽजेलिगे च भद्रा स्वर्लोकचारिणी । कन्याद्वये धनुर्युग्मे चन्द्रे भद्रा रसातले ॥ ३९ ॥ कुंभे मीने तथा कर्के सिंहे चन्द्रे भुवि स्थिता । भूर्लोकस्था सदा त्याज्या स्वर्गपातालगा शुभा ॥ ४० ॥ भृगुरपि- सोमे शुक्रे च कल्याणी शनौ चैव तु वृश्चिकी । गुरौ पुण्यवती ज्ञेया चान्यवारेषु भद्रका ॥ ४१ ॥ मनु ( १४ ) वसु ( ८ ) मुनि ( ७ ) तिथि ( १५ ) युग ( ४ ) दश ( १० ) शिव ( ११ ) गुण ( ३ ) तिथीषु पूर्वाद्याः । आयाति विष्टिरेखा पृष्ठे शुभदा पुरस्त्वशुभा ॥ ४२ ॥

| तिथि | ४ | ८ | ११ | १५ | ३ | ७ | १० | १४ |
|---|---|---|---|---|---|---|---|---|
| प्रहरादौ | ५ | २ | ७ | ४ | ८ | ३ | ६ | १ |
| घटीमुखं | ५ | ५ | ५ | ५ | ५ | ५ | ५ | ५ |
| प्रहरान्ते | ८ | १ | ६ | ३ | ७ | २ | ५ | ४ |
| घटीपुच्छे | ३ | ३ | ३ | ३ | ३ | ३ | ३ | ३ |
| अष्ट दिग् | प | आ | उ | न | ई | द | वा | पू |

इति श्रीमद्दयादत्तज्योतिर्विदात्मजरामदीनज्योतिर्वित्कृते संग्रहे बृहद्दैवज्ञरंजने करणकथनं नाम षड्विंशं प्रकरणं समाप्तम् ॥ २६ ॥

# अथ सप्तविंशं चन्द्रप्रकरणं प्रारभ्यते।

शारंगधरः-लग्नं देहषड्ववर्गोगकांतिं प्राणश्चन्द्रो धातवः खेचरेंद्राः। प्राणे नष्टे देहधात्वंगनाशः तस्मादिंदोर्वीर्यमार्यैः प्रधानम् ॥ १ ॥ संहितप्रदीपे-यथा प्रधानं प्रणवः श्रुतीनां यथा प्रधानं प्रसवः कलानाम्। तथैव शीतांशुबलं प्रधानं नूनं बलानामिह खेचराणाम् ॥ २ ॥ बलाबलं चंद्रमसः प्रसाध्य दद्युर्ग्रहेंद्रा हि बलाबलानि। मनःप्रचारेण यथेंद्रियाणि वदंति वस्तूनि न केवलानि ॥ ३ ॥ आदौ हि चंद्रस्य बलं प्रधानं लग्नस्य पश्चादथ सप्तवर्गः। किं चंद्रवीर्येण विनेतराणि कुर्वंति सत्यायुषि लक्षणानि ॥ ४ ॥ श्रीपतिः-आधारमिंदोर्बलमुक्तमाद्यैराधेयमन्यग्रहजं च वीर्यम्। आधारशक्तौ परिधिष्ठितानामाधेयवस्तूनि हि वीर्यवंति ॥ ५ ॥ अमृतकिरणवीर्योद्वीर्यमाश्रित्य सर्वे ददति ह फलमेते खेचराः साध्वसाधु। निजनिजविषयेषु प्राप्नुवंते यतोभूत्फलमिह मनसैवाधिष्ठितानींद्रियाणि ॥ ६ ॥ सर्वत्र लग्ने प्रथमं प्रकल्प्यं कर्तुंबलं चंद्रमसं ततोन्यत्। बलोपपन्नेप्यथ शीतरश्मौ भवंति शस्ता बलिनो ग्रहेंद्राः ॥ ७ ॥ वैद्यनाथः--यादृशेन शशांकेन राशिं संक्रमते ग्रहः। तादृशं फलमाप्नोति नरः सर्वत्र चिंतयेत् ॥ ८ ॥ ज्योतिःप्रकाशे-लग्नं हस्ती नृपश्चंद्रः सौम्यपापाश्च भृत्यकाः। नृपे नष्टे कथं युद्धं कथं हि फलमादिशेत् ॥ ९ ॥ नारदः-तिथिरेकगुणा प्रोक्ता नक्षत्रं च चतुर्गुणम्। वारश्चाष्टगुणः प्रोक्तः करणं षोडशान्वितम् ॥ १० ॥ द्वात्रिंशल्लक्षणो योगस्तारा षष्टिगुणा स्मृता। चंद्रे शतगुणं पुंसां तस्माच्चंद्रबलाधिकम् ॥ ११ ॥ सद्यः स्मरणायेदं लिखितम्। इदं तु पूर्वं तिथिप्रकरणेप्यालेखितम्। राजमार्तंडे-चंद्रबलेन विहीनो न मनःपरितोषदः क्रियारंभे। सुगुणशतैरपि युक्तो वृद्धो रमणो वरस्त्रीणाम् ॥ १२ ॥ वसिष्ठः--प्रथमदिने वत्सरतः शुभदे चंद्रे च यस्य पुरुषस्य। तद्वर्षे शिशिरकरः शुभफलदस्तस्य वेधयुक्तोपि ॥ १३ ॥ अयनावृतुसमये मासे वाप्येवमेव जानीयात्। तारामपि तद्बलतः शुभतारा चैव शुभदा स्यात् ॥ १४ ॥ श्रीपतिः-वलक्षपक्षादिगते हिमांशौ शुभे शुभं पक्षमुदाहरंति। सितेतरादावशुभे शुभं च पक्षावनिष्टौ भवतोन्यथा तौ ॥ १५ ॥ लल्लः-मासे तु शुक्लप्रतिपत्प्रवृत्तेः पूर्वे शशी मध्यबलो दशाहे। श्रेष्ठो द्वितीयेल्पबलस्तृतीये सौम्यैस्तु दृष्टे बलवान् सदैव ॥ १६ ॥ संहितासारे-विधुरधिकबलीयान् कीर्तिमान् शुक्लपक्षे बलमबलमिहोक्तास्तारकीया ग्रहेंद्राः। बलवति सति कांते विद्यमानेपि दक्षे प्रभवति नहि कर्तुः सर्वकार्याणि योषाः ॥ १७ ॥ केशवः-पक्षे सिते चन्द्रबलं प्रधानं ताराबलं तत्र न चिंतनीयम्। सुते गृहस्थे सबले च पत्यौ प्रधानता नास्ति यतोंगनानाम् ॥ १८ ॥ कृष्णेपि पक्षे विधुवीर्यमेव भवेत्प्रधानं नतु तारकायाः। दुःस्थः कृशो वा पतिरेव यद्वत्सर्वाणि

कार्याणि विधापयीत ॥१९॥ वृन्दावने--प्रोषिते विकलवर्ष्मणि प्रिये तौलिलिः स्त्रियमिषेय कार्यंणीम् । अस्तु किंतु न पतिप्रतीपतां सान्यथा घटयितुं पटीयसी ॥२०॥ कौर्य-मेति बहुले सकेवलं नैव नश्यतितमाममां वसन् । नास्ति चैष यदि तत्र तत्कथं तत्कृता जनिषु रिष्टरौद्रता ॥ २१ ॥ पार्श्वगे निजपतौ कुटुंबिनी दुर्बलेपि तदभीष्टका-र्येकृत् । तारकापि शशिनोनुकूलता संभवे भवति पक्षपातिनी ॥ २२ ॥ रेणुकः-- तारावलं न हि ग्राह्यं विरुद्धे तु निशाकरे । न हि धारयते वल्ली निपतन्तं महाद्रु-मम् ॥ २ ॥ बृहस्पतिः--शुभग्रहेक्षितश्चंद्रः शुभकर्मरतो यदि । पापांशके शशांकस्थो दोषान् सर्वान् व्यपोहति ॥ २४ ॥ शुभस्यांशे गतश्चन्द्रः शुभकर्मरतो यदि । इन्दुग्र-हस्य नांधत्वं हिते रक्षोदयेपि च ॥ २५ ॥ चन्द्रः केन्द्रे शुभस्तिष्ठेद्विनेत्रर्क्षे बला-न्वितः । चंद्रेंधर्क्षगतो वापि न दोषः शुभकर्मसु ॥ २६ ॥ त्रिकोणकंटके वापि शुभ-स्तिष्ठेद्बलान्वितः । चंद्रे अंधर्क्षगो वापि न दोषः सर्वकर्मसु ॥ २७ ॥ गुरूषितनवां-शर्क्षकेन्द्रगः शुभकर्मकृत् । सितपक्षे शशी पापं स्वांशदोषान् व्यपोहति ॥ २८ ॥ शुभग्रहो सितांशस्थः कर्कटस्थः शुभेक्षितः । शुभकर्मकरस्यांशस्थितो दोषान्व्यपो-हति ॥ २९ ॥ जन्मेशाष्टमराशीशौ मिथो मित्रे यदा तदा । अष्टमर्क्षोत्थसंभूतो दोषो नश्यति भावतः ॥ ३० ॥ जन्मेशमृत्युराशीशौ मिथो मित्रे यदा तदा । जन्माष्टमर्क्षे चंद्रस्य दोषो भंगत्वमाप्नुयात् ॥ ३१ ॥ उदयपंचमधर्मगतः शुभाशुभगदष्टमहर्क्षक-वर्गगः । शशिनि सौम्यनवांशगते तदा सकलदोषहरः शुभवर्द्धनः ॥ ३२ ॥ शुभां-शकगते चंद्रे तदंशेशो बलैर्युतः । यदि पश्यति लग्नेंदुर्गुणोयं दोषहा स्वयम् ॥ ३३ ॥ चंद्रोतिनीचांशकवर्जितश्च पक्षे प्रशस्ते शुभकर्मकृच्च । दृष्टः शुभैर्वीर्यसमन्वितश्च योग्यो विधुः स्याच्छुभकर्मणीष्टः ॥ ३४ ॥ स्वांशगश्च शशी प्राणी बलवान् जीवदृष्टिगः । लग्नकेंद्रत्रिकोणस्थो बलवान् दोषनाशनः ॥ ३५ ॥ चिन्तामणौ रामाचार्यस्तु--एकार्ग-लोपग्रहपातलत्ताजामित्रकर्तर्युदयास्तदोषाः । नश्यंति चंद्रार्कबलोपपन्ने लग्ने यथा-र्कोभ्युदये तु दोषाः ॥ ३६ ॥ गुरुरपि--पंचांगैः सुशुभैर्युक्तः कालः स शुभलग्नगः । चंद्रः शुभांशगः पूर्वे क्रियाणां षोडशादिनाम् ॥ ३७ ॥ अथ प्रत्यहं चंद्रस्योदया-स्तकालानयनं स्थूलमत्राह--तिथिगुणितं रजनीपरिमाणं यम ( २ ) रहितं सितपक्षवि-मिश्रम् । बाणशशांक ( १५ ) विभाजितलब्धं प्रतिदिवसं चंद्रोदयमस्तम् ॥ ३८ ॥ तिथिः शुक्लादितो ग्राह्या । अथ चंद्रशृंगोन्नतिज्ञानम् । रामः--सभं मृदुक्षिप्र-वसुश्रवोग्निमघात्रिपूर्वास्रपभं बृहत् स्यात् । ध्रुवद्विदैवादितिभं जघन्यं सार्पाबुपा-द्रानिलशाक्रयाम्यम् ॥ ३९ ॥ जघन्यभे चोदयते हिमांशुः शरेंदवो बाणकृता बृहत्सु । खरामसंख्यासमभे महर्घं समर्घसाम्यं विधुदर्शने भवेत् ॥ ४० ॥ निबं-धचूडामणौ--दक्षिणे नोन्नतिं याति मीनमेषोदये शशी । सौम्योन्नतस्तथान्येषु सम-श्च वृषकुंभयोः ॥ ४१ ॥ वैष्णवे--यस्यां त्वमायामथ पौर्णिमास्य चंद्रः शुभैर्दृष्टयु

न पापैः । तस्मिंश्च मासे कुरुते समर्घं महर्घकं पापयुतेक्षितश्च ॥ ४२ ॥ नारदः-षष्टिघ्नं चंद्रनक्षत्रं तत्कालघटिकान्वितम् । वेदघ्नमिषुवेदाप्तमवस्था भानुभाजिताः ॥ ४३ ॥ प्रवासनष्टाख्यजयामृताख्या हास्यारतिक्रीडितसुप्तभुक्ता । ज्वराह्वया कंपितसुस्थिरा च द्विषट् च संख्या हिमगोरवस्था ॥ ४४ ॥ अथ षट्त्रिंशदवस्थानिरूपणम् । मरीचिः-चंद्रस्थितं च नक्षत्रं नाडीकृत्वाब्धिसंगुणम् । शररूपहृते लब्धं चन्द्रावस्थां वदेत्सुधीः ॥४५॥ शिरोरोगं १ महाप्रीति २ दैवकार्यं ३ सुखासनम् ४। नेत्ररोगी ५ सुकर्मा च ६ नारीक्रीडा ७ महाज्वरी ८ ॥ ४६ ॥ सुवर्णभूषणस्याप्ति ९ विषभुक्ति- १० स्तु मैथुनम् ११ । कुक्षिरोगं १२ जलक्रीडा १३ हास्यांतं १४ चित्रलेखनम् १५ ॥ ४७ ॥ गांधर्वं १६ गंधसंयुक्तं १७ कलहो १८ गमनस्तथा १९ । क्षुधा २० तृष्णा च २१ निद्रा २२ च शास्त्रगोष्ठी २३ कलि २४ स्तथा ॥ ४८ ॥ क्रोधं २५ च नृत्यकार्यं २६ च यजमानस्तु तिष्ठति २७ । उन्मत्तः २८ स्थानकर्मा च २९ क्षुधा ३० भुक्तिश्च ३१ निंद्रिता ३२ ॥ ४९ ॥ सुकर्मा ३३ पापकर्मा ३४ च क्रूरकर्मा ३५ हनिष्यति ३६ । इत्येताश्चंद्रलीलाः स्युः षट्त्रिंशत्स्यात्फलोदयाः ॥ ५० ॥ श्रीपतिः-राशौ राशौ द्वादशेंदोरवस्थाः प्रोक्ताः कैश्चित्सूरिभिः शेषिताद्याः । यात्रोद्वाहाद्येषु कार्येषु नूनं संज्ञातुल्यं तत्फलं चिंतनीयम् ॥ ५१ ॥ इति श्रीज्योतिर्विद्वयादत्तात्मजरामदीनकृते संग्रहे बृहद्दैवज्ञरंजने चंद्रकथनं नाम सप्तविंशं प्रकरणं समाप्तम् ॥ २७ ॥

---

## अथाष्टाविंशं ताराप्रकरणं प्रारभ्यते ।

जन्मभाद्दिननक्षत्रं गणयेत्क्रमतो बुधः । हरेद्भागं ग्रहेणैव शेषं तारा भवेदिति ॥१॥ जन्मसंपद्विपत्तारा क्षेमा पापा शुभा पुनः । कष्टा मैत्रातिमैत्रा च नव तारा उदाहृताः ॥२ ॥ तारा सर्वा शुभा प्रोक्ता सप्त पंच त्रिवर्जिता । यात्रा क्षौरविवाहेषु भैषज्ये च परा हिता ॥ ३ ॥ अन्यत्रापि-जन्मऋक्षं गणेत्यादौ दिनऋक्षावधिं किल । नवभिश्च हरेद्भागं शेषं तारा विनिर्दिशेत् ॥ ४ ॥ जन्मतारा द्वितीया च षष्ठी चैव चतुर्थिका । अष्टमी नवमी तारा षट् तारा च शुभावहा ॥ ५ ॥ बृहस्पतिः-जन्मसंपद्विपत्क्षेम प्रत्यरिः साधको वधः । मैत्रं परममैत्रं च भवेत्संज्ञास्तु कर्मणाम् ॥ ६ ॥ विपदि प्रत्यरे वैधे प्रथमांत्ये त्रिभागतः । विनान्येशा शुभाः सर्वे सर्वेषु शुभकर्मसु ॥७॥ कृष्णे बलवती तारा शुक्ले चंद्रः प्रशस्यते । शुक्ले तारा न शुभदा कृष्णे चंद्रो न शस्यते ॥ ८ ॥ दद्याद्द्विजातये दानमशुभाय शुभाय च । गुडं च लवणं चैव कांचनं सतिलं क्रमात् ॥ ९ ॥ गर्गः-विपत्तारे गुडं दद्याच्छाकं दद्याद्द्विजन्मसु । प्रत्यरे

लवणं दद्यान्नैधने तिलकांचनम् ॥ १० ॥ लल्लः—न कृष्णपक्षे शशिनः प्रभावो ताराबलं तत्र शुभं प्रदिष्टम्। देशांतरस्थे विकले च पत्यौ सर्वाणि कार्याणि करोति नारी ॥ ११ ॥ अत्रापि तारापतिवीर्यमेव वदंति पक्षद्वितयेपि केचित्। केचिच्च तासां बलयुक्तामिंदोर्बलं सदा देयमिति ब्रुवंति ॥ १२ ॥ ज्योतिःप्रकाशे—विहाय ताराबलमौषधीशो पक्षद्वयेपीष्टफलं न यस्मात्। अप्राप्य जायानुमतं हि लोके न कार्यसिद्धौ पुरुषः समर्थः ॥ १३ ॥ वसिष्ठमांडव्यमतादिहेत्थं बलाबलं तारकशीतभान्वोः। विचारितं सम्यगमी तदर्थाः श्लोकास्तुरीयाः सुरसंहितायाम् ॥ १४ ॥ तिथयः पंच शुक्लाद्याश्चन्द्रतारायुतो बली। तनुत्वाद्वर्द्धमानोपि प्रौढस्त्रीको यथा पतिः ॥ १५ ॥ परतश्चंद्रमा एव यावत्कृष्णाष्टमीदलम्। प्रौढस्तु पुरुषो यद्वत्स्वतंत्रः स्याद्विना स्त्रियम् ॥ १६ ॥ कृष्णाष्टम्यूर्ध्वतो यावद्दिनं पैत्र्यं निशाकरः। क्षीणत्वाद्दुर्बलत्वेन प्रधानं तारकाबलम् ॥ १७ ॥ विकलांगौ यथा पत्यौ कार्येषु प्रभवः स्त्रियः। एवं चंद्रे च विकले तारा बलवती भवेत् ॥ १८ ॥ जन्माद्यं दशमं कर्म संघातर्क्षं च षोडशम्। अष्टादशं सामुदायं त्रयोविंशद्विनाशनम् ॥ १९ ॥, मानसं पंचविंशर्क्षं नाचरेच्छुभमेषु तु। अभिषेकेभिषेकर्क्षं दशमं जन्मभागतः। जातिभे जातिनक्षत्रं पापैर्युक्तं न शोभनम् ॥ २० ॥ भूपालः—केत्वर्कार्कियुतं भौमवक्रभेदेन दूषितम्। हतमुल्कापरागाभ्यां स्वभावान्यत्वमागतम् ॥ २१ ॥ पीडितो जन्मभे मृत्युः कर्मनाशश्च कर्मणि। संघाते बंधुपीडा स्यात्समुदाये सुखक्षयम् ॥ २२ ॥ वैनाशिके देहनाशो मनस्तापस्तु मानसे। कुलदेशश्रियां नाशो जातिदेशाभिषेकभे ॥ २३ ॥ दुष्टतारापवादः ज्योतिःसागरे—शशिनि परिपुष्टकिरणे स्वतुंगभवने स्वकीयवर्गे वा। क्षौरादिकेपि कार्ये तारादोषो न दोषाय ॥ २४ ॥ राजमार्तंडे—सौम्यसुहृन्निजभवने चंद्रे तुंगर्क्षसंस्थे च। अणुतामपि संप्राप्ते तारादौष्ट्यं न दोषाय ॥ २५ ॥ च्यवनः—यदि चेज्जन्मनक्षत्रं भौमार्कार्किंतमोयुतम्। तस्य सर्वौषधिस्नानं गुरुविप्रसुरार्चनम् ॥ २६ ॥ वाग्भटः—मुरा मांसी वचा कुष्ठा शैलेयं रजनीद्वयम्। सठी चंपकमुस्ता च सर्वौषधिगणाः स्मृताः ॥ २७ ॥ वृद्धवसिष्ठः—बला च शंखपुष्पी च कुष्ठी चैव तथा वचा। नागकेशरचूर्णं च सर्वौषधिगणो भृगो ॥ २८ ॥ छांदोग्यपरिशिष्टे—कुष्ठं मांसी हरिद्रे द्वे मुरा शैलेयचंदनम्। वचा चंपकमुस्ते च सर्वौषध्यो दश स्मृताः ॥ २९ ॥ इति श्रीज्योतिर्विद्दयादत्तात्मजरामदीनकृते संग्रहे बृहद्दैवज्ञरंजने ताराकथनं नाम अष्टाविंशं प्रकरणं समाप्तम् ॥ २८ ॥

---

## अथ एकोनत्रिंशं लग्नप्रकरणं प्रारभ्यते ।



त्रैलोक्यप्रकाशे--लग्नं देवः प्रभुः स्वामी लग्नं ज्योतिः परं मतम् । लग्नं दीपो महान् लोके लग्नं तत्त्वं दिशन् गुरुः ॥ १ ॥ म्लेच्छेषु विस्मृतं लग्नं कलिकालप्रभावतः । प्रभुप्रभावमासाद्य जैनधर्मेवतिष्ठति ॥ २ ॥ तुलानुमुरल्ययंत्राणि तिष्ठंति किल ताजिके । षड्वर्गशुद्धिमाख्याति लग्ननिश्चयमिच्छता ॥ ३ ॥ नारदः--त्रुटेः सहस्रभागो यो लग्नकालः स उच्यते । ब्रह्मापि तं न जानाति किं पुनः प्राकृतो जनः ॥ ४ ॥ लल्लः--न तिथिर्न च नक्षत्रं न योगो नैंदवं बलम् । लग्नमेव प्रशंसंति गर्गनारदकश्यपाः ॥ ५ ॥ ज्योतिःसागरे--लग्नं जीवो मनश्चंद्रः शरीरं तिथिभादिकाः । जीवे पुष्टे फलं पुष्टं नष्टे नष्टं विदुर्बुधाः ॥ ६ ॥ भुवनदीपके-इंदुः सर्वत्र बीजांभो लग्नं च कुसुमप्रभम् । फलेन सदृशोंशश्च भावाः स्वादुफलं स्मृतम् ॥ ७ ॥ ज्योतिर्विवरणे--लग्नवीर्यं विना यत्र यत्कर्म क्रियते बुधैः । तत्फलं विलयं याति ग्रीष्मे कुसरितो यथा ॥ ८ ॥ रेणुकः--यथा जन्मलग्नाच्छुभं वाशुभं वा फलं ज्ञायते तद्वदेवं प्रकल्प्यम् । सदा सर्वकार्ये बुधैर्लग्नवीर्यं विचिंत्यं विना तेन कार्यं न किंचित् ॥ ९ ॥ श्रीपतिः--आदौ हि संपूर्णफलप्रदं स्यान्मध्ये पुनर्मध्यफलं विचिंत्यम् । अतीव तुच्छं फलमस्य चांते विनिश्चयोऽयं विदुषामभीष्टः ॥ १० ॥ विरोधमभिषेकं च राज्ञां साहसकर्म च । धात्वाकरादिसंबंधं मेषलग्ने प्रसिद्ध्यति ॥ ११ ॥ वृषोदये विवाहश्च ध्रुवं वेश्मप्रवेशनम् । कुमारीवरणं दानं क्षेत्रारंभादि चेष्यते ॥ १२ ॥ कलाविज्ञानसंबंधं वृषलग्नोदितं च यत् । विभूषणादिकं कर्म कर्तव्यं मिथुनोदये ॥ १३ ॥ वापीकूपतडागादिवारिबंधनमोक्षणे । पौष्टिकं कर्म यत्किंचित्सर्वं सिद्ध्यंति कार्किणि ॥ १४ ॥ वणिक्क्रियाद्यं पण्यं च कर्षणं नृपसेवनम् । परयोगश्च मेषोक्तं यश्च कंठीरवे हितम् ॥ १५ ॥ औषधं शिल्पविज्ञानं भूषणादि चरं स्थिरम् । कर्तव्यं पौष्टिकारंभं कन्यालग्ने प्रसिद्ध्यति ॥ १६ ॥ कृषिकर्म वणिक्सेवा यात्राकर्म तुलोदये । प्रसिद्ध्यंति हि सर्वाणि तुलाभांडाश्रितानि च ॥ १७ ॥ साहसं दारुणोग्रं च राजसेवाभिषेचनम् । चौर्यकर्म स्थिरारंभाः कर्तव्या वृश्चिकोदये ॥ १८ ॥ प्रस्थानपौष्टिकोद्वाहाः सवाहनपरिग्रहाः । चापलग्ने विधेयाः स्युः चरकर्मप्रसिद्धये ॥ १९ ॥ क्षेत्राश्रयाण्यंबुयात्रा बंधमोक्षौ च वारिणाम् । दासीचतुष्पदोष्ट्रादि कर्तव्यं मकरोदये ॥ २० ॥ नौचर्योदकयानं च कर्म ध्रुवचरं तथा । बीजसंग्रहणोप्ती च कर्तव्यं कलशोदये ॥ २१ ॥ विद्यालंकृतिशिल्पादि कृष्यंबु पशुकर्म च । यात्रोद्वाहाभिषेकाद्यं कार्यं मीनोदये बुधैः ॥ २२ ॥ शुद्धेषु मेषाद्युदयेषु कर्मण्येतानि सिद्ध्यंति यथोदितानि । क्रूरग्रहालोकनयोगदुष्टेष्वेतेषु कर्मोदितमुग्रमेव ॥ २३ ॥ विलग्नहोराद्रेष्काणनवांशद्वादशां-

शकः । त्रिंशांशश्चेति षड्वर्गाः ससौम्यग्रहजः शुभः ॥ २४ ॥ बृहज्जातके-क्षितिज-सितज्ञचंद्ररविसौम्यसितावनिजाः । सुरगुरुमंदशौरीयमगुरवश्च गृहांशकपाः ॥ २५ ॥ नीलकंठः-ओजे रवींद्वोः सम इंदुरव्योर्होरे गृहार्धे प्रमिते विचिंत्ये । द्रेष्काणपाः स्वेषु नवर्क्षनाथा क्रिये (१) ण(१०) तौलीं(७)द्रुभतो (४) नवांशाः ॥२६॥ वाराहः-कुजरविजगुरुज्ञशुक्रभागाः पवन(५)समीरण(५)कौर्पि(८)जूक(७)लेयाः(५) । अयुजि युजिभे विपर्ययस्थाः शशिभवनालिझषांत्यमृक्षसंधिः ॥ २७ ॥ श्रीपतिः-वर्गे शुभे लग्नगतेपि सौम्ये सपौष्टिकं कर्म बुधैः प्रदिष्टम् । लग्नप्रपन्ने पुनरुग्रवर्गे स्यात्कर्मणः क्रूरतरस्य सिद्धिः ॥ २८ ॥ घटमिथुनकुलीरा धन्विगोमीनकन्या इह शुभभवनत्वाद्राशयः सप्त सौम्याः । अलिघटमृगसिंहाजाश्च पापास्पदत्वान्मुनिभिरभिहितास्ते प्रायशः क्रूरभावाः ॥ २९ ॥ सौम्योग्रतैषां न खलु प्रकृत्या योगेन सा साध्वितरग्रहाणाम् । क्रूरोपि सौम्यः स शुभाश्रितः स्यात्सौम्योपि पापाश्रितमुग्रमेव ॥ ३० ॥ ग्रहासन्नावलोकाभ्यां राशेर्भावोनुवर्तते । ग्रहोत्थस्तद्विहीनोसौ स्वभावमुपसर्पति ॥ ३१ ॥ प्रायः शुभा न शुभदा निधनव्ययस्था धर्मांत्यधीनिधनकेंद्रगताश्च पापाः । सर्वार्थसिद्धिषु शशी न शुभो विलग्ने सौम्यान्वितोपि निधनं न शुभं च लग्नम् ॥ ३२ ॥ लघुजातके-मेषाद्याश्चत्वारः सधन्विमकराः क्षपाबला ज्ञेयाः । पृष्ठोदया विमिथुनाः शिरसान्ये ह्युभयतो मीनाः ॥ ३३ ॥ मेषवृषधन्विसिंहाश्चतुष्पदा मकरपूर्वभागश्च । कीटः कर्कटराशिः सरीसृपो वृश्चिकः कथितः ॥ ३४ ॥ मकरस्य पश्चिमार्धं कुंभो मीनश्च जलचराः ख्याताः । मिथुनतुलाधरकन्या द्विपदाख्या धनुषि पूर्वभागश्च ॥ ३५ ॥ पुंस्त्री क्रूराक्रूरौ चरास्थिरद्विस्वभावसंज्ञाश्च । अजवृषमिथुनकुलीराः पंचमनवमैः सहेंद्राद्याः ॥ ३६ ॥ तनुधनसहजसुहृत्सुतरिपुजायामृत्युधर्मकर्मायाः । व्यय इति लग्नाच्चतुरस्राख्येष्टमचतुर्थे ॥ ३७ ॥ अधिपयुतो दृष्टो वा बुधजीवानिरीक्षितश्च यो राशिः । स भवति बलवान्न यदा दृष्टो युक्तोपि वा शेषैः ॥ ३८ ॥ होरामकरंदे-भवनमथ तदर्द्धं दृक्च सप्तांशकाख्यौ तदनु च नवभागो द्वादशाख्यंशदंशः । भवति भवनमध्ये सप्तवर्गाभिधोयं बलमपि मुनिमुख्यैः प्रोक्तमस्यानुपूर्वम् ॥ ३९ ॥ राजमार्तंडे-शुष्कमार्द्रं दहत्येधो महादीप्तो यथानलः । तिथ्यादीनां फलं तद्वल्लग्नदोषं विनिर्दहेत् ॥ ४० ॥ वसिष्ठः-यात्रालग्नादिकेंद्रेषु शून्येषु शुभखेचरैः । निष्फलं गमनं तस्य जारजातस्य पिंडवत् ॥ ४१ ॥ संहिताप्रदीपे-प्राधान्यमत्रोदयशीतभान्वोः स्थितं द्वयोरेव जगत्प्रसिद्धम् । तत्रापि केचिद्बलवद्विलग्नं व्याचक्षते शैत्यकरं तथान्यैः ॥ ४२ ॥ दोषैर्महद्भिर्निहते विलग्ने हन्येत वीर्ये शशिनि त्विषोपि । चित्ते हि दोषोपहते नराणां शरीरमाप्नोति सुखं न किंचित् ॥ ४३ ॥ यथा विलग्नं गुणवर्जितं स्यात्तदा बलीयानपि किं मृगांकः । यतो नितांतं गुणवानपीह दैवेन हीनोप्यतिदुर्बलः स्यात् ॥ ४४ ॥ यतो हृषिकैं मनसा समेतमर्थं न गृह्णीत न तेन हीनम् । यच्चंद्रदोषोपहतं दिनं

स्यात्तस्मिन्विलग्नादि कथं विचिंत्यम् ॥ ४५ ॥ आदौ हि चद्रस्य बलं विचिंत्यं लग्नस्य पश्चादथ सप्तवर्गः । किं चंद्रवीर्येण विनेतराणि कुर्वंति सत्यायुषि लक्षणानि ॥ ४६ ॥ इत्थं विवादो विदुषां बहूनां परस्परं भिन्नमतैर्वचोभिः । प्रधानमस्येति न वक्तुमेति शास्त्राणि विज्ञाय पुरातनानि ॥ ४७ ॥ प्रायेण सर्वत्र विलोकयंति चांद्रं बलं गोचरतो विशुद्धम् । लोकोक्तितश्चंद्रबलं प्रधानं शास्त्रेषु मुख्यं खलु लग्नमेव ॥ ४८ ॥ यत्रोदितं लग्नबलं प्रधानं विलोक्यमिंदोरपि तत्र वीर्यम् । पुष्टं फलं स्यादुभयोर्बलाप्तौ लग्नाब्जयोरन्यतमेन मध्यम् ॥ ४९ ॥ अत्रापि मांडव्यमुनेर्विशेषं प्रायेण चंद्रस्य बलं विलोक्यम् । समुत्सुके कर्मणि लग्नवीर्यं तात्कालिकं चाप्यनयोरलाभे ॥ ५० ॥ सप्ताश्वि ( २७ ) निघ्ना दिनयातनाडी षष्ठ्या विहृत्याप्तफलं वियोज्यम् । वारे तिथौ भे च रवौ च ते स्युस्तात्कालिका वारतिथींदुसूर्याः ॥ ५१ ॥ इत्याद्यनुसाराल्लग्नमेव शुभाशुभदायकमतः लग्नसाधनज्ञानावश्यकत्वम् तच्च ग्रहलाघवीतो लग्नानयनं कुर्यात् ग्रंथविस्तारभयतो नात्रास्माभिर्निरूप्यते । लल्लः–क्रूरैर्लग्नयुतं त्याज्यं मंगलेष्वखिलेष्वपि । जन्मांगादष्टमं क्रूरं लग्नगं संत्यजेच्छुभे ॥ ५२ ॥ नारदः–भृगुः षष्ठाह्वयो दोषो लग्नात्षष्ठगते सिते । उच्चगे शुभसंयुक्ते तल्लग्नं सर्वदा त्यजेत् ॥ ५३ ॥ कश्यपः–कुजाष्टमो महादोषो लग्नादष्टमगे कुजे । शुभत्रययुतं लग्नं त्यजेत्तुंगगतं यदि ॥ ५४ ॥ षडष्टेंदुर्महादोषो लग्नादष्टमषष्ठगे । चंद्रस्योच्चेथवा पूर्णे मृत्युकारी स मंगले ॥ ५५ ॥ व्यासः–लग्नाधीशे नीचगे शत्रुगे वा रन्ध्रे चास्तं संगते वक्रगे वा । तल्लग्नं वै संत्यजेत्सर्वकार्ये कुर्यात्कार्यं चेत्तदा मृत्युभीतिः ॥ ५६ ॥ शाकल्यसंहितायाम्–शांतिकं पौष्टिकं विद्यायानभोजनपूर्वकम् । जीवितेच्छुर्न कुर्वीत जातु लग्नेष्टमे स्वभात् ॥ ५७ ॥ फलप्रदीपे–जन्मस्थोरिगृहाधिपोथ मरणाधीशोथवा मृत्युदः लग्नस्याधिपतिस्तथारिगृहगे वा मृत्युदो मृत्युगः । जन्मर्क्षोदयलग्नतोष्टमगृहं वा द्वादशांशोदयं यात्राद्येष्वखिलं धिया किल बुधैश्चिन्त्या भशुद्धिः सदा ॥ ५८ ॥ रत्नहारे–नीचे लग्नपतिस्तथारिगृहगः शत्रोः कटाक्षं गतस्तद्युक्तोपि पराजिते रिपुगृहे युक्तेथ वा नैधने ॥ ५९ ॥ गर्गः–अंशाधिपजन्मपती लग्नपतिश्चास्तमुपगतो यस्य । यात्रासमये मरणं तस्य भवति कतिपयाहेन ॥ ६० ॥ मांडव्यः–लग्नेशेऽस्तंगते रोगो रन्ध्रे मृत्युर्व्यये व्ययः । षष्ठे शत्रुभयं घोरं नीचे भंगोरिभे भयम् ॥ ६१ ॥ रेणुकः–लग्नाधिपः केन्द्रगतो बलिष्ठः स्वोच्चादिवर्गे शुभवर्गसंस्थः । करोति कर्तुर्बहुलार्थसिद्धिं विपर्ययेनैव विपर्ययं च ॥ ६२ ॥ स्वगृहादिवर्गगः खेटो मित्रषड्वर्गगोथः वा । लग्नेशः कार्यसिद्ध्यै स्यादेतत्सर्वं मुनेर्मतम् ॥ ६३ ॥ चंडेश्वरः–ये लग्नदोषाः कुनवांशदोषा दृष्टेः कृता वृष्टिनिपातदोषाः । लग्ने गुरुस्तान् विमलीकरोति फलं यथांभः कतकद्रुमस्य ॥ ६४ ॥ वसिष्ठः–पापोपि लग्नाधिपतिस्त्रिषष्ठलाभस्थितः स्थानबलाधिकश्च । लग्नोत्थदोषान् निखिलान्निहंति पापानि यद्वत्परमाक्षरज्ञः ॥ ६५ ॥ गुरुः–

स्वोच्चे स्ववर्गे वा यातः शुभः पापोपि वा भवेत् । बलवान् दोषविच्छेत्ता हरिरेको यथा गजान् ॥ ६६ ॥ गुरुः सर्वगुणोपेतो लग्नकेंद्रस्ववर्गः । दोषाघौघविनाशाय भक्त्या शंभोः प्रणामवत् ॥ ६७॥ वसिष्ठोपि—शुक्रो दशसहस्राणि बुधो दशशतानि च । लक्षमेकं तु दोषाणां गुरुः केंद्रे व्यपोहति ॥ ६८ ॥ न सकलगुणसंपल्लभ्यतेल्पैरहोभिर्बहुतरगुणयुक्तं योजयेन्मगलेषु । प्रभवति नहि दोषं भूरिभावे गुणानां सलिलमिव हि वह्नौ संप्रदीप्तेंधनाढ्ये ॥ ६९ ॥ श्रीपतिः—समस्तगुणसंपदां न खलु लब्धिरल्पैर्दिनैर्गुणप्रचुरता तथा बहुमता च दोषाल्पता । न भूरिगुणसंचये प्रभवतीह दोषोल्पको ह्युदर्चिषि हुताशने सलिलबिंदुरेको यथा ॥ ७० ॥ एकोपि हंति गुणलक्षमपीह दोषः कश्चिद्गुणो न हि भवेद्यदि तद्विरोधी । मद्यस्य बिंदुरिह पावनपंचगव्यं संपूर्णमत्र कलशं मलिनीकरोति ॥ ७१ ॥ संहिताप्रदीपे—दोषैर्विहीनमखिलैश्च गुणैः समेतं नो लभ्यते गुणशतैर्विदुषापि लग्नम् । तस्मादभूतगुणसंयुतममल्पदोषं देयं विलोक्यमवलोक्य मतं बहूनाम् ॥ ७२ ॥ गुणैः प्रभूतैः सहिते विलग्ने दोषो लघीयानफलत्वमेति । तुषारराशौ निहितो यदि स्याद्धुताशनः किं कुरुते विकारम् ॥ ७३ ॥ एकोपि दोषो गुणराशिहंता भवेद्विरोधी न परो गुणश्चेत् । तीर्थांबुपूर्णे कलशं यथैको बिंदुः सुराया कुरुतेऽपवित्रम् ॥ ७४ ॥ इति श्रीमद्दयादत्तज्योतिर्विदात्मजरामदीनज्योतिर्वित्कृते संग्रहे बृहद्दैवज्ञरंजने लग्नकथनं नाम एकोनत्रिंशं प्रकरणं समाप्तम् ॥ २९ ॥

---

## अथ त्रिंशं मुहूर्तप्रकरणं प्रारभ्यते ।

श्रीपतिः—रुद्राहिमित्रपितरो वसुवारिविश्वे वेधा विधिः शतमखः पुरुहूतवह्नी । नक्तंचरश्च वरुणार्यमयोनयश्च प्रोक्ता दिने दश च पंच तथा मुहूर्ताः ॥ १ ॥ निशामुहूर्ता गिरिशाजपादाहिर्बुध्न्यपूषाश्वियमाग्नयश्च । विधातृचंद्रादितिजीवविष्णुस्तिग्मद्युतिस्त्वाष्ट्रसमीरणश्च ॥ २ ॥ दिनस्य यः पंचदशो विभागो रात्रेस्तथा तद्धि मुहूर्तमानम् । नक्षत्रनाथप्रमिते मुहूर्ते मौहूर्तिकास्तत्समकर्म चाहुः ॥ ३ ॥ नारदः—अह्नः पंचदशो भागस्तथा रात्रिप्रमाणतः । मुहूर्तमानं द्वावेव क्षणर्क्षाणि समेश्वराः ॥ ४ ॥ अर्यम्णोर्के तुहिनकिरणे राक्षसब्राह्मसंज्ञौ पित्राग्नेयौ क्षितिसुतदिने चंद्रपुत्रोभिजिच्च । पितृब्राह्मौ भृगुसुतदिने राक्षसाख्यौ च जीवे भौजंगेशौ सवितृतनये वर्जनीयौ मुहूर्तौ ॥ ५ ॥ पौराणिका रौद्रसिताख्यमैत्राः क्षणाः स्मृताश्चारमठश्चतुर्थः । सवृत्तिवैराजकसंज्ञकौ च गंधर्वनामाभिजिदष्टमः स्यात् ॥ ६ ॥ रोहिणाह्वयबलौ विजयोन्यौ नैर्ऋतः शतमखो वरुणश्च । अंतिमस्तु भगसंज्ञक उक्तो योष्टमः सतु भवेत्कुतुपाख्यः ॥ ७ ॥ रौद्रो गंधर्वनामा द्रविणपरिवृढश्चारणो वायुरग्नी रक्षो धाताथ सौम्यस्तदनु कमलजो वाक्पतिः पौष्णनामा । वैकुंठोन्यः समीरे निर्ऋतिरिति निशाचारिणोऽमी

मुहूर्ताः प्रोक्तास्त्रिःपंचसंख्या मुनिभिरिति पुराणार्थचिंताप्रवीणैः ॥ ८ ॥ ते राजनामा विजयः सिताख्यः सावित्रमैत्रावभिजिद्बलश्च । सर्वार्थसिद्ध्यै गदिता मुहूर्ता मौहूर्तिकैरत्र पुराणविद्भिः ॥ ९ ॥ लल्लः-श्वेतो मैत्रो विराजश्च सावित्रश्चाभिजित्तथा । बलश्च विजयश्चैव मुहूर्ताः कार्यसाधकाः ॥ १० ॥ नारदः-अष्टमो योभिजित्संज्ञः स एव कुतुपः स्मृतः । तस्मिन्काले शुभा यात्रा विना याम्यां बुधैः स्मृता ॥११॥ यात्रा-नृपाभिषेकावुद्वाहोन्यच्च मांगल्यम् । सर्वं शुभदं ज्ञेयं कृतं मुहूर्तेभिजित्संज्ञे ॥ १२ ॥ चंडेश्वरः-अभिजिद्योगे प्राप्ते भगवति मध्यंदिने दिनाधिपतौ । चक्रेण चक्रपाणिः सर्वान्दोषान्निषूदयति ॥ १३ ॥ नारदः-विष्टिव्यतीपातकृतान् दोषानुत्पातखचरभवान् । मध्याह्नकृतो दिनकृत्सर्वानपनीय शुभकृत्स्यात् ॥ १४ ॥ गर्गः-ईषत्संध्यामतिक्रांताः किंचिदुद्भिन्नतारकाः । विजयो नाम योगोयं सर्वकार्यार्थसाधकः ॥ १५ ॥ नक्षत्राणामलाभे तु लग्ने कर्मणि नो विधिः । क्षणे प्रोक्ते विधिस्तत्र मुहूर्तो बलवान् यतः ॥ १६ ॥ श्रीपतिः-यस्मिन् धिष्ण्ये यच्च कर्मोपदिष्टं तद्दैवत्ये तन्मुहूर्तेपि कार्यम् । दिक्शूलाद्यं चिंतनीयं समस्तं तद्वद्दंडः परिघश्च क्रमेण ॥ १७ ॥ मुहूर्तसागरे-नक्षत्रलग्नादि बलं न चेत्स्यात्तदा मुहूर्तं परिकल्पनीयम् । प्रत्यूषकालस्त्वभिजिन्मुहूर्तो गोधूलिकं मंगलकृत्सदैव ॥ १८ ॥ हारीतः-सदा शुभेषु कार्येषु शुभदा मुनिभिः स्मृताः । उषाकालश्च मध्याह्नकालः सायंतनः स्मृतः ॥ १९ ॥ प्रभ्रष्टद्युतितारका स्फुटतटी प्राची भवेन्निर्मला ईषद्रक्तविलोहितांतधवला देवैः सदा वंदिता । नो वारो न तिथिर्न चापि करणं चंद्रं च नापेक्षते हत्वा दोषसहस्रसंकटदिनं ऊषा करात्युन्नतिम् ॥ २० ॥ मध्यस्थं व्योमसंस्थे स्फुरदनलनिभे केशवे चार्कबिंबे छाया साध्वीव कांता प्रचलितपुरुषे यत्र तत्पादलग्ना । तावत्सौरिं न विष्टिं कुजकृतमशुभं नैव ऋक्षं न योगं सन्मानारोग्यसौख्याक्षितिधनयुवतिं तत्र गंता लभेच्च ॥ २१ ॥ यावत्कुंकुमरक्तचंदननिभो नास्तं गतो भास्करो यावच्चोडुगणो नभस्तलगतो नो दृश्यते रश्मिभिः । यावद्गोखुरघातचूर्णितरजो विस्तीर्यते चांबरे तावत्सर्वजनस्य मंगलविधौ गोधूलिकं शस्यते ॥ २२ ॥ स्मृतिसागरे-मुहूर्तात्मा स्थिरः कालः पुराणादौ प्रकीर्तितः । अतो मुहूर्ते कर्तव्यं विवाहाद्यं बुधैः सदा॥२३॥ वाग्भट्टे-मुहूर्तः सूक्ष्मकालः स्याद्गर्गाद्याः कथिताः पुरा । विवाहादि शुभं कार्यं कर्तव्यं शुभहेतुभिः ॥ २४ ॥ अथ भार्गवमुहूर्तोऽन्यप्रकारात् । भृगुरुवाच-नमस्कृत्य प्रवक्ष्यामि देवदेवं जनार्दनम् । अहं वररुचिर्नाम तत्त्वं भार्गवभाषितम् ॥ २५ ॥ यानि वाक्यानि शुक्रेण पृच्छते वृत्रवैरिणे । उक्तानि तानि लिख्यंते ग्रंथादाहृत्य भार्गवात् ॥ २६ ॥ अथ महेन्द्रः सुधर्मायामेकस्मिन्दिने भार्गवमाहूय पप्रच्छ भो भार्गव ! मदीयं वनं वह्निर्दहति इति गिरं देवदूतमुखादाकर्ण्य गुरुमामंत्र्येदमवोचत् । भगवन् गुरो ! त्वया साधुरपि शोधितमुहूर्ते समारोपितं वनं जातवेदसा दह्यत इति । अथैवं पृष्टेन

वाचस्पतिनेदमुक्तम् । ब्रह्मणा तव निर्मितेश्चतुर्दशभुवनात्मको रचनाविशेषोप्युपाङ्गैरा क्रांतस्तत्र किं चित्रमिति एतद्वचनं भार्गवो मदीयं नांगीकुरुते । तत्र विषये दाहक्रियायाः किं निदानं ज्ञायते । अथ भार्गव आह–भगवन् शतक्रतो ! संवत्सरायनर्तुमासपक्षदिवसमुहूर्तनाडिकाभिर्जगतां कार्यारंभे शुभाशुभयोः प्रोक्तः समयः स्फुटतरं किंचित्यतो उत्तरोत्तरं बलवान् भवति । उभयात्मकं फलमपि तत्र तत्राप्युक्तं प्रतिभासते तस्माद्वननिर्माणकार्यारंभे नाडिकानां फलपरिज्ञाने संजाते दहनाक्रियानिमित्तं सुलभमवबुध्यते । इंद्रः पुनरब्रवीत् । तर्हि कवे तद्ब्रूहीति पुनराह । वननिर्माणसमये गुरुणा दत्तं मुहूर्तमभिजिन्नाम तत्साधु तस्य दोषाः सूक्ष्मा अपि न वेद्यंते एतमेतावानेव गुरोः कालो निश्चीयते न मुहूर्तप्रधानं पृथक् । तेन नाडिकायाः कार्यारंभे नाडिकानामपेक्षा कृता सर्वेषु कार्येषु नाडिकैव बलवती । सा नाडिका तु प्रत्येकं ग्रहादिवासरवशात् नानाविधानि शुभाशुभात्मकानि फलानि स्वस्थास्वस्थामारब्धकर्मणः पृथक् पृथक् तनोति तत्र तिथ्यर्क्षमुहूर्तादि प्रधानम् । तेषां तिथ्यर्क्षादीनामानुगुण्ये वा नाडिका स्वफलमेकेन ददाति अतस्तद्वननिर्माणसमये वारोंगारकः ऋक्षं रोहिणी तस्यां चंद्रेणोक्षितं सर्वासु नाडीनां वासरवशात् फलदाता चंद्र एव तस्यावस्थास्त्रिंशत्यः प्रत्येकमवस्थायामेकैकघटिका भवंति । ताश्च जोत्स्ना मैत्री संध्याश्चाभिधीयंते तदा चंद्रमावस्था कृत्तिका नाम तस्याः फलं तु यत्कर्माख्यं तदग्निशस्त्रादिभिरुपहन्यत इति । अतो वनस्यैव तस्य वह्नेर्दाहेन भवितव्यम् तस्मात्तद्दहनमुपजातं इदमेव निदानमिति मम प्रतिभाति । इंद्रः पुनरब्रवीत् । त्वया साधूक्तमेतदेव वचनं तु मम नांगीकुरुते यस्यैतस्य परिज्ञातारो धरातले जना भविष्यंति तथा वचनं मे भवेदिति । भार्गवः पुनरिदमाह । महेंद्र धराजनानां हिताय नाडीतत्त्वं प्रवक्ष्यामि मया च गुरुणा च सह सप्तानां ग्रहाणां तत्तदभिधानानि वासराणि सप्त सन्ति तानि भान्वादीनि गणनीयानि एकैकवारे पुनरुदयमारभ्य पुनरुदयावधि षष्टिनाडिका मिताः स्युः तत्र द्वैविध्यं पूर्वा त्रिंशत्परा त्रिंशदिति । पूर्वत्रिंशतो यदुदितं तदुपरस्यास्त्रिंशतो भवति । ताश्चन्द्रमसोऽवस्थात्मिका नाड्यस्तु विशाखामारभ्य सप्तविंशतिभिर्नक्षत्राणामभिजिज्ज्योत्स्नामैत्रीसंध्यानामभिश्च व्यवहारणीयाः । प्रथमनाडिका विशाखा, द्वितीयनाडिकानुराधेत्यादि । पुनरपराणां त्रिंशन्नाडिकानामेव एवंविधं त्रिंशदवस्थावस्थितश्चंद्रः प्रत्यकं वारे वारे ग्रहाणां नाड्यां नाड्यां पृथक्पृथक्फलं तद्ग्रहेभ्यः कार्याकार्यं स्वयमादाय ददाति तानि फलान्येतानि । अथ भानुवासरे–विशाखायां नाड्यां विवाहादौ कृते शुभं भवति ॥ १ ॥ अनुराधायां लाभार्थमुद्योगे कृते लाभो भवति ॥२॥ ज्येष्ठायां जयार्थमुद्योगे कृते कलहोपहतं भवति ॥ ३ ॥ मूले स्वहितार्थकर्मणि कृते धनं भवति ॥ ४ ॥ पूर्वाषाढायां वाणिज्यकर्मणि कृते धनं भवति ॥ ५ ॥ उत्तराषाढायां दुर्लभवस्तुप्राप्त्यर्थं कर्माणि कृते आमोदो भवति ॥ ६ ॥ श्रवणे स्त्री-

कर्मणि शुभं भवति ॥ ७ ॥ धनिष्ठायां धान्यार्थं कर्मणि कृते अलाभः ॥ ८ ॥ शतभिषजि यात्रायां शुभम् ॥ ९ ॥ पूर्वाभाद्रपदायामभ्यवहारो हितम् ॥ १० ॥ उत्तराभाद्रपदायां शारीरकर्मणि कृते सुखमभिवृद्धिः ॥ ११ ॥ रेवत्यां विजयार्थं कर्मणि कृते शत्रूणां विजयो भवति ॥१२॥ अश्विन्यां पश्वर्थं कर्मणि कृते तेषामभिवृद्धिः॥१३॥ भरण्यां पट्टबंधे शुभम् ॥ १४ ॥ कृत्तिकायां प्रवेशकर्मणि कृते हानिः ॥ १५ ॥ रोहिण्यां पुरग्रामगृहादिकर्मणि कृते शुभम् ॥ १६ ॥ मृगशीर्षे यात्राया हानिः ॥ १७ ॥ आर्द्रायां राजदर्शनार्थं कर्मणि कृते तत्कार्यसिद्धिः ॥ १८ ॥ पुनर्वसौ देवतादिस्थापने शुभम् ॥ १९ ॥ पुष्ये कार्यारंभे सेनामुपयाति ॥ २० ॥ आश्लेषायां व्यवहारे कृते निर्धना गतिर्भवति ॥ २१ ॥ मघायां युद्धकर्मणि कृते परिभूति भवति ॥ २२ ॥ पूर्वाफाल्गुन्यां मैत्रीकर्मकृते शुभम् ॥ २३ ॥ उत्तराफाल्गुन्या रणकर्मणि विजयः ॥ २४ ॥ हस्तेन्योन्यसंभाषणे आमोदः ॥ २५ ॥ चित्रायां विक्रयकर्मणि कृते लाभो भवति ॥ २६ ॥ स्वात्यां संगमकर्मणि कृते संततिसंपत्ती ॥ २७ ॥ जोत्स्नायां शुभकर्मणि कार्यसिद्धिः ॥ २८ ॥ मैत्र्यां यत्किंचित्कर्मणि कृते तद्बहुविघ्नैरुपहन्यते ॥ २९ ॥ संध्यायां स्थावरोपयोगीनि कर्माणि कृतेतिसुखभाग्भवति ॥ ३० ॥ एवं रात्रावपि ज्ञेयम् ॥ अथ सोमवासरे—विशाखायां शुभकर्म कुर्यात् ॥ १ ॥ अनुराधायां यात्रां कुर्यात् सुदूरगोपि सिद्धिमुपयाति ॥२॥ ज्येष्ठायां आत्मजयार्थं कर्म कुर्यात् ॥ ३ ॥ मूले धान्यलाभार्थं कर्म कुर्यात् ॥ ४ ॥ पूर्वाषाढायां स्नानादि शारीरकर्म कुर्यात् हितं भवति ॥ ५ ॥ उत्तराषाढायां यत्किंचित्कर्मोक्तं तत्सफलं भवति ॥ ६ ॥ श्रवणे कृषिकर्म कुर्यात् सिद्ध्यति ॥ ७ ॥ धनिष्ठायां द्यूतकर्मणि कृते तत्फलति ॥ ८ ॥ शतभिषजि राज्यलाभाय कर्म कुर्यात् सिद्ध्यति ॥ ९ ॥ पूर्वाभाद्रपदायां भुक्तिं कुर्यात् ॥१०॥ उत्तराभाद्रपदायां स्त्रीसंगतिं कुर्यात् ॥११॥ रेवत्यां चारुकर्म कुर्यात् तत् सिद्ध्यति ॥ १२ ॥ अश्विन्यां युद्धं कुर्यात् ॥ १३ ॥ भरण्यां दुष्टकर्म कुर्यात् ॥ १४ ॥ कृत्तिकायां जयार्थं कर्मणि कृते जयो भवति ॥ १५ ॥ रोहिण्यां व्याधिचिकित्साकर्म कुर्यात् ॥ १६ ॥ मृगशीर्षे पश्वर्थं कर्म कुर्यात् ॥१७॥ आर्द्रायां जयकर्म कुर्यात् ॥ १८ ॥ पुनर्वसौ प्रवेशकर्म कुर्वीत ॥ १९ ॥ पुष्ये भुक्तं विषमप्यमृतं भवति ॥२०॥ श्लेषायामुत्सवार्थं कर्म कुर्वीत ॥२१॥ मघायां राज्यचिन्तां कुर्वीत॥२२॥पूर्वाफाल्गुन्यां क्रीडाकर्म कुर्वीत ॥२३॥ उत्तराफाल्गुन्यां विवादकर्म कुर्वीत ॥२४॥ हस्ते प्रवेशकर्म कुर्वीत ॥२५॥ चित्रायां सर्वकार्यारंभे सिद्धिः ॥२६॥स्वात्यां वृक्षारोपणे कृते तन्नाशमुपयाति ॥२७॥ ज्योत्स्नायां सेवां कुर्वीत ॥२८॥ मैत्र्यां विद्वेषोच्चाटनादि कर्म कुर्यात् ॥२९॥ संध्यायां शुभकर्म कुर्यात् ॥३०॥ एवं रात्रावपि ज्ञेयम् ॥ अथ भौमवासरे—विशाखायां कर्म कृते मनोदौस्थ्यम्॥१॥अनुराधायां जयार्थं कर्म कृते जयो भवति ॥२॥ ज्येष्ठायां बलसंगमे तत्फलति ॥३॥ मूले बंधनाख्यं कर्म

कुर्वीत ॥४॥ पूर्वाषाढायां उष्ट्रलाभादिकर्म कुर्वीत ॥ ५ ॥ उत्तराषाढायां सत्संगत्यै कर्म कुर्यात् ॥ ६ ॥ श्रवण हयार्थं कर्म कुर्यात् ॥ ७ ॥ धनिष्ठायां गवार्थं कर्म कुर्वीत ॥८॥ शतभिषजि यात्रायां हानिः ॥९॥ पूर्वाभाद्रपदायामुद्वाहार्थं कर्म कृते कन्यालाभो भवति ॥१०॥ उत्तराभाद्रपदायां यत्किंचित्कर्मणि कृते शुभम् ॥ ११ ॥ रेवत्यां पण्यव्यवहारे धान्यलाभः ॥ १२ ॥ अश्विन्यां गमने कृते भीतिः स्यात् ॥ १३ ॥ भरण्यां गमने कृते व्याघ्रचौरादिभीतिः ॥ १४ ॥ कृत्तिकायां यत्किंचित्कर्मणि कृते तदग्निशस्त्रादिभिर्नाशमुपयाति ॥ १५ ॥ रोहिण्यां यत्र कुत्रचित्प्रायो दुर्भिक्षपीडा स्यात् ॥ १६ ॥ मृगशीर्षे वर्षार्थं कर्म कृते वर्षाहानिः ॥ १७ ॥ आर्द्रायां यात्राकर्मणि कृते संगतिनाशः ॥ १८ ॥ पुनर्वसावुपद्रवे तन्निवृत्त्यर्थं कर्म कुर्यात् शुभं भवति ॥ १९ ॥ ॥ पुष्ये यत्र कुत्रचित् स्थितौ वृत्तायां सुवार्ताश्रवणं भवति॥ २०॥ आश्लेषायां चिंताकर्मणि कृते चिन्तावृद्धिः स्यात् ॥ २१ ॥ मघायां युद्धकर्मणि कृते फलहानिः स्यात् ॥ २२ ॥पूर्वाफाल्गुन्यां प्रयत्नं विना अर्थसंभवः ॥२३॥ उत्तराफाल्गुन्यां विजयार्थं कर्म कृते अरिपलायनं स्यात् ॥२४॥ हस्ते यत्किंचित्कर्म कृते संगतिनाशः ॥ २५ ॥ चित्रायां सुखार्थं कर्म कृते अलेपनादेकांतो भवति ॥ २६ ॥ स्वात्यां रतिकर्मणि कृते अप्रीतिर्भवति ॥२७॥ ज्योत्स्नायां यत्किंचित्कर्म कृते सौख्यम् ॥२८॥ मैत्र्यां शुभार्थं कर्मणि कृते मनोदौस्थ्यं न स्यात् ॥ २९ ॥ संध्यायां रतिकर्मणि कृते अप्रीतिर्भवति ॥ ३० ॥ एवं रात्रावपि ज्ञेयम् ॥ अथ बुधवासरे—विशाखायां यत्र कुत्रचित्स्थितौ कृतायां दुर्वार्ताश्रवणं भवति ॥ १ ॥ अनुराधायां सद्व्यवहारकर्मणि कृते कार्यभ्रंशः ॥ २ ॥ ज्येष्ठायां रतिकर्मणि कृते प्रीतिनाशः ॥ ३ ॥ मूले चित्रकर्मणि कृते चातुर्यं स्यात् ॥ ४ ॥ पूर्वाषाढायामुद्योगे कृते निष्फलम् ॥ ५ ॥ उत्तराषाढायां कर्मणि कृते अयत्नाद्यंगपीडा स्यात् ॥ ६ ॥ श्रवणे कर्मणि कृते यथाकथंचित्कलहो भवति ॥ ७ ॥ धनिष्ठायां उपशांतिककर्मणि कृते तद्बादोपशमनं स्यात् ॥ ८ ॥ शतभिषजि कर्म कृते अयत्नेन मानलाभः स्यात् ॥ ९ ॥ पूर्वाभाद्रपदायां युद्धे शत्रुभंगः स्यात् ॥ १० ॥ उत्तराभाद्रपदायां धनार्थं कर्म कृते धनलाभः स्यात् ॥ ११ ॥ रेवत्यां दानकर्मणि कृते तदाधिकं भवति ॥ १२ ॥ अश्विन्यां यदिष्टं करोति तत्फलति ॥ १३ ॥ भरण्यां सेनाकर्मणि कार्यसिद्धिः ॥ १४ ॥ कृत्तिकायां प्रासादकर्मणि कृते तत्सौख्यं भवति ॥ १५ ॥ रोहिण्यां परिणयने कृते कलत्रप्रीतिः स्यात् ॥ १६ ॥ मृगशीर्षे कर्म कृते अयत्नात्प्रासादलाभः ॥ १७ ॥ आर्द्रायां दुष्टनिग्रहकर्म कृते तत्सफलं भवति ॥ १८ ॥ पुनर्वसौ यत्किंचित्कर्म कृते तल्लाभो भवति ॥ १९ ॥ पुष्ये यात्राया दुर्लभवस्तुप्राप्तिर्भवति ॥ २० ॥ आश्लेषायां युद्धकर्मणि कृते अरिविजयो भवति ॥ २१ ॥ मघायां संगमे पुत्रलाभो

भवति ॥ २२ ॥ पूर्वाफाल्गुन्यां राजदर्शने अरिविजयो भवति ॥ २३ ॥ उत्तराफाल्गुन्यां केनापि संभाषणे मैत्री स्यात् ॥ २४ ॥ हस्ते व्यवहारे बलवृद्धिः ॥ २५ ॥ चित्रायां यत्किंचित्कर्म कृते सुखं भवति ॥ २६ ॥ स्वात्यां वाणिज्याल्लाभः ॥ २७ ॥ ज्योत्स्नायां सुहृदागमनादतिप्रीतिः ॥ २८ ॥ मैत्र्यां कर्मणि तत्फलति ॥ २९ ॥ संध्यायां वाहनादिकर्मणि तन्नाशमुपयाति ॥ ३० ॥ एवं रात्रावपि ज्ञेयम् ॥ अथ गुरुवासरे-विशाखायां धनोद्देशकर्म कृते तस्य वृद्धिः ॥ १ ॥ अनुराधायां यत्ने कृते नष्टद्रव्यसिद्धिः स्यात् ॥ २ ॥ ज्येष्ठायामभ्यवहारकर्मणि कृते शरीरपीडा भवति ॥ ३ ॥ मूले कर्मणि कृते केनापि सुगंधवस्त्वानीतं भवति ॥ ४ ॥ पूर्वाषाढायां विद्याकर्म कृते वचःप्रवीणः स्यात् ॥ ५ ॥ उत्तराषाढायां कर्मणि कृते मनोदुःख भवति ॥ ६ ॥ श्रवणे उद्योगे कृते विजयः ॥ ७ ॥ धनिष्ठायां संग्रामादि कृते अरिभंगः ॥ ८ ॥ शतभिषजि वश्यादिकर्मणि तत्प्रीतिः ॥ ९ ॥ पूर्वाभाद्रपदायां पशुलाभार्थे व्यवहारार्थे कर्म कृते तल्लाभः ॥ १० ॥ उत्तराभाद्रपदायां पण्यव्यवहारे कृते धान्यलाभः ॥ ११ ॥ रेवत्यां यात्राकर्म कृते पुनर्गते राजा भवति ॥ १२ ॥ अश्विन्यामुत्सवादि कर्म कृते संतोषः ॥ १३ ॥ भरण्यां चित्रकर्मणि कृते व्याध्युद्भवः ॥ १४ ॥ कृत्तिकायां कर्म कृते सुभगत्वम् ॥ १५ ॥ रोहिण्यां गमने कार्यनाशः ॥ १६ ॥ मृगशीर्षे युद्धे कृते यथाकथंचिच्छस्त्रहतः स्यात ॥ १७ ॥ आर्द्रायां यत्किंचित्कर्म कृते प्रयोजनसिद्धिः ॥ १८ ॥ पुनर्वसौ युद्धे कृते बलक्षयः ॥ १९ ॥ पुष्ये यात्राकर्मणि सरथेन विनाशः ॥ २० ॥ आश्लेषायां यात्राकर्म कृते श्रियः सिद्धिः ॥ २१ ॥ मघायां शौर्यार्थं कर्म कृते बलं भवति ॥ २२ ॥ पूर्वाफाल्गुन्यां कर्मणि कृते कुत्रापि बंधुजनमृतिः ॥ २३ ॥ उत्तराफाल्गुन्यां कार्यारंभे कृते धैर्याभिधेयः ॥ २४ ॥ हस्ते स्नेहे कृते विद्वेषः ॥ २५ ॥ चित्रायां कर्मणि कृते प्रीतिर्भवति ॥ २६ ॥ स्वात्यां विवादकर्म कृते जयः ॥ २७ ॥ ज्योत्स्नायां यात्राकृते मृतिः ॥ २८ ॥ मैत्र्यां भयागमनकर्म कृते तस्य भंगो भवति ॥ २९ ॥ संध्यायां यात्रार्थं कर्म कृते तस्य सिद्धिर्भवति ॥ ३० ॥ एवं रात्रावपि ज्ञेयम् ॥ अथ मदीयवासरे-विशाखायां कर्मणि कृते वनिताजनादतिसौख्यं भवति ॥ १ ॥ अनुराधायां द्वेषार्थं कर्म कृते सिद्धिर्भवति ॥ २ ॥ ज्येष्ठायां कर्म कृते अयत्नेनार्थप्राप्तिर्भवति ॥ ३ ॥ मूले कर्म कृते अकस्मात्सुहृदागमः ॥ ४ ॥ पूर्वाषाढायां वारुणसूक्तकर्म कृते उग्रवृष्टिर्भवति ॥ ५ ॥ उत्तराषाढायां सस्यार्थं कर्म कृते तस्य वृद्धिः ॥ ६ ॥ श्रवणे कर्म कृते जातरोगस्य मृतिः ॥ ७ ॥ धनिष्ठायां सेनार्थं कर्म कृते सेनापतिः स्यात् ॥ ८ ॥ शतभिषजि उद्योगे कृते तस्य नाशः स्यात् ॥ ९ ॥ पूर्वाभाद्रपदायां वार्तामुखेन कार्यलाभो भवति ॥ १० ॥ उत्तराभाद्रपदायां कलहे कृते तदुपशमो भवति ॥ ११ ॥ रेवत्यामरीतिकर्म कृते तत्सिद्धिः ॥ १२ ॥ आश्विन्यां विद्यारंभे तल्लाभः ॥ १३ ॥ भरण्यां चिकित्साकर्मणि

तत्साफल्यम् ॥ १४ ॥ कृत्तिकायां कर्मण्यजातरोगस्य मृतिः ॥ १५ ॥ रोहिण्यां जयार्थं कर्म कृते शत्रुभ्यो रत्नानि लाभः ॥ १६ ॥ मृगशीर्षे कर्म कृते फलनाशः ॥ १७ ॥ आर्द्रायां धनुर्विद्याकर्म कृते सिद्धिः ॥ १८ ॥ पुनर्वसौ भोजनादि कर्म कृते सौख्यहानिः ॥ १९ ॥ पुष्ये कर्म कृते वन्ध्वाहतिर्भवति ॥ २० ॥ आश्लेषायां वाहनार्थं कर्म कृते तस्य लाभः ॥ २१ ॥ मघायां संभाषणे प्रमोदो भवति ॥ २२ ॥ पूर्वाफाल्गुन्यां यत्किंचित्कर्म कृते उद्योगपरंपरा स्यात् ॥ २३ ॥ उत्तराफाल्गुन्यां यात्रासंगमने कृते तस्यावमोदः ॥ २४ ॥ हस्ते कर्मणि कृतेऽर्थनाशः ॥ २५ ॥ चित्रायां कर्मणि कृते दुःखं भवति ॥ २६ ॥ स्वात्यां वैषम्योपशीलता ॥ २७ ॥ ज्योत्स्नायां सुखार्थं कर्म कृते सुखं स्यात् ॥ २८ ॥ मैत्र्यां शुभार्थं कर्म कुर्यात् ॥ २९ ॥ संध्यायां कर्मणि कृते प्रारब्धहानिः ॥ ३० ॥ एवं रात्रावपि ज्ञेयम् ॥ अथ शनिवासरे–विशाखायां कलहादि कर्म कुर्यात् ॥ १ ॥ अनुराधायां राजदर्शनार्थं कर्म कृते सौख्यप्राप्तिः ॥ २ ॥ ज्येष्ठायां कर्म कृते रिपुवृद्धिः ॥ ३ ॥ मूले मित्रसंभाषणार्थं कर्म कुयात् ॥ ४ ॥ पूर्वाषाढायां विग्रहकर्मणि विजयः स्यात् ॥ ५ ॥ उत्तराषाढायां तुरंगमादिलाभार्थं कर्म कुर्यात् ॥ ६ ॥ श्रवणे गमनकर्मणि प्रमोदनाशः ॥ ७ ॥ धनिष्ठायां प्रशंसाकर्मणि तत्सिद्धिः ॥ ८ ॥ शतभिषजि यत्किंचित् कर्म कृते आप्रयोषक्रमः ॥ ९ ॥ पूर्वाभाद्रपदायां अनर्थोपशमनं कर्म कुर्यात् ॥ १० ॥ उत्तराभाद्रपदायां स्त्रीसंभोगकर्म कुर्यात् ॥ ११ ॥ रेवत्यां यत्किंचित्कर्म कृते पुत्रहानिः ॥ १२ ॥ अश्विन्यां बंधुविद्वेषणे तद्धिफलम् ॥ १३ ॥ भरण्यां क्रियासंस्तंभनं कर्म कुर्यात् ॥ १४ ॥ कृत्तिकायां प्रवृत्तिकर्म कुर्यात् ॥ १५ ॥ रोहिण्यां धातुद्रव्यागमनार्थं कर्म कुर्यात् ॥ १६ ॥ मृगशीर्षे यात्राकर्मणि कृते शुभम् ॥ १७ ॥ आर्द्रायां संस्थितिकर्मणि हानिः ॥ १८ ॥ पुनर्वसौ कर्म कृते श्रमबाहुल्यम् ॥ १९ ॥ पुष्ये नानाविधधान्यलाभार्थं कर्म कुर्यात् ॥ २० ॥ आश्लेषायां धनवृद्धिकर्म कृते तत्सिद्धिः ॥ २१ ॥ मघायां वनितागमनार्थं कर्म कुर्यात् ॥ २२ ॥ पूर्वाफाल्गुन्यां निःस्वता ॥ २३ ॥ उत्तराफाल्गुन्यां वीरकर्मसिद्धिः ॥ २४ ॥ हस्ते वपुःसौख्यम् ॥ २५ ॥ चित्रायां कर्म कृते चिन्ताश्रयता ॥ २६ ॥ स्वात्यां रिपुसंधानसिद्धिः ॥ २७ ॥ ज्योत्स्नायां कर्म कृते मृत्युः ॥ २८ ॥ मैत्र्यां कर्म कृते क्रोधोपशमः ॥ २९ ॥ संध्यायां तडागादिकार्ये सिद्धिः ॥ ३० ॥ एवं रात्रावपि ज्ञेयम् ॥ इति भार्गवमुहूर्ताः । अथ बृहस्पतिमुहूर्ताः । बृहस्पतिः–अथातः संप्रवक्ष्यामि लघुहोरा यथाविधि । अहोरात्रेषु नाडीषु प्रत्येके नामसंज्ञिके ॥ १ ॥ तत्र कर्मविधिः प्रोक्तस्तत्काललक्षणं यथा । निशि भागक्रिया संज्ञा षष्टिनाडी यथाक्रमम् ॥ २ ॥ उदयात्प्रथमा नाडी सृष्टिनाडीति संज्ञिता । सृष्टिकार्यं तदा कुर्यात् प्राच्यां कणदर्शनम् ॥ ३ ॥ कलहश्चौरनाशो वा पापदृष्टिः शुभैः शुभम् ॥ ४ ॥ द्वितीय

सिद्धिनाम्नी स्यात्सिद्धिकार्याणि कारयेत् । दक्षिणां दिशमाश्रित्य शूद्रः स्त्री पुरुषस्तथा ॥ ५ ॥ लग्नद्रेष्काणरूपो वा विग्रहो वा विनाशनः । कुंभद्वीपादियानो वा पापग्रहनिरीक्षणे ॥ ६ ॥ तृतीया नाम नाशाख्या नाशकार्याणि कारयेत् । महर्षिर्दृश्यते कोशे कोशकार्याणि कारयेत् ॥ ७ ॥ वल्लभैर्वा तदा पीडा चिंता तापोथ वा भवेत् । पापग्रहदशायुक्ते शुभदृष्टेथ शोभनम् ॥ ८ ॥ चतुर्थी मित्रनाम्नी स्यान्मित्रकार्याणि कारयेत् । वारुणे मृगभावश्च यानशब्दोथ वा पशोः ॥ ९ ॥ मित्रसंपच्छुभैर्दृष्टे पापदृष्टे तु तन्मृतिः । पंचमी जीवनाम्नी स्यात्स्थापनादीनि कारयेत् ॥ १० ॥ आग्नेय्यां दृश्यते काष्ठं विभ्रमंत्यः सकोपनाः । फलमूलागतिर्वापि कलहो वा सरोगिणाम् ॥ ११ ॥ व्यवहारगतो वापि लग्न द्रेष्काणदर्शनात् । षष्ठश्च निग्रहो नाम व्यवहारादिकर्मसु ॥ १२ ॥ वायव्यां दिशमाश्रित्य घटिकापि न दृश्यते । सप्तमी घटिकानाम्नी कीटा स्यात्कारयेत्कृषिम् ॥ १३ ॥ कृषिमूलादि दृश्येत कर्षकादीनि वा पुनः । उत्तरां दिशमाश्रित्य धान्यभुक्तिस्तु दृश्यते ॥ १४ ॥ अष्टम्यां घटिकायां च यक्षा नाम्नीति कीर्तिता । उच्चाटनक्रियां कुर्याच्छत्रुनाशाय भूमिपः ॥ १५ ॥ कलहो बंधुभिः सार्धं चौरवैरिजतो भयम् । नैर्ऋत्यां दिशमाश्रित्य दृश्यते स्त्री सपुत्रिका ॥ १६ ॥ नवमी रिक्तिका नाम्नी नव कार्याणि कारयेत् । घातोत्पातानि शाठ्यानि विषशस्त्रादिकानि च ॥ १७ ॥ भेदाभेदविमोहानि सिद्ध्यंत्याशुभदृष्टितः । दशमी व्याधिनाशा स्याच्छत्रुनाशाय कीर्तिता ॥ १८ ॥ ऐशान्यां मौलिशब्दो वा निमित्तांतरमेव च । एकादशी वसुनामा पश्वादिग्रहणं शुभम् ॥ १९ ॥ वायव्यां दिशमाश्रित्य भारभृद्दृश्यते नरः । द्वादशी विप्रनाम्नी स्याद्विद्यारंभादि कारयेत् ॥ २० ॥ वारुण्यां दिशमाश्रित्य मौलिर्वा पिंगलारवः । त्रयोदशी शूद्रनाम्नी शूद्रकार्याणि कारयेत् ॥ २१ ॥ दक्षिणां दिशमाश्रित्य फलभृद्दृश्यते नरः । उपसंवेशनादीनां रागानाम्नी चतुर्दशी ॥ २२ ॥ सौम्यां च दिशमाश्रित्य हली वा दृश्यते नरः । पंचदश्यभिजिन्नाम्नी सर्वाण्यस्यां तु कारयेत् ॥ २३ ॥ आग्नेय्यां दिशमाश्रित्य दृश्यते पुरुषारवः । षोडशी घटिकानाम्नी क्रीडाकार्याणि कारयेत् ॥ २४ ॥ सौम्यां दिशं समाश्रित्य भेरीशब्दः प्रदृश्यते । सप्तदश्यंगनानाम्नी कारयेदंगनाकृतम् ॥ २५ ॥ वारुणीं दिशमाश्रित्य मैथुनं तत्र दृश्यते । अष्टादशी तु हीना स्यात् हीनकार्याणि कारयेत् ॥ २६ ॥ वायव्यां दिशमाश्रित्य तांबूली दृश्यते नरः । एकोनविंशा दर्शं स्याद्वाहनादीनि कारयेत् ॥ २७ ॥ क्षिप्रकार्याणि कुर्वीत सौम्यायां भारधृक्पुमान् । विंशतिर्धान्यनाम्नी स्याद्धान्यसंग्रहमाचरेत् ॥ २८ ॥ पूर्वां दिशं समाश्रित्य कुक्कुटश्चाथ शब्दयेत् । जीवनी चैकविंशा स्यात्तत्क्षेत्रं साधयेन्नरः ॥ २९ ॥ तत्र भूमिप्रतिष्ठा स्यात्तद्रक्षा पूर्णगोचरे । ऐशान्यां दिशमाश्रित्य काकः स्यात्स्वरदस्तथा ॥ ३० ॥ द्वाविंशद्रौद्रनाम्नी स्याद्विशेषोच्चाटनक्रिया । आग्नेयां दिशमाश्रित्य अन्नधृक् दृश्यते

नर ॥ ३१ ॥ योगानाम्नी त्रयोविंशद्योगकार्याणि कारयेत् । नैर्ऋत्यां दिशमाश्रित्य पितृकार्यं तु कारयेत् ॥ ३२ ॥ चतुर्विंशतिनाड्यां तु गजाश्वादिप्रकर्मणि । आरोहणानि कुर्वीत वायव्यां गमनं शुभम् ॥ ३३ ॥ पंचविंशद्वुषानाम्नी प्रातर्याना शुभ भवेत् । नैर्ऋत्यां दिशमाश्रित्य चक्रधारणको नरः ॥ ३४ ॥ षड्विंशत्पुष्पनाम्नी स्यात्पुष्पगंधानुसेवनम् । सौम्यां दिशं समाश्रित्य गंधार्थं श्रूयते भृशम् ॥ ३५ ॥ सप्तविंशत्क्षपानाम्नी ऐशान्यां भाण्डधारणम् । तत्काले नाशकार्याणि कारयेत्तद्वि चक्षणः ॥ ३५ ॥ अष्टाविंशन्मंत्रनाम्नी मंत्रादेः साधनक्रियाम् । नैर्ऋतिं दिशमाश्रित्य श्रूयते वृषभस्वरः ॥ ३६ ॥ एकोनत्रिंशद्या नाडी सा स्याद्देवर्षिणी मिधा। देवकार्याणि सिद्ध्यंति ऐशान्यां गमने शुभाः ॥ ३७ ॥ त्रिंशद्या चारुनाम्नी स्याच्चा रुकर्मणि साधनम् । वारुणीं दिशमाश्रित्य जलकर्म प्रसिद्ध्यति ॥ ३८ ॥ एकत्रिं शद्भगानाम्नी तोयकार्याणि कारयेत् । ऐंद्रे तु पक्षिशब्दस्तु दृश्यते श्रूयतेपि वा ॥ ३९ ॥ द्वात्रिंद्भ्रातृकानाम्नी पुण्यग्रहणकर्मकृत् । सौम्यास्यां विद्यते वार्ता निग्रहे मरणस्य वा ॥ ४० ॥ त्रयस्त्रिंशच्चरमा स्यात्क्रयविक्रयकारणम् । नैर्ऋतिं दिशमा श्रित्य चाक्रोशं श्रूयते भृशम् ॥ ४१ ॥ चतुस्त्रिंशत्पूर्णनाम्नी सर्वकार्यं तु कारयेत् । याम्यां तु दिशमाश्रित्य पक्षिक्रोशं च श्रूयते ॥ ४२ ॥ पंचत्रिंशज्जितानाम्नी विद्या कर्म च कारयेत् । ऐंद्र्यां तु विद्यते वार्ता गौर्ज्याक्रोशस्य धारणम् ॥ ४३ ॥ षट्त्रिंशत केतुनामाख्या मंगलानि च कारयेत् । नैर्ऋत्यां दिशमाश्रित्य दारुधारः प्रदृश्यते ॥ ४४ ॥ सप्तत्रिंशद्विधानाम्नी विभागास्तत्र कारयेत् । दिश्यैशान्यां तथाक्रोशं तत्कालं भेदकारणम् ॥ ४५ ॥ अष्टत्रिंशत्परानाम्नी मैथुनानि च कारयेत् । प्रतीच्यां दिशमाश्रित्य पुरुषो गर्जितः स्वयम् ॥ ४६ ॥ ऊनचत्वारिंशाब्जनाम्नी पूज नानि च कारयेत् । याम्यां दिशं समाश्रित्य वश्यवार्ता निदृश्यते ॥ ४७ ॥ चत्वारिंशद्धयोनाम्नी भरणानि च कारयेत् । वारुण्यां विद्यते वार्ता कंठश ब्दस्य धारणम् । एकचत्वारिंशच्छब्दनाम्नी पूजनानि च कारयेत् ॥ ४८ ॥ पूर्वां दिशं समाश्रित्य चाक्रोशं विद्यते भृशम् । द्विचत्वारिंशज्जयानाम्नी कर्षकाणां हिता तु वै ॥ ४९ ॥ सौम्यां दिशं समाश्रित्य पुरुषो प्रज्ञधारणम् । त्रिचत्वारिंशाद्धुतानाम्नी पुत्रोत्पादं तु कारयेत् ॥ ५० ॥ ऐशान्यां दिशमाश्रित्य कांतशब्दस्य कारणम् । चत्वारिंशच्छक्रनाम्नी ज्ञानकार्यं तु कारयेत् ॥ ५१ ॥ ऐशान्यां जम्बुकाराश्वानं वा गर्जितं नरम् । पंचचत्वारिंशतिर्या शिवाख्या शिवकर्माणि ॥ ५२ ॥ प्रकुर्वंति प्रसिद्ध्यंति न सिद्ध्यंति कृषिक्रियाः । दारुनाम्नी षट्चत्वारिंशतिः काष्ठ कार्यकराणि च ॥ ५३ ॥ गृहारंभादिकं कार्यं संधिकर्म च कारयेत् । सप्तचत्वा रिंशतिस्त्रयोनाम्नी ध्यानादि कारयेन्नरः ॥ ५४ ॥ ऐशान्यां दिशमाश्रित्य सद्भावा क्रोशधारणम् । अष्टचत्वारिंशच्चक्राख्या निद्रापातानि कारयेत् ॥ ५५ ॥ वारुण्

दिशमाश्रित्य वायुशब्दस्य विद्यते । एकोनपंचाशच्छत्राख्या छत्रकर्माणि कारयेत् ॥ ५६ ॥ पूर्वां दिशं समाश्रित्य गोशब्दं विद्यते यदा । पंचाशत्पत्रनामाख्या संग्रहाणि च कारयेत् ॥ ५७ ॥ प्राचीं तु दिशमाश्रित्य सूरकध्वनिरेव च । एकपंचाशत्क्रतुर्नाम्नी कन्यावस्त्रादि कारयेत् ॥ ५८ ॥ पूर्वां दिशं तथाक्रोशं पुरुषस्य प्रदृश्यते । द्विपचाशद् घटीज्ञाना अक्षराणि च कारयेत ॥ ५९ ॥ वारुण्यां दिशमाश्रित्य वह्निशब्दस्य धारणम् । त्रिपंचाशत्कृषीनाम्नी हलादिग्रहणं शुभम् ॥ ६० ॥ दक्षिणां दिशमाश्रित्य गंधर्वः श्रूयते भृशम् । चतुःपंचाशद्धननामाख्या अर्थसंग्रहणे हिता ॥ ६१ ॥ पूर्वां दिशं समाश्रित्य श्वाघोषं कारयेत्ततः । पंचपंचाशद्भुताख्याप्रयत्नादीनि कारयेत् ॥ ६२ ॥ आमिषं दृश्यते याम्यमश्वशब्दस्य धारणम् । षट्पंचाशद्द्विजानाम्नी शांतिकर्माणि कारयेत् ॥ ६३ ॥ विवाहस्येश्वरं विद्यान्नैर्ऋत्यां ब्राह्मणस्य च । सप्तपंचाशत्सावित्री स्नानकार्यं तु कारयेत् ॥ ६४ ॥ वारुण्यां दृश्यते विद्वान् ब्राह्मणं शिवसंयुतः । अष्टपंचाशत्स्थिराख्या च सर्वाचारक्रिया भवेत् ॥ ६५ ॥ सौम्यां च दिशमाश्रित्य जनशब्दं च श्रूयते । एकोनषष्टिः सर्वनामानैककर्माणि कारयेत् ॥ ६६ ॥ याम्यायां विद्यते वार्ता गजानां भूषणस्य च । षष्टिर्विष्णोश्च नामाख्या वृष्ट्यादि सहसंयुता ॥ ६७ ॥ पूर्वां तु दिशमाश्रित्य अरिशब्दस्य धारणम् । एवं संज्ञानि कर्माणि तत्कर्माण्याचरेद्बुधः ॥ ६८ ॥ अष्टावशादिना भेदे राशिभागकलादयः । सर्वेष्वत्र मुहूर्तेषु लक्षणान्यत्र मे शृणु ॥ ६९ ॥ मुहूर्तो नित्ययोगस्य संख्यां कृत्वा यथाविधाम् । संयोज्याधोर्ध्वतः स्थानचतुष्केषु क्रमादिमान् ॥ ७० ॥ अर्कादिशाकलीपंक्तिनत्रांश्च पृथक् पृथक् । सप्तभक्ते क्रमात्सर्वा अधोर्ध्वं नावशिष्यते । मुष्टियुद्धं कुनश्चैव दशनोभिर्नृपाद्भयम् ॥ ७१ ॥ स वासिष्ठेन चैते स्युः यत्रैवं तत्रजं भवेत् । मुहूर्तकर्मते स्युर्बृत्रहन्सर्वशोभनम् ॥ ७२ ॥ इति बृहस्पतिमुहूर्ताः । अथ शिवामुहूर्ताः । त्रिपुरहरमुहूर्तं केन दृष्टं श्रुतं वा सकलमपिह दृष्टं शंभुना भूतहेतोः । यदि शुभमशुभं वा यादृशं तादृशं वा तदिह अपि नरेंद्रैः सर्वदा चिंतनीयम् ॥ १ ॥ शिवालिखितमित्येतत्सर्वं ज्ञात्वा शुभाशुभम् । तस्य संदर्शनादेव ज्ञायते च शुभाशुभम् ॥ २ ॥ न तिथिर्न च नक्षत्रं न योगः करणं तथा । न शूलं योगिनी राशिर्न च होरा तमोगुणाः ॥ ३ ॥ व्यतीपाते च संक्रान्तौ भद्रायामशुभे दिने । शिवालिखितमालोक्य सर्वविघ्नोपशांतये ॥ ४ ॥ तत्रादौ कथयिष्यामि मुहूर्तानि च षोडश । गुणत्रयप्रयोगेन चालनीयान्यहर्निशम् ॥ ५ ॥ रौद्रं श्वेतं तथा मैत्र्यं चार्वटं च चतुर्थकम् । पंचमं जयदेवं च षष्ठं वैरोचनं तथा ॥ ६ ॥ तुर्यादिकं सप्तमं च तथाष्टमभिजित् स्मृतम् । रावणं नवमं प्रोक्तं दशमं वालवं तथा ॥ ७ ॥ बिभीषणं रुद्रसंज्ञं द्वादशं वसुनंदनम् । याम्यं त्रयोदशं ज्ञेयं सौम्यं ज्ञेयं चतुर्दशम् ॥ ८ ॥ तिथिसंमितकं ज्ञेयं भार्गवं सविता तथा । रौद्रे रौद्रकरं कार्यं श्वेते कुंजरबंधनम् ॥ ९ ॥

स्नानदानादिकं मैत्रे चार्वटे स्तंभनं भवेत् । जयदेवाख्ये मुहूर्तेषु सर्वार्थं कारयेद्बुधः ॥ १० ॥ अभिजिद्दै मुहूर्तेषु शस्त्राद्यं साधयेद्बुधः । अभिजिद्दै मुहूर्तेषु ग्रामवेशोपि कारयेत् ॥ ११ ॥ वैरोचने सदा राज्याभिषेको शुभदः स्मृतः । रावणं साधयेद्वैरं युद्धः कार्यं च बाल्वे ॥ १२ ॥ बिभीषणे शुभं कार्यं नंदने यंत्रचालनम् । याम्योद्भवे मानसकर्म यच्च सौम्ये सभायामुपवेशनं च । स्त्रीसंगमं भार्गवके मुहूर्ते सावित्रिनाम्नी प्रपठेत् सुविद्याम् ॥ १३ ॥ उदयो रौद्रमादित्ये मैत्रं सोमे मुहूर्तकम् । जयदेवं भौमवारेण तुरंदेवं बुधे तथा ॥ १४ ॥ रावणं गुरुवारेण विभीषणं चैव भार्गवे । शनौ याम्यं मुहूर्तं च घटिकाद्वयसंमितम् ॥ १५ ॥ गुरुसोमदिने सत्वं रजश्चांगारके भृगौ । रवौ मंदे बुधे चैव तमोनाडीचतुष्टयम् ॥ १६ ॥ शून्यं नभः खादिभिरेव वर्णो निघ्ना धनुर्युग्मगणाधिपाद्यैः । श्रीविघ्ननामामृतसत्वसिद्धिर्मृत्युं तथा पादयमादिवर्णैः ॥ १७ ॥ अमृता ऊर्ध्वरेखैका कालरेखात्रयं भवेत् । विघ्नमावर्तकस्तत्र शून्यं चैव यथाक्रमम् ॥ १८ ॥ शून्ये नैव भवेत्कार्यं विघ्नमावर्तके भवेत् । कालवेला ध्रुवं मृत्युः सर्वसिद्धिस्तथामृते ॥ १९ ॥ धनुःकर्कटमीनानां घातः सत्वो विनिर्दिशेत् । तुलालिवृषमेषाणां घातो रजसि निश्चितम् ॥ २० ॥ कन्यामिथुनसिंहानां कुंभस्य मकरस्य च । घातं तामसवेलास्तु विपरीतं शुभावहम् ॥ २१ ॥ गौरे तु म्रियते सत्वं शामवर्णे रजः स्मृतम् । तामसं कृष्णवर्णस्य इति ज्ञेयं सदा बुधैः ॥ २२ ॥ तिथिप्रहरसंयुक्तं तारकावारमिश्रितम् । वह्निभिश्च हरेद्भागं शेषं सत्वं रजस्तमः ॥ २३ ॥ माघफाल्गुनचैत्रेषु वैशाखे श्रावणे तथा । नभस्ये मासि वाराणां मुहूर्तान्युच्यते मया ॥ २४ ॥

रविदिवा ।

रवौनभः केशवविघ्नराजोगोविंदनामानिनभः खगामी ।

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| रा | स्ने | मै | चा | ज | व | तु | अ | रा | वा | वि | नं | य | सौ | भा | सा |
| त | त | स | स | र | र | त | त | स | स | र | र | त | त | स | स |
| ० | ८ | ८ | ८ | ६ | ६ | ६ | ८ | ८ | ८ | ८ | ६ | ६ | ६ | ६ | ६ |

रविरात्रौ ।

रात्रौनृसिंहोयुगलंनभौतौलक्ष्मीशलंबोदररामसंज्ञाः ।

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| स्वे | मै | चा | ज | वै | तु | अ | रा | वा | वि | नं | या | सा | भा | सा | रौ |
| र | र | त | त | स | स | र | र | त | त | स | स | [illegible] | र | त | त |
| ८ | ८ | ८ | ६ | ६ | ० | ० | ८ | ८ | ८ | ६ | ६ | ६ | ६ | ८ | ८ |

चंद्रदिवा ।

सोमेहरिर्विघ्नपतिः सुरेशःशून्यं च गौरीसुतविष्णुसंज्ञौ ।

| मै | चा | ज | वै | तु | अ | रा | वा | वि | नं | या | मौ | भ | सा | री | स्वे |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| स | स | र | र | त | त | स | स | र | र | त | त | स | स | र | र |
| ८ | ८ | ६ | ६ | ६ | ६ | ८ | ८ | ८ | ० | ६ | ६ | ६ | ० | ६ | ८ |

चंद्ररात्रौ ।

पदंनिशायांखखविष्णुशून्ययुग्मंचनारायणविघ्ननाथौ ।

| चा | ज | वै | तु | अ | रा | वा | वि | नं | या | सौ | भ | सा | री | स्वे | म |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| त | त | स | स | र | र | त | त | स | स | र | र | त | त | स | स |
| 👣 | ० | ० | ८ | ८ | ० | ६ | ६ | ८ | ८ | ८ | ० | ६ | ६ | ६ | ६ |

भौमदिवा ।

भौमेयमोमारमनोथयुग्मंहरिश्चशोपिश्चगजानास्व ।

| ज | वे | तु | अ | रा | वा | वि | न | या | सौ | भा | सा | री | स्वे | मे | च |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| र | र | त | त | स | स | र | र | त | त | स | स | र | र | त | त |
| 👣 | 👣 | 👣 | ८ | ८ | ८ | ६ | ६ | ६ | ० | ८ | ८ | ६ | ६ | ६ | ० |

भौमरात्रौ ।

नक्तंचयुग्मंद्विपदोसुकुंदोपादत्रयंश्रीपातिचित्तसिद्धिः ।

| वै | तु | अ | रा | वा | वि | नं | या | सौ | भा | सा | री | स्वे | मै | चा | ज |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| स | स | र | र | त | त | स | स | र | र | त | त | स | स | र | र |
| ६ | ० | 👣 | 👣 | ८ | ८ | ८ | 👣 | 👣 | 👣 | ८ | ८ | ८ | ० | ० | ८ |

बुधदिवा ।

बुधेधनुःकृष्णयमौ च शौरिःसिद्धि र्धनुसौरियमौचभूपा ।

| तु | अ | रा | वा | वि | नं | या | मौ | भा | सा | री | स्वे | मै | चा | ज | वै |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| त | त | स | स | र | र | त | त | स | स | र | र | त | त | स | स |
| ६ | ० | ८ | ८ | 👣 | 👣 | 👣 | 👣 | 👣 | 👣 | ६ | ० | 👣 | 👣 | 👣 | 👣 |

बुधरात्रौ ।

रात्रौसुवर्णध्वजएवयुग्मंनभोथदामोदरकुंजराख्यौ ।

| अ | रा | वा | वि | नं | या | सौ | भा | सा | री | स्वे | मै | चा | ज | वै | त |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| र | र | त | त | स | स | र | र | त | त | स | स | र | र | त | त |
| ८ | ८ | ८ | ८ | ८ | ६ | ८ | ८ | ८ | ८ | ८ | ८ | ६ | ६ | ६ | ० |

गुरुदिवा ।

गुरौगोपिनाथस्तथाविघ्ननाथोनभःकेशवः कुंजराख्यस्तथैव ।

| रा | वा | वि | नं | या | सौ | भा | सा | री | स्वे | मै | चा | ज | वै | तु | अ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| स | स | र | र | त | त | स | स | र | र | त | त | स | स | र | र |
| ८ | ८ | ८ | ८ | ६ | ६ | ६ | ० | ० | ८ | ८ | ८ | ६ | ६ | ६ | ० |

गुरुरात्रौ ।

निशायांपदंनंदनःसूर्यसूनुर्नभोमाधवःस्वायमेकेहारश्च १ ।

| वा | वि | न | या | सौ | भा | सा | री | स्वे | मै | चा | ज | वै | तु | अ | रा |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| त | त | स | स | र | र | त | त | स | स | र | र | त | त | स | स |
| 👣 | ८ | ८ | ८ | ८ | 👣 | 👣 | 👣 | 👣 | ० | ८ | ८ | ८ | ६ | ८ | ८ |

चंद्ररात्रौ ।

पदंनिशायांयुगखंमृगांगर्विनाय गो विष्णुरभश्चविष्णुः ।

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| घा | ज | वै | तु | अ | रा | बा | वि | सु | या | सा | भा | सा | रो | स्वे | म |
| त | त | स | स | र | र | त | त | स | स | र | र | त | त | स | स |
| 👣 | ६ | ० | ० | ८ | ८ | ८ | ६ | ० | 👣 | 👣 | ८ | ८ | ० | ८ | 👣 |

भौमदिवा ।

भौमेमहेभास्यनभोथ विष्णुःनभांगश्रीगोपतिरस्वंगणेशः ।

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ज | वै | तु | अ | रा | बा | वि | सु | य | सौ | भा | सा | रो | स्वे | म | चा |
| र | र | त | त | स | स | र | र | त | त | स | स | र | र | त | त |
| ६ | ६ | ६ | ० | ० | ८ | ८ | ० | ० | ८ | ८ | ८ | ६ | ६ | ६ | ० |

भौमरात्रौ ।

नक्तंनरेंद्रस्यस्वमुच्यतेचयुगंचशून्यंनृहरिःस्वयोगः ।

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| वै | तु | अ | रा | बा | वि | सु | या | सा | भा | सा | रो | स्वे | मे | चा | ज |
| स | स | र | र | त | त | स | स | र | र | त | त | स | स | र | र |
| ६ | ६ | ६ | ० | ० | ८ | ८ | ८ | ६ | ० | ० | ८ | ८ | ६ | ६ | ० |

बुधदिवा ।

बुधेधनुः श्रीपतिपादयुग्मंनारायणस्यांगणनाथसिद्धिः ।

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| तु | अ | रा | बा | वि | सु | या | सा | भा | सा | रो | स्वे | म | चा | ज | वै |
| त | त | स | स | र | र | त | त | स | स | र | र | त | त | स | स |
| ६ | ० | ६ | ८ | ८ | 👣 | 👣 | ८ | ८ | ८ | ८ | ६ | ६ | ६ | ० | ८ |

बुधरात्रौ ।

रात्रौबुधेकालोहरिशून्यकालोगोविंदगौरीसुतशून्यसिद्धिः ।

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| अ | रा | बा | वि | सु | या | सौ | भा | सा | रो | स्वे | म | चा | ज | वै | तु |
| र | र | त | त | स | स | र | र | त | त | स | स | र | र | त | त |
| 👣 | 👣 | ८ | ८ | ० | 👣 | 👣 | ८ | ८ | ८ | ६ | ६ | ६ | ० | ० | ८ |

गुरुदिवा ।

गुरौहरिःशून्ययुगंसुरेशःश्रीविघ्नराजोगणनाथपाश्रीः ।

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| रा | बा | वि | सु | या | सौ | भा | सा | रो | स्वे | म | चा | ज | वै | तु | अ |
| स | स | र | र | त | त | स | स | र | र | त | त | स | स | र | र |
| ८ | ८ | ० | ६ | ० | ८ | ८ | ८ | ८ | ६ | ६ | ६ | ० | ० | ० | ८ |

गुरुरात्रौ ।

निश्यह्निदैत्याश्विचकार्मुकंचपादौपुराणांखयुगेपुनः श्रीः ।

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| बा | वि | सु | या | सौ | भा | सौ | रो | स्वे | मे | चा | ज | वै | तु | अ | रा |
| त | त | स | स | र | र | त | त | स | स | र | र | त | त | स | स |
| 👣 | ८ | ८ | ८ | ० | ६ | ० | 👣 | 👣 | ८ | ८ | ८ | ० | ६ | ० | ८ |

भृगुदिवा ।

शुक्रोमृतंचापमरिंदमश्चलंबं दरःकेशवशून्यपादः ।

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| वि | सु | या | सा | भा | सा | रो | स्वे | म | चा | ज | वै | तु | अ | रा | बा |
| र | र | त | त | स | स | र | र | त | त | स | स | र | र | त | त |
| ८ | ६ | ० | ८ | ८ | ८ | ८ | ६ | ६ | ६ | ० | ८ | ८ | ८ | ० | 👣 |

रविरात्रौ ।

रात्रौलक्ष्मीशयुग्मंयुगलहरिषुयुग्मंकृष्णेचशून्यं ।

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| स्वे | मै | चा | ज | वै | तु | अ | रा | वा | वि | ष्ठु | या | सौ | भा | सा | रो |
| र | र | त | त | स | स | र | र | त | त | स | स | र | र | त | त |
| ८ | ८ | ८ | ६ | ६ | ६ | ० | ८ | ८ | ६ | ६ | ६ | ० | ८ | ८ | ० |

चंद्रादिवा ।

सोमेचपादद्वंद्वयान्नोनृहरिखयुगलंपोतवासश्चशून्ये ।

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| मै | चा | ज | वै | तु | अ | रा | वा | वि | ष्ठु | या | सौ | भा | सा | रो | स्वे |
| स | स | र | र | त | त | स | स | र | र | त | त | स | स | र | र |
| ६ | ६ | ६ | ० | ० | ८ | ८ | ८ | ० | ६ | ० | ८ | ८ | ८ | ८ | ० |

चंद्ररात्रौ ।

चापद्वंद्वंनिशायामजपदखमजश्चापपद्माशपादम् ।

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| चा | ज | वं | तु | अ | रा | वा | वि | ष्ठु | या | सौ | भा | सा | रो | स्वे | मै |
| त | त | स | स | र | र | त | त | स | स | र | र | त | त | स | स |
| ६ | ६ | ६ | ० | ८ | ८ | 👣 | ० | ८ | ८ | ६ | ० | ० | ८ | ८ | 👣 |

भौमादिवा ।

भौमेशून्येनकृष्णोयुगगणहरिस्त्रीणिचापानिसिद्धिः ।

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ज | वै | तु | अ | रा | वा | वि | ष्ठु | या | सौ | भा | सा | रो | स्वे | मै | चा |
| र | र | त | त | स | स | र | र | त | त | स | स | र | र | त | त |
| ० | ० | ८ | ८ | ६ | ० | ० | ८ | ६ | ६ | ६ | ६ | ६ | ६ | ० | ८ |

भृगुरात्रौ ।

नक्तंयुगंश्रीपतिखंचयुग्मंनृसिंहयुग्मंगगनंचयुग्मम् ।

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ष्ठु | या | सौ | भा | सा | रा | स्व | म | च | ज | वै | तु | अ | रा | वा | वि |
| स | स | र | र | त | स | स | स | र | र | त | त | स | स | र | र |
| ६ | ० | ८ | ८ | ८ | ० | ६ | ० | ८ | ८ | ८ | ६ | ० | ० | ६ | ० |

शनिदिवा ।

शनौपदंश्रीननभोनकृष्णःस्वंश्रीपदंविष्णुनभोहरिर्यतः ।

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| या | सौ | भा | सा | रा | स्वे | मै | चा | ज | वै | तु | अ | रा | वा | वि | ष्ठु |
| त | त | स | स | र | र | त | त | स | स | र | र | त | त | स | स |
| 👣 | ८ | ० | ० | ० | ८ | ८ | ० | ८ | 👣 | ८ | ८ | ८ | ८ | ८ | 👣 |

शनिरात्रौ ।

रात्रौपदंखंपदनंदसूनुःगजाननोगोपतिशून्यपादौ ।

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| सा | भा | स | रा | स्वे | मै | च | ज | वै | तु | अ | रा | वा | वि | ष्ठु | या |
| र | र | त | त | स | स | र | र | त | त | स | स | र | र | त | त |
| 👣 | ० | 👣 | ८ | ८ | ८ | ६ | ६ | ६ | ६ | ८ | ८ | ८ | ८ | ० | 👣 |

ज्येष्ठाषाढमल॰मस्यमुहूर्तांश्चैवलिख्यंते । रविदिवा ।

अर्केशून्येनकृष्णोयुगपदहरिर्विष्णुचापंचशून्यं ।

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| रा | स्वे | मै | चा | ज | व | तु | अ | रा | वा | वि | ष्ठु | या | सौ | भा | सा |
| त | त | स | स | . | र | त | त | स | स | र | र | त | त | स | स |
| ० | ० | ८ | ८ | ६ | ० | 👣 | 👣 | ० | ८ | ८ | ८ | ६ | ० | ० | ० |

भौमरात्रौ ।

नक्तंशून्यंचयुग्मंयुगलयुगपंदश्री खचापंचचक्री ।

| वै | तु | अ | रा | वा | वि | छु | या | सौ | भा | सा | रौ | स्व | मे | चा | ज |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| स | स | र | र | त | त | स | स | र | र | त | त | स | स | र | र |
| ० | ६ | ६ | ६ | ० | 👣 | ८ | ० | ६ | ६ | ६ | ६ | ६ | ० | ८ | ८ |

बुधदिवा ।

सौम्येश्रीविघ्ननाथोथहरिगणपतिर्ब्रह्मनामश्वपादौ ।

| तु | अ | रा | वा | वि | छु | या | सौ | भा | सा | रो | स्व | मै | चा | ज | वै |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| त | त | स | स | र | र | त | त | स | स | र | र | त | त | स | स |
| ८ | ६ | ६ | ६ | ० | ८ | ८ | ६ | ६ | ६ | ० | ८ | ८ | ८ | ८ | 👣 |

बुधरात्रौ ।

रात्रौनखोमुकुंदोनहिसमुरारिपुःखंधमौशून्यविष्णुः ।

| अ | रा | वा | वि | स | या | सो | भा | सा | रौं | स्वं | | चा | ज | वै | तु |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| र | र | त | त | स | स | र | र | त | त | स | स | र | र | त | त |
| ८ | ६ | ० | ८ | ८ | ० | ६ | ६ | ६ | ० | ८ | ८ | ६ | ८ | ८ | ८ |

गुरुदिवा ।

जीवोविष्णुश्चचापोगगनमजिनखाथोद्विपादौनृसिंहः ।

| रा | वा | वि | छु | या | सौ | भा | सा | रौ | स्वे | मै | चा | ज | वै | तु | अ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| स | स | र | र | त | त | स | स | र | र | त | त | स | स | र | र |
| ८ | ८ | ६ | ६ | ६ | ० | ० | ८ | ८ | ८ | ० | 👣 | 👣 | ० | ८ | ८ |

गुरुरात्रौ ।

रात्रौनोखंमुकुंदोनाहिसरारिपुखंधमौशून्याविष्णुः ।

| वा | वि | छु | या | सौ | भा | सा | गौ | स्वे | मै | चा | ज | वै | तु | अ | रा |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| त | त | स | स | र | र | त | त | स | स | र | र | त | त | स | स |
| ० | ० | ८ | ८ | ८ | ० | ८ | ८ | ८ | ६ | ६ | ६ | ६ | ० | ८ | ८ |

भृगुदिवा ।

शुक्रेयुग्मंमुरारिर्गगणयुग्मजोविघ्नराजोथगोपः ।

| वि | छु | या | सौ | भा | स | रौ | स्वे | मै | चा | ज | वै | तु | अ | रा | वा |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| र | र | त | त | स | स | र | र | त | त | स | स | र | र | त | त |
| ६ | ० | ८ | ८ | ८ | ८ | ६ | ० | ० | ८ | ८ | ८ | ० | 👣 | 👣 | ८ |

भृगुरात्रौ ।

रात्रौयुग्मंगोपतियुगगणाश्रीपतिःखंपदश्रीः ।

| छु | या | सा | भा | सा | रौ | स्वे | मै | चा | ज | वै | तु | अ | रा | वा | वि |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| स | स | र | र | त | त | स | स | र | र | त | त | स | स | र | र |
| ६ | ० | ८ | ८ | ८ | ८ | ६ | ० | ० | ८ | ८ | ८ | ० | 👣 | 👣 | ८ |

शनिदिवा ।

मंदेश्रीयुग्मासिद्धिःखहरिखसौरिखसिद्धिखंवः ।

| या | सौ | भा | सा | रौ | स्वे | मै | चा | ज | वै | तु | अ | रा | वा | वि | छु |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| त | त | स | स | र | र | त | त | स | स | र | र | त | त | स | स |
| ८ | ६ | ० | ८ | ० | ८ | ८ | ० | 👣 | 👣 | ० | 👣 | 👣 | ८ | ८ | ० |

### शनिरात्रौ ।

नक्तंश्रीखयुग्माद्धौद्धिखयुगलहरीव्योमगोविंदशून्यम् ।

| | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| सौ | भा | सा | रौ | स्वे | मै | बा | ज | वै | तु | अ | रा | वा | वि | ब्रु | या |
| र | र | त | त | स | स | र | र | त | त | स | स | र | र | त | त |
| ८ | ६ | ० | ८ | ८ | ० | ० | ६ | ६ | ० | ८ | ० | ८ | ८ | ८ | ० |

अथ जनुषि मुहूर्तफलम् । रौद्रे भवेत्क्रूरतरस्वभावः श्वेते तु गांभीर्ययुतो धनाढ्यः। मैत्राह्वये सर्वजनानुमित्रं चार्वाटके स्याच्छलछिद्रवृत्तिः ॥ १ ॥ कार्यक्षयः स्याज्जयदेवसंज्ञे वैरोचने भूतपतिः प्रभुर्वा । सुपंडितस्तुर्यमुहूर्तजाताः स्वगेहसौख्यं लभतेऽभिजिज्जः ॥ २ ॥ हन्यात्कुलं रावणजातजन्मा स्याद्बालवेनेककालिप्रियश्च । बिभीषणो भक्तिधनान्वितः स्यात्स्यान्नंदनोत्थो बहुनंदनो ना ॥ ३ ॥ जातिच्युतः स्यादथवाघकर्ता यमेथ सौम्ये धनधान्यवान् स्यात् । परांगनासेवनकृद्भगे स्यात्सावित्रिनाम्नीं प्रपठेत् सुविद्याम् ॥ ४ ॥ यः सत्वजन्मा सतु धर्मकर्मा स्याद्राजसो लौकिकरीतिधर्मः । लोभादिना प्रोज्झितधर्मकर्मा स्यात्तामसोथ क्रमतो मुहूर्तैः ॥ ५ ॥

### दिवारात्रावष्टमांशोवेला ।

| सू दि. | सू रा. | चं दि. | चं रा. | मं दि. | मं रा. | बु दि. | बु रा. | बृ दि. | बृ रा. | शु दि. | शु रा. | श दि. | श रा. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| उद्वेग | चार | अमृत | काल | राग | उद्वेग | लाभ | अमृत | शुभ | रग | चर | लाभ | काल | शुभ |
| चर | लाभ | काल | शुभ | उद्व | चर | अमृत | काल | रोग | उद्वेग | लाभ | अमृत | शुभ | रोग |
| लाभ | अमृत | शुभ | राग | चर | लभ | काल | शुभ | उद्वेग | चर | अमृत | कल | रोग | उद्वेग |
| अमृत | काल | राग | उद्वेग | लाभ | अमृत | शुभ | रांग | चर | लभ | काल | शुभ | उद्वेग | चर |
| काल | शुभ | उद्वेग | चर | अमृत | काल | रंग | उद्वेग | लाभ | अमृत | शुभ | रोग | चर | लाभ |
| शुभ | रोग | चर | लाभ | काल | शुभ | उद्वेग | चर | अमृत | काल | रग | उद्वग | लाभ | अमृ |
| रोग | उद्वग | लाभ | अमृत | शुभ | राग | चर | लाभ | काल | शुभ | उद्वग | चर | अमृत | काल |
| उद्वग | चर | अमृत | काल | राग | उद्वेग | लाभ | अमृत | शुभ | राग | चर | लाभ | काल | शुभ |

इति श्रीज्योतिर्विद्दयादत्तात्मजरामदानिकृते संग्रहे बृहद्दैवज्ञरंजने मुहूर्तकथनं नाम त्रिंशत्तमं प्रकरणं समाप्तम् ॥ ३० ॥

## अथ एकत्रिंशत्तमं संक्रांतिप्रकरणं प्रारभ्यते ।

संक्रांतिलक्षणं ज्योतिःसारे—पूर्वराशिं परित्यज्य उत्तरां याति भास्करः । स राशिः संक्रमाख्या स्यान्मासर्त्वायनहायने ॥ १ ॥ चंडेश्वरः—उग्रर्क्षे च भवेद् घोरा क्षिप्रे ध्वांक्षी प्रकीर्तिता । महोदरी चरे ज्ञेया मृदौ मंदाकिनी स्मृता ॥ २ ॥ ध्रुवे मंदाथ मिश्राख्ये

मिश्रा तीक्ष्णे तु राक्षसी । घोराद्या भानुवारादौ विज्ञेया स्मृतिवेदिभिः ॥ ३ ॥ श्रीपतिः-घोरा रवौ ध्वांक्ष्यमृतद्युतौ च संक्रांतिवारे च महोदरी स्यात् । मंदाकिनी ज्ञे च गुरौ च मंदा मिश्रा भृगौ राक्षसी चार्कपुत्रे ॥ ४ ॥ उग्रक्षिप्रचरैर्मैत्रैर्ध्रुवैर्मिश्राख्य-दारुणैः । ऋक्षैः संक्रांतिरर्कस्य घोराद्याः क्रमशो मताः ॥ ५ ॥ फलनिर्णये-घोरा सुखाय शूद्राणां विशां ध्वांक्षी सुखप्रदा । महोदरी च चौराणां राज्ञां मंदाकिनी हिता ॥ ६ ॥विप्राणां शुभदा मंदा पशूनां मिश्रिका मुदे । चांडालशौंडिकादीनां सुखदा स्यात्तु राक्षसी ॥ ७ ॥ पूर्वाह्णे पीडयेद्भूपान् मध्याह्ने तु द्विजोत्तमान् । विशोपराह्णस्त-मये शूद्रानुषसि गोपकान् ॥ ८ ॥ व्रतिनो हंति संध्यायां पिशाचान् रजनीमुखे । अर्द्धरात्रौ रात्रिचरान् परतो नटनर्तकान् ॥ ९ ॥ दिवा चेन्मेषसंक्रांतिरनर्घकलह-प्रदा । रात्रौ सुभिक्षमतुलं संध्ययोर्वृष्टिरुत्तमा ॥ १० ॥ मृगकर्क्यजगोमीनसंक्रांतिर्निशि सौख्यदा । शेषेषु सप्तसु दिवा व्यत्ययादशुभं भवेत् ॥ ११ ॥ मेषं यदि दिवा सूर्यो रात्रौ तु संक्रमेत्तुलाम् । तदा नदंति राजानो जनाश्च विविधोत्सवैः ॥ १२ ॥ यां तिथिं समनुप्राप्य तुलां गच्छति भास्करः । तस्यामेवार्कसंक्रांतिर्यावन्मेषः शुभंकरः ॥ १३ ॥ न्यूनातिचारे दुर्भिक्षं राष्ट्रभंगं जनक्षयम् । समसप्तगमकेंद्रे संक्रमे च मह-र्घता ॥ १४ ॥ श्रीपतिः--हरिपदं स्थिरभे रविसंक्रमाद्द्वितनुभे षडशीतिमुखं भवेत् । उदगपायनगे मृगकर्किणौ क्रयतुलाधरयोर्विषुवत्स्मृतम् ॥ १५ ॥ याम्यायने विष्णु-पदे तदादौ दानाद्यनंतं विषुवे च मध्ये । वदंत्यतीते षडशीतिवक्त्रे महर्षयः खल्वयने च सौम्ये ॥ १६ ॥ गर्गः--त्रिंशत्कर्कटसंक्रांतौ पूर्वतः पुण्यनाडिकाः । मकरे तूत्तराः पुण्याश्चत्वारिंशतिनाडिकाः ॥ १७ ॥ हेमाद्रौ--त्रिंशत्कर्कटके नाड्यः मकरे तु दशाधिकाः । भविष्यत्ययने पुण्यं अतीते चोत्तरायणे ॥ १८ ॥ कार्मुकं च परित्यज्य मृगे याति दिवाकरः । प्रदोषे चार्द्धरात्रौ वा स्नानदाने परे-ह्नि ॥ १९ ॥ सूर्यास्तमनवेलायां यदि सौम्यायनं भवेत् । तदूर्ध्वे पुण्यकालः स्यात् परतश्चेत्परेहनि ॥ २० ॥ षट्त्रिंशद् घटिकाः पुण्या मृगेतीताः प्रकीर्तिताः । आद्य-त्रिंशत्कुलीराः स्युः पुराणैः स्मृतिका विदुः ॥२१॥ आसन्नं संक्रमं पुण्यं दिनार्धं स्नान-दानयोः ॥ २२ ॥ श्रीपतिः--कार्मुकं च परित्यज्य मृगे याति दिवाकरः । प्रदोषे चार्धरात्रे वा तदा भोगोपरेहनि ॥ २३ ॥ मिथुनात्कर्कसंक्रांतिर्यदि स्यादंशुमालिनः । प्रदोषे चार्धरात्रे वा तदा कुर्याद्गतेहनि ॥ २४ ॥ निर्णयसिंधौ-भुयः प्रदोषे यदि वार्धरात्रे परेह्नि पुण्यं त्वथ कर्कटश्चेत् । प्रभातकाले यदि वा निशीथे पूर्वेह्नि पुण्यं त्विति माधवार्यः ॥ २५ ॥ रामः--याम्यायने विष्णुपदे चाद्या मध्या तुलाजयोः । षडशीत्यानने सौम्ये परा नाड्योतिपुण्यदाः ॥ २६ ॥ पूर्वमेव दिनं ग्राह्यं यावन्ना-दयते रविः ॥ २७ ॥ श्रीपतिः--पूर्वतोपि परतोपि संक्रमात्पुण्यकालघटिकास्तु षोड-श । अर्द्धरात्रिसमयादनंतरं संक्रमे परदिनं हि पुण्यदम् ॥ २८ ॥ यद्यर्धरात्र एवं

स्यात्संपूर्णो रविसंक्रमः । तदा दिनद्वयं पुण्यं स्नानदानादिकर्मसु ॥ २९ ॥ लल्लः– अहःसंक्रमणे पुण्यमहः सर्वं प्रकीर्तितम् । रात्रौ संक्रमणे पुण्यं दिनार्धं स्नानदानयोः ॥ ३० ॥ अर्धरात्रादधस्तत्र दिनार्धस्योपरि क्रिया । ऊर्ध्वसंक्रमणे चोर्ध्वमुदयात्प्रहरद्वयम् ॥ ३१ ॥ संपूर्णे चार्धरात्रे तु भानुः संक्रमते यदा । पुण्यकाले प्रयत्नेन प्रभाते मनुरब्रवीत् ॥ ३२ ॥ मनुस्मृतिः–ग्रहणेर्कस्य संक्रांतौ विवाहे पुत्रजन्मनि । काम्यव्रते च मरणे रात्रौ स्नानार्थमुत्तमम् ॥ ३३ ॥ भार्गवः–राहुपर्वणि विवाहकर्मणि स्थापने दिविषदां सुतोत्सवे । संक्रमे व्रतविधौ न निंदिता स्नानदानविषये विभावरी ॥३४॥ संक्रांत्यां यानि दत्तानि हव्यकव्यानि मानवैः । तानि तस्य ददात्यर्कः सप्तजन्मनि निश्चितम् ॥ ३५ ॥ अथ मेषादिसंक्रमणे दानवस्तून्याह । विश्वामित्रः निर्णयसिंधौ–मेषसंक्रमणे भानोर्मेषदानं महाफलम् । वृषसंक्रमणे दानं गवां प्रोक्तं तथैव च ॥ ३६ ॥ वस्त्रान्नयानदानानि मिथुने विहितानि तु । घृतधेनुप्रदानं च कर्कटेपि विशिष्यते ॥ ३७ ॥ ससुवर्णच्छत्रदानं सिंहेपि विहितं तथा । कन्याप्रवेशे वस्त्राणां वेश्मनां दानमेव च ॥ ३८ ॥ तुलाप्रवेशे धान्यानां गोरसानामपीष्टदम् । वृश्चिके चलिते भानौ दीपदानं महाफलम् ॥ ३९ ॥ धनुःप्रवेशे वस्त्राणां यानानां च महाफलम् । मकरप्रवेशे दारूणां दानमग्नेस्तथैव च ॥ ४० ॥ कुंभप्रवेशे दानं तु गवामंबुतृणस्य च । मीनप्रवेशेऽम्लानानां मालानामपि चोत्तमम् ॥ ४१ ॥ कालविवेके–रविसंक्रमणे पुण्ये यो न स्नातीह मानवः । सप्तजन्मांतरे रोगी दुःखभाङ् निर्धनो भवेत् ॥ ४२ ॥ श्रीपतिः–चतुष्पदे तैतिलनागयोश्च सुप्तो रविः संक्रमणं करोति । विष्ट्यां ववाख्ये च गराह्वये च स बालवाख्ये वणिजे निविष्टः ॥ ४३ ॥ किंस्तुघ्ननाम्नि शकुनावपि कौलवाख्ये चोर्ध्वस्थितस्य खलु संक्रमणं रवेः स्यात् । धान्यार्घवृष्टिषु भवेत्क्रमशस्त्वनिष्टमध्येष्टतेति मुनयः कथयंति पूर्वाः ॥ ४४ ॥ फलप्रदीपे–राज्ञां प्रजानां सौख्यं स्यात्समर्घं सस्यगोरसम् । नंदते च जगत्सर्वं ऊर्ध्वसंक्रमणे रवेः ॥ ४५ ॥ धनधान्यं तथारोग्यं लोकानां सुखवर्धनम् । समता सर्वकार्येषु प्रविष्टे रविसंक्रमे ॥ ४६ ॥ शोकव्याधिभयं हानिचौराग्निनृपजं भयम् । जायते भुवि दुर्भिक्षं यदि सुप्तार्कसंक्रमः ॥ ४७ ॥ प्रयोजनाभावात्संक्रांतेर्वस्त्राभरणादिकं न लेख्यम् । उत्तरात्रितयं ब्राह्म्यं विशाखा च पुनर्वसु । चत्वारिंशत्पंचयुक्तः संक्रांतिः स्यान्मुहूर्तकैः ॥ ४८ ॥ आर्द्राश्लेषा तथा ज्येष्ठा भरणी स्वातिवारुणम् । एभिः पंचदशी वाच्या शेषास्त्रिंशन्मुहूर्तकाः ॥ ४९ ॥ उत्तमाधममध्याख्या संक्रांतिः कथिता रवेः । धान्यादीनां समर्घत्वं समता च महर्घता ॥ ५० ॥ चण्डेश्वरः–रौद्राहियाम्यानिलवारुणेंद्राण्याहुर्जघन्यानि तथा बृहंति । ध्रुवद्विदैवादितिभानि नूनं समानि शेषाणि पुनर्मुनींद्रैः ॥ ५१ ॥ बृहत्सु धान्यं कुरुते समर्घं जघन्यधिष्ण्यैः कुरुते महर्घम् । समेषु धिष्ण्येषु समं हिमांशुर्वदंत्यसंदिग्धमिदं महीतः ॥ ५२ ॥

जघन्यभे संक्रमणे मुहूर्ताः शरेंदवो बाणकृता बृहत्सु । खरामसंख्या समभे महर्घं समर्घसाम्य विधुदर्शनेपि ॥ ५३ ॥ गर्गः—अर्कादिवारे संक्रांतौ कर्कस्याब्दविंशोपकः । दिशो(१०) नखा (२०) गजा(८) सूर्या(१२) धृत्योष्टादश (१८) सायकाः(५) ॥५४॥ संक्रमात्पूर्वनक्षत्रमधराख्यं वदेद्बुधः । त्रिकं षट्कं त्रिकं षट्कं त्रिकं षट्कं च विन्यसेत् ॥ ५५ ॥ पंथा भोगो व्यथा वस्त्रं हानिश्च विपुलं धनम् । यस्य जन्मर्क्षमासादितिथौ संक्रमणं भवेत् ॥ ५६ ॥ तन्मासाभ्यंतरे तस्य वैरं क्लेशं धनक्षयः । तगरसरोरुहपत्रै रजनीसिद्धार्थलोध्रसंयुक्तैः ॥ ५७ ॥ स्नानं जन्मर्क्षगते रविसंक्रमणे नृणां शुभदम् । क्षीरं वस्त्रं गुडं तैलं नवनीतं च शर्करा ॥ ५८ ॥ पूगीफलं तिलं चाज्यं रसं च लवणं मधु । अथ संक्रांतितुलादानम् । मेषादिमीनपर्यंतं तुलां दद्याद्विधानतः ॥ ५९ ॥ आयुर्वृद्धिर्धनारोग्यनिष्पापःपुण्यवान् भवेत् । संक्रांतौ ग्रहणे काले पुण्याहे च विशेषतः ॥ ६० ॥ हेमरौप्यादिमुक्तानां अन्नवस्त्रादि गोरसः । तिलतैलादिकानां च तुलादानात्सुखी भवेत् ॥ ६१ ॥ अथ संक्रांतिकालः । स्मृतिनिर्णये—यस्मिन्कालेर्कसंक्रांतिर्दिवा वा यदि वा निशि । तत्काले स्नानदानानि कृतकर्मा क्षयं भवेत् ॥ ६२ ॥ निरंशः सविता यत्र तद्दिने स्नानमाचरेत् । दानं चाप्यक्षयं प्रोक्तं रहस्यं मुनिभिः स्मृतम् ॥ ६३ ॥ पुण्यं बहुतरं सूर्ये निरंशे मुनयो विदुः । अंशकं प्राप्य दानादि नैव पुण्यानि भास्करे ॥ ६४ ॥ गुरूराशौ तु सूर्यस्य प्रवेशसमयो नृणाम् । निमेषस्यायुतांशः स्यात्सोह्यस्माभिर्न गण्यते ॥ ६५ ॥ गर्गः—सुस्थे नरे सुखासीने यावत्स्पंदति लोचनम् । तस्य त्रिंशत्तमो भागस्तत्परः परिकीर्तितः ॥ ६६ ॥ तत्पराच्छतमो भागस्त्रुटिरित्यभिधीयते । त्रुटेः सहस्रभागो यः स कालो रविसंक्रमः ॥ ६७ ॥ तस्मिन्काले द्रवीभूतं त्रैलोक्यं सचराचरम् । ब्रह्मापि तं न जानाति किं पुनः प्राकृतो जनः ॥ ६८ ॥ तस्मान्मुनींद्रैः संक्रांतेर्वाक् षोडश नाडिकाः । पश्चात्षोडश संप्रोक्ताः स्थूलाः पुण्यतमास्तथा ॥ ६९ ॥ श्रीपतिः—यावद्भिरंशैरयनच्युतिः स्यात्तद्भोग्यकालेन दिवाकरस्य । च्युतिर्भवेद्विष्णुपदादिकानां रहस्यमेतन्मुनिभिः प्रदिष्टम् ॥ ७० ॥ यादृशेन हिमरश्मिमालिना संक्रमो भवति तिग्मरोचिषः । साध्वसाध्वापि वशेन शीतगोस्तादृशं फलमवाप्नुयान्नरः ॥ ७१ ॥ ताराबलादिदुरर्थेंदुर्वीर्याद्दिवाकरः संक्रममाण उक्तः । ग्रहाश्च सर्वेपि बलेन भानोर्भवंति शस्ता अपि सुप्रशस्ताः ॥ ७२ ॥ चण्डेश्वरः—शुक्लपक्षे तु सप्तम्यां यदा संक्रमते रविः । महाजया तु सा प्रोक्ता सप्तमी भास्करप्रिया ॥ ७३ ॥ तस्यां स्नानं हुतं दत्तं सर्वं भवति, चाक्षयम् । रविवारे विशेषेण कर्तव्यं पुण्यमादरात् ॥ ७४ ॥ गर्गः—या याः संनिहिता नाड्यस्तास्ताः पुण्यतमाः स्मृताः । पुण्यकालप्रसंगेन नियमश्च निगद्यते ॥ ७५ ॥ अथ संक्रांतिदिने वर्ज्यम् । संक्रांत्यां तैलसंयोगः स्त्रीसंभोगः पलाशनम् । दंतधावनकाष्ठं च यः कुर्यात्पतितो भवेत् ॥ ७६ ॥

अन्यत्रापि—दंतधावनकाष्ठेन न शोध्याः संक्रमे रदाः । न वाच्यं परुषं छेद्यं न किंचिच्च तृणादिकम् ॥ ७७ ॥ न दोह्या गोमहिष्यश्च तस्मात्पूर्वं न भोजनम् । स्त्रीसंगमो न कर्तव्यो न विप्रेभ्यो विश्राणनम् ॥ ७८ ॥ अथ करणे प्रत्यवायः । सूर्यसंक्रांतिदिवसे यः कुर्याद्दंतधावनम् । लोहकंटकपुंजेन सविता तेन धर्षितः ॥ ७९ ॥ सूर्यसंक्रांतिदिवसे परुषं योभिभाषते । तेन षण्मासपर्यंतं सविता कलहः कृतः ॥ ८० ॥ सूर्यसंक्रांतिदिवसे छिन्द्याद्यस्तु तृणादिकम् । तेन खड्गादिभिः शस्त्रैः सविता स्यात्प्रहारितः ॥ ८१ ॥ सूर्यसंक्रांतिदिवसे गवादिर्दुहतीह यः । तेन रश्मिं गले बध्वा सविता कर्षितो भवेत् ॥ ८२ ॥ सूर्यसंक्रांतिसमयादर्वाक् यः कुरुतेशनम् । आषण्मासं ततस्तेन सविता स्यादुपोषितः ॥ ८३ ॥ सूर्यसंक्रांतिसमयाद्यः पुमान्काममोहितः । कुरुते कामिनीसंगं षंढतामुपयाति सः ॥ ८४ ॥ सूर्यसंक्रांतिसमयाद्ब्राह्मणं यो न भोजयेत् । स सप्तजन्मपर्यंतं क्षयरोगी भविष्यति ॥ ८५ ॥ सूर्यसंक्रांतिसमयान्न स्नानं कुरुते तिलैः । दद्रुपामार्शसां दोषैः पीडितः स्यादिति स्थितम् ॥ ८६ ॥ सूर्यसंक्रांतिसमयान्न साष्टांगं नमेद्रविम् । स स्याद्भवांतरे नूनं पीडितो राजयक्ष्मणा ॥ ८७ ॥ सूर्यसंक्रांतिसमयाद्दानं शक्त्या करोति न । स दरिद्रो महापापी प्रतिजन्मनि जायते ॥ ८८ ॥ सुवर्णं रजतं वापि ताम्रं वापि ददाति यः । इह दिव्यशरीरः स्यात्ततः स्वर्गे महीयते ॥ ८९ ॥ सूर्यसंक्रांतिसमयात्स्नानं नाज्ञानतः कृतम् । आदित्यहृदयं पाठ्यं सहस्रं तेन शुद्ध्यति ॥ ९० ॥ अज्ञानान्मैथुनाद्यं यः संक्रांतौ कुरुते यदि । त्रिरात्र्युपोषितो भूत्वा पंचगव्येन शुद्ध्यति ॥ ९१ ॥ उत्तरे त्वयने विप्रे वस्त्रदानं महाफलम् । तिलपूर्णमनड्वाहं दत्त्वा रोगैः प्रमुच्यते ॥ ९२ ॥ अथ भास्वदजप्रवेशलग्नं जगल्लग्नं तस्माच्छुभाशुभज्ञानम् । प्रश्नवैष्णवे—राकाकुहूशशिपभास्वदजप्रवेशः लग्नेश्वराः शुभखगैर्युतवीक्षितश्चेत् । तद्वत्सरे जगति सौख्यमलं प्रकुर्युः पापार्दिता गदनरेंद्रभयं नराणाम् ॥ ९३ ॥ भानोर्मेषप्रवेशोदयभवनपतिः सग्रहः स्वोच्चसंस्थे स्वर्क्षस्थे वापि केंद्रे शुभगगनचरैर्दृष्टयुक्तो बलाढ्यः । तस्मिन्वर्षे प्रकुर्याज्जगति शुभसुखं भूरिशस्यं सुवृष्टिं क्रूरः क्रूरार्दितो वा दिशति नृपभयं कष्टमन्नं महर्घम् ॥ ९४ ॥ मेषप्रवेशोदयतः खरांशोः केंद्रेषु पापोडुपतीत्थशाले । पापग्रहैर्दृष्टियुते च तस्मिन्वर्षे गदार्तिः प्रियमन्नमुर्व्याम् ॥ ९५ ॥ लग्ने बलाढ्ये निजनाथसौम्यैर्युक्तेक्षितः केंद्रगतैः शुभैश्च । सर्वं समर्घं विबलैर्विलग्ने केंद्रेषु पापैः सकलं महर्घम् ॥ ९६ ॥ अथ मनुष्याणां जन्मलग्नात्प्रातिवर्षं शुभाशुभज्ञानम् । मुकुंदः—जन्मोदयाद्भास्वदजप्रवेशलग्नं हि यद्भावगतं शुभान्वितम् । तद्भाववृद्धिं प्रकरोति तस्मिन्वर्षे नृणां पापयुतं तदन्यथा ॥ ९७ ॥ जन्मोदये देहसुखं धनेर्थलाभस्तृतीये च कुटुंबवृद्धिः । तुर्ये सुहृत्सौख्यमथात्मजाप्तिं पुत्रेथ षष्ठेरिपराजयः स्यात् ॥ ९८ ॥ स्त्रीसौख्याप्तिर्भवति मदने मृत्युरुग्भिश्च रन्ध्रे धर्मार्थाप्तिस्तपसि दशमे वित्तसौख्यं पदाप्तिः ।

लाभे लाभः सुखधनचयो दुःखदाख्यमंत्ये पुंसोमेषे प्रविशति रवौ जन्मलग्नाद्विलग्ने॥९९॥ जन्मलग्नाद्वर्षलग्नाज्जगल्लग्नं यदा भवेत्। अष्टमे द्वादशे वापि स वर्षो न शुभावहः ॥ १०० ॥ अष्टमे द्वादशे वापि भवेद्यत्पुरराशितः। जगल्लग्नं तदा हानिस्तत्पुरस्य न संशयः ॥ १ ॥ अथ वृषार्कप्रवेशलग्नाच्छारदान्नविचारः। तत्रैव–वृषप्रवेशे सवितुर्मृगेंद्र (५) वृषा (२) लि (८) कुंभो (११) पगतैः शुभग्रहैः। पापैस्तुला (७) कर्कमृगांगनास्थैः स्याच्छारदान्नस्य समृद्धिरुत्तमा ॥ २ ॥ वृषप्रवेशे सवितुः शशीज्ययोः कुंभालिसिंहोपगयोः सुवीर्ययोः। शुक्रज्ञयोर्मेषनृयुग्मसंस्थयोः स्याच्छारदान्नस्य समृद्धिरीप्सिता ॥ ३ ॥ वृषप्रवेशे सवितुश्च सिंहवृषालिकुंभोपगतैश्च पापैः। वीर्यान्वितैः सौम्यखगैरवीर्यैर्जातं विनश्येत् खलु शारदान्नम् ॥ ४ ॥ वृषप्रवेशे सवितुर्हयांगवृषालिसंस्थैरशुभग्रहेंद्रैः। संशुष्यतेऽल्पं खलु जातमात्रमुत्पद्यतेल्पं भुवि शारदान्नम् ॥ ५ ॥ वृषप्रवेशे सवितुर्नृयुग्ममेषालिसंस्थैरशुभग्रहेंद्रैः। सौम्यग्रहेंद्रैर्न युतेक्षितश्च जातं विशुष्येत्खलु शारदान्नम् ॥ ६ ॥ वृषप्रवेशे तरणेश्च मीने ज्ञशुक्रयोः केंद्रगयोः शशीज्ययोः। बलाढ्ययोः सद्ग्रहदृष्ट्योश्च स्याच्छारदान्नस्य समृद्धिरुत्तमा ॥ ७ ॥ अथ मिथुनार्कप्रवेशलग्नवशाद्वृष्टिविचारः। तत्रैव–सहस्ररश्मेर्मिथुनप्रवेशे शशांकवाचस्पतिशुक्रसौम्यैः। मीनाश्च कन्यामिथुनस्थितैः स्यात्तदा सुवृष्टिः सकलान्नकर्त्री ॥ ८ ॥ सहस्ररश्मेर्मिथुनप्रवेशे शुक्रज्ञयोः कर्कवृषस्थयोश्च। चन्द्रे झषे देवगुरौ कुमार्यां विपर्ययाद्वापि तदा सुवृष्टिः ॥ ९ ॥ सहस्ररश्मेर्मिथुनप्रवेशे माहेयसूर्यात्मजसैंहिकेयैः। मीनाश्च कन्यामिथुनस्थितैश्च तदाल्पवृष्टिः प्रियमन्नमुर्व्याम् ॥ ११० ॥ सहस्ररश्मेर्मिथुनप्रवेशे ज्ञशुक्रयोर्मेषनृयुग्मसंस्थयोः। चंद्रेज्ययोश्चापगयोश्च पापैस्तुलालिसिंहोपगतैः सुवृष्टिः ॥ ११ ॥ सहस्ररश्मेर्मिथुनप्रवेशे मंदारयोः कर्कवृषस्थयोश्चेत्। द्विदेहभस्थे दनुजो विशेषात्तदाल्पवृष्टिः प्रियमन्नमुर्व्याम् ॥१२॥ शुभाशुभग्रहैर्मिश्रैः फलं मिश्रं प्रजायते। सूर्ये क्रूरान् गुरुः पश्येत् तदा वृष्टिश्च मध्यमा ॥ १३ ॥ अथ वृश्चिकार्कप्रवेशलग्नवशाद् ग्रैष्मिकान्नविचारः। तत्रैव–अलिप्रवेशे सवितुश्च कुंभे वृषालिसिंहोपगतैश्च सौम्यैः। पापग्रहैः कर्कमृगाजसंस्थैः स्याद् ग्रैष्मिकान्नस्य परा समृद्धिः ॥ १४ ॥ अलिप्रवेशे सवितुः शशीज्ययोः कुंभस्थयोः सिंहवृषस्थयोः पृथक्। शुक्रेणयोश्चापतुलालिसंस्थैः स्याद् ग्रैष्मिकान्नस्य समृद्धिरुत्तमा ॥ १५ ॥ अलिप्रवेशे सवितुः कुमार्यां ज्ञशुक्रयोः केंद्रगयोः शशीज्ययोः। बलाढ्ययोः सद्ग्रहदृष्टयोश्च स्याद् ग्रैष्मिकान्नस्य समृद्धिरुत्तमा ॥ १६ ॥ अलिप्रवेशे तरणेर्नृयुग्मवृषस्थयोः शौरिमहीज्ययोश्चेत्। तुलाघटाश्वालिगयोर्द्वयोर्वा स्याद् ग्रैष्मिकान्नस्य नवस्य नाशः ॥ १७ ॥ अलिप्रवेशे तनयस्य सिंहकुंभस्थयोः सौरिमहीजयोश्च। राहौ वृषस्थे घटवृश्चिकस्थे व ग्रैष्मिकान्नं भुवि शेषमेति ॥१८॥ शुभस्य दृष्ट्या नहि सर्वसस्यनाशो भवेत्पापखगे स्मरस्थे। ग्रीष्मोद्भवस्याथ

शरद्भवस्य सस्यस्य जन्म प्रवदेत्सुयोगात् ॥ १९ ॥ मेषे वृषे च मिथुने शुभदृष्ट्युक्ते ग्रैष्मिकं सुसुलभं त्वभयं पृथिव्याम् । सूर्यो धनुर्मृगघटेषु च शारदान्नं कुर्यात्समर्घमशुभैः सहितो महर्घम् ॥ १२० ॥ पूर्वसंक्रांतिनक्षत्रात्परसंक्रांतिऋक्षकम् । द्वित्रिसंख्या समर्घं स्याच्चतुः पंच महर्घता ॥२१॥ संक्रांतिनाड्या तिथिवारऋक्षधान्याक्षरं वह्निहृतं भागम् । एके समर्घं द्वितीये च साम्यं शून्ये महर्घं मुनयो वदंति ॥ २२ ॥ अथ वारपरत्वेन संक्रांतिफलम् । रविरविजभौमवारे संक्रांतौ दिनकरस्य सति मासे। पित्तकफानिलजामयनरपतिकलहस्त्ववृष्टिश्च ॥ २३ ॥ बुधगुरुचंद्रासिताहे संक्रांतावनामयं नृणाम् । क्षितिपतिनिकरक्षेमं सस्यविवृद्धिं विधर्मिणां पीडा ॥ २४ ॥ पौषमासस्य संक्रांती रविवारे यदा भवेत् । धान्यं च त्रिगुणं मौल्यं भौमवारे चतुर्गुणम् ॥२५॥ त्रिगुणं शनिवारेण बुधे शुक्रे समं भवेत् । सुराचार्ये च सोमे च मौल्यमर्धं सुनिश्चितम् ॥ २६ ॥ मीनसंक्रमणे सूर्यवारे वाति समीरणः । भौमे पीडा पशूनां च दुर्भिक्षं च शनैश्चरे ॥ २७ ॥ वृक्षपाताः प्रजापीडा मिथ्या संचरते मही । हिंसाकामातुरा लोका यदि वृष्टिसमन्वितम् ॥ २८ ॥ संक्रांतिर्यदि मीनस्य बुधवारे प्रजायते । छत्रभंगो महामारी रोदनं भयचिंतया ॥ २९ ॥ संक्रांतिः सोमवारे च प्रजानां परमं सुखम् । भानुभौमार्किवारेषु पापयुद्धं महर्घता ॥ १३० ॥ अथ सायनमेषार्कप्रवेशविचारः । यवनमतेन—रविवारे यदा स्याच्च मेषस्याप्ययनं भवेत् । राजा प्रसन्नतामेति राज्यपुष्टिस्तथैव च ॥ ३१ ॥ स्वकुले चास्ति स्वं राज्यं राज्यतो लाभमेव च । समर्घं परस्परं राज्ञामन्वाप्तिर्बहुला भवेत् ॥ ३२ ॥ महर्घं चैव कार्पासमाश्राधिक्यं फलं भवेत् । दुग्धादि वहुलं ज्ञेयं व्यापारिणां क्वचिद्भयम् ॥ ३३ ॥ गोधूमं वहुलं ज्ञेयं खर्बुजानि वहूनि च । तिलान्नमाधिकं जातं बालकं तु रुगर्दितम् ॥ ३४ ॥ अग्नेर्भयं तृणाधिक्यं सूर्यग्रहणसंभवम् । कटेः पीडां विजानीयाद्वापि यवनेरितम् ॥ ३५ ॥ सोमे दिने मेष यदायनं भवेद्राजानको दुःखमुपैति शीघ्रम् । वृष्टेरभूदन्नसमर्घतातिर्युद्धं भवेत्पश्चिमदिग्विनाशम् ॥ ३६ ॥ महाशयानां तु विनाशनं स्याद्व्यापारिणां लाभमुपैति बह्वम् । फलंति वृक्षाः पशुवृद्धिमेति वृक्षविनाशोग्निभयादिकं च ॥ ३७ ॥ व्ययाधिकं लाभमभूतस्वल्पमजाधिकाप्तिः सकलं वर्षे । कुजे दिने चायनमेषराशेरभूत राजा खलु भूमिसूनुः ॥ ३८ ॥ समर्घतामेति अकालवृष्टेः कृषेः क्वचिन्नष्टप्रजा पृथिव्याम् । व्यापारिणां लाभमभूत राजन् परस्परं युद्धमभीप्सितं च ॥ ३९ ॥ चतुष्पदानां रुगतो प्रपीड्यात्क्वचित्क्वचिद् वृक्षफलानि उर्व्याम् । कार्पासगोधूमतिला महर्घाः प्रयांति स्वल्पं खलु शीतवृष्टिः ॥ १४० ॥ कृषिर्विनष्टा कुसुमैववर्षणं विरुद्धदासात्मजस्वामितातयोः । नरा रुगार्ताः खलु चाग्निभीतिः स्वल्पं विनाशं हि भवेत्तु वृक्षान् ॥ ४१ ॥ सूर्योपरागः सुलभाच भीतिः भूपतनं स्याद्वदितं हि वर्षे । बुधे दिनेष्वर्कजराशिरायनं करोति वर्षे वहुलं ह्युपद्रवम् ॥४२॥

आर्यावर्ते सौमनस्यं पृथिव्यां प्रावट्काले वृष्टिर्किंचिदभूत्। महर्घतामेति तिलोपि शर्करा कार्पासवस्त्राणि चतुष्पदादिकम् ॥ ४३ ॥ कणाधिकोत्पातनरस्यऽनेकधा उपद्रवो साधुजनस्य दुष्टतः । व्यापारहानिर्ग्रहणं दिवामणेराम्रादि किंचित्सुजनस्य रोगः ॥ ४४ ॥ आयाधिकोंगूरचखर्बुजानि सुस्वादयुक्तानि धनाधिकानि । रोगोप्य-साध्याग्निभयं बहूनि प्रजासुखैश्वर्ययुतानि चाब्दे ॥ ४५ ॥ गुरोर्दिनेष्वायनमेव मेष-राशेरभूद्राजपतिर्बृहस्पतिः। महर्घतामेति समस्तमन्नं सद्वृष्टिमुर्वी धरणीपतिर्युतः ॥४६॥ राज्यस्य कार्योद्यतमंत्रिणोस्ति साधूजनोदारपशोः प्रपीडनम् । वर्षेष्वास्मिन्मंगलं चा-धिकं च व्याध्याधिक्यं जातमेवास्ति सस्यम् ॥ ४७ ॥ भूयः साधुक्लेशयुक्तोग्निभीतिः पश्चाच्छीतोत्पातक्लेशो जनस्य । मार्गे चित्रं सुंदरं लाभमत्र जातं चैवमुद्यमाद्वै मुनींद्राः ॥ ४८ ॥ भृगोर्वारे यदा चाब्दे मेषस्याप्ययनं भवेत्। राजा शुक्रो लाभमत्र गोधूमबहुलं भवेत् ॥४९॥ युद्धाधिक्यं शीतमत्र शत्रोर्नाशः पशोः सुखम्। अग्निभीतिः प्रतिष्ठा स्यात्किंचिद्रोगो नरस्य तु ॥ १५० ॥ व्यापारिणां प्रतिष्ठा स्याद्राज्यकार्यं हि सुस्थिरम्। अयनं स्याद्रविजे वारे मेषस्य तु यदा भवेत् ॥ ५१ ॥ राजा शनैश्चरस्तत्र पशुपीडा रुगाधिका।पीडा त्वनेकधा चास्ति वर्षेष्वप्यखिलेषु चेति ॥ ५२ ॥ रामः—षडशीत्याननं चापनृयुक् कन्याझषे भवेत्। तुलाजौ विषुवं विष्णुपदं सिंहा-लिगोघटे ॥ ५३ ॥ अथ महाविषुवाति मेषसंक्रांतिचक्रम् । मूर्ध्नि सप्त मुखे त्रीणि हृदये पंच विन्यसेत्। त्रितयं हस्तपादेषु महाविषुभतः क्रमात् ॥ ५४ ॥ मस्तके भूपतेः सौख्यं वदने पटुता भवेत्। हृदये च धनाध्यक्षोर्थप्राप्तिर्दक्षिणे करे ॥५५॥ वामे करे महादुःखं सुखं पादे च दक्षिणे। भ्रमणं वामपादे च कथितं विषुवत्फ-लम् ॥ ५६ ॥ अथ विष्णुपदीचक्रम्। ऋक्षे संक्रमणे यत्र विष्णुपद्यां मुखे तु तत्। चत्वारि दक्षिणे बाहौ त्रीणि त्रीणि पद्द्वये ॥ ५७ ॥ चत्वारि वामबाहौ तु हृदये पंच निर्दिशेत्। अक्ष्णोर्द्वयं द्वयं योज्यं मूर्ध्नि द्वौ चैकतो गुदे ॥ ५८ ॥ रोगो भोगस्तथा मानं बंधनं लाभमेव च। ऐश्वर्यं राजपूजा च अपमृत्युरिति क्रमात् ॥ ५९ ॥ अथ षडशीतिचक्रम्। मुखे चैकं करे वेदाः पादयुग्मे द्वयं द्वयम्। क्रोडे बाणस्तथा वेदाः करे सव्येतरेपि च ॥ १६० ॥ द्वयं द्वयं तथा नेत्रे मस्तके त्रितयं तथा। द्वयं चैव तथा गुह्ये षडशीत्यां रवौ स्थिते ॥ ६१ ॥ मुखे दुःखं करे लाभं पादयोर्भ्रमणं हृदि। कांता स्याद्बंधनं वामे हस्ते स्यात्स्वयिभे नृणाम् ॥ ६२ ॥ सन्मानं नेत्रयो-श्चैव अपमानश्च मस्तके । गुह्ये चैव भवेन्मृत्युः षडशीतिफलं श्रुतिः ॥ ६३ ॥ अथ दक्षिणायनसंक्रांतिचक्रम्। शीर्षे त्रीणि मुखे त्रीणि हृदये पंच हस्तयोः। अष्टौ पादद्वयेप्यष्टौ दक्षिणायनभः क्रमात् ॥ ६४ ॥ शीर्षे मानं मुखे विद्या हृदये वित्तसंक्षयः। प्रवासः स्यात्करे वामे भिक्षालाभश्च दक्षिणे। निष्फलं वाम-पादे च किंचिल्लाभश्च दक्षिणे ॥ ६५ ॥ अथ तुलाजलविषुवाति संक्रांतिचक्रम्।

षण् मूर्ध्नि वदने पंच चत्वारि हृदये तथा । त्रितयं करपादेषु जलं विषुम
क्रमात् ॥ ६६ ॥ मानं मूर्ध्नि मुखे वैरं हृदये दुःखसत्वतः । दोः पदोर्दक्षयोर्भोगः त्रास
वामयोः स्वभे ॥ ६७ ॥ अथोत्तरायणमकरसंक्रांतिचक्रम् । शीर्षे पंच
त्रीणि हस्तयोश्च त्रयं त्रयम् । हृदि पंच शशी नाभौ गुदे च पादयोः समाः । उत्त
यणभाज्ज्ञेयं स्वनक्षत्रास्थितेः फलम् ॥ ६८ ॥ शीर्षेर्थलाभं वदने सुखानि दक्षे
हृदये च सौख्यम् । नाभौ सुखं वामकरेर्थनाशो गुह्ये भयं वामपदे प्रवासः ॥ ६९ ॥
रूपं तिथौ रुद्रनाड्यां पंचदशैव तु । जीर्णपत्रप्रमाणेन ज्ञायते सूर्यसंक्रमे । एका
शत्पले दद्यादब्देअब्दे सदैव हि ॥ १७० ॥ इति श्रीमद्दयादत्तज्योतिर्विदात्मजराम
नज्योतिर्वित्कृते संग्रहे बृहद्दैवज्ञरंजने एकत्रिंशत्तमं संक्रांतिप्रकरणं समाप्तम् ॥ ३१

## अथ द्वात्रिंशत्तमं गोचरप्रकरणं प्रारभ्यते ।

तत्रादौ ईश्वरग्रहयोरभेद उक्तः लोमशसंहितायाम्—मुनिरुवाच । रामः कृष्णश्च
विप्र नृसिंहो सूकरस्तथा । एते पूर्णावताराश्च ह्यन्ये जीवांशका मताः ॥ १ ॥ अवता
राण्यनेकानि अजस्य परमात्मनः । जीवानां कर्मफलदो ग्रहरूपो जनार्दनः ॥ २
दैत्यानां बलनाशाय देवानां बलवृद्धये । धर्मसंस्थापनार्थाय ग्रहा जाता
क्रमात् ॥ ३ ॥ रामावतारः सूर्यस्य चंद्रस्य यदुनायकः । नृसिंहो भूमिपुत्रस्य बौ
सोमसुतस्य च ॥ ४ ॥ वामनो विबुधेज्यस्य भार्गवो भार्गवस्य च । कूर्मो भास्करपुत्र
सैंहिकेयस्य सूकरः ॥ ५ ॥ केतोर्मीनावतारश्च ये चान्ये तेपि खेटजाः । परमात्मां
माधिकं येषु ते खेचराभिधाः ॥ ६ ॥ जीवांशमाधिकं येषु जीवास्ते वै प्रकीर्तिता
सूर्यादिभ्यो ग्रहेभ्यश्च परमात्मांशनिःसृतः ॥ ७ ॥ सूर्यारुणसंवादे—ग्रहा
फलकर्तृत्वमस्ति नो वेति संशयः । केचिद्वदंति तेषां तु कर्मसूचकतामिति ॥ ८
तथा च—प्राक्कर्मसूचकाः खगाः कथमेषु भुक्तिः प्राक्कर्मभोगशमनाय हि भोगमुक्तुः
केचित्तथा दुरितहृज्जगदीशभक्तिः किंनो ग्रहाभिगत एव स एव विष्णुः ॥ ९
तथा च शार्ङ्गधरः—देवताग्रहरूपेण मनुष्याणां शुभाशुभम् । फलं प्राग
यच्च तद्ददाति स्वकीयकम् ॥ १० ॥ लल्लोपि—सकलमपि धिष्ण्यमंडलमवनिनि
विनिर्मितं धात्रा । तत्र ग्रहा ग्रहेष्वपि शुभाशुभं सर्वजंतूनाम् ॥ ११ ॥ वसिष्ठ
ग्रहा राज्यं प्रयच्छंति ग्रहा राज्यं हरंति च । ग्रहैस्तु व्यापितं सर्वं त्रैलोक्यं
राचरम् ॥ १२ ॥ बृहस्पतिरपि—ग्रहाधीनं जगत्सर्वं ग्रहाधीना नरावराः । का
ग्रहाधीनं ग्रहाः कर्मफलप्रदाः ॥ १३ ॥ सृष्टिरक्षणसंहाराः सर्वे चापि ग्रहानुगा
कर्मणः फलदातारः सूचकाश्च ग्रहाः सदा ॥ १४ ॥ दुष्करं भवसंयोगकाले दुःस्थ
माययुः । तत्फलानन्वयायेवं तदा पूज्यतमा ग्रहाः ॥ १५ ॥ वसिष्ठः—उच्चस्था

नानि नृणां खचराधीनानि विशेषतो यस्मात् । अखिलानामपि लोकानां वृद्धिस्त-
स्माद्ग्रहाश्च पूज्यतमाः ॥ १६ ॥ गोचरबलचिंतायां ये न विदंति यथाक्रमं चेति ।
गोचरबलानभिज्ञास्त्वाति लोके यांति हास्यतां सुजनैः ॥ १७ ॥ शुभकर्मणि सर्वत्र
ग्रहाणां गोचरं फलम् । पूर्वैरुक्तं यतोस्माभिरुच्यते ग्रहगोचरम् ॥ १८ ॥ अथ ग्रहाणां
नामकथनम् । यादवः-रविविधुक्षितिजा बुधवाक्पती भृगुशनी च तमः शिखिनो
ग्रहाः । न च सदा भ्रमणाद्ग्रहणो नृणां ददति धातुसमं फलमुक्तवत् ॥१९॥ कश्यपः-
छिन्नोपि विष्णुचक्रेण सुधामयाशिरास्तमः । केशवस्य वरेणासौ तथापि ग्रहतां गतः॥२०॥
नारदोपि-अमृतास्वादनाद्राहुः शिरश्छिन्नोपि सोमृतः । विष्णुना तेन चक्रेण तथापि
ग्रहतां गतः ॥ २१॥ अथ ग्रहाणां संज्ञाः । बृहज्जातके-हेलिः सूर्यश्चंद्रमा शीतर-
श्मिर्हेम्नाविज्ज्ञो बोधनश्चंद्रपुत्रः । आरो वक्रः क्रूरदृक्चावनेयः कोणो मंदः सूर्यपुत्रो
सितश्च ॥ २२ ॥ जीवोंगिराः सुरगुरुर्वचसां पतीज्यौ शुक्रो भृगुर्भृगुसुतः सित
आस्फुजिच्च । राहुस्तमो सुरगुरुश्च शिखी च केतुः पर्यायमन्यमुपलभ्य वदेच्च
लोकात् ॥ २३ ॥ अथ सौम्यपापविवेकः । अर्द्धोनेंदुर्कसौराराः पापज्ञस्तद्युतो-
परे । शुभाः पापौ तमःकेतू विष्णुधर्मोत्तरोदितौ ॥ २४ ॥ क्रूरा वक्रा महाक्रूराः
सौम्या वक्रा महाशुभाः । सहजाः स्युः स्वभावस्थाः सौम्याः क्रूराश्च शीघ्रगाः ॥ २५ ॥
अथ पुरुषाधिपकथनम् । पुंसां सूर्यारवागीशौ योषितां चंद्रभार्गवौ । क्लीवानां
बुधमंदौ च पतयः परिकीर्तिताः ॥ २६ ॥ अथ ग्रहाणां स्वामिनः । श्रीपतिः-
सूर्यादितः शिवशिवागुहविष्णुवेंद्रकालाः क्रमेण पतयः कथिता ग्रहाणाम् । वह्न्यंबुभूमि-
हरिशक्रशचीविरिंच्यस्तेषां पुनर्मुनिवरैः प्रतिदेवताश्च ॥ २७ ॥ राहोरधिपतिः कालः
प्रत्यधीशो भुजंगमः । तथा वै तोश्चित्रगुप्तः स्वयंभू ऋषिभिः स्मृतः ॥ २८ ॥ अथ
ग्रहाणां वाहनानि । ब्रह्मगुप्तः-सिंहाश्वकौ कर्कमृगौ च मेषौ नरो मयूरो वृषभस्तु
सैरभः । छागो महाजश्च वदंति तज्ज्ञाः सूर्यादिकानामिति वाहनानि ॥ २९ ॥ अथ
ग्रहाणां गृहम् । वृद्धयवनजातके-इदं जगत्स्थावरजंगमाख्यं सर्वं खोद्रात्मक-
माहुराद्याः । तस्योद्भवोत्रापचयश्च दृष्टो भूमंडलेप्येव तदात्मकं तत् ॥ ३० ॥ तस्या-
र्धमाद्यं विहितं मघादि सार्पांतिचान्द्रं विहितं परार्धम् । क्रमेण सूर्यः प्रददौ ग्रहाणां
व्यस्तेन ताराधिपतिस्तथैव ॥ ३१ ॥ बुधस्य शुक्रस्य धरासुतस्य बृहस्पतेर्भास्करनं-
दनस्य । द्वे द्वे गृहे तेषु यथानुरूपं फलं विधेयं निपुणं विदग्धैः ॥ ३२ ॥ कालीदा-
सोपि-पंचाननाख्यो हि यथेभचक्रे पंचाननाख्यो हि तथा भचक्रे । एनं हरिः पालयितु-
क्षमोस्य कृतं तदित्येतदगारमाद्यैः ॥ ३३ ॥ सिंहादिचक्रार्धपती रविः स्याद्विलोम-
कीटादिभखंडपोब्जः । पतंगधाम्ना सविधं तमीशः स्थातुं कुलीरं त्वकरोद्गारम् ॥३४॥
उच्चोच्चमार्गे चरतां ग्रहाणां बुधाननानां भवनोरिरेंदौ । प्रतिष्ठितान्पालयतः पुराणैर्द्वि-
जैरथोकांसि यथा क्रमेण ॥ ३५ ॥ अथैवं गतिकारणं संचारैर्ग्रहाणां भो-

मादीनां फलितैक्यगतिरष्टभेदात्मिकेत्याह । सूर्यसिद्धांते-वक्रानुवक्रा कुटिला मंदा मंदतरा समा । तथा शीघ्रतरा शीघ्रा ग्रहाणामष्टधा गतिः ॥ ३६ ॥ तथातिशीघ्रा शीघ्राख्या मंदा मंदतरा समा । ऋज्वीति पंचधा ज्ञेया या वक्रा सानु वक्रगा ॥ ३७ ॥ अथाष्टधा गतिकारणम् । होरानुभवदर्पणे-अर्कयुक्तश्चोदयः स्याद्द्वितीये शीघ्रगो भवेत् । खेस्तृतीये समता गतिर्मंदा चतुर्थके ॥ ३८ ॥ पंचमेप्यथवा षष्ठे किंचिद्वक्रा च वक्रगा । सप्तमाष्टमयोरर्कादतिवक्रा गतिर्भवेत् ॥ ३९ ॥ नवमे दशमे भानोः खेटानां कुटिला गतिः । एकादशे द्वादशे च शीघ्रा शीघ्रतरा क्रमात् । रविसंयुतखेटस्य गतिरस्ताह्वया भवेत् ॥ ४० ॥ अथ ग्रहाणामंतश्चर्यालक्षणम् । महानिबंधे-आत्मा रविः शीतकरश्च चेतः सत्वं धराजः शशिजश्च वाणी । ज्ञानं सुखं चेंद्रगुरुर्मदश्च शुक्रः शनिः कालनरस्य दुःखम् ॥ ४१ ॥ अथांगविभागः । महानिबंधे-शिरःप्रदेशे वदने दिनेशो वक्षःस्थले चापि गले कलावान् । पृष्ठोदरे भूतनयश्च पीडां करोति सौम्यश्चरणे च पाणौ ॥ ४२ ॥ कटिप्रदेशे जघने च जीवः कविश्च गुह्यस्थलमुष्कयुग्मे । जानूरुदेशे नलिनीशसूनुश्चारेण वा जन्मनि चिंतनीयम् ॥ ४३ ॥ कस्मिन् कार्ये केषां ग्रहाणां बलं ग्राह्यम् । उद्वाहे चोत्सवे जीवः सूर्यो भूपालदर्शने । संग्रामे धरणीपुत्रो विद्याभ्यासे बुधो बली ॥ ४४ ॥ यात्रायां भार्गवः प्रोक्तो दीक्षायां च शनैश्चरः । चंद्रमा सर्वकार्येषु प्रशस्तो गृह्यते बुधैः ॥ ४५ ॥ गर्गोपि-रविर्नृपविलोकने सुरगुरुर्विवाहोत्सवे रणे धरणिनंदनो भृगुसुतः प्रयाणे बली । शनिश्च खलु दीक्षणे निखिलशास्त्रबोधे बुधः शशी सकलकर्मसु ध्रुवमुदाहृतं सूरिभिः ॥ ४६ ॥ अर्कांगारकमंदास्तु सम्यक्पृष्ठोदयाः स्मृताः । राहुजीवभृगुज्ञास्तु ग्रहाः स्युर्मस्तकोदयाः ॥ ४७ ॥ अथ ग्रहाणामवस्था । वयांसि तेषां स्तनपानबाल्यकिशोरका यौवनमध्यवृद्धाः । अतीव वृद्धा इति चंद्रभौमज्ञशुक्रजीवार्कशनैश्चराणाम् ॥ ४८ ॥ त्रैलोक्यप्रकाशे-बुधः शिशुर्युवा भौमः शुक्रेंदू मध्यमौ परे । वृद्धो बुधो विधुर्बालो बालिका स्त्री प्रकीर्तिता ॥ ४९ ॥ अथ कालबलिनः । प्रातःकाले जीवबुधौ मध्याह्ने कुजभास्करौ । अपराह्ने चंद्रसितौ संध्याकाले तमःशनी ॥ ५० ॥ अथ ग्रहधातुमाह । भौमार्कौ पित्तमाख्यातौ श्लेष्मकौ चन्द्रभार्गवौ । समधातू गुरुबुधौ ग्रहाः शेषास्तु वातिकाः ॥ ५१ ॥ कटुकौ कुजमादित्यौ क्षाराम्लौ चन्द्रभार्गवौ । बुधः कषायिको जीवो मधुतिक्तौ तमःशनी ॥ ५२ ॥ द्विपदौ भार्गवगुरू भूपुत्रार्कौ चतुष्पदौ । पक्षिणौ बुधसौरी च चंद्रराहू सरीसृपौ ॥ ५३ ॥ विप्रौ शुक्रगुरू क्षत्रं कुजार्कौ शूद्र इंदुजः । इंदुर्वैश्यः स्मृतो म्लेच्छौ सैंहिकेयशनैश्चरौ ॥ ५४ ॥ अथ ग्रहाणां वर्णानाह । भौमो रक्तो गुरुः पीतो बुधो नीलः शशी सितः । कविः शुभ्रो रविर्गौरः कृष्णो राहुः शनिः पुनः ॥ ५५ ॥ रवी राजा शशी राज्ञी मंगलो मंडलाधिपः । ज्ञः कुमारो

गुरुर्मंत्री सितो नेता परौ भृती ॥ ५६ ॥ अथ स्नाय्वादिस्वामित्वमाह ।
स्नायुसत्वगुल्ममज्जासुखानां स्वामिनौ शशिभास्करौ । शोणिताधिपतिर्भौमः शुक्रस्या-
धिपतिर्भृगुः ॥ ५७ ॥ बुधश्चैतन्यबुद्धीनां जीवो जीवाधिपो भवेत् । मनसश्चन्द्रमाः
स्वामी भवेदेषां वपुःस्थितिः ॥ ५८ ॥ ऊर्ध्वदृष्टी कुजादित्यावधोदृष्टी तमःशनी । तिर्यग्
दृष्टी भृगुबुधौ चंद्रजीवौ समेक्षणौ ॥ ५९ ॥ अथ ग्रहाणां राशिभोगः ।
कर्णप्रकाशे—सौरी सुंदरि सार्द्धमब्दयुगलं वर्षं समासं गुरू राहुर्मासदशाष्टकं तु कथितं
मासं सपक्षं कुजः । सूर्यः शुक्रबुधास्त्रयोपि कथिता मासैकतुल्या ग्रहाश्चंद्रः पादयुतं
दिनद्वयमिति प्रोक्तेति राशिस्थितिः ॥ ६० ॥ अथ ग्रहाणां वेधस्थानमाह ।
श्रीपतिः—सर्वे लाभगृहस्थितास्त्रिखरिपुष्वर्कौ मृगार्कौ त्रिषट्प्राप्तौ त्र्याद्यखमन्मथा-
रिषु शशी खास्तारिवर्ज्यं भृगुः । धीधर्मास्तधनेषु वाक्पतिरिरिस्वाष्टांबुखस्थो बुधः
श्रेष्ठो जन्मगृहादिगोचरविधौ विद्धो न चेत्स्याद्ग्रहैः ॥ ६१ ॥ लाभविक्रमखशत्रुषु
स्थितः शोभनो निगदितो दिवाकरः । खेचरैः सुततपोजलांत्यगैर्व्यार्किभिर्यदि न
विध्यते तदा ॥ ६२ ॥ द्यूनजन्मरिपुलाभखत्रिगश्चंद्रमाः शुभफलप्रदस्तदा । स्वात्म-
जांत्यमृतिबंधुधर्मगैर्विध्यते न विबुधैर्यदि ग्रहैः ॥ ६३ ॥ विक्रमायरिपुगः शुभः कुजः
स्यात्तदांत्यसुतधर्मगैः खगैः । चेन्न विद्ध इनसूनुरप्यसौ किंतु धर्मघृणिना न विध्य-
ते ॥ ६४ ॥ स्वांबुशत्रुमृतिखायगः शुभो ज्ञस्तदा न खलु विध्यते तदा । आत्मज-
त्रितय आद्यनैधनप्रांत्यगैर्विविधुभिर्नभश्चरैः ॥ ६५ ॥ स्वायधर्मतनयद्युनस्थितो नाक-
नायकपुरोहितः शुभः । रिःफरंध्रखजलत्रिगैर्यदा विध्यते गगनचारिभिर्न हि ॥ ६६ ॥
आसुताष्टमतपोव्ययायगो विद्ध आस्फुजिदशोभनः स्मृतः । नैधनास्ततनुकर्मधर्म
धीलाभवैरिसहजस्थखेचरैः ॥ ६७ ॥ एवमत्र खचरव्यधान्विताः स्वं फलं नहि
दिशंति गोचरे । वामवेधविधिना त्वशोभना अप्यमी शुभफलं दिशत्यलम् ॥ ६८ ॥
वैद्यनाथः—जन्मभाद्गणदेचंद्रो जन्मभाद्धिको ग्रहः । वामवेधः स विज्ञेयः कथितः
शौनकादिभिः ॥ ६९ ॥ हल्लः—यस्मिन् राशौ गताः खटाः खेटराशिगता ग्रहाः ।
वामवेधः स विज्ञेयो ग्रहः शुभफलो मतः ॥ ७० ॥ श्रीपतिस्तु—ये वदंति खचरव्यध-
क्रमं नो ग्रहक्रमविदो हि गोचरे । ते मृषा वचनभाषिणो जना यांति हास्यमपकी-
र्तिलांछिताः ॥ ७१ ॥ नारदः—न ददाति शुभं किंचिद्गोचरे वेधसंस्थितः । तस्माद्वेधं
विचार्याथ वक्ष्यते तच्छुभाशुभम् ॥ ७२ ॥ नामवेधविधानेन शोभनस्त्वशुभोपि वा ।
इतरतान् द्विविधान् वेधान् विचार्याथ वदेत्फलम् ॥ ७३ ॥ अज्ञात्वा विविधान्
वेधान् यो ग्रहज्ञः फलं वदेत् । स मृषावचनाभाषी हास्यं याति नरैः सदा ॥ ७४ ॥
सौम्येक्षितेनिष्टफलः शुभः स्यात्पापवीक्षितः । निष्फलौ तौ ग्रहौ स्वेन शत्रुणा
यौ निरीक्षितौ ॥ ७५ ॥ नीचराशौ गतो यश्च शत्रोः क्षेत्रगतोपि वा । शुभाशुभ-
फलं नैव दद्यादस्तंगतोपि वा ॥ ७६ ॥ श्रीपतिरपि—असद्ग्रहः सौम्यनिरीक्षितश्च

शुभप्रदः स्यादशुभेक्षितो यः । तौ निष्फलौ द्वावपि खेचरेंद्रौ यः शत्रुणा स्वेन निरीक्षितश्च ॥ ७७ ॥ स्वनीचगेस्तगेपि वा रिपोर्गृहे स्थिते ग्रहे । वृथा फलं प्रकीर्तितं समस्तमेव सूरिभिः ॥ ७८ ॥ राशिप्रवेशे सूर्यारौ मध्ये शुक्रबृहस्पती । प्रांत्यस्थौ शनिशीतांशू फलदः सर्वदा बुधः ॥ ७९ ॥ ज्योतिःप्रकाशे-प्रवेशकाले भौमार्कौ शुक्रज्यौ राशिमध्यगौ । निर्गच्छंतौ शनींदू च सर्वदा फलदो बुधः ॥ ८० ॥ रविर्दिनं पंच कुजस्तथाष्टौ बुधे द्वयं त्रीणि दिनानि शुक्रः । मासं गुरुर्मासचतुष्कमैर्निर्गंतव्यराशौ फलदा भवंति ॥ ८१ ॥ लल्लोपि-सूर्यारसौम्यास्फुजितोक्षनागसप्तद्विघस्त्रान्विधु राशिनाडी । तमोयमेज्यास्त्रिरसाश्विमासान् गंतव्यराशेः फलदाः पुरस्तात् ॥ ८२ ॥ ज्योतिःसागरे-भानुर्ददाति गंतव्यराशौ पंचदिनं फलम् । चन्द्रो नाडीत्रयं भौमो दिनान्यष्टौ बुधो द्वयम् ॥ ८३ ॥ सार्धमासं गुरुः शुक्रश्चतुर्दिनमथार्कजः । मासषट्कं फलं राहुः केतुर्मासत्रयं तथा ॥ ८४ ॥ मुहूर्तकल्पद्रुमे-मेषादिद्वादशं राशिं यत्र जीवो हि तिष्ठति । पूर्वराशिफलं प्रोक्तं अष्टाविंशतिवासराः ॥ ८५ ॥ रत्नकोशे-विलोमगत्या यदि वातिगत्या प्रयाति यो राशिमतीत्य शेषम् । हित्वा तदीयं गगनेचरोसौ दद्यात् फलं पूर्वगृहे यदुक्तम् ॥ ८६ ॥ वक्रातिचारेण गृहांतरेपि स्थितो ग्रहः पूर्वफले यदि स्यात् । देशांतरं कार्यवशाद्गतोपि स्वदेशधर्मं न जहाति मर्त्यः ॥ ८७ ॥ यावंति यो वक्रगतो दिनानि भवेत्स वक्रा यदि वातिचारे । दशांशतुल्यानि फलानि तेषां दद्यात्फलं पूर्वगृहे यदुक्तम् ॥ ८८ ॥ गर्गोपि-भौमादीनां ग्रहाणां हि पंचानामपि नित्यशः । अतिचारे च वक्रे च पूर्वराशिफलं वदेत् ॥ ८९ ॥ संहितासारे-यस्मिन्गृहे स्थितो दीपस्तत्रोद्योतं करोति वै । एवं ग्रहोपि यत्र स्यात्तत्रैव फलदः स्मृतः ॥ ९० ॥ चारातिचारवक्रेण यो यत्रावस्थितो ग्रहः । स तद्राशिफलं दद्याद्गोचरे फलसाधने ॥ ९१ ॥ वसिष्ठमाण्डव्यपराशरात्रिगर्गांगेव्यासकुलस्य वाक्यम् । वक्रातिचारे सुरराजमंत्री यत्रागतस्तत्र फलं ददाति ॥ ९२ ॥ अतिचारे च वक्रे च ग्रहाणांतर्गतं फलम् । बृहस्पतेस्तु तन्नास्ति पूर्वराशिफलप्रदम् ॥ ९३ ॥ फलसंग्रहे-द्विजन्मनि पंचमसप्तमाश्चतुरष्टमद्वादशधर्मयुताः । धनधान्यप्राणहिरण्यहरा रविराहुशनैश्चरभूमिसुताः ॥ ९४ ॥ द्वादशदशमचतुर्थे जन्मनि षष्ठाष्टगे तृतीये च । व्याधिर्विदेशगमनं मित्रविरोधं सुरगुरुः कुरुते ॥ ९५ ॥ तृतीयैकादशे षष्ठे शन्यर्ककुजराहवः । चत्वारस्तस्य राज्यं वा शरीरे सौख्यमादिशत् ॥ ९६ ॥ द्वादशे जन्मगे राशौ द्वितीये च शनैश्चरः । सार्द्धानि सप्तवर्षाणि तदा दुःखैर्युतो भवेत् ॥ ९७ ॥ अथ गोचरे पृथक्फलानि । लल्लः-स्थानं जन्मनि नाशयद्दिनकरः कुर्याद्द्वितीये भयं दुश्चिक्ये श्रियमातनोति हिबुके मानक्षयं यच्छति । दैन्यं पंचमगः करोति रिपुहा षष्ठेर्थहा सप्तमे पीडामष्टमगः करोति पुरुषं कांतिक्षयं धर्मगः ॥ ९८ ॥ कर्मसिद्धिजनकस्तु कर्मगो वित्तलाभकृदथायसंस्थितः । द्रव्यहानिजनितां महापदां यच्छति व्ययगतो

दिवाकरः ॥ ९९ ॥ वाराहीये–जन्मन्यायासदोर्कः क्षपयति विभवान्कोष्ठरोगाध्वदाता वीतभ्रंशं द्वितीये दिशति नच सुख वंचनादृग्रुजं च । स्थानप्राप्तिं तृतीये धननिचयमुदा कल्पकृच्चारिहंता रोगान् धत्ते चतुर्थे जनयति च मुहुः स्रग्धरा भोगविघ्नम् ॥१०० पीडाः स्युः पंचमस्थे सवितरि बहुशो रोगारिजनिताः षष्ठेर्को हंति रोगान् क्षपयति च रिपूंश्छोकांश्च नुदति । अध्वानं सप्तमस्थो जठरगदभय दैन्यं च कुरुते रुक्त्रासौ चाष्टमस्थे भवति सुवदनान् स्वापि वनिता ॥१ ॥ अथ रविफलम् । खावापद्दैन्यं रुगिति नवमे विभवमपि विरोधा जय प्राप्नोत्युग्रं दशमगृहगे कर्मसिद्धिं क्रमेण । जयं स्थानं मानं विभवमपि चैकादशे रोगनाशं सुवृत्तानां चेष्टा भवति सफला द्वादशे नेतरेषाम्॥२॥ अथ रविचक्रम् । श्रीपतिः–मूर्ध्नि त्रीणि मुखे त्रीणि स्कंधे बाहुकरद्वये । वक्षः पचैकनाभौ च गुह्येकं जानुनोर्द्वयम् ॥३॥ चरणे द्वे षट्कऋक्षाणि सूर्यभाद्गणयेत्क्रमात् ॥ ४ ॥ मूर्ध्नि श्रीवदने तु मिष्टमशनं स्कंधे धनं स्वामिता बाह्वोर्बाहुबलं तथा करयुगे चौर्यं हृदि स्वं बहु । नाभ्यामल्पतरेण रुष्यति परस्त्रीसंगमो गुह्यके जानुस्थे रविभे विदेशगमनं पादे मितं जीवनम् ॥ ५ ॥ लल्लः–यस्मिन्नृक्षे भवेत्सूर्यस्तत्रादौ त्रीणि मस्तके । त्रीणि वक्त्रे प्रदातव्या एकैकं स्कंधयोर्द्वयोः ॥ ६ ॥ एकैकं बाहुयुग्मे तु एकैकं तु करद्वयोः । हृदये पंच ऋक्षाणि नाभावेकं विनिर्दिशेत् ॥ ७ ॥ गुह्ये चैकं प्रदातव्यं एकैकं जानुयुग्मके । शेषाणि षट्कऋक्षाणि पादयोर्विनियोजयेत् ॥ ८ ॥ मस्तके राजसन्मानं मुखे मिष्टान्नभोजनम् । स्कंधे स्कंधधरो ज्ञेयो स्थानभ्रंशो भुजे भवेत् ॥ ९ ॥ हस्तयोस्तस्करो धूर्तो लक्ष्मीवान्हृदये स्मृतः । नाभौ संतोषवान्धीरो गुह्ये स्यात्पारदारिकः । जान्वोर्विदेशगमनं अल्पायुः पादयोर्भवेत् ॥ ११० ॥ अथ चंद्रफलम् । लल्लः–जन्मन्यन्नं दिशतु हिमगुर्वित्तनाशं द्वितीये दद्याद्द्रव्यं सहजभवने कुक्षिरोगं चतुर्थे । कार्यभ्रंशं तनयगृहगे वित्तलाभं च षष्ठे द्यूने द्रव्यं युवतिसहिते मृत्युसंस्थेल्पमृत्युः ॥ ११ ॥ नृपभयं कुरुते नवमः शशी दशमधामततस्तु महत्सुखम् । विविधमायगतः कुरुते धनं व्ययगतश्च रुजश्च धनक्षयम् ॥ १२ ॥ वाराहसंहितायाम्–शशी जन्मन्यन्नप्रव शयनाच्छादनकरो द्वितीये मानार्थौ ग्लपयति सविघ्नश्च भवति । तृतीये वस्त्रस्त्रीधननिचयसौख्यानि लभते चतुर्थे विश्वासः शिखरिणभुजंगेन सदृशः ॥ १३ ॥ दैन्यं व्याधिं शुचमपि शशी पंचमे मार्गविघ्नं षष्ठे वित्तं जनयति सुखं शत्रुरोगक्षयं च । यानं मानं शयनमशनं सप्तमे वित्तलाभं मंदाक्रांतिं फणिनि हिमगौ चाष्टमे भीर्नरस्य ॥ १४ ॥ नवमगृहगो बंधोद्वेगं श्रमोदररोगकृद्दशमभवने चाज्ञाकर्मप्रसिद्धकरः शशी । उपचयसुहृत्संयोगार्थप्रमोदसुपांत्यगो वृषभचरितान् दोषानंते करोति हि स व्ययान् ॥१५॥ अथ चंद्रचक्रम् । गर्गः–एकं मुखे भषद् शीर्षे त्रीणि दक्षिणहस्तके । हृदि षट् वामहस्ते त्रिः कुक्षौ षद् पादयोर्द्वयम् ॥ १६ ॥ वदने हरते द्रव्यं शीर्षे राज्यादिलाभदम् । हानिस्तु दक्षिणे

हस्ते हृदये स्त्रीसमागमः ॥ १७ ॥ वामहस्ते रोगभयं कुक्षौ सौख्यं जयं तथा । पादौ हानिर्भ्रमश्चैव चंद्रचक्रफलं स्मृतम् ॥ १८ ॥ लल्लः-षण्मुखे षट् पृष्ठे च षट् बाह्वोर्गुह्यके त्रयः । त्रीणि पादौ त्रीणि कंठे कर्तव्यं गणकोत्तमैः ॥ १९ ॥ राकादिनस्थनक्षत्राद्गणकैर्गणयेत्सदा । यावच्च जन्मनक्षत्रं फलं ज्ञेयं क्रमेण च ॥ १२० ॥ मुखे स्वस्थानहानिः स्याद्धनलाभो हि पृष्ठके । हस्तद्वयेऽर्थलाभः स्याद्गुह्ये च स्त्रीसुखं भवेत् ॥ २१ ॥ पादाभ्यां भ्रमणं देशे कंठे सर्वसुखी भवेत् ॥ २२ ॥ अथ भौमफलम् । प्रथमगृहगः क्षोणीसूनुः करोत्यरिजं भयं क्षपयति धनं वित्तस्थाने तृतीयगतोऽर्थदः । अरिभयकरः पाताले द्रव्यं क्षिणोति च पंचमे रिपुगृहगतः कुर्याद्विजं रुजं सदनस्थितः ॥२३॥ जनयति निधनस्थः शत्रुबाधा धराजो दिशति नवमसंस्थः कायपीडामतीव । शुभमपि दशमस्थो लाभगो भूरिलाभं व्ययभवनगतोसौ व्याधिमर्थस्य नाशम् ॥ २४ ॥ वाराहीये-कुजेभिघातः प्रथमे द्वितीये नरेंद्रपीडा कलहादिदोषैः । भृशं च पित्तानलरोगचौरैः कृपेंद्रवज्रप्रतिमोपि यः स्यात् ॥ २५ ॥ तृतीयगश्चौरकुमारकेभ्यो भौमः सकाशात्फलमादधाति । प्रदीप्तिमाज्ञां धनमौर्णिकानि धात्वाकराख्यानि किलापराणि ॥ २६ ॥ भवति धरणिजे चतुर्थगे ज्वरजठरगदासृगुद्भवः । कुपुरुषजनिताच्च संगमात्प्रसभमपि करोति चाशुभम् ॥ २७ ॥ रिपुगदकोपभयानि पंचमे तनयकृताश्च शुचो महीसुते । द्युतिरपि नास्य चिरं भवेत्स्थिरा शिरसि कपेरिव मालतीकृता ॥ २८ ॥ रिपुभयकलहैर्विवर्जितः सकनकविद्रुमताम्रकागमः । रिपुभवनमहीसुते किमपरवक्त्रविकारमीक्षते ॥ २९ ॥ कलत्रकलहाक्षिरुग्जठररोगकृत्सप्तमे क्षररक्षतजरूषितः क्षपितवित्तमानोऽष्टमे । कुजे नवमसंस्थिते परिभवार्थनाशादिभिर्विलंबितगतिर्भवत्यबलदेहधातुक्रमैः ॥ १३० ॥ दशमगृहगते समं महीजे विविधधनाप्तिरुपांत्यगे जयश्च । जनपदमुपरि स्थितश्च भुंक्ते वनमिव षट्चरणाः सुपुष्पिताग्रम् ॥ ३१ ॥ नानाव्ययैर्द्वादशगे महीसुते संताप्यतेऽनर्थशतैश्च मानवः । स्त्रीकोपविरैश्च सनेत्रवेदनैर्योपींद्रवंशाभिजनेन गर्वितः ॥ ३२ ॥ अथ भौमचक्रम् । लल्लोपि-यस्मिन्नृक्षे भवेद्भौमः ततस्त्रीणि मुखे न्यसेत् । नेत्रे त्रीणि त्रीणि शीर्षे बाह्वोर्द्वौ चापि संन्यसेत् ॥ ३३ ॥ कंठे द्वे हृदये पंच गुह्ये त्रीणि चतुष्पदे । मुखे रोगो धनं नेत्रे यशो मूर्ध्नि धनं हृदि ॥ ३४ ॥ कंठे हिक्का स्त्रियो गुह्ये पादे देशांतरभ्रमः । वामबाहौ भवेद्रोगो दक्षिणे शोकमेव च । भौमभादात्मभं यावद्गणनीयमनुक्रमात् ॥ ३५ ॥ गर्गस्तु- भौमर्क्षात्त्रितयं मुखे शिरसि वा चत्वारि बाह्वोश्चतुः कंठे द्वौ हृदये च पंच गदितं गुह्ये त्रयं निर्दिशेत् । षट्पादद्वितयेऽथ मिष्टमशनं चास्ये तु राज्यं शिरे हिक्का कंठगते धनं हृदिगते स्त्रीसंगमं गुह्यके ॥ ३६ ॥ वामे हस्ते रोगमृत्युर्दक्षिणे तु जयं शुभम् । देशांतरे गतिः पादे भौमचक्रे फलं वदेत् ॥ ३७ ॥ अथ बुधफलम् । बुधः प्रथमधामगो दिशति बंधमर्थं धने धन रिपुभयान्वितं सहजजश्चतुर्थेऽर्थदः । अनिर्वृतिकरो भवेत्तनयगोरिगः स्थानदः करोति मदनास्थितो बहुविधां शरीरापदाम् ॥ ३८ ॥

अष्टमे शशिसुतो धनवृद्धिं धर्मगस्तु महतीं धनपीडाम् । कर्मगः सुखमुपांत्यगतोर्थं द्वादशे भवति वित्तविनाशम् ॥ ३९ ॥ वाराहस्तु-दुष्टवाक्यपिशुनाहितभेदैर्बाधवैः सकलैश्च हृतस्वः । जन्मगे शशिसुते पथि गच्छन् स्वागतेपि कुशलं न शृणोति ॥ ॥ १४० ॥ परिभवो धनगते धनलब्धिः सहजगे शशिसुते सुहृदाप्तिः । नृपतिशत्रुभयशंकितचित्तो द्रुतपदं व्रजति दुश्चरितैः स्वैः ॥ ४१ ॥ चतुर्थगे स्वजनकुटुंबवृद्ध्यो धनागमो भवति च शीतरश्मिजे । सुतस्थिते तनयकलत्रविग्रहे निषेवते नच रुचिरामपि स्त्रियम् ॥ ४२ ॥ सौभाग्यं विजयमथोन्नतं च षष्ठे वैकल्यं कलहमतीव सप्तमे ज्ञः । मृत्युस्थे सुतजयवस्त्रवित्तलाभनपुण्यं भवति मतिप्रहर्षिणयिम् ॥ ४३ ॥ विघ्नकरो नवमः शशिपुत्रः कर्मगतो रिपुहा धनदश्च । सप्रमदं शयन च विधत्ते तद्गृहदोथ कथास्तरणं च ॥ ४४ ॥ धनसुखसुतयोषिन्मित्रवाह्याप्तितुष्टिस्तुहिनकिरणपुत्रे लाभगे मृष्टवाक्यः । रिपुपरिभवरोगैः पीडितो द्वादशस्थे न सहति परिभोक्तुं मालिनीयोगसौख्यम् ॥ ४५ ॥ अथ बुधचक्रम् । लल्लः-बुधचक्रं प्रवक्ष्यामि पुरुषाकारमुत्तमम् । त्रीणि शीर्षे च धिष्ण्यानि विद्याप्राप्तिं करोति वै ॥ ४६ ॥ मुखे त्रीणि बलप्राप्तिर्वामपादे चतुष्टयम् । चत्वारि दक्षिणे हस्ते सुखवृद्धिं च लाभदः ॥४७॥ हृदये पंच लाभाय द्वयं गुह्ये तु रोगदम् । त्रीणि दक्षिणपादे च त्रीणि स्युर्वामपादके ॥ ४८ ॥ स्थानभ्रंशो रुजा पीडा कलहः स्वजनैः सह । देहस्थबुधमाहात्म्यं कथितं पूर्वसूरिभिः ॥ ४९ ॥ अथ गुरुफलम् । भय जन्मन्यर्थो जनयति धने चार्थमतुलं तृतीयेंगक्लेशं दिशति च चतुर्थेर्थविलयम् । सुखं पुत्रस्थाने रुजमपि च कुर्याद्रिगृहे धनस्याप्तिं द्यूने धननिचयनाशं च निधने ॥ १५० ॥ धर्मगतो धनवृद्धिकरः स्यात्प्रीतिहरो दशमेमरपूज्यः । स्थानधनानि ददाति स चाये द्वादशगस्तनुमानमपीडाम् ॥ ५१ ॥ वाराहीसंहितायाम्-जीवे जन्मन्यपगतधनधीः स्थानभ्रष्टो बहुकलहयुतः । प्राप्यार्थेर्थान् मुनिरपि कुरुते कांतास्याब्जे भ्रमरविलसितम् ॥ ५२ ॥ स्थानभ्रंशात्कार्यविघाताच्च तृतीयेऽनेकैः क्लेशैर्बंधुजनोत्थैश्च चतुर्थे । जीवे शांतिं पीडितचित्तश्च स विंदेन्नैव ग्रामे वापि वने मत्तमयूरे ॥ ५३ ॥ जनयति च तनयभवनमुपगतः परिजनशुभसुतकरितुरगवृषान् । सकनकपुरगृहयुवतिवसनकृन्मणिगुणनिकरकृदपि विबुधगुरुः ॥ ५४ ॥ न सखीवदनं तिलकोज्वलं न भवनं शिखिकोकिलनादितम् । हरिणाप्लुतशावविचित्रितं रिपुगते मनसः सुखदं गुरौ ॥ ५५ ॥ त्रिदशगुरुः शयन रतिभोगं धनशमनं कुसुमान्युपवाह्यम् । जनयति सप्तमराशिमुपेतो ललितपदां च गिरां धिषणां च ॥ ५६ ॥ बंधं व्याधिं चाष्टमे शोकमुग्रं मार्गक्लेशं मृत्युतुल्यांश्च रोगान् । नैपुण्याज्ज्ञा पुत्रकर्मार्थसिद्धिं धर्मे जीवः शालिनीनां च लाभः ॥ ५७ ॥ स्थानकल्पधनदा दशमर्क्षगस्तत्प्रदो भवति लाभगो गुरुः । द्वादशे ध्वनिविलोमदुःखभाग्याति यद्यपि नरो रथोद्धतः ॥ ५८ ॥ अथ गुरुचक्रम् । गर्गोपि-शीर्षे चत्वारि राज्यं युगपरिगणितं

सव्यहस्ते च लक्ष्मीः कंठे चैकं विभूतिर्मदनशरमितं वक्षसि प्रीतिलाभम्। षड्भिः पीडांघ्रियुग्मे जलधिपरिमितं वामहस्ते च मृत्युनत्रेभौ त्रीणि दद्यान्नृपतिसमसुखं वाक्पतेश्चक्रमेतत् ॥ ५९ ॥ अथ शुक्रफलम्। श्रीपतिः—जन्मन्यरिक्षयकरो भृगुजोर्थदोर्थे दुश्चिक्यगः सुखकरो धनदश्चतुर्थे। स्यात्पुत्रकृत्तनयगोरिगतोरिवृद्धिं शोकप्रदो मदनगो निधनेर्थदाता ॥ १६० ॥ जनयति विविधांबराणि धर्मे न सुखकरो दशमास्थितस्तु शुक्रः। धननिचयकरः स लाभसंस्थो व्ययभवने च गतोपि द्रव्यनाशम् ॥ ६१ ॥ वाराहीये—प्रथमगृहोपगो भृगुसुतः स्मरोपकरणैः सुरभिमनोज्ञगंधकुसुमांबरैरुपचयम्। शयनगृहासनाशनयुतः स चानुकुरुते समदविलासिनी मुखसरोजषट्चरणताम् ॥ ६२॥ शुक्रे द्वितीयगृहगे प्रसवार्थधान्यभूपालसन्नतिकुटुंबहितान्यवाप्य । ससेवते कुसुमरत्नविभूषितश्च काम वसंततिलकद्युतिमूर्धजोपि ॥ ६३ ॥ आज्ञार्थमानास्पदभूतवित्तशत्रुक्षयान्दैत्यगुरुस्तृतीये। धत्ते चतुर्थश्च सुहृत्समाजमुपेंद्रवज्रप्रतिमां च शक्तिम् ॥ ६४ ॥ जनयाति शुक्रः पंचमसंस्थो गुरुपरितोषं बंधुजनाप्तिम्। सुतधनलब्धि मित्रसहायान् नवासिततत्वं चारिबलेषु ॥ ६५ ॥ षष्ठो भृगुः परिभवरोगतापदः स्त्रीहेतुकं जनयाति सप्तमोऽशुभम्। यातोष्टमं भवनपरिच्छदप्रदो लक्ष्मीवतीमुपनयाति स्त्रियं च सः ॥ ६६ ॥ नवमे तु धर्मवनितासुखभाग्भृगुजेऽर्थवस्त्रनिचयश्च भवेत्। दशमेऽवमानकलहान् नियमात्प्रमिताक्षराण्यपि वदन् च लभते ॥ ६७ ॥ उपांत्यगो भृगोः सुतः सुहृद्धनान्नगंधदो धनांबरागमोंत्यगे स्थिरस्तु नांबरागमः ॥ ६८ ॥ अथ शुक्रचक्रम्। श्रीपतिः-चत्वारि मस्तके राज्यं कंठे चत्वारि भूषणम्। हृदये पंच सौभाग्यं गुह्ये त्रीणि रिपोर्भयम्॥६९॥ जंघायां पंच मिष्टान्नं पादयोः षट् सुखं धनम्। शुक्रस्य पुरुषाकारे फलं प्रोक्तं विचक्षणैः ॥ १७० ॥ लल्लः—शुक्रचक्रं प्रवक्ष्यामि नररूपेण संस्थितम्। धननाशो मुखे त्रीणि पंच शीर्षे च लाभदः ॥ ७१ ॥ त्रीण्येव दक्षिणे पादे हानिः क्लेशकरः स्मृतः। तत्फलं वामपादे च त्रीणि धिष्ण्यानि विन्यसेत ॥ ७२ ॥ हृदये पंचभिः सौख्यं करयोश्च चतुश्चतुः। मित्रपुत्रसुखप्राप्तिं करोति भृगुजो ध्रुवम् ॥ ७३ ॥ अथ शनिफलम्। चित्तभ्रंशं दिनकरसुतो जन्मराशिं प्रपन्नो वित्ते संस्थो धनहरणकृद्वित्तलाभं तृतीये। पाताले शत्रुवृद्धिं सुतभवनगतः पुत्रभृत्यार्थनाशं षष्ठस्थानेर्थलाभं जनयाति मदने दोषसंघातिमार्किः ॥ ७४ ॥ शरीरपीडां निधने च धर्मे धनक्षयं कर्मणि दौर्मनस्यम्। उपांत्यगो वित्तमनर्थमन्त्यं शनिर्ददातीत्थमिदं हि गोचरे ॥ ७५ ॥ वाराहस्तु—प्रथमे रविजे विषवह्निहतः स्वजनैर्वियुतः कृतबंधुवधः । परदेशमुपेत्य सुहृद्भवनो विसुखार्तसुतोटकदीनमुखः ॥ ७६ ॥ चारवशाद्द्वितीयगृहगे रवितनये रूपसुखापवर्जिततनुर्विगतमदबलः। अन्यगुणैः कृतं वसुचयं तदपि खलु भवत्याधिवंशपत्रपतितं न बहु न च चिरम् ॥ ७७ ॥ सूर्यसुते तृतीयगृहगे धनानि लभते दासपरिच्छ-

दोष्ट्रगर्दिषाश्वकुंजरखरान् । सद्मविभूतिसौख्यममितगदव्युपरमं भीरुरपि प्रशास्त्यधिरिपूंश्च वीरललितैः ॥ ७८ ॥ चतुर्थे गृहं सूर्यपुत्रेभ्युपेते सुहृद्वित्तभार्यादिभिर्विप्रयुक्तः । भवत्यस्य सर्वत्र चासाधुदुष्टं भुजंगमयातानुकार च चित्तम् ॥ ७९ ॥ सुतधनपरिहीनः पंचमस्थे प्रचुरकलहयुक्तश्चार्कपुत्रे । विनिहतरिपुरोगः षष्ठयाते पिबति च वनितास्यं श्रीपुटोष्ठम् ॥ १८० ॥ गच्छत्यध्वानं सप्तमे चाष्टमे च हीनः स्त्रीपुत्रैः सूर्यजे दीनचेष्टः । तद्वद्धर्मस्थे वैरहृद्रोगबंधैर्धर्मोप्युच्छिद्येद्दैश्वदेवीक्रियाद्याः ॥ ८१ ॥ कर्मप्राप्तिर्दशमेर्थक्षयश्च विद्याकीर्त्योः परिहानिश्च सौरे । तैक्ष्ण्यं लाभे, परयोषार्थलाभश्चांत्ये प्राप्नोत्यपि शोकोर्मिमालाम् ॥ ८२ ॥ अथ शनिपादः । विशेषोयं चूडामणौ--जन्मे रसे रुद्रसुवर्णपादे द्विपंचनंदा रजतं शुभं च । त्रिसप्तदिक्षु ताम्रपद वदंति वेदाष्टरिःफे खलु लोहपादम् ॥ ८३ ॥ अथ शनिवाहनम् । जन्मर्क्षाद्दृष्टिनक्षत्रसंख्यानंदैर्विभाजयेत् । शेषांकैर्वाहनं ज्ञेयं यस्मिन्नुक्तं शुभाशुभम् ॥ ८४ ॥ गर्दभस्तु हयो हस्ती मेषजंबुकसिंहकाः । काको मयूरो हंसश्च नवैते वाहनाः स्मृताः ॥८५॥ तिथिवारं च नक्षत्रं नामाक्षरसमान्वितम् । नवभिस्तु हरेद्भाग शेषं वाहनमुच्यते ॥ ८६ ॥ गर्दभो वाजिनो, हस्ती मेषो जंबुकसिंहयोः । काको मयूरो हंसश्च नवैते शनिवाहनाः ॥ ८७ ॥ गर्दभे च महादुःखं वाजिनं सुखसंपदा । हस्ती मिष्टान्नभोक्तव्यं मेषो विमुखजायते ॥ ८८ ॥ जंबुके मरण ज्ञेयं मयूरार्थसुखप्रदम् । हंसाच्च लभते लाभं वाहनानां फलं त्विदम् ॥ ८९ ॥ श्रीपतिः--एवं मंदर्क्षमास्ये सुखमथ युगलं व्याधिकृद्गुह्यसंस्थं युग्मं दृष्टचोरभीष्टं वितराति शिरसि त्रीणि साम्राज्यदानि । पंचारोग्याय कुक्षेर्जलधिपरिमितिर्वामपाणौ षडंघ्रिर्दुःखं क्लेशोपलब्धौ जलधिमिति करे दक्षिणे मंगलेत्यैः ॥ १९० ॥ अथ शनिचक्रम् । लल्लोपि--मुखाद्गुह्ये ततो नेत्रे शीर्षे वामकरे हृदि । वामांघ्रौ दक्षिणे पादे दक्षहस्ते शनिर्गतिः ॥ ९१ ॥ वक्रे संतापमेकं प्रचुरतरधनं दक्षिणे हस्तविघात् पादौ दद्याच्च षड्भिः परवदनवशं वामहस्ते च मृत्युः । पंचोरस्यैव धार्ये बहुधनसुखदं त्रीणि शीर्षे च राज्यं नेत्रे युग्मे द्वयोर्वा गुदयुगुलमृतिः सौरिचक्रे प्रदिष्टम् ॥ ९२ ॥ अन्योपि--यस्मिन् शनिश्चरति वक्रगतं ततश्च चत्वारि दक्षिणकरेंघ्रियुगेभषट्कम् ॥ चत्वारि वामकरगोप्युदरे पंच मूर्ध्नि त्रयं नयनयोर्द्वितयं गुदे च ॥९३॥ रोगो लाभं तथा ध्वानमधनं लाभमेव च । सौभाग्यमल्पमृत्युश्च शनेः प्रोक्तं क्रमात्फलम् ॥ ९४ ॥ अथ राहुफलम् । श्रीपतिः--राहुर्जन्मगतो भयं च कलहं सौभाग्यमानक्षयं चित्तभ्रंशमहत्सुखं नृपभयं चार्थक्षयं यच्छाति । संतापं कलहं च वित्तमधिक शीघ्रं विनाशं नृणां केतुस्तत्फलमेव राशिषु वदेच्छंसंति गर्गादयः ॥ ९५ ॥ अथ राहुचक्रम् । सारोद्धारे--यस्मिन्नृक्षे भवेद्राहुस्तत्राद्याः सप्त पादयोः । दक्षिणे तु भुजे पंच शिरसि त्रीणि दापयेत् ॥ ९६ ॥ द्वे ऋक्षे हृदये न्यस्य मुखे चैकं न्यसेद्बुधः । पंच वामकरे ज्ञेये ऋक्षमेकं तु नाभिषु ॥ ९७ ॥ तथा च त्रीणि गुह्येषु राहुचक्रे महाफलम् ।

धनहानिर्भवेत्पादे संतापं दक्षिणे करे ॥ ९८ ॥ शीर्षे शत्रुजयं विद्यात् हृदये दुर्जनप्रियम् । मुखे दुर्जनसंहारं मृत्युर्वामकरे भवेत् ॥ ९९ ॥ गुह्ये तु सर्वनाशाय विचार्यैव फलं वदेत् ॥ २०० ॥ गर्गोपि-चक्रे त्रीणि विधुंतुदो गदभयं चत्वारि कंठे धनं नेत्रे द्वौ सुखदोपि राज्यसुखदं पंचर्क्षकं मस्तके । रोगी मृत्युभयं द्वयं तु करयोश्चत्वारि पादद्वये चत्वार्येव सुखं हृदि त्रिनिधनं गुह्ये द्वयं बंधनम् ॥ १ ॥ अथ केतुफलम् । श्रीपतिः-रोगं वैरं सुखं भीतिः शुचं वित्तगतिं गदम् । पापं शोकगदं वैरं जन्मभात्कुरुते शिखी । यस्मिन्नृक्षे स्थितः केतुस्तदादि फलमादिशेत् ॥ २ ॥ अथ केतुचक्रम् । नेत्रे द्वौ रोगशोकाय पंचास्ये लाभदायकः ॥ ३ ॥ शीर्षे त्रीणि च धिष्ण्यानि राजसन्मानदायकः । चत्वारि करयोः केतुर्यशोलाभसुखप्रदः ॥ ४ ॥ पादौ चत्वारि धिष्ण्यानि भ्रमणोद्वेगकारकः । हृदये पंच धिष्ण्यानि कलहं स्वजनैः सह ॥ ५ ॥ कुक्षौ चत्वारि भानीह भयरोगमृतिप्रदः । गोचरे यो ग्रहोनिष्टस्तस्य चक्रफलं शुभम् । यदि स्यात्समता ज्ञेया शुभे द्वंद्वे शुभं वदेत् ॥ ६ ॥ अथ ग्रहाणां दोषशान्त्यर्थं स्नानौषधयः । श्रीपतिः-मनःशिलैलासुरदारुकुंकुमैरुशीरज्येष्ठीमधुपद्मकान्वितैः । सताम्रपुष्पैर्विषमास्थिते रवौ शुभावहं स्नानमुदाहृतं बुधैः ॥ ७ ॥ पंचगव्यगजदानमिश्रितैः शंखशुक्तिकुमुदस्फटिकैश्च । शीतरश्मिकृतवैकृतहंति स्नानमेतदुदितं नृपतीनाम् ॥ ८ ॥ बिल्वचंदनबलारुणपुष्पैर्हिंगुलूकफलिनीबकुलैश्च । स्नानमाङ्गिरिह मांसियुताभिर्भौमदोषविनिवारणमाहुः ॥ ९ ॥ गोमयाक्षतफलैः सरोचनैः क्षौद्रशुक्तिभवमूलहेमभिः । स्नानमुक्तमिदमत्र भूभृतां बोधनाशुभनिवारणं बुधैः ॥ २१० ॥ मालतीकुसुमशुभ्रसर्षपैः पल्लवैश्च मदयंतिकोद्भवैः । मिश्रमंबुमधुकेन च स्फुटं वैकृतं गुरुकृतं निकृंतति ॥ ११ ॥ एलया च शिलया समन्वितैर्वारिभिः सफलमूलकुंकुमैः । स्नानतो भृगुसुतोपपादितं दुःखमेति विलयं न संशयः ॥ १२ ॥ असिततिलांजनलोध्रबलाभिः शतकुसुमाघनलाजयुताभिः । रवितनये कथितं विषमस्थे दुरितहृदाप्लवनं मुनिमुख्यैः ॥ १३ ॥ विन्ध्यस्य माहिषं शृंगं हरितालं मनःशिलाम् । गुग्गुलं चांबुसंयुक्तं स्नानं राहुप्रशांतये ॥ १४ ॥ लोध्रदर्भतिलपत्रजमुस्ताहस्तिदानमृगनाभिपयोभिः । स्नानमुक्तमिदमध्यमराहोः साजमूत्रमिदमेव च केतोः ॥ १५ ॥ ज्योतिःप्रकाशे-सिद्धार्थलोध्ररजनीद्वयभद्रमुस्ता चांद्रं रजः सफलिनीसुरमाविमिश्रैः । स्नानं कुरुष्व ग्रहदोषनिवारणाय सर्वे ग्रहा दिनकरप्रमुखाः शुभाः स्युः ॥ १६ ॥ सदौषधैर्याति गदा विनाशं यथा यथा दुःखभयानि मंत्रैः । तथोदितस्नानविधानतापग्रहाशुभं नाशमुपेत्यवश्यम् ॥ १७ ॥ तदन्यः-लाजाकुष्टबलामिश्रं प्रियंगुघनसर्षपैः । देवदारुहरिद्राभिः पुंखालोध्रेण संयुतः ॥ १८ ॥ वारिभिः स्नानमुक्तं हि प्रोक्तं दानपुरस्सरम् । एतत्सामान्यतः सर्वग्रहपीडोपशांतये ॥ १९ ॥ यथा सिद्धौषधै रोगा नश्येयुर्मंत्रतो भयम् । तथा स्नानविधानेन ग्रहदोषः प्रणश्यति ॥२२०॥ अथ सूर्या-

दीनां दानानि । ज्योतिर्निबंधे-कौसुंभवस्त्रं गुडहेमताम्रं माणिक्यगोधूमहिरण्यपद्मम् । सवत्सगोदानमिति प्रणीतं दुष्टाय सूर्याय मसूरिकाश्च ॥२१॥ घृतकलशं सितवस्त्रं दधि शंखमौक्तिकं सुवर्णं च । रजतं च शंखं दद्याच्चन्द्रारिष्टोपशांतये ॥ २२ ॥ प्रवालगोधूममसूरिकाश्च वृषश्च ताम्रः करवीरपुष्पम् । आरक्तवस्त्रं गुडहेमताम्र दुष्टाय भौमाय सचंदनं वा ॥ २३ ॥ नीलं वस्त्रं मुद्गदानं बुधाय रत्नं दद्याद्दासिका हेम सर्पिः । कांस्यं दंतः कुंजरस्याथ मेषो रौप्यं सर्वं पुष्पजात्यादिकं च ॥ २४ ॥ अश्वः सुवर्णं शुभपीतवस्त्रं सपीतधान्यं लवणं च पुष्पम् । सशर्करं तद्रजनीप्रयुक्तं दुष्टाय शान्त्यै गुरवे प्रणीतम् ॥ २५ ॥ चित्रवस्त्रमिह दानवार्चिते दुष्टगे मुनिवरैः परिणीतम् । तंदुलं घृतसुवर्णरूपकं वज्रकं परिमलो धवलोऽश्वः ॥ २६ ॥ नीलकं महिषी वस्त्रं कृष्णलोहसदक्षिणम् । तैलमाषकुलित्थाश्च शनिरिष्टप्रशांतये ॥ २७ ॥ राहोर्दानं बुधैर्मेषो गोमेदं शस्त्रकंबलम् । सौवर्णं नागरूपं च सतिलं ताम्रभाजनम् ॥ २८ ॥ केतोर्वैदूर्यममलं तैलं मृगमदस्तथा । ऊर्णा तिलाश्च धान्यैकं महाजःक्लेशशांतये ॥ २९ ॥ अमृतकुंभग्रंथे-वस्त्रं धेनुः पाटला तोयकुंभः कांस्यं पात्रं वाज्यपूर्णं रथश्च । व्रीहिद्राज्या हेममाणिक्यमेतद्दानं प्रोक्तं प्रीतये भास्करस्य ॥ २३० ॥ शंखो रौप्यमयः शशी च कलशो दुग्धप्रपूर्णस्तथा स्थाली कांस्यमयी च मौक्तिकफलं श्रीखंडकं तंदुलाः । कर्पूरं च सितांबरं च कुमुदं त्वाज्याहिका स्फाटिकं खेलाचेक्षुविदं सदा निगदितं दानं शशिप्रीतये ॥ ३१ ॥ रक्तोनड्वान् विद्रुमं रक्तवस्त्रं रक्तं धान्यं ताम्रपात्रं गुडश्च । लाक्षा रक्तं चंदनं चाज्यकुंभं पूगान्येतद्दानमुक्तं कुजस्य ॥ ३२ ॥ शोणं वस्त्रं नीलवस्त्रं च धान्यं नीलं रक्तं हेम गोरोचनं च । नारंगीनि स्वस्वकाले फलानि चैतद्दानं प्रीतये स्याद्बुधस्य ॥ ३३ ॥ पीतं दुकूलमथ कंबलकं च पीतं धान्यं हिरण्यहरितालहरिद्रकाश्च । जंबीरकं त्वपि च पीतफलानि वंशपात्रं त्विदं ननु बृहस्पतिदानमुक्तम् ॥ ३४ ॥ अश्वः श्वेतः श्वेतधान्यं च वस्त्रं श्वेतं रूप्यं बीजपूरं फलं च । कर्पूरं च श्वेतगंधं च पुष्पं शुक्रस्योक्तं प्रीतये दानमेतत् ॥ ३५ ॥ कृष्णां धेनुं वृषभमपि तिलानंजनं तैलकुंभं कृष्णं रत्नं त्रपु च महिषीं कृष्णधान्यांबराणि । तीव्रं द्रव्यं समरिचलवंगादिकं गुग्गुलं च दद्याल्लाहं फलमपि शनिप्रीतये चोक्तमेतत् ॥ ३६ ॥ शूर्पं खड्गसुवर्णनागसहितं धान्यैः फलैः सप्तभिः कूष्मांडं तिलतंदुलाश्च लवणं कस्तूरिकां सर्षपान् । नालीकेरमुपानहौ शुभमणिं गोमेदकं शय्यकां दद्याच्छीशककृष्णधान्यवसनं राहुग्रहप्रीतये ॥ ३७ ॥ मेषश्च चित्रवसनं त्वथ माषदाली वैदूर्यरत्नमपि कर्बुरकंबलश्च । कार्पासदाडिमफलानि सुगंधतैलमेरंडकाश्च कथितं त्विति केतुदानम् ॥ ३८ ॥ अथ दानकालः । बृहस्पतिः-यमभे कुजवारस्थे चतुर्दश्यष्टमीयुते । कृष्णे पापोदये कुर्याद्दुष्टग्रहविवर्जनम् ॥ ३९ ॥ सूर्यादिकानां यद्दानं जपहोमार्चनादिकम् । तेषां वारे प्रकुर्वीत संतुष्टास्ते भवंति हि ॥ २४० ॥ अथ

मुद्रिकाः । श्रीपतिः–माणिक्यं तरणेः सुजात्यममलं मुक्ताफलं शीतगोर्माहेयस्य च विद्रुमं मरकतं सौम्यस्य गारुत्मतम् । देवेज्यस्य च पुष्पराजमसुराचार्यस्य वज्रं शने- र्नीलं निर्मलमन्ययोश्च गदिते गोमेदवैदूर्यके ॥ ४१ ॥ स्मृतिः–तारताम्रसुवर्णानामर्क- षोडशखेंदुभिः । त्रिभिस्तु वेष्टिता मुद्रा तीव्रदारिद्र्यनाशिनी ॥ ४२ ॥ अथ त्रिशु- क्तिमुद्रिकाः । धार्यं तुष्टचै विद्रुमं भौमभान्वो रौप्यं शुक्रेंद्वोश्च हेमेंदुजस्य । मुक्ता- सूरेर्लोहमर्कात्मजस्य राजावर्तः कीर्तितः शेषयोश्च ॥ ४३ ॥ धेनुः शंखोरुणरुचिवृषः कांचनं पीतवस्त्रं श्वेतश्चाश्वः सुरभिरसिता कृष्णलोहं महाजः । सूर्यादीनां मुनिभिरु- दिता दक्षिणास्तु ग्रहाणां स्नानैर्दानैर्हवनबलिभिस्तेत्र तुष्यंति यस्मात्॥४४॥अथ ग्रह- स्थापनम् । स्मृतिरत्नावल्याम्–मध्ये तु भास्करं विद्याच्छशिनं पूर्वदक्षिणे । दक्षिणे लोहितं विद्याद्बुधमीशानकोणके ॥ ४५ ॥ गुरुमुत्तरतः स्थाप्य पूर्वस्यां दिशि भार्गवः। पश्चिमे तु शनिः स्थाप्यो राहुर्दक्षिणपश्चिमे ॥ ४६ ॥ पश्चिमोत्तरतः केतुग्रहाणां स्थापनं स्मृतम् ॥ ४७ ॥ अथ सूर्यादीनां यंत्राण्यरिष्टनाशनाय धार्याणि।

यंत्रचिन्तामणौ–

रसेंदुनागा नगबाणरामा युग्मांकवेदा नवकोष्ठमध्ये ।
विलिख्य धार्यं गदनाशनाय वदंति गर्गादिमहामुनींद्राः ॥ ४८ ॥

| रवियन्त्रम्. | | |
|---|---|---|
| ६ | १ | ८ |
| ७ | ५ | ३ |
| २ | ९ | ४ |

नगद्विनंदा गजषट्समुद्रा शिवाक्षदिग्बाण विलिख्य कोष्ठे ।
चंद्रकृतारिष्टविनाशयनाय धार्यं मनुष्यैः शशियंत्रमीरितम् ॥ ४९ ॥

| चन्द्रयन्त्रम्. | | |
|---|---|---|
| ७ | २ | ९ |
| ८ | ६ | ४ |
| ३ | १० | ५ |

गजाग्निदिश्याथ नवाद्रिबाणा पातालरुद्रारस संविलेख्या ।
भौमस्य यंत्रं क्रमतो विधार्यमनिष्टनाशं प्रवदात गर्गाः ॥ २५० ॥

| भौमयन्त्रम्. | | |
|---|---|---|
| ८ | ३ | [illegible] |
| ९ | ७ | [illegible] |
| ४ | ११ | ६ |

नवाब्धिरुद्रा दिङ्नागषष्ठा बाणार्कसप्ता नवकोष्ठयंत्रे ।
विलिख्य धार्यं गदनाशहेतवे वदंति यंत्रं शशिजस्य धीराः ॥ ॥ ५१ ॥

| बुधयन्त्रम्. | | |
|---|---|---|
| ९ | ४ | ११ |
| १० | ८ | ६ |
| ५ | १२ | [illegible] |

दिग्बाणसूर्या शिवनंदसप्ता षड्विश्वनागाः क्रमतोंककोष्ठे ।
विलिख्य धार्यं गुरुयंत्रमीरितं रुजाविनाशाय वदंति तद्बुधाः ॥ ५२ ॥

| गुरोर्यन्त्रम्. | | |
|---|---|---|
| १० | ५ | [illegible] |
| ११ | ९ | [illegible] |
| ६ | १३ | [illegible] |

रुद्रांगविश्वा रविदिग्गजाख्या नगामनुश्चांकक्रमाद्विलेख्या ।
भृगोः कृतारिष्टनिवारणाय धार्यं हि यंत्रं मुनिना प्रकीर्तिता ॥ ९३ ॥

| शुक्रय त्रम | | |
|---|---|---|
| ११ | ६ | १२ |
| १२ | १० | ८ |
| ७ | १४ | ९ |

अर्काद्रिमन्वास्मररुद्रअंका नागाख्य तिथ्या दश मन्दयन्त्रम् ।
विलिख्य भूर्जोपरिधार्यविद्धच्छनेः कृतारिष्टानिवारणाय ॥ ९४ ॥

| शानियन्त्रम्: | | |
|---|---|---|
| १२ | ७ | १४ |
| १३ | ११ | ९ |
| ८ | १५ | १० |

विश्वाष्टतिथ्या मनुसूर्यदिश्या खगामहींद्रैकदशांककोष्ठे ।
विलिख्य यंत्रं सततं विधार्यं राहोः कृतारिष्टनिवारणाय ॥ ९५ ॥

| राहयन्त्रम् | | |
|---|---|---|
| १२ | ८ | १५ |
| १४ | १२ | १३ |
| ९ | १६ | ११ |

मनुखेचरभूपातिथि विश्व शिवा दिग्सप्तादशसूर्यमिता ।
क्रमतो विलिखेन्नवकोष्ठमिते परिधार्य नराद्दुःखनाशकराः ॥ ९६ ॥

| केतोर्यन्त्रम् | | |
|---|---|---|
| १४ | ९ | १३ |
| १५ | १६ | ११ |
| १० | १७ | १२ |

**ग्रहाणां मन्त्राः**–तथा ग्रहदोषनिवारणाय वैदिकमंत्रैर्जपेत् । संहिता यजुर्वेदे आकृष्णेनेति रविमन्त्रम् । इमं देवा असपन ७इति चन्द्रमन्त्रम् । अग्निर्मूर्द्धादिवेति भौममन्त्रम् । उद्बुध्यस्वाग्ने इत्यादि बुधमन्त्रम् । बृहस्पते अतियदर्यो इत्यादि बृहस्पतिमन्त्रम् । अन्नात्परिस्रुते इत्यादि भृगुमन्त्रम् । शन्नोदेवीति शनिमन्त्रम् । कयानश्चित्रेति राहुमन्त्रम् । केतुं कृण्वन्नेति केतुमन्त्रम् । अथ जपस्थानमाह । शुचिस्थाने स्वगृहे जलाशये देवालये वा शूचिर्भुत्वा विधिवज्जपं कुर्यात्कारयेद्वा । तदुक्तं स्मृतौ–गृहे त्वेकगुणं जाप्यं नद्या तु द्विगुणं स्मृतम् । गवां गोष्ठे दशगुणं अग्न्यागारे शताधिकम् ॥ ९७ ॥ तीर्थादिषु सहस्रं स्यादनंतं विष्णुसन्निधौ ॥ इति ॥ ९८ ॥ तदनंतरं दशांशहोमः समिधतः कर्तव्यः । **ग्रहाणां समिधम्** । श्रीपतिः–अर्काद्ग्राह्यमहीरुहात्खदिरतोपामार्गतः पिप्पलादार्द्रौदुंबरशाखिनोप्यथ शमी दूर्वांकुशेभ्यः क्रमात् । सूर्यादिग्रहमंडलस्य समिधो होमाय कार्या बुधैः सुस्निग्धाः सरलास्त्वचावनिमिताः प्रादेशमात्राः स्थिताः ॥ ९९ ॥ ज्योतिःशास्त्राज्ज्ञायते कालमानं तस्माद्यज्ञस्तेन तुष्यंति देवाः । तुष्टा देवा साधयंतीप्सितार्थं तस्मात्तज्ज्ञा यत्नतः पूजनीयाः ॥ ६० ॥ बृहस्पतिः–यज्ञाशक्तौ च सर्वेषां ग्रहाणां स्वस्वमन्त्रकैः । जपेद्वा विप्रमुख्यैस्तु दत्वा स्नायोक्तदक्षिणाम् ॥ ६१ ॥ अशक्तौ तु जपाद्यादि दानरूपेण दक्षिणाम् । तदभावे तदा मन्त्रैस्तर्पयेद्वा पृथक् पृथक् ॥ ६२ ॥ श्रीपतिः–सांवत्सरे वेदविदांगणेषु सर्वत्र दानग्रहणे प्रदिष्टः । **दानविशेषः**–तत्रापि दानेषु नवग्रहाणामतिप्रशस्तो न च

काश्चिदन्यः ॥ ६३ ॥ भानुस्तांबूलदानादपहरति नृणां वैकृतं वासरोक्त सोमः श्रीखण्डदानादवनितनुभवो भोजनात्पुष्पदानात् । सौम्यः शक्रस्य मन्त्री हरिहरनमनाद्भार्गवः शुक्लवस्त्रैस्तैलस्नानात्प्रभाते दिनकरतनयो ब्रह्मनत्यापरौ च ॥ ६४ ॥ प्रत्येकग्रहाणां दोषहरणम् । तदन्यः—राहुदोषं बुधो हन्यादुभयास्तु शनैश्चरः । त्रयाणां भूमिजो हंति चतुर्णां दानवार्चितः ॥ ६५ ॥ पंचानां देवमन्त्री च षण्णां दोषं तु चन्द्रमाः । सप्तदोषं रविर्हन्याद्विशेषादुत्तरायणे ॥ ६६ ॥ ग्रहकृतारिष्टनिवारणाय विशेषोपायः । देवब्राह्मणवन्दनाद्गुरुवचःसंपादनात्प्रत्यहं साधूनामभिभाषणाच्छ्रुतिरवश्रेयस्कथाकर्णनात् । होमादध्वरदर्शनाच्छुचिमनोभावाज्जपाद्दानतो नो कुर्वंति कदाचिदेव पुरुषस्यैवं ग्रहाः पीडनम् ॥ ६७ ॥ इति श्रीज्योतिर्विद्वयादत्तात्मज रामदीनविरचिते संग्रहे बृहद्दैवज्ञरंजने द्वात्रिंशं गोचरप्रकरणं समाप्तम् ॥

## अथ त्रयस्त्रिंशं ग्रहणप्रकरणं प्रारभ्यते ।

तन्निर्णयलक्षणम्—द्विर्द्वादशेऽपि यामित्रे समराशिगतेऽथवा । तथा षष्ठाष्टकराहुग्रहणं चन्द्रसूर्ययोः ॥ १ ॥ अस्यार्थः—सूर्याच्चन्द्राद्वा द्विर्द्वादशे यामित्रे सप्तमषष्ठाष्टके वा तुल्यराशौ वा राहुर्भवति तदा पादवेधं विचार्य ग्रहणसंभवासंभवौ बोद्धव्यौ । यदा पादचतुष्टयांतरितो राहुर्भवति तदा चन्द्रस्य स्वल्पं ग्रहणं भवति । सूर्यस्य न भवति । पादत्रयाच्चंद्रस्याधिकं सूर्यस्य स्वल्पं ग्रहणं भवति पादद्वयाच्चन्द्रस्य सर्वग्रासः । सूर्यस्याद्धाधिकखंडग्रहणमिति ज्ञातव्यम् । एकस्मिन्पादे सूर्यस्य सर्वग्रासो बोद्धव्यः चन्द्रस्य खग्रासः । ज्योतिःसारे—भानोः पंचदशे ऋक्षे चंद्रमा यदि तिष्ठति । पौर्णमास्यां निशाशेषे चंद्रग्रहणमादिशेत् ॥ १ ॥ माघोनं ग्रहनक्षत्रात्षोडशं यदि सूर्यभम् । अमावास्या दिवाशेषे सूर्यग्रहणमादिशेत् ॥ २ ॥ विश्वरूपे—दिवा चंद्रग्रहो रात्रौ सूर्यपर्व न पुण्यजम् । संधिस्थं पुण्यदं ज्ञेयं यावद्दर्शनगोचरम् ॥ ३ ॥ तदुक्तं निगमे—सूर्यग्रहो यदा रात्रौ दिवा चंद्रग्रहो यदि । तत्र स्नानं न कुर्वीत दद्याद्दानं न च क्वचित् ॥ ४ ॥ तादृशे ग्रहणे दृष्टेऽपि दौरथ्यं नास्तीत्यपि सूच्यते । मेघाच्छन्ने ग्रहे स्नानाद्याधिकारो न विद्यते । इति यत्कीर्तितं तच्च निर्मूलत्वादुपेक्षितम् ॥ ५ ॥ यथा वृक्षादिभिश्छन्ने स्नानाद्यं क्रियते ग्रहे । घनैराच्छादिते तद्वत् स्नानाद्यं नैव बाधकम् ॥ ६ ॥ स्पर्शमुक्तिनिमित्तं तु स्नानं च गणितागम । काले कुर्वीत सूर्येन्द्वोर्मेघच्छादितयोर्ग्रहे ॥ ७ ॥ यावन्मुक्तं रवेर्बिंबं विधोर्वापि न दृश्यते । तावन्न क्रियते स्नानं मौक्तिकं मनुरब्रवीत् ॥ ८ ॥ ग्रस्तोदिते ग्रहे ग्रस्तं दृष्ट्वा स्नानं समाचरेत् । ग्रस्तास्ते मौक्तिकस्नानं मुक्तं दृष्ट्वा रविं विधुम् ॥ ९ ॥ स्पर्शे स्नानं जपं कुर्यान्मध्ये होमं सुरार्चनम् । मुच्यमाने सदा दानं विमुक्तौ स्नानमाचरेत् ॥ १० ॥

गर्गोपि--स्पर्शे स्नानं भवेद्धोमो ग्रस्तयोर्मुच्यमानयोः । दानं स्यान्मुक्तये स्नानं ग्रहे चन्द्रार्कयोर्विधिः ॥ ११ ॥ मुक्तौ यस्तु न कुर्वीत स्नानं ग्रहणसूतके । स सूतकी भवेत्तावद्यावत्स्यादपरो ग्रहः ॥ १२ ॥ ग्रहणे भोजननिषेधः । चन्द्रग्रहे त्रियामार्वाक् सूर्ये यामचतुष्टयम् । अन्नपानादिकं वर्ज्यं बालवृद्धातुरैर्विना ॥ १३ ॥ सूर्यग्रहे तु नाश्नीयात्पूर्वं यामचतुष्टयम् । चन्द्रग्रहे तु यामांस्त्रीन् वृद्धबालातुरैर्विना ॥ १४ ॥ विवाहे च तथा श्राद्धे राहुग्रस्ते निशाकरे । महानिशा च भोक्तव्यमन्यथा पतितो भवेत् ॥ १५ ॥ सेवास्सूर्योदये-नाद्याच्चतुस्त्रीन्प्राक् यामान् रवींदुग्रहयामयोः । ग्रहकाले च नाश्नीयात् स्नात्वाश्नीयाच्च मुक्तयोः ॥ १६ ॥ ग्रस्तास्तेन्यदिने दृष्ट्वाऽश्नीयाद्वृद्धातुरं विना । वेधो वृद्धातुरस्त्र्यर्भपुत्रिणां यामयुग्मकम् ॥ १७ ॥ न सूतकादि दोषोत्र दानहोमजपादिषु । ग्रस्ते स्नायादुदक्यापि तीर्थादुद्धृतवारिणा ॥ १८ ॥ मन्वर्थमुक्तावल्याम्-अन्नं पक्कमिह त्याज्यं स्नानं सवसनं ग्रहे । वारितक्रारनालादि तिलैर्दर्भैर्न दुष्यते ॥ १९ ॥ धर्मदर्पणे--आरनालं पयस्तक्रं दधि स्नेहाज्यपाचितम् । मणिकस्थोदकं चैव न दुष्येद्राहुसूतके ॥ २० ॥ सूतकेपिच संप्राप्ते यदि स्याद्राहुसूतकम् । न सूतकं भवेत्तावद्यावद्राहुर्न मुंचति ॥ २१ ॥ ग्रहणदानप्रशंसा । दानखण्डे-सर्वं भूमिसमं दानं सर्वे ब्रह्मसमा द्विजाः । सर्वं गंगासमं तोयं ग्रहणे चन्द्रसूर्ययोः ॥ २२ ॥ इंदोर्लक्षगुणं पुण्यं रवेर्दशगुणं तु तत् । गंगादि तीर्थसंप्राप्तौ प्रोक्तं कोटिगुणं भवेत् ॥ २३ ॥ गंगायां पुण्यतीर्थे वा ग्रहणे स्नानमुत्तमम् । कूपे वाप्यां तडागे वा तथैवोद्धृतवारिणा ॥२४॥ शंखः--वापीकूपतडागेषु गिरिप्रस्रवणेषु च । नद्यां नदे देवखाते सरसीषूद्धृताम्बुषु ॥ २५ ॥ मार्कण्डेयः--भूमिस्थमुद्धृतात्पुण्यं ततः प्रस्रवणोदकम् । ततो हि सारसं पुण्यं ततः पुण्यं नदीजलम् ॥ २६ ॥ तीर्थतोयं ततः पुण्यं महानद्यां च यामुनम् । ततस्ततोपि गगांबु पुण्यं गंगाब्धिसंगमम् ॥ २७ ॥ मत्स्यपुराणे-दशजन्मकृतं पापं गंगासागरसंगमे । जन्मांतरसहस्रेषु यत्पापं समुपार्जितम् ॥ २८ ॥ तत्तन्नश्येत्सन्निहत्यां राहुग्रस्ते दिवाकरे ॥ २९ ॥ व्यासः--चन्द्रसूर्यग्रहे चैव योवगाहेत जाह्नवीम् । स स्नातः सर्वतीर्थेषु किमर्थमटते महीम् ॥ ३० ॥ मत्स्यपुराणे-गंगा कनखले पुण्या प्रयागं पुष्करं गयाम् । कुरुक्षेत्रं तथा पुण्यं राहुग्रस्ते दिवाकरे ॥ ३१ ॥ व्याघ्रः--रविवारेऽर्कसंक्रांतौ ग्रहणेषु शशिक्षये । व्रतेषु चैव षष्ठीषु न स्नायादुष्णवारिणा॥ ३२ ॥ निबन्धसारेपि-दर्शे पातेर्कसंक्रांतौ उपाकर्मण्युपप्लवे । न स्नायादुष्णतोयेन नास्पृशं स्पर्शयेत्तथा ॥ ३३ ॥ आदित्यकिरणैः पूतं पुनः पूतं तु वह्निना । अतो व्याध्यातुरः स्नायात् ग्रहणेप्युष्णवारिणा ॥ ३४ ॥ शीतमुष्णोदकात्पुण्यं अपारक्यं परोदकात् । उष्णोदकेपि च स्नायात् ग्रहणे चन्द्रसूर्ययोः ॥ ३५ ॥ उष्णोदकस्नानं आतुरविषयम् । हारीतस्मृतौ-सर्वेषामेव वर्णानां सूतकं राहुदर्शने । सचैलं तु भवेत्

स्नानं श्रृतमन्नं विवर्जयेत् ॥ ३६ ॥ जावालः—चक्षुरोगी शिरोरोगी कर्णरोगी कफात्मकः । कंठस्नानं प्रकुर्वीत शिरस्नानं समं हि तत् ॥ ३७ ॥ षट्त्रिंशन्मते—सर्वेषामेव वर्णानां सूतकं राहुदर्शने । स्नात्वा कर्माणि कुर्वीत श्रृतमन्नं विवर्जयेत् ॥ ३८ ॥ स्मृतिरत्नावल्याम्—अन्त्येष्ट्यां शवचांडालस्पर्शने खरकाकयोः । राहुग्रस्ते विमुक्ते वा कुर्यात्स्नानममंत्रकम् ॥ ३९ ॥ जावालिः—संक्रांतौ पुण्यकालस्तु षोडशोभयतः कलाः । चन्द्रसूर्योपरागे तु यावद्दर्शनगोचरः ॥ ४० ॥ वृद्धवसिष्ठः—ग्रहणे संक्रमे चैव न स्नायाद्यदि मानवः । सप्तजन्मनि कुष्ठी स्याद्दुःखभागी न संशयः ॥ ४१ ॥ लिंगपुराणेपि—चंद्रसूर्यग्रहे स्नायात्सूतके मृतकेपि च । अस्नायी मृत्युमाप्नोति स्नायी पापं न विंदति ॥ ४२ ॥ ग्रहणोद्वाहसंक्रांतिव्यापत्तिप्रसवेषु च । स्नानं नैमित्तिकं कार्यं रात्रावपि न दुष्यति ॥ ४३ ॥ वसिष्ठः—पुत्रजन्मनि यज्ञे च तथा संक्रमणे रवेः । राहोश्च दर्शने कार्यं प्रशस्तं नान्यथा निशि ॥ ४४ ॥ शंखायनः—दिवा यदाहृतं तोयं कृत्वा स्वर्णयुतं तु तत् । रात्रिस्नाने तु संप्राप्ते स्नायादनलसंनिधौ ॥ ४५ ॥ पराशरः—खलयज्ञे विवाहे तु संक्रांतौ ग्रहणे तथा । शर्वर्यां दानमस्त्येव नान्यत्र तु विधीयते ॥ ४६ ॥ मरुतो वसवो रुद्राः आदित्याश्चाथ देवताः । सर्वे सोमेन लीयंते तस्माद्दानं तु संग्रहे ॥ ४७ ॥ निबंधसारे—आदित्यहनि संक्रांतौ ग्रहणे चन्द्रसूर्ययोः । पारणं चोपवासं च नः कुर्यात्पुत्रवान् गृही ॥४८॥ **अशुचे रजस्वलायाः स्नानम्।** स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला । पात्रांतरिततोयेन स्नानं कृत्वा व्रतं चरेत् ॥ ४९ ॥ सिक्तमात्रा भवेदद्भिः सांगोपांगा कथंचन । न वस्त्रपीडनं कुर्यान्नान्यद्वासांश्च धारयेत् ॥ ५० ॥ **पांचभौतिकस्नानम् ।** पराशरः—आग्नेयं वारुणं ब्राह्मं वायव्यं दिव्यमेव च । आग्नेयं भस्मना स्नानं वारुण्यामवगाहनम् ॥ ५१ ॥ आपोहिष्ठेति च ब्राह्मं वायव्यं गोरजः स्मृतम् । येत्तु सातपवर्षेण तत्स्नानं दिव्यमुच्यते ॥५२॥ स्मृतिरत्नावल्याम्—ग्रहपर्युषितं चान्नं भुक्त्वा चान्द्रायण चरेत् । पीत्वा वथोदकं विप्रः पश्चात्कृच्छ्रं समाचरेत् ॥ ५३ ॥ पराशरः—नवश्राद्धे च यच्छेषं ग्रहपर्युषितं तथा । दंपत्योर्भुक्तशेषं च भुक्त्वा चान्द्रायणं चरेत् ॥ ५४ ॥ संग्रहे—चंद्रसूर्यग्रहे यस्तु स्नानं दानं सुरार्चनम् । न करोति पितुः श्राद्धं स नरः पतितो भवेत् ॥ ५५ ॥ विष्णुस्मृतौ—सर्वस्वेनापि कर्तव्यं श्राद्धं वै राहुदर्शने । अकुर्वाणस्तु तच्छ्राद्धं पंके गौरिव सीदति ॥ ५६ ॥ सर्वेषां स्वेन जीवनेन जलेनापीत्यर्थः । अकिंचनविषयम् । शातातपः—सैंहिकेयो यदार्कैंदू ग्रसते पर्वसंधिषु । गजच्छायेति सा ज्ञेया पितॄणां दत्तमक्षयम् ॥ ५७ ॥ वायुपुराणे—घृतेन भोजयेद्विप्रान् घृतं भूमौ समुत्सृजेत् । ग्रहणाख्ये गजच्छाये कृत्वा श्राद्धं न शोचति ॥ ५८ ॥ ऋष्यश्रृंगः—राहुग्रस्ते विधौ सूर्ये यस्तु श्राद्धं प्रकल्पयेत् । तेनैव सकला पृथ्वी दत्ता विप्रस्य वै करे ॥ ५९ ॥ मत्स्यपुराणे—चंद्रसूर्यग्रहे चैव मरणे पुत्रजन्मनि । मलमासेपि देयं स्याद्दत्तमक्षय-

कारकम् ॥ ६० ॥ चूडामणियोगः। अर्कपुराणे-सूर्यग्रहः सूर्यवारे यदा स्यात्पाण्डुनंदन। चूडामणिरिति ख्यातं सोमे सोमग्रहस्तथा ॥ ६१ ॥ अन्यवारे यदा भानोरिंदोर्वा ग्रहणं भवेत्। तत्फलं कोटिगुणितं ज्ञेयं चूडामणौ ग्रहे ॥ ६२ ॥ ग्रहणे दानफलम्। महाभारते-भूमिर्ग्रामः सुवर्णं च धान्यं च यद्यदीप्सितम्। तत्सर्वं ग्रहणे देयमात्मनः श्रेयमिच्छता ॥ ६३ ॥ दानखण्डे-गोदानात्सूर्यलोकं व्रजति शिवपुरं धेनुपुत्रस्य दानादैश्वर्यं हेमदानात्सकलवसुमतीनायको नागदानात्। वैकुंठं चाश्वदानाद् व्रजति हि मनुजो नागदो ब्रह्मलोकं भूदानाद्भूपतित्वं सकलसुखयुतो जायते चान्नदानात् ॥ ६४ ॥ दाननिर्णये-वश्यार्थी चंदनं दद्यात् सुगंधिद्रव्यमेव च। रौप्यदानात्सुरूपत्वं वस्त्रदानान्महद्यशः ॥ ६५ ॥ अन्नदानात्समृद्धिः स्याद्गोदानादीप्सितं फलम्। शिवलोके सुखं चैव वृषदानात्तथा धनम् ॥ ६६ ॥ फलदानात्सुतप्राप्तिर्घृतं सौभाग्यवर्द्धनम् ॥ लवणं दुर्जनान्हंति सुवर्णं सर्वकामदम् ॥ ६७ ॥ भूदानाद्भूपतित्वं च गजदानात्तथैव च। अश्वदानात्स्वर्गसुखमारोग्यार्थे स्वमौषधम् ॥ ६८ ॥ अथ ग्रहणे चतुर्विंशद्वर्ज्यम्। चिन्तामणौ-छेद्यं न पत्रं तृणदारुपुष्पं कार्यं न केशांबरपीडनं च। दंता न शोध्या। पुरुषः न वाच्यं भोज्यं च वर्ज्यं मदनो न सेव्यः ॥ ६९ ॥ वाह्यं न वाजी द्विरदादि किंचिद्दोह्यं न गावो महिषीसमाजम्। यात्रां न कुर्याच्छयनं च तद्वद् ग्रहे निशाभर्तुरहर्पतेश्च ॥ ७० ॥ निद्रायां जायते अन्धः विण्मूत्रे ग्रामसूकरः। मैथुने च भवेत्कुष्ठी वधूर्वंध्या द्विभोजने ॥ ७१ ॥ अथ शुभाशुभग्रहणमाह। वसिष्ठः-यस्यैव जन्मनक्षत्रे ग्रयस्ये ते शशिभास्करौ। तस्य व्याधिभयं घोरं जन्मराशौ धनक्षयः ॥ ७२ ॥ भार्गवीये-यस्ये राज्यस्य नक्षत्रे स्वर्भानुरुपयुज्यते। राज्यनाशं सुहृन्नाशं मरणं चात्र निर्दिशेत् ॥ ७३ ॥ राज्यस्य नक्षत्रे राज्याभिषेकनक्षत्रे। वराहः-अभिभवाति, सैंहिकेयः चन्द्रार्कौ यस्य जन्मनक्षत्रे। तस्यांतकारिभयं लक्ष्मीनाशो मनस्तापः ॥ ७४ ॥ होरायां गृह्यते यस्य नक्षत्रेऽथो दिवाकरः। प्राणसंदेहमाप्नोति अथवा मरणमृच्छति ॥ ७५ ॥ अन्यः-जन्मभे जन्मराशौ च भवेद्ग्रहणसंभवः। तस्योद्वेगप्रवासं च भयं मृत्युरुपद्रवम् ॥ ७६ ॥ अष्टधा मृत्युः। यथा दुःखं भयं लज्जा रोगः शोकस्तथैव च। मरणं चापमानं च मृत्युरष्टविधः स्मृतः। इति पंचस्वरायाम् ॥ ७७ ॥ हारीतः-ग्रहणं जन्मनक्षत्रे जायते चन्द्रसूर्ययोः। यस्य तस्याशुभं हानिं वैरं रोगः पराभवः ॥ ७८ ॥ संग्रहे-यस्मिन् राशौ तपनशशिनोः सिंहिकासूनुमर्दः तद्राश्यानां भवति नियतं ग्रामपुंसां विनाशः। तस्माच्छान्तिं मुनिभिरुदिता तत्पटालोकपूर्वं कुर्याद्दानादिभिरिह नृणां नाशमायात्यरिष्टम् ॥ ७९ ॥ उक्तं च रामः-जन्मर्क्षे निधनं ग्रहे जनिभतो घातः क्षतिः श्रीर्व्यथा चिंतासौख्यकलत्रदौस्थ्यमृतयः स्युर्माननाशः सुखम्। लाभोपाय इति क्रमात्तदशुभध्वस्त्यै जपः स्वर्णगोदानं शांतिरथो ग्रहं त्वशुभदं नो वीक्ष्यमाहुः परे ॥ ८० ॥

दैवज्ञमनोहरेपि—घातं हानिमथ श्रियं जननभाद्धस्ति, च चिन्तां क्रमात् सौख्यं दार-वियोजनं च कुरुते व्याधिं च मानक्षयम् । सिद्धिं लाभमपायमर्कशशिनोः षण्मासमध्यग्रहे दुष्टं सुष्ठुतरं ददाति च फलं गर्गादिभिः कीर्तितम् ॥ ८१ ॥ 'लल्लस्तु—ग्रासात्तृतीयेष्टमगश्चतुर्थस्तथायसंख्याशुभदः स्वराशिः । सुतांकदिक्द्वादशगश्च मध्या तथाधमश्चाद्यरिपुद्विसप्त ॥ ८२ ॥ गर्गोपि—शुभाष्टायचतुस्त्रीणि मध्योंत्येषु नवास्तगः । निन्द्योरीदशपक्षैकं ग्रासाद्राशिं वदेद्बुधः ॥ ८३ ॥ पैतामहासिद्धांते—सर्वे पट्टस्थितं वीक्ष्य खस्थं तैलांबुदर्पणे । ग्रहणं गुर्विणी जातु न पश्येत्तु पटं विना ॥८४॥ ग्रस्तास्ते विष्णुधर्मोत्तरे—अहोरात्रं न भोक्तव्यं सूर्यचन्द्रग्रहो यदा । मुक्तिं दृष्ट्वा तु भोक्तव्यं स्नानं कृत्वा ततः परम् ॥ ८५ ॥ ग्रस्तास्तविषये । भृगुः—ग्रस्तगौ वास्तमानं तु रवींदू प्राप्नुतौ यदि । तयोः परेद्युरुदये स्नात्वाभ्यवहरेन्नरः ॥८६॥ग्रस्ते चास्तगते त्विंदौ ज्ञात्वा मुक्तावधारयेत् । स्नानहोमादिकं कार्यं भुंजीतेन्दूदये पुनः ॥ ८७ ॥ मेघमालादिदोषेण यदि मुक्तिर्न दृश्यते । आकलय्य ततः कालं स्नात्वा भुंजीत वाग्यतः ॥ ८८ ॥ अथ दुष्टग्रहे स्नानार्थमौषधमाह । भृगुः—दूर्वांकुरोशीरसमाशिलाजितिसिद्धार्थसर्वौषधिदारुलोध्रैः । स्नानं विदध्याद्ग्रहणे रवीन्द्वोः पीडाहरं राशिगते शुभे चेत् ॥ ८९ ॥ वस्त्रपट्टे लिखेन्मंत्रं रवे राहोस्तमो विधोः । वेदोक्तं च ततो वस्त्रमाच्छाद्य स्नानमाचरेत् ॥ ९० ॥ सुवर्णनिर्मितं नागं सतिलं ताम्रभाजनम् । सदक्षिणं सवस्त्रं च श्रोत्रियाय निवेदयेत् ॥ ९१ ॥ दुष्टग्रहणे दानम् । सौवर्णं राजतं वापि बिंबं कृत्वा स्वशक्तितः । उपरागोद्भवक्लेशाच्छिदे विप्राय कल्पयेत् ॥ ९२ ॥ दानमंत्रः । तमोमय महाभीम सोमसूर्यविमर्दन । हेमनागप्रदानेन मम शान्तिप्रदो भव ॥ ९३ ॥ स्कंदपुराणे—गोदानं भूमिदानं च स्वर्णदानं विशेषतः । ग्रहणे क्लेशनाशाय दैवज्ञाय निवेदयेत् ॥ ९४ ॥ यस्यैव जन्मनक्षत्रे ग्रस्येते शशिभास्करौ । इति यत्पूर्वं लिखितम् । द्रव्यमन्त्रविधानेन तस्य दोषापनुत्तये ॥९५॥ चण्डेश्वरः—दधिमधुरसयुक्तं चन्द्रमानानुमानं रजतकृतशशांकं कांस्यपात्रांतरस्थम् । दधिमधुघृतपूर्णं ताम्रपात्रांतरस्थं कनकरचितसूर्यं सूर्यबिंबानुमानम् ॥९६॥ सितकुसुमसहस्रैः पूजयेदिंदुबिंबं हरति दुरितसंघं पर्वकाले शशांकः । अरुणकुसुमवस्त्रैः पूजयेत्सूर्यबिंबं हरति सकलदोषं सर्वदा तिमग्रोचिः ॥ ९७ ॥ दुष्टग्रहणे शांतिः । स्थापयेच्चतुरः कुंभान् ब्राह्मणान्सागरानिति । गजाश्वरथ्यावल्मीकसंगमाद्ध्रदगोकुलात् ॥ ९८ ॥ राजद्वारप्रदेशाच्च मृदमानीय निक्षिपेत् । पंचगव्ये च कुंभेषु शुद्धमुक्ताफलानि च ॥ ९९ ॥ रोचनापद्मशंखौ च पंचरत्नसमन्वितम् । षष्ठिकं चन्दनं श्वेतं तीर्थवारि च पल्लवान् ॥ १०० ॥ सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः । आयांतु मम शांत्यर्थं दुरितक्षयकारकाः ॥ १०१ ॥ तिलहोमं व्याहृतिभिः सहस्रं चाष्टसंयुतम् । एवं कृत्वा प्रयत्नेन स्नानकर्म

समारभेत् । आमन्त्र्य नवभिर्मंत्रैः कुंभान् संकल्पपूर्वकम् ॥ १०२ ॥ योसौ वज्रधरो देव आदित्यानां प्रयत्नतः । सहस्रनयनः शक्रो ग्रहपीडां व्यपोहतु ॥ १०३ ॥ दुष्टग्रहणे स्तोत्रम् । चतुःशृंगः सप्तहस्तः त्रिपादो मेषवाहनः । अग्निश्चंद्रोपरागोत्थां ग्रहपीडां व्यपोहतु ॥ ४ ॥ यः कर्मसाक्षी लोकानां धर्मो महिषवाहनः । यमश्चंद्रोपरागोत्थां ग्रहपीडां व्यपोहतु ॥ ५ ॥ रक्षोगणाधिपः साक्षात्प्रलयानलसन्निभः । खड्गचर्मातिकायश्च रक्षःपीडां व्यपोहतु ॥ ६ ॥ नागपाशधरो देवः सदा मकरवाहनः । वरुणोंबुपतिः साक्षाद्ग्रहपीडां व्यपोहतु ॥ ७ ॥ प्राणरूपो हि लोकानां चारुकृष्णमृगप्रियः । वायुश्चंद्रोपरागोत्थग्रहपीडां व्यपोहतु ॥ ८ ॥ योसौ निधिपतिर्देवः खड्गशूलगदाधरः । चंद्रोपरागकलुषं धनदोत्र व्यपोहतु ॥ ९ ॥ योसौ विंदुधरो देवः पिनाकी वृषवाहनः । चंद्रोपरागजां पीडां स नाशयतु शंकरः ॥ १० ॥ त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च । ब्रह्मार्कविष्णुयुक्तानि तानि पाप दहतु मे ॥ ११ ॥ एवमामंत्रितैः कुंभैरभिषिक्तो गुणान्वितः । ऋग्यजुःसाममंत्रैश्च शुद्धमाल्यानुलेपनैः ॥ १२ ॥ पूजयेद्वस्त्रगोदानैर्ब्राह्मणानिष्टदेवताः । एतेनैव तता मंत्रान्विलिख्य कनकान्वितान् ॥ १३ ॥ वस्त्रे पट्टे तथा भूर्जे पंचरत्नसमान्वितान् । यजमानस्य शिरसि निदध्युस्ते द्विजोत्तमाः ॥ १४ ॥ ततोपि वाहयेद्वेलामुपरागानुगामिनी । प्राङ्मुखं पूजयित्वा तु नत्वा चाभीष्टदेवताम् ॥ १५ ॥ चंद्रग्रहे निवृत्ते तु कृतशौचात्ममंगलम् । कृतस्नातश्च तत्सर्वं ब्राह्मणाय निवेदयेत् ॥ १६ ॥ अनेन विधिना यस्तु ग्रहस्नानं समाचरेत् । न तस्य ग्रहपीडा स्यान्न च बन्धुधनक्षयः ॥ १७ ॥ सूर्यग्रहे सूर्यनाम सदा मन्त्रेषु कीर्तयेत् । य इदं शृणुयान्नित्यं श्रावयेद्वापि मानवः ॥ १८ ॥ सर्वपापविनिर्मुक्तः सर्वत्र सुखभाग्भवेत् ॥ १९ ॥ स्मृतिनिर्णये–सूर्यग्रहे रवेर्जाप्यं दानं कुर्याद्यथाविधि । चन्द्रग्रहे तु तज्जाप्यं राहुदानं तथा जपः ॥ २० ॥ ग्रहणात्पूर्वापरदिवसाः शुभे त्याज्याः । वसिष्ठः–ग्रहे रवींद्वोरवनिप्रकंपे केतूदयोल्कापतनादिदोषे । व्रजेद्दशाहानि वदंति तज्ज्ञाः त्रयोदशाहानि वदंति केचित् ॥ २१ ॥ नारदः–एकरात्रिं परित्यज्य कुर्यात्पाणिग्रहं गृही । प्रयाणे सप्त रात्रं च त्रिरात्रं व्रतबंधने ॥ २२ ॥ सर्वग्रासे तु सप्ताहमर्धग्रासे दिनत्रयम् । द्वि त्रि एकांगुलग्रासे दिनमेकं तु वर्जयेत् ॥ २३ ॥ अंगिरोपि–सर्वग्रासे तु सप्ताहमर्धग्रासे दिनत्रयम् । त्रिद्व्येकांगुलतो ग्रासे दिनमेकं तु वर्जयेत् ॥ २४ ॥ हारीतः–एकरात्रिं त्रिरात्रिं च सप्तरात्रं तथैव च । विवाहव्रतयात्रासु वर्जयेद्राहुदर्शनात् ॥ २५ ॥ निबन्धसारे–राहुदर्शनादिनाद्दिनत्रयं वर्ज्येनीयमिति गर्गसंमतम् । पंच सप्त च वसिष्ठनारदौ त्रिचतुः खलु दिनानि शोभने ॥ २६ ॥ त्रिविक्रमः–सप्ताहानि त्यजेत् ग्रासात् इति । दैवज्ञवल्लभे–अनिष्टे त्रिविधोत्पाते सिंहिकासूनुदर्शने । सप्तरात्रं न कुर्वीत यात्रोद्वाहादि मंगलम् ॥ २७ ॥ सेवासूर्योदये–त्रयोदश्यास्तु मांगल्ये दिनानि नवकं त्यजेत् । खण्डग्रहे ग्रहदिनं तथा

पूर्वं परं दिनम् ॥ २८ ॥ नारदः—ग्रस्तास्ते त्रिदिनं पूर्वं पश्चाद्ग्रस्तोदये तथा । खण्डग्रासे त्रिदिनं निःशेषे सप्त सप्त च ॥ २९ ॥ कश्यपः—ग्रस्तोदये परो दोषो ग्रस्तास्तेर्वाक् शशीनयोः । द्युनिशार्द्धे भयं स्यात्तु खण्डे खण्डव्यवस्थयोः ॥ ३० ॥ ज्योतिःप्रकाशे—खग्राससर्वपादोन खण्डार्द्धेल्पे तु वासरा । राजाश्वेष्वब्धि रामाब्जा नेष्टा प्रोक्ता दलं ग्रहे ॥ ३१ ॥ तत्त्वविवेके—प्रागेकाहस्त्र्यहं पश्चात् तद्दिनं ग्रहणस्य च । त्यजेद्गत्यंतराभावे सर्वग्रासेपि कर्मणाम् ॥ ३२ ॥ अथ ग्रहणफलम् । यद्येकस्मिन्मासे ग्रहणं रविसोमयोस्तदा क्षितिपाः । स्वबलक्षोभौ सक्षयमायांत्यतिकोशशस्त्रकोपश्च ॥ ३३ ॥ ग्रस्तावुदितास्तामितौ शारदधान्यावनीश्वरक्षयदौ । सर्वग्रस्तदुर्भिक्ष्यमरणकरौ पापसंदृष्टौ ॥ ३४ ॥ सोमग्रहे निवृत्ते पक्षांते यदि भवेद्ग्रहोर्कस्य । तत्रानयोः प्रजानां दंपत्योर्वैरमन्योन्यम् ॥ ३५ ॥ अर्कग्रहात्तु शशिनो ग्रहणं दृश्यते ततो विप्राः । नैकक्रतुफलमतो भवंति मुदिता प्रजाश्चैवं ॥ ३६ ॥ साहतोसिद्धांते—दशैव ग्रासभेदास्युर्मोक्षभेदास्तथा दश । न शक्ता वेदितुं देवाः किं पुनस्तं नराधमाः ॥ ३७ ॥ वाराहीये—मुक्ते सप्ताहांतः पांसुनिपातोऽन्नसंक्षयं कुरुते । नीहारे रोगभयं भूकंपः प्रवरनृमृत्युः ॥ ३८ ॥ उल्कामांत्रिविनाशं नानावर्णाघनाश्वभयमतुलम् । स्तनितं गर्भविपत्तिं विद्युन्नृपदंष्ट्रिपरिपीडाम् ॥ ३९ ॥ परिवेषो रुक्पीडां दिग्दाहो नृपभयं च साग्निभयम् । रूक्षो वायुः प्रबलश्चौरसमुत्थं भयं धत्ते ॥ ४० ॥ निघातः सुरचाप दंडश्च क्षुद्भयं सपरचक्रम् ।। ग्रहयुद्धं नृपयुद्धं केतुश्च तदैव सदृष्टः ॥ ४१ ॥ अविकृतसलिलनिपाते सप्ताहांतः सुभिक्षमादेश्यम् । यश्चाशुभं ग्रहणज तत्सर्वं नाशमुपयाति ॥ ४२ ॥

| संवत् | मास | तिथि | ग्रहण | स्पर्शघटी | मोक्षघटी |
|---|---|---|---|---|---|
| १९५४ | पौषशुक्ल | १५ चंद्रे | चंद्रस्पर्श | ५४।२९ | ५८।१९ |
| | माघकृष्ण | ० शनौ | सूर्यस्पर्श | १३।५१ | २०।२६ |
| १९५५ | आषाढ | १५ रवौ | चंद्रस्पर्श | ५०।० | ५८।२२ |
| | मार्गशिर | १५ भौमे | चंद्रस्पर्श | ४८।२८ | ५७।१२ |
| १९५६ | ज्येष्ठशुक्ल | १५ भृगो | चंद्रस्पर्श | ३१।५८ | ३५।३१ |
| | मार्गशिर | १५ शनौ | चंद्रस्पर्श | ५३।४० | ५७।२६ |
| १९५८ | चैत्रकृष्ण | ३० | सूर्यस्पर्श | ७।३२ | १२।२७ |
| १९५९ | चैत्रशुक्ल | १५ भौमे | चंद्रस्पर्श | ४०।२२ | ४२।४८ |
| १९६० | चैत्रशुक्ल | १५ शनौ | | ;५५।२३ | २।४५ |
| | आषाढ | १५ शुक्रे | | ३१।२ | ३९ १० |
| १९६१ | मार्गशिर | १५ रवौ | चंद्र | ४०।३९ | ४६।५९ |
| १९६२ | श्रावण | १५ | चंद्र | २७ ० | ३०।११ |

| संवत् | मास | तिथि | ग्रहण | स्पर्शघटी | माक्षघटी |
|---|---|---|---|---|---|
| १९६३ | कार्तिक | ३० | सूर्यस्पर्श | ९।३६ | १४ ४ |
| | मार्गशिर | १५ भौमे | चंद्रस्पर्श | २९।२४ | ३०।२४ |
| १९६५ | मार्गशुक्ल | १५ शुक्रे | चं | ४८।२० | ५१।३० |
| १९६६ | ज्येष्ठशुक्ल | १५ शुक्रे | चं | ५९।३ | ७।४३ |
| १९६७ | कार्तिकशुक्ल | १५ शुक्रे | | ५३ ३७ | ५६।३७ |
| १९६८ | कार्तिक | ३० | सू | ५९।२६ | ४ ५० |
| १९६९ | चैत्रशुक्ल | १५ सोमे | चं | ५१।१९ | ५६।० |
| | चैत्रकृष्ण | ३० बुधे | सू | २९।० | ३३।३१ |
| १९७० | भाद्रपद | १५ | चंद्र | २४।९ | ३२।५९ |
| | फाल्गुन | १५ | | | |
| १९७१ | भाद्रपदकृष्ण | ३० भृगौ | सूर्य | ३०।३८ | ३५।२८ |
| | भाद्रपदशुक्ल | १५ भृगौ | चंद्र | २५।१ | ३३।१६ |
| १९७४ | आषाढ | १५ शुक्रे | चंद्र | ४१।५५ | ५९।२९ |
| १९७७ | वैशाखशुक्ल | १५ | चंद्र | ५८।३ | ६।४७ |
| | आषाढ | १५ बुधे | चंद्र | ३२।९ | |
| १९७८ | आश्विन | १५ रवौ | | ४९।३१ | ५७।४९ |
| १९७९ | आश्विन | ३० गुरौ | सूर्य | ५।५ | १०।११ |
| १९८० | माघशुक्ल | १५ बुधे | चंद्र | ३२।३८ | ४१।४८ |
| १९८१ | श्रावण | १५ शुक्रे | चंद्र | ४५।४५ | ५५।ख |
| | माघशुक्ल | १५ रवौ | चंद्र | ४६।१ | ५१।३६ |
| १९८२ | श्रावणशुक्ल | १५ भौमे | चं | दृष्टिनास्ति | |
| | माघकृष्ण | ३० गुरौ | सूय | १२।१७ | १५।३३ |
| १९८५ | ज्येष्ठकृष्ण | ३० गुरौ | चंद्र | १६।३७ | २१।२१ |
| १९८६ | वैशाखकृष्ण | ३० गुरौ | सूर्यग्रहणसभव | | |
| १९८८ | चैत्रशुक्ल | १५ | चंद्रग्रह | ४४।३ | ५३।० |
| | भाद्रपदशुक्ल | १५ | चंद्र | ४०।० | ४९।० |
| | फाल्गुन | १५ | चंद्र | १५। | २३ |
| १९८९ | भाद्रपद | १५ बुधे | चंद्र | ५०।४४ | ५३।० |
| १९९० | भाद्रपदकृष्ण | ३० सोमे | सूर्य | ७।० | १४।३४ |
| १९९१ | आषाढशुक्ल | १५ | चंद्र | २७।० | ३५।० |
| | पौषशुक्ल | १५ | चंद्र | २९ | ३७।ख |
| १९९२ | पौषशुक्ल | १५ बुधे | चंद्र | ३५।४३ | ४४।० |
| १९९३ | आषाढकृष्ण | ३० | सूर्य | ९।४८ | १४।० |
| | आषाढशुक्ल | १५ | चंद्र | ४०।८ | ४३।२ |

## अथ चतुस्त्रिंशं लुप्तसंवत्सरनिर्णयप्रकरणं प्रारभ्यते ।

वसिष्ठः-सहजां गतिमासाद्य यद्यतीचारगो गुरुः । अवशिष्टं पूर्वराशिं न प्रत्यात्युपभुक्तये ॥ १ ॥ कुम्भाच्चतुष्केतरगोतिचारी न पूर्वराशिं गुरुरेति वक्री । तदा विलुप्ताब्द इहातिनिन्द्यः सोमोद्भवाजन्हुभवांतराले ॥ २ ॥ अन्तर्भाव्योपभुक्तांशवक्रानंतरितस्तथा । मासैर्द्वादशभिर्लुप्तसंवत्सर इतीरितः ॥ ३ ॥ गर्गः-समं व्रजन्देवगुरुर्यदैव भवेदतीचारगतिप्रयुक्तः । तदा हि लुप्ताब्द इति प्रदिष्टः स्वसंहितायां च पितामहेन ॥ ४ ॥ शौनकः-मासान्दशैकान्दशकान्प्रभुज्य राशेर्यदा राशिमुपैति जीवः । भुंक्ते न पूर्वं च पुनस्तदानीं न लुप्तसंवत्सरमाहुरार्याः ॥ ५ ॥ कश्यपः-यदि भवेदतिचारगतिर्गुरुर्न पुनरेति निजप्रथमस्थितिम् । भवति लुप्तसमाझषकुंभयोर्वृषभवृश्चिकयोर्यदि न स्थितिः ॥ ६ ॥ भृगुः-धने मीने वृषे कुंभे यद्यतीचारगो गुरुः । न तत्र काललोपः स्यादित्याह गालवो मुनिः ॥ ७ ॥ गर्गः-स्वकं भवनमासाद्य यद्यतीचारगो गुरुः । न तत्र काललोपस्यादित्याह भगवान्यमः ॥ ८ ॥ व्यासः-यदातिचारं सुरराजमंत्री करोति गोवृश्चिकमीनसंस्थः । नायात्यसौ यद्यपि पूर्वराशिं शुभाय पाणिग्रहणं वसिष्ठः ॥ ९ ॥ पराशरः-दशमासानंतरमहानि कतिचिद्गुरुर्यदा भुंक्ते । यद्यनायात्पूर्वर्क्षे तदा लुप्तसंवत्सरः प्रोक्तः ॥ १० ॥ मनुः-अतिच रगतो जीवो दशमासात्परं यदि । दिनानि कतिचिद्भुंक्ते न तदा लुप्तवत्सरः ॥ ११ ॥ मुहूर्ततत्त्वे-एकस्मिन्वत्सरे जीवः स्पृशेद्राशित्रयं यदि । लुप्तसंवत्सरो नाम निंदितः सर्वकर्मसु ॥ १२ ॥ यशोधरतंत्रे-एकस्मिन् रविवर्षे गौरववर्षद्वयावसानं चेत् । त्र्यब्दस्पृशेनमेव विलुप्तसंवत्सरं प्राहुः ॥ १३ ॥ अन्यः-अतिचारगतो जीव तं राशिं नैव चेत्पुनः । लुप्तसंवत्सरो ज्ञेयो गर्हितः सर्वकर्मसु ॥ १४ ॥ अयमपि दोषो यद्देशे बृहस्पतिमानेन व्यवहारस्तद्देशविषयः । तथा चोक्तम्-नर्मदोत्तरभागे तु बार्हस्पत्येन वत्सरः । तस्यास्तु दक्षिणे भागे सौरमानेन वर्तते ॥ १५ ॥ लुप्तसंवत्सरदोषस्तु पयोष्णी नमदातटात् । नान्यदेशेष्विति प्राहुर्वसिष्ठोत्रि राशराः ॥ १६ ॥ अन्यत्रापि-गर्गत्रिमांडव्यपराशराद्या भृग्वंगिरःशौनककश्यपाद्याः । लुप्ताब्ददोषं प्रवदंति मध्ये सोमोद्भवायाः सुरनिम्नगायाः ॥ १७ ॥ रामाचार्योपि-गोजांत्यकुंभेतरराशिचारगे नो पूर्वराशिं गुरुरेति वक्रितः । तदा विलुप्ताब्द इहातिनिंदितः शुभेषु रेवासुरनिम्नगांतरे ॥ १८ ॥ इति श्रीज्योतिर्विद्दयादत्तात्मज रामदीनविरचिते संग्रहे बृहद्दैवज्ञरंजने चतुस्त्रिंशं लुप्तसंवत्सरनिर्णयप्रकरणं समाप्तम् ।

## अथ पंचत्रिंशं अकालवृष्टिप्रकरणं प्रारभ्यते ।

वसिष्ठः-अकालवृष्टिप्रभवस्तु दोषः करोति मृत्युं वरकन्ययोश्च । करोति मृत्युं शुभकार्यकर्तुः त्रातुर्यथा सर्वगुणास्त्वशक्ताः ॥ १ ॥ तं बंधुवर्गाद्विषवद्विदग्धा अकालवृष्टिप्रभवः स दोषः । सीतावियोगप्रभवः सुदीर्घः कोपो यथा दाशरथेर्दशास्यम् ॥ २ ॥ अकालवृष्टिनीहारपरिवेषशरासनाः । लत्तापातादयो दोषाः शुभकार्यविनाशदाः ॥ ३ ॥ कृत्यचिन्तामणौ-मार्गान्मासात्प्रभृतिमुनयो व्यासवाल्मीकिगर्गाश्चैत्रं यावत्प्रवर्षणविधौ नेतिकालं वदंति । नाडीस्त्याज्याः सुरगुरुमुनिर्वातवृष्टेरकालो मासावेतौ न शुभफलदौ पौषमाघौ न शेषाः ॥ ४ ॥ दैवज्ञवल्लभे-पौषादि चतुरो मासाः प्रोक्ता वृष्टिस्त्वकालजा । व्रतं यात्रादिकं तत्र वर्जयेत्सप्तवासरान् ॥ ५ ॥ पौषे दिनत्रयं वर्ज्यं माघे चैव दिनद्वयम् । फाल्गुने दिनमेकं तु चैत्रे तु घटिकात्रयम् ॥ ६ ॥ श्रीपतिः-सौदामिनीवर्षणगर्जितेषु नाकालजेषु प्रवसेन्नरेंद्रः । आसप्तरात्राद्भुतदर्शनेषु दिव्यान्तरिक्षाक्षितिजेषु चैवम् ॥ ७ ॥ शौनकः-पौषादि मासेषु चतुर्षु वृष्टिस्त्वकालजा स्यान्न हि तत्र यात्राम् । कुर्यान्नृपश्चेत्कुरुतेतिमोहात्प्रवर्तते शत्रुपराभिभूतः ॥ ८ ॥ गर्गः-पौषादि मासचत्वारि वृष्टिः प्रोक्ता त्वकालजा । तत्र यात्रा व्रतारंभं वर्जयेत्सप्त वासरान् ॥ ९ ॥ मांडव्यः-तावत्प्रयाणादिषु भूपतीनामकालवृष्टिः प्रकरोति दोषम् । यावद्भवेत्संचरतां जनानां तथा पशूनां चरणांकिता भूः ॥ १० ॥ चण्डेश्वरः-वृष्टिः करोति दोषं तावन्नाकालसंभवा राज्ञः । यावन्न भवति यानेनरपशुचरणांकिता वसुधा ॥ ११ ॥ इति श्रीमद्दयादत्तज्योतिर्विदात्मजरामदीनज्योतिर्वित्कृते संग्रहे बृहद्दैवज्ञरंजने पंचत्रिंशं अकालवृष्टिप्रकरणं समाप्तम् ।

## अथ षट्त्रिंशं त्याज्यप्रकरणं प्रारभ्यते ।

ज्योतिःप्रकाशे-जन्माधिपविलग्नेशचन्द्रभार्गवमंत्रिणाम् । विरश्मित्वं जन्ममासो जन्मभे जन्मवासरः ॥ १ ॥ दुर्निमित्तं मनोभंगं क्षयमासाधिमासकौ । मृतजातकयोश्चैव सूतकं ग्रहणस्य च ॥ २ ॥ ज्वरोत्पत्तिरजोमातृपित्रोः क्षयदिनं तथा । गंडांतत्रितयः कालः संधिर्भस्य तिथेस्तनोः ॥ ३ ॥ क्रांतिपातो व्यतीपातो वैधृतिः परिघार्द्धकम् । भानोः संक्रांतिभोगश्च कुलिकं चार्द्धयामकम् ॥ ४ ॥ क्रूरैर्मुक्तं युतं भोग्यं सराहुशिखिधूमितम् । धिष्ण्यं ग्रहणगं पापैर्विद्धं सौम्यैस्तु पादतः ॥ ५ ॥ वृष्टिः क्रूरयुतं लग्नं लग्नेशो रिपुमृत्युगः । जन्मतो नैधनेशस्तु लग्नेशो निधनोपगः ॥ ६ ॥ जन्मभाज्जन्मलग्नाद्वा लग्नलग्नेशकाष्टकौ । पापयोर्मध्यलग्नेंदु क्षीणेंदुः कुनवांशकः ॥ ७ ॥

क्रूरवारे पापहोरा दुष्ट्यागग्रहोद्भवः । तिथिवृद्धिक्षयौ भानां नाडिका विषसंज्ञिकाः ॥८॥ वर्षायनर्तुमासानां संधिर्वृष्टिरकालजा । होलाष्टसंग्रहो दोषः दशा गोचररिष्टजा ॥ ९ ॥ रिक्तातिथिर्दग्धदिनं तथोत्पन्नदिनर्क्षकम् । लत्तैकार्गलचंडाख्यकालवेला च पंचकम् ॥ १० ॥ मृत्युयोगपग्रहश्च यामित्रांशोष्टषड्विधः । षड्वर्गः पापखेटानां भृगुः षष्ठः कुजाष्टमः ॥ ११ ॥ एत दोषाः समाख्याताः शुभकर्मणि गर्हिताः । एते दोषा विवाहे तु वैधव्यं भंगमाहवे ॥ १२ ॥ विद्यारंभे च मूर्खत्वं यात्रायां निष्फलं स्मृतम् । व्रते च कर्मवाह्यत्वं रोगं च क्षौरकर्मणि ॥ १३ ॥ नवान्नप्राशने मांद्यं गृहारंभे सुखक्षयम् । दैन्यं गृहप्रवेशे तु वंध्यात्वं गर्भशोधने ॥ १४ ॥ कृषिकर्मणि वैफल्यं ग्रामकार्ये नृपो परः । राज्यनाशं प्रतिष्ठायांमग्न्याधानोग्निनाशनम् ॥ १५ ॥ पट्टाभिषेके दारिद्र्यं हानिर्वाणिज्यकर्मणि । विरोधं स्वामिसेवायां हरणं च विभूषणे ॥ १६ ॥ दारिद्र्यं मरणं हानिः सर्वकार्ये विदुर्बुधाः ॥ १७ ॥ अथ पृथक् फलम् । तत्रैव–जन्माधिपविलग्नेशचंद्रभार्गवमंत्रिणाम् । अस्ते बाल्ये च वृद्ध च शुभकर्ता विनश्यति ॥ १८ ॥ जन्मर्क्षे सुखहानिः स्यात्कलिर्जन्मतिथावपि । जन्ममासे भयं घोरं जन्मलग्नं शुभावहम् ॥ १९ ॥ दुर्निमित्ते मृतिं विंद्यात् मनोभंगन सिद्धिता । गात्रभगः क्षये मासे विग्रहस्त्वधिमासके ॥ २० ॥ शुभकर्मकृतो मृत्युर्मृतिजातकसूतके । हानिमृत्युभयं कर्तुः सूतके ग्रहणस्य च ॥ २१ ॥ रजोत्पत्तौ मृतिं विंद्याद्रोगं पित्रोः क्षयेहनि ॥ २२ ॥ कश्यपसंहितायाम्–वत्सरायनमासर्तुसंधिर्दैन्यप्रदः शुभे । तिथिसंधौ मनस्तापो धिष्ण्यसंधौ महद्भयम् ॥ २३ ॥ योगसंधौ भ्रमस्तीव्रो लग्नसंधौ सुखक्षयः । तिथिलग्नभगंडांते कार्यनाशक्षतिर्मृतिः ॥ २४ ॥ क्रातसाम्ये मृतिः कर्तुर्व्यतीपाते कुलक्षयः । वैधृतौ जीवहानिः स्यात्परिघार्द्धे च रोगदम् ॥ २५ ॥ अर्कसंक्रांतिभागेषु मृत्युरेव न संशयः । कुलिके मरणं विंद्याद्यमघंटेर्थनाशनम् ॥२६॥ यामार्द्धे कार्यहानिः स्यात्कालवेलाभयं मृतिः । धूमिते भे भवेद्व्याधिः दग्धे कार्यं न सिद्ध्यति ॥ २७ ॥ ज्वलिते मृत्युरेव स्याद्विद्धे विघ्नं समादिशेत् । विष्ट्यां भ्रशौ भवेन्नूनं ग्रहणर्क्षे पराभवः ॥ २८ ॥ लग्ने क्रूरयुते नाशो चाष्टमे च तनोः क्षयः । चतुर्थ जायते वैरं जन्मांगात् व्ययगो व्ययम् ॥ २९ ॥ जन्मन्यष्टमगः क्रो मृत्युदो यदि लग्नगः । षष्ठे लग्नाधिपो नूनं स्वयमेव रिपुर्भवेत् ॥ ३० ॥ अष्टमो मृत्युदश्चैव व्ययगो व्ययकारकः । विघ्नं स्यात्पापकर्तर्यां समांशे मरणं ध्रुवम् ॥ ३१ ॥ क्षीणेंदौ दीर्घरोगःस्यात्कुनवांशे तथैव च । क्रूरवारे महाक्रोधं क्रूरहोरा विरोधिनी ॥ ३२ ॥ मिथ्याभिदूषणं दुष्टयोगे तिथिभवारजे । कुमुहूर्ते त्वनिष्टं स्यात्कुहू विघ्नकरी स्मृता ॥ ३३ ॥ तिथिवृद्धिक्षये हानिर्विषनाड्यां विषाद्भयम् । अकालवृष्टिदोषश्च रोगशोकभयप्रदः ॥ ३४ ॥ होलाष्टके विपत्तिः स्यात् संग्रहे दीर्घरोगकृत् । व्यसनं गोचरारिष्टे दशारिष्टे च बंधनम् ॥ ३५ ॥ रिक्तायां च तिथौ कार्य-

कर्तुः कार्यं न सिद्ध्यति । दग्धे दग्धं भवेत्कार्यमुत्पातर्क्षमनिष्टदम् ॥ ३६ ॥ लत्तायां वाहनात्पातः पंचके भयरोगकृत् । चण्डायुधेऽसृजं दुःखं वैरमेकार्गले कलिः ॥ ३७ ॥ मृत्युयोगे भवेन्मृत्युस्तथैवोपग्रहे मृतिः । यामित्रादिषु दोषेषु वैरं चाप्यनपत्यता ॥ ३८ ॥ लग्नादष्टमषष्ठस्थो मृत्युकारी न संशयः । षड्वर्गे पापखेटानां भृगौ षष्ठे कुजेऽष्टमे । कार्यसिद्धौ महाविघ्नं भवेत्तत्र न संशयः ॥ ३९ ॥ ब्रह्मर्षिसंहितायाम्-परिवेषं दिग्धूमं दिग्दाहं दुर्दिनं च नीहारम् । निर्घातं ग्रहयुद्धं प्रतिमास्वेददर्शनं महीकंपम् ॥ ४० ॥ रात्रौ सुरेंद्रचापं संध्यायामासनं शिवारावम् । उल्कापतनं दिवसे देशादेर्नाशनं जगदुः ॥ ४१ ॥ नारदः-पंचांगशुद्धिरहितो दोषस्त्वाद्यः प्रकीर्तितः । उदयास्त-शुद्धिरहितो द्वितीयः सूर्यसंक्रमः ॥ ४२ ॥ तृतीयः पापषड्वर्गो भृगुः षष्ठः कुजोऽष्टमः । गण्डांतकर्तरीरिःफषट्केन्दुश्च संग्रहः ॥ ४३ ॥ दंपत्योरष्टमं लग्नं राशि-र्विषघटी तथा । दुर्मुहूर्तो वारदोषो खार्जूरिकसमांघ्रिभे ॥ ४४ ॥ ग्रहणोत्पातभं क्रूर-विद्धर्क्षं क्रूरसंयुतम् । कुनवांशो महापातौ वैधृतिश्चैकविंशतिः ॥ ४५ ॥ एते प्रोक्ता महादोषा वर्जनीयाः प्रयत्नतः । यदि मोहात्कृतं कर्म तदा विघ्नं भवेद्ध्रुवम् ॥ ४६ ॥

इति श्रीमद्दयादत्तज्योतिर्विदात्मजरामदीनज्योतिर्वित्कृते संग्रहे बृहद्दैवज्ञरंजने षट्त्रिंशं त्याज्यप्रकरणं समाप्तम् ।

---

## अथ सप्तत्रिंशं वर्ज्यकालप्रकरणंप्रारभ्यते ।

शौनकः-गुर्वादित्ये व्यतीपाते वक्रातीचारगे गुरौ । नष्टे शशिनि शुक्रे वा बाल-वृद्धेथ वा गुरौ ॥ १ ॥ पौषे चैत्रेथ वर्षासु शयनाधिकमासके । केतूद्गमे निरंशेऽर्के सिंहस्थे देवमंत्रिणि ॥ २ ॥ विवाहव्रतयात्रादि पुरहर्म्यगृहादिकम् । क्षौरविद्योपविद्यां च यत्नतः परिवर्जयेत् ॥ ३ ॥ उल्कापातेंद्रचापप्रबलघनरजो धूमनिर्घातविद्यु-ष्टिप्र-त्यर्कदोषादिषु, सकलबुधैस्त्याज्यमेवैव रात्रम् । दुःस्वप्ने दुर्निमित्ते, ह्यशुभफलदृशो दुर्मनो भ्रांतबुद्धौ चौले मौंजीनिबंधे परिणयनविधौ सर्वदा त्याज्यमेव ॥ ४ ॥ गर्गः-दिग्दाहे दिनमेकं तु ग्रहे सप्तदिनानि तु । भूकंपे च समुत्पन्ने त्र्यहमेव तु वर्जयेत् ॥ ५ ॥ उल्कापाते त्रिदिवसे धूमे पंच दिनानि तु । वज्रपाते चैकदिनं वर्जयेत्सर्वकर्मसु ॥ ६ ॥ वसिष्ठः-सवैधृतिर्विष्टिरथाष्टमेंदुः सपातयोगः परिघार्द्धमाद्यम् । तिस्रोष्टकाश्चोक्तनि-सर्गदोषाः सर्वत्र वर्ज्याः खलु मंगलेषु ॥ ७ ॥ भास्करादिषु योगेषु ये मुहूर्ताश्च निंदिताः । विवाहादिषु ते वर्ज्या अपि लक्षगुणैर्युताः ॥ ८ ॥ दोषो महापात इति प्रसिद्धः स वैधृतो हंति वधूवरं च । तं रक्षितुं लग्नगुणास्त्ववशक्ताः स्वबांधवास्ते शशिनोपघाताः ॥ ९ ॥ बृहस्पतिसंहितायाम्-दिग्दाहे वा महादारुपतने पांशुवर्षणे ।

उल्कापाते महापाते महाशनिनिपातने ॥ १० ॥ अनभ्रेऽशनिपाते च भूकंपपरिवेष्टयोः । ग्रामोपांते शिवाशब्दे दुर्निमित्ते न शोभनम् ॥ ११ ॥ केतवो यत्र दृश्यंते सधूमा वा पृथक् द्वयोः । ग्रहाणां ग्रहणे चैव वर्जयेद्दिनसप्तकम् ॥ १२ ॥ युद्धे ग्रहाणामन्योन्यं निर्घाते वा कुकुंपने । महोत्पातयुते काले सप्तरात्रं शुभं त्यजेत् ॥ १३ ॥ नृपो वा नृपमंत्री वा दैवज्ञो वा महान्मृतः । पुरोहितोथ वा विद्वान् भिषग्वा नृपसेवकः ॥ १४ ॥ यज्वा वा वेदविद्वान् वा यतिर्वा संयतेंद्रियः । यत्र देशे मृतो ग्रामे सप्ताहं वर्जयेच्छुभान् ॥ १५ ॥ अथ मासे शून्यराशयः । ज्ञानमंजर्याम्— द्वितीया धनमीनेषु चतुर्थी वृषकुंभयोः । मेषकर्कटयोः षष्ठी कन्यामिथुनगाष्टमी ॥ १ ॥ दशमी वृश्चिके सिंहे द्वादशी मकरे तुले । एताश्च तिथयो दग्धा वर्जनीयाः प्रयत्नतः॥२॥ विवाहे म्रियते कन्या यात्रायां मरणं ध्रुवम् । कृषिकर्मणि शून्यत्वं तिथौ दग्धे फलं वदेत् ॥ ३ ॥ वसिष्ठः—एकांतरा दिनकरे तिथयो द्वितीया पूर्वाद्धनुः शफरयोर्वृषकुंभयोश्च ।। कर्क्राजयोश्च मिथुनाबलयोर्मृगेन्द्रकौर्प्योस्तुलामकरयोश्च भवंति दग्धाः ॥ ४ ॥ बृहस्पतिः । जीवर्क्षौ द्वौ द्वितीयायां चतुर्थ्यां घटतावुरी । षष्ठ्यामालेयमेषौ च बुधक्षेत्रेष्टमीयुते ॥ ५ ॥ कौर्पिसिंहौ दशम्यां च द्वादश्यां मृगजीवभौ । इमे मृत्युप्रदा योगा लग्ने तिथिषु शोभने ॥ ६ ॥ वसिष्ठः—मासदग्धासु तिथिषु कृतं यन्मंगलादिकम् । तत्सर्वं नाशमायांति ग्रीष्मे कुसरितो यथा ॥ ७ ॥ अस्यापवादमाह बृहस्पतिः । अथ पक्षछिद्रास्तिथयः । ज्योतिषचिन्तामणौ—तिथिस्तु युग्मा खलु पक्षरन्ध्रं भवेद्द्वितीयां दशमीं च हित्वा । ईशश्च तासां विषमा वरिष्ठा स्मृता मुनींद्रैर्नवमीं विहाय ॥ १ ॥ आद्याश्चतस्रः क्रियपूर्वकानां मेषाच्चतुर्णामिह पंचमी स्यात् । परापरेषां परतस्तथैव सक्रूरराशेरशुभा तिथिः स्यात् ॥ २ ॥ वसिष्ठः—चतुर्दशी चतुर्थी च अष्टमी नवमी तथा । षष्ठीं च द्वादशी चैव पक्षरन्ध्राह्वया इमे ॥ ३ ॥ क्रमादेतासु तिथिषु वर्जनीयाश्च नाडिकाः । भूता ५ ष्ट ८ मनु १४ तत्त्वां २५ क ९ दश १० शेषाः सुशोभनाः ॥ ४ ॥ दोषनाडीषु यत्कर्म शुभं सर्वं विनश्यति ॥ ५ ॥ बृहस्पतिः—चतुर्दशी चतुर्थी च अष्टमी नवमी तथा । षष्ठी च द्वादशी चैव पक्षच्छिद्राच गोचरे ॥ ६ ॥ पक्षच्छिद्राह्वयेष्वेव तिथिष्वेते च नाडिकाः । क्रमात्तिथ्यादितो इष्टा शुभकार्येषु वर्जिताः ॥ ७ ॥ पक्षछिद्रोक्तनाडीषु शुभं सर्वं विवर्जयेत् । भूतांकमनुतत्त्वांकदशशेषाः सुशोभनाः ॥८॥ अथ मासे शून्यनक्षत्राणि । बृहस्पतिः—रोहिणी चाश्वनी चैत्रे शून्यभे परिकीर्तिते । वैशाखे त्वाष्ट्रवायव्यौ वैश्वतिष्यस्तु शून्यभा ॥ १ ॥ मासि ज्येष्ठे तथादित्य आषाढे भगवासवौ । श्रावणे वैश्वपूर्वे द्वे नभस्ये पौष्णवारुणे ॥ २ ॥ अजैकपादिषे नेष्टो पौष्णेद्वःश्निभयाः परे । सहे विशाखा मैत्रं च त्र्युत्तराभाद्रपादसत् ॥ ३ ॥ रामः—कदाश्रमें त्वाष्ट्रवायू विश्वेज्यौ भगवासवौ । वैश्वश्रुतीपाशिपौष्णे अजपादग्निपित्र्यमे ॥ ४ ॥

त्वाष्ट्रद्वीशौ शिवाश्वर्क्षो श्रुतिमूले यमेंद्रभे । चैत्रादिमासे शून्याख्यास्तारा वित्तविनाशदाः ॥ ५ ॥ अस्यापवादः । बृहस्पतिः-मासशून्याह्वया तारा राशयो वा विषाह्वयाः । स्वामिजीवबुधैर्दृष्टा युक्ता वा नैव दोषदाः ॥ ६ ॥ केंद्रत्रिकोणयोः सौम्ये बलवांश्च स्ववर्गगः । मासशून्यकृतं दोषं राशिशून्यांश्च नाशयेत् ॥ ७ ॥ अथ तिथिवारयोगे योगाः । सप्तम्यां भास्करो जातश्चतुर्दश्यां निशाकरः । दशम्यां मंगलो जातो द्वादश्यां तु बुधस्तथा ॥ ८ ॥ एकादश्यां गुरुर्जातो नवम्यां भार्गवस्तथा । अष्टम्यां तु शनिर्जातो पूर्णिमायां तमस्तथा ॥ ९ ॥ दर्शे जातस्तथा केतुः त्याज्या जन्मातिथिः शुभे ॥ १० ॥ अथ दग्धाः तिथयः । पंचम्यंगारके चैव द्वितीया भार्गवे तथा । तृतीया बुधवारे तु चतुर्थी च बृहस्पतौ ॥ ११ ॥ पंचमी शनिवारे च चंद्रवारे त्रयोदशी । पंचदश्यर्कवारे तु तिथिदग्धाः प्रकीर्तिताः ॥१२॥ बृहस्पतिः-पंचमी भूमिपुत्रेण तृतीया भृगुसूनना । द्वितीया राजपुत्रेण षष्ठींदुबुधमंत्रिणा ॥ १३ ॥ नवमी सूर्यपुत्रेण चंद्रेणैकादशी युता । सवित्रा द्वादशी युक्ता प्रोक्ता दग्धदिना इमे ॥ १४ ॥ दद्युर्विवाहे वैधव्यं यात्रायां मृत्युमेव च । अग्निदाहं गृहारंभे प्रवेशे स्वामिनो मृतिः॥१५॥ मासरुद्रादिशोंकाष्टसप्तषट् तिथयस्तथा । दग्धयोगा इमे ख्यातास्तिथयः सूर्यवारगाः ॥ १६ ॥ श्रीपतिस्तु-तिथेश्च वारस्य च यत्र संख्ययोस्त्रयोदशस्युर्मिलने कृते सति । स्मृतः स योगः क्रकचाभिधानको विवर्जनीयः खलु कर्मसु ध्रुवम् ॥ १७ ॥ रत्नमालायाम्-सप्तम्यां दिनकरवासरो यदा स्यात् वारश्चेत्प्रतिपदि चेन्दुनंदनस्य । संवर्तो मुनिभिरुदीरितः स योगः संत्याज्यः शुभफलकांक्षिभिः प्रयत्नात् ॥ १८ ॥ त्रिविक्रमः-शुक्रे नंदा बुधे भद्रा जया भौमे प्रकीर्तिताः । शनौ रिक्ता गुरौ पूर्णा सिद्धियोगाः प्रकीर्तिताः ॥ १९ ॥ बृहस्पतिः-नंदा भृगौ सोमसुते च भद्रा भौमे जया सूर्यसुते च रिक्ता । पूर्णा गुरौ पंचसु पंचसिद्धा शुभावहाः शोभनकर्मणीष्टाः ॥ २० ॥ आदित्यभौमयोर्नंदा भद्रा शुक्रशशांकयोः । जया ज्ञस्य गुरौ रिक्ता पूर्णार्कौ चामृता शुभा ॥ २१ ॥ षष्ठ्यादितिथयः सप्त चंद्रवारादिभिर्युताः । क्रमात्पक्षद्वयोपेताः सप्तयोगा हुताशनाः ॥ २२ ॥ अग्नियोगे कृतं सर्वं कुले विश्वं विनाशनम् । यथाग्नौ पतितास्तोयबिंदवो महतीत्यमी ॥ २३ ॥ षष्ठी च सप्तमी चैव अष्टमी नवमी तथा । द्वादश्येकादशी युक्ता त्रयोदश्यर्कतो विषः ॥ २४ ॥ त्रिविक्रमः-नंदा भौमे भृगौ भद्रा बुधवारे जया यदा । गुरौ रिक्ता शनौ पूर्णा मृत्युयोगाः प्रकीर्तिताः ॥ २५ ॥ अथ तिथिभोज्याः कुयोगाः । बृहस्पतिः-प्रतिपत्पूर्वषाढायां पंचमी कृत्तिका तथा । पूर्वभाद्रपदाष्टम्यां दशम्यां रोहिणी तथा ॥ २६ ॥ द्वादश्यां सार्पनक्षत्रावर्यम्णा च त्रयोदशी । नक्षत्रलुंछिरित्येते देवानामपि नाशनाः॥२७॥ रामः-तथा निंद्यं शुभे सार्पं द्वादश्यां वैश्वमादिभे । अनुराधा द्वितीयायां पंचम्यां पितृभं तथा ॥ २८ ॥ त्र्युत्तराश्च तृतीयायामेकादश्यां च रोहिणी ।

स्वातिचित्रे त्रयोदश्यां सप्तम्यां हस्तराक्षसे ॥२९॥ नवम्यां कृत्तिकाष्टम्यां पूर्वाषाढचां च रोहिणी ॥ ३० ॥ अथ भवारजा योगाः । चण्डेश्वरः—आदित्यस्तु विशाखायां चंद्रस्याग्नेयसंज्ञके । पूर्वाषाढा कुजे प्रोक्ता बुधे तु श्रवणः स्मृतः ॥ ३१ ॥ जीवस्तु पूर्वफाल्गुन्यां पुष्ये शुक्रः प्रकीर्तितः । रेवती तु शनेर्ज्ञेया राहोस्तु भरणी स्मृता ॥ ३२ ॥ केतोः सार्पे तथा प्रोक्तं ग्रहाणां जन्मभानि तु । जन्मतिथौ तु जन्मर्क्षे शुभकर्म विवर्जयेत् ॥ ३३ ॥ ज्योतिर्निबन्धे—याम्यचित्रोत्तराषाढा धनिष्ठोत्तरफाल्गुनी । ऐंद्रपौष्ण्येर्कवारादिष्वर्कादिग्रहजन्मभम् ॥ ३४ ॥ वसिष्ठः—भरणी चित्र-विश्वर्क्षवसुभोत्तरफाल्गुनी । ज्येष्ठा च रेवती चैव जन्मर्क्षं भानुतः क्रमात् ॥ ३५ ॥ अस्मिन् योगे कृतं यच्च शुभकर्म विनश्यति । तस्माद्योगमिमं त्याज्यो मंगलेषु च सर्वदा ॥ ३६ ॥ बृहस्पतिः—विशाखार्कस्य जन्मर्क्षं तारानाथस्य कृत्तिका । वैष्णवं भूमिजस्याहुर्धनिष्ठा चन्द्रजस्य तु ॥ ३७ ॥ शुक्रस्य जन्मभं तिष्यं गुरोरुत्तरफाल्गुनी । शनेस्तु रेवती जन्म राहोर्जन्माश्विनी भवेत् ॥ ३८ ॥ शुभग्रहाणां जन्मर्क्षे शुभकर्म शुभावहम् । पापग्रहाणां जन्मर्क्षे शुभं वाप्यशुभं भवेत् ॥ ३९ ॥ व्यवहारसारे—हस्ते सूर्यश्चन्द्रमा रोहिणीषु भौमे मूले सोमदेवे बुधश्च । भाग्ये जीवो वैष्णवो भार्गवश्च पित्रे शौरिः कीर्तितश्चामृताख्यः ॥ ४० ॥ चण्डेश्वरः—सावित्रं बार्हस्पत्यं च नैर्ऋतं च रवेर्दिने । अमृतं नामयोगोयं सर्वकार्यार्थसाधकः ॥ ४१ ॥ यदि वृष्टिर्व्यतीपातो दिनं चाप्यशुभं भवेत् । नश्यत्यमृतयोगेन तमः सूर्योदये तथा ॥ ४२ ॥ मूलं रवौ पुष्यकरेतराणि वेधामृगांकश्रवणश्च सोमे । कृशानुपुष्योत्तरभानि भौमे बुधेनुराधा वरुणः कृशानुः ॥ ४३ ॥ बृहस्पतौ पुष्यपुनर्वसू च भगोश्विनी च श्रवणं च शुक्रे । शनैश्चरे स्वातिपितामहोक्ते योगाः किलैते शुभदायिनः स्युः ॥ ४४ ॥ बृहस्पतिः—श्रोत्रा पुनर्वसू मूलं भाग्यभोत्तरभाद्रपात् । स्वाती च कृत्तिका चार्कात् शुभयोगाः शुभावहाः ॥४५॥ अथ यमघंटः । मघार्द्रा च विशाखा च मूलं स्वाती च रोहिणी । पूर्वाषाढा च भान्वादौ योगोयं यमघंटकः ॥ ४६ ॥ श्रीपतिः—मघा विशाखा आर्द्रा च मूलमृक्षं च कृत्तिका । रोहिणीहस्तमेतेषु यमघंटार्कतः क्रमात् ॥ ४७ ॥ जगन्मोहने—विवर्जयेत्सूर्यमघा च ज्येष्ठा सोमे च मूलं च तथा विशाखा । भौमे भरण्यामपि कृत्तिका च बुधेश्विनी चोत्तरफाल्गुनी च ॥ ४८ ॥ जीवे च सौम्यर्क्षमघार्यमा च सोमांगना स्वाति तथा भृगौ च । हस्ते च चित्रा च तथैव मंदे यमस्य दंष्ट्रा कथिता प्रवर्यैः ॥ ४९ ॥ नात्र यात्रा प्रकर्तव्या यात्रांतरमथापि वा । यमघंटस्तु योगोयमनर्हः सर्वकर्मसु ॥५०॥ यमघंटे कृतं कार्यं कर्तुः प्राणहरं ध्रुवम् । तथैव यमदंष्ट्रायां शीघ्रं दुष्टफलप्रदम् ॥ ५१ ॥ बृहस्पतिः—अश्विचित्रोत्तराषाढा श्रविष्ठोत्तरफाल्गुनी । ज्येष्ठा च रेवती चैव सूर्यादि सहिताः क्रमात् ॥ ५२ ॥ विवाहे विधवा चैव यात्रायां मरणं ध्रुवम् ।

विद्यारंभेषु मूकत्वं कृष्यारंभे तु निष्फलम् ॥ ५३ ॥ नवान्नभोजने व्याधिर्मृतिर्बालान्न-भोजने। क्षुरकर्मणि पंचत्वं प्रतिष्ठायां जगद्भयम् ॥ ५४ ॥ द्वितीये जन्मनि व्रात्यं गृहसंवेशने मृतिः। ग्रामादिनगरारंभे राज्यराष्ट्रविनाशनम् ॥ ५५ ॥ मघायां दिनकृद्वारः विशाखा चेन्दुवारगः ॥ आर्द्रायामारवारश्च बुधवारश्च नैर्ऋते ॥ ५६ ॥ वारुणेन गुरोर्वारं सितवारेण रोहिणी। आषाढाश्चार्कवारेण महानाशकरास्त्वमी ॥ ५७ ॥ आनंदादियोगः। श्रीपतिः-आनंदः कालदंडो धूम्राख्योथ प्रजापतिः सौम्यः। ध्वांक्षो ध्वजनामा च श्रीवत्सो वज्रमुद्गरौ छत्रम् ॥ ५७ ॥ मैत्रो मानसनामा पद्माख्यो लुंबकस्तथोत्पातः। मृत्युः काणः सिद्धिः शुभामृतौ मुसलमथ गदाख्यश्च ॥ ५९ ॥ मातंगराक्षसचरस्थिरप्रवर्द्धमाना इमे योगाः। अष्टाविंशति संख्या निजसंज्ञासदृशफलदाः स्युः ॥ ६० ॥ सूर्येऽश्विभात्तुहिनरोचिषि सौम्यधिष्ण्यात्सार्पाच्च भूमितनये च बुधे च हस्तात्। मैत्राद्गुरौ भृगुसुते खलु वैश्वदेवाच्छायासुते वरुणभात्क्रमशः स्युरेते ॥ ६१ ॥ अस्य फलम्। वसिष्ठः-आनंदे च भवेत्सिद्धिः कालदंडे मृतिर्भवेत्। धूम्राख्ये प्रीतिसंयुक्ता प्राजापत्ये च संपदा। ॥ ६२ ॥ सौम्ये तु सुखसंप्राप्तिः ध्वांक्षे धनसमागमः। ध्वजनाम्नि तु सन्मानं श्रीवत्से पुत्रसंपदा ॥ ६३ ॥ वज्राख्ये चाल्पमृत्युश्च मुद्गरे च धनक्षयम्। छत्रे च राजसन्मानं मैत्रे पुष्टिकरं भवेत् ॥ ६४ ॥ मानसे सुखसंपत्तिः पद्माख्ये सुखसंपदा। लुंबके धनहानिश्च उत्पाते क्लेश एव च ॥ ६५ ॥ मृत्यौ च मरणप्राप्तिः काले कालभयं भवेत्। सिद्धे सर्वत्र सिद्धिश्च शुभे कल्याणमेव च ॥ ६६ ॥ अमृते राज्यसिद्धिश्च मुसले हानिरेव च। गदाख्ये च भयं विन्द्यात् मातंगे कुलवर्धनम् ॥ ६७ ॥ राक्षसे च महत्कष्टं चरे कार्यचरं स्मृतम्। स्थिरे कार्यस्थिरत्वं च स्यात्प्रवर्द्धे वर्द्धते फलम् ॥ ६८ ॥ अथ मृत्युयोगाः। बृहस्पतिः-दिनकरदिनमैत्रं सोमवारे च वैश्वं शतभिषजि धराजश्चाश्विनी चन्द्रसूनौ। सुरगुरुदिनसौम्यं सार्पभं शुक्रवारे रविसुतदिनहस्तं मृत्युयोगं वदंति ॥ ६९ ॥ राजमार्तंडे-विशाखाद्या चतुष्कं च सूर्यवारादिषु क्रमात्। उत्पातमृत्युकाणाख्याः सिद्धाः स्युस्तिथयः क्रमात् ॥ ७० ॥ बृहस्पतिः-इंद्राग्न्यादि चतुर्वर्गा अर्कवारादिसंयुताः। क्रमात्प्रवासमरणव्याधिसिद्धास्तु संज्ञकाः ॥ ७१ ॥ वसिष्ठः-याम्याचित्रोत्तराषाढा मूलार्द्रा पुष्यरेवती। अर्कादौ क्रकचो योगस्त्रिदशैरपि गर्हितः ॥ ७२ ॥ ऐंद्रं चान्द्रं तथा पैत्रं विशाखा याम्यमेव च। अनुराधां गते सूर्ये वारे वर्ज्याः शुभाः सदा ॥ ७३ ॥ सविशाखा मघा ज्ञेया आषाढद्वयमैत्रकम्। सोमवारेण संयुक्ता सर्वशोभननाशना ॥ ७४ ॥ भौमे चार्द्रा धनिष्ठा च पूर्वाभाद्रपदाह्वयाः। शतभिषक्चोत्तराषाढा सर्वकर्मसु वर्जयेत् ॥ ७५ ॥ बुधेन मूलं पौष्णं च भरणीमश्विनीं तथा। अजैकपाच्छ्रविष्ठां च सर्वकर्मसु वर्जयेत् ॥ ७६ ॥ बृहस्पतिदिने त्वाष्ट्रं चान्द्रं चोत्तरफाल्गुनी। रोहिणी वारुणं चैव सर्वकर्मसु वर्जयेत् ॥ ७७ ॥ विशाखासार्पमैत्राणि

धनिष्ठातिष्यरोहिणी । चित्रा च पितृदैवत्यं शुक्रवारेण वर्जयेत् ॥ ७८ ॥ पुनर्वसुस्तथाचार्यो रेवत्युत्तरफाल्गुनी । सावित्रं श्रवणं चापि मंदवारेण वर्जयेत् ॥ ७९ ॥ चैत्रमैत्राश्विदेवेज्यविशाखावसुदेवता । यद्यर्कवारसंयुक्ता दोषा हालाहलोपमाः ॥ ८० ॥ त्रीण्युत्तराणि चित्रा च विशाखा इंदुवारगाः । कालकूटोपमा दोषाः शुभकर्मविनाशनाः ॥ ८१ ॥ विशाखा शततारार्द्रा विश्वे चैवारवारगाः । महादोषा भवन्त्येते गुणाहालाहलोपमाः ॥ ८२ ॥ पूर्वादि त्रितयं मूलवसुभं बुधवारगः । दोषानेव वदंत्येते सदा गुणविघस्मराः ॥ ८३ ॥ ताराचतुष्कभाग्येज्या वारुणा यमतारका । गुरुवारयुता षड्भिः दोषा लोकजिघांसवः ॥ ८४ ॥ शाकेन्द्राग्निमघाश्लेषा रोहिण्युशनवारगाः । महादोषाह्वया ह्येते महागुणविनाशनाः ॥ ८५ ॥ पुष्यादित्यार्यमाहस्तविश्वाषाढतारकाः । शनिवारयुताः सर्वदोषा गुणविमर्दकाः ॥ ८६ ॥ हस्ते रवौ शशधरे च मृगोत्तमांगं भौमाश्विनी बुधदिने च तथानुराधा । पुष्ये गुरौ भृगुसुतेपि च पौष्णधिष्णं रोहिण्यथार्कतनये मृतिसिद्धियोगाः ॥ ८७ ॥ भौमाश्विनी प्रवेशे च प्रयाणे शनिरोहिणी । गुरुपुष्यं विवाहेषु प्राणिनां मरणं ध्रुवम् ॥ ८८ ॥ राजमार्तंडे—एकोप्यमृतयोगोयं सकलं दोषसंचयम् । विनाशयति घर्मांशावुदिते तिमिरं यथा ॥ ८९ ॥ यदि विष्टिव्यतीपातं दिनं वाप्यशुभं भवेत् । हन्यतेऽमृतयोगेन भास्करेण तमो यथा ॥ ९० ॥ एषूक्ता दोषयोगेषु वारेशे बलवर्जिते । न दोषायैव दोषाः स्युः शुभकर्मनशोभनम् ॥ ९१ ॥ वारेशे बलसंयुक्ते स्वर्क्षे बलसमन्वित नक्षत्रेशदशायुक्ते निष्फलं प्रोक्तवद्भवेत् ॥ ९२ ॥ वारेशे बलसंयुक्ते नक्षत्रेशदशायुते । यद्यप्युक्ताः शुभा योगा न दद्युः स्वान् फलान्निशि ॥९३॥ अथ तिथिवारर्क्षाणां शुभाशुभयोगाः । वसिष्ठः—रवौ च पंचमी हस्ते द्वितीया सौम्यसोमयोः । भौमाश्विनी च सप्तम्यामनुराधा बुधाष्टमी ॥ ९४ ॥ तृतीया गुरुपुष्येषु पूर्णिमा भृगुरेवती । द्वादशी शनिरोहिण्यां विषयोगाः प्रकीर्तिताः ॥ ९५ ॥ विवाहे विधवा नारी व्याजदाता न लभ्यते । अमृते विषमित्याहुर्वसिष्ठात्रिपराशराः ॥ ९६ ॥ बृहस्पतिः—अर्का योः पंचमी युक्ता षष्ठी श्रवणभार्गवे । बुधे तु सप्तमी याम्यं शनौ पौष्णाष्टमी युता ॥ ९७ ॥ सोमे द्वितीया चित्रा च कुजपूर्णेंदुरोहिणी । गुरौ त्रयोदशी मैत्रं विषा हालाहलोपमाः ॥ ९८ ॥ ऐतेषु विषयोगेषु न कुर्याच्छोभनान्बुधः । शस्त्रभारादि कुर्वीत शापव्रतसमाप्तिकान् ॥ ९९ ॥ वसिष्ठः--अर्कवाराग्निपंचम्योः सोमे चित्रा द्वितीययोः । कुजे पूर्णेंदुरोहिण्यां सप्तमी याम्ययोर्बुधः ॥ १०० ॥ गुरौ मित्रत्रयोदश्यां षष्ठी श्रवणयोः सिते । पौष्णाष्टम्योः शनावेते योगा हालाहलाह्वयाः ॥ १ ॥ एषु योगेषु कर्तव्यः शत्रूच्चाटनमारणम् । विवाहादिषु कार्येषु निश्चितं निधनप्रदम् ॥ २ ॥ ज्योतिषचिन्तामणौ—आदित्ये चाष्टमी हस्तो द्वितीया चोत्तरात्रयम् । मूलं पुष्यं धनिष्ठा च सिद्धियोगाः प्रकीर्तिताः ॥ ३ ॥ सूर्ये विशाखा भरणी द्वादशी च चतुर्दशी ।

अनुराधा मघा ज्येष्ठा विरुद्धा सप्तमी सदा ॥ ४ ॥ सोमे च नवमी पुष्यं श्रवणं रोहिणी मृगः । दशमी च सदा मैत्रं सिद्धियोगाः प्रकीर्तिताः ॥ ५ ॥ चंद्रे चित्रोत्तराषाढा पूर्वाषाढविशाखयोः । एकादश्यां त्रयोदश्यां षष्ठी यत्नेन वर्जयेत् ॥ ६ ॥ भौमे षष्ठी तृतीया च अष्टमी च त्रयोदशी । मूलाश्विनी मृगाश्लेषा सिद्धा उत्तरभाद्रपात् ॥ ७ ॥ कुजे चार्द्रा धनिष्ठा च द्वितीया पूर्वभाद्रपात् । शततारोत्तराषाढा दशमी च विवर्जयेत् ॥ ८ ॥ बुधवारे द्वितीया च सप्तमी द्वादशी पुनः । मृगोनुराधा पुष्यं च सिद्धा कृत्तिकरोहिणी ॥ ९ ॥ बुधे धनिष्ठाभरणी अश्विनीमूलसंयुताः । तृतीया नवमी चैव प्रतिपद्रेवतीं त्यजेत् ॥ ११० ॥ गुरौ च दशपंचम्यां पूर्णिमास्यां विशाखयोः । पौष्णाश्विन्यनुराधां च सिद्धिः पुष्ये पुनर्वसौ ॥ ११ ॥ जीवेष्टमी चतुर्थी च आर्द्रा चोत्तरफाल्गुनी । रोहे शतभिषा षष्ठी कृत्तिका मृगवर्जिता ॥१२॥ शुक्रे प्रतिपदा षष्ठी ह्येकादशी त्रयोदशी । अश्विनी रेवती पूफा श्रुतिंचित्रा दितिः शुभाः ॥ १३ ॥ भार्गवे रोहिणी ज्येष्ठा द्वितीयासप्तमीषु च । पुष्याश्लेषा मघा चैव सर्वकर्मणि वर्जिता ॥ १४ ॥ शनौ चतुर्थी नवमी चतुर्दश्यां च रोहिणी । श्रवणं च मघा स्वाती सिद्धिदा पूर्वफाल्गुनी ॥ १५ ॥ सौरे हस्तोत्तराषाढा रेवती चैव सप्तमी । षष्ठी चोत्तरफाल्गुन्यां पूर्वाषाढां विवर्जयेत् ॥ १६ ॥ बृहस्पतिः-बार्हस्पत्यं च सावित्रं नैर्ऋत्यं सूर्यवारगम् । सर्वेषु शुभकार्येषु सुभगाः स्युः शुभावहाः ॥ १७ ॥ चित्राश्रवणसौम्याः स्युर्यदि शीतांशुवारगाः । एते चापि सुधायोगाः सर्वशोभनशोभनाः ॥ १८ ॥ भाद्रपादाश्विनी चैव रोहिणी चोत्तरात्रयः । कुजवारेण संयुक्ताः सुधायोगो दिवौकसाम् ॥ १९ ॥ वैश्वाग्निमित्रनक्षत्रा बुधवारसमायुता । पंचमी सप्तमी युक्ता सुधायोगाः प्रकीर्तिताः ॥ १२० ॥ पूर्वाषाढापुनर्वस्वौ रेवती सहिता यदि । गुरोर्वारे सुधायोगस्त्रयोदश्या समायुतः ॥ २१ ॥ स्वातीशतभिषाभाग्यैः सहिता यदि नंदया । शुक्रवारः सुधायोगः सर्वकर्माणि दोषहा ॥ २२ ॥ रोहिणी वसुवायव्याः शनिवारसमायुताः । भद्रया सहिता योगाः शुभाख्याः शुभवृद्धिदाः॥२३॥ एषु योगेषु सर्वेषु विवाहे शोभनाः प्रजाः । दीर्घमांगल्यसंपत्तिर्मोदते पुत्रवृद्धिभिः ॥ २४ ॥ यात्रायामिष्टासिद्धिः स्याद्धललाभैर्जयैरपि । विद्यारंभे तु पांडित्यं चतुर्वर्गफलायतिः ॥ २५ ॥ कृष्णारंभे महाधान्यं धनपांतरयत्नतः । द्वितीये जन्मनि प्राज्ञे यज्ञकर्मविशारदः ॥ २६ ॥ नवान्नभोजने ज्ञानी दीर्घायुः शास्त्रपारगः । चूडाकर्मणि दीर्घायुर्नीरोगः श्रीपतिर्भवेत् ॥ २७ ॥ श्रीपतिः-विरुद्धयोगास्तिथिवारयाता नक्षत्रवारप्रभवाश्च ये च । हूणेषु वंगेषु खशेषु वर्ज्याः शेषेषु देशेषु न ते निषिद्धाः ॥ २८ ॥ रामः-कुयोगास्तिथिवारोत्थास्तिथिभात्था भवारजाः । हूणवंगखशेष्वेव वर्ज्यास्त्रितयजा स्तथा ॥ २९ ॥ कालिदासः-तिथिवारभवा भवारजाः किलयोगाश्च शुभाशुभाह्वयाः । विषयेष्वखिलक्रियाविधावखिलेष्वत्र विलोकनोचिता ॥१३०॥

श्रीपतिः--मनीषिणोर्द्धप्रहराद्वितियामारभ्य सर्वेष्वपि मंगलेषु । भौमोशनःसूर्यबुधार्किचंद्रसुरेज्यवारेषु विवर्जयंति ॥ ३१ ॥ त्रिविक्रमः--अर्द्धयामो द्वितीयादिद्विने त्याज्यः सदा बुधैः । भौमभार्गवभानुज्ञशनींदुगुरुवासरे ॥ ३२ ॥ त्याज्योर्द्धयामो वेदाद्रीद्विपंचाष्टत्रिषष्ठगाः । अष्टत्रिषट्भूवेदाद्रिदस्रकालश्च भास्करात् ॥ ३३ ॥ आद्या बुधे सूर्यसुते द्वितीया सोमे तृतीया च गुरौ चतुर्थी । षष्ठी कुजे सप्तमिका च शुक्रे सूर्येऽष्टमी कालकला विवर्ज्या ॥ ३४ ॥ अथ कुलिकः । मन्वर्कदिग्वस्वृतुवेदपक्षैरर्कान्मुहूर्ताः कुलिका भवन्ति । दिवानिरेकैरथ यामिनीषु ते गर्हिताः कर्मसु शोभनेषु ॥ ३५ ॥ दिवा द्वितीयः कुलिकोर्कजाते रात्रौ प्रविष्टे प्रथमे मुहूर्ते । रात्रेस्तथा पंचदशे विभागे एवं विवर्ज्यं कुलिकत्रयं च ॥ ३६ ॥ रवौ युगासप्तमष्टकेषु सोमे मुनी अंगकरा च रामा । द्विपंचरूपा रसमंगलेषु बाणायुगा सप्तबुधे च रूपा ॥ ३७ ॥ गुरौ वसू राम रसा च वेदा संध्याकरा बाणमुनिश्च शुक्रे । शनौ रसारूपयुगा च हस्ते स्युश्चार्द्धयामकुलिककंटककालवेला ॥ ३८ ॥

अथार्द्धप्रहरकुलिककंटककालवेला ।

| सू. | चं. | मं. | बु. | बृ. | शु. | श. | वाराः |
|---|---|---|---|---|---|---|---|
| ४ | ७ | २ | ५ | ८ | ३ | ६ | अर्धप्रहर. |
| ७ | ६ | ५ | ४ | ३ | २ | १ | कुलिक. |
| ३ | २ | १ | ७ | ६ | ५ | ४ | कंटक. |
| ८ | ८ | ६ | १ | ४ | ७ | २ | कालवेला. |

**कुलिकयामार्द्धापवादः** । वारेशे सबले चन्द्रे बलाढ्ये लग्नगे शुभे । कुलिकोदयोत्थदोषस्तु विनश्यति न संशयः ॥ ३९ ॥ वाराधीशे बलोपेते विधौ वा बलसंयुते । अर्द्धप्रहरसंभूतो दोषो नैवात्र विद्यते ॥ १४० ॥ अर्द्धप्रहरपूर्वार्धे मध्ये तु यमघंटके । कुलिकांत्यघटी त्याज्या शेषेषु शुभमाचरेत् ॥ ४१ ॥ त्रिविक्रमः—मन्वर्कदशवस्वंकवेदपक्षार्कतः क्रमात् । क्रमेण कुलिका वर्ज्या दिवाव्येकेषु रात्रिषु ॥ ४२ ॥ उपकुलिकम् । पंचवेदगुणाद्व्येकसप्तांगप्रहरार्धकाः । उपकुलिकाश्च विज्ञेया रविवारात्क्रमादमी ॥ ४३ ॥ कंटककालौ यामार्द्धौ ज्ञेयौ । गुणद्विचंद्रसप्तांगशरवेदास्तु कंटकाः । कालस्तु वसुरामांगभूवेदा मुनिपक्षकाः ॥ ४४ ॥ वाराद्विगुणिते मंदे भौमे ज्ञे सुरपूजिते । कुलिकः कंटकः कालवेला स्याद्यमघंटकः ॥ ४५ ॥ यमघंटकः उपकुलिकः । उपकुलिकं गुरुस्थाने भौमस्थाने च कंटकम् । कुलिशं शनिविज्ञेयं वारमादौ गुणेद्बुधः ॥ ४६ ॥ कुलिकादियोगाः । वसिष्ठः—यामार्धो यमघंटकः कुलिक इत्येते च वारोद्भवा दोषा लग्नतदंशसौम्यखचराः प्रोद्भूतसर्वान् गुणान् । विघ्नंत्येव सदा शरीरमखिलं दोषत्रयं प्रोत्कटाश्चान्यान्यान्गुणसंचयानपि महान्नामाधतुल्यनपि ॥ ४७ ॥ **अथैषां फलानि** । वसिष्ठः—कुलिके मरणं विंद्याद्यमघंटेऽथ नाशनम् । यामार्द्धे कार्यनाशः स्यात्कालवेला भयप्रदाः ॥ १४८ ॥

गर्गः--निधनं प्रहरार्द्धं तु निःसत्वं यमघंटके। कुलिके सर्वनाशः स्याद्रात्रावेते न दोषदाः ॥ ४९ ॥ यमघंटे त्यजेदष्टौ मृत्यौ द्वादश नाडिकाः। अन्येषां दुष्टयोगानां मध्याह्नात्परतः शुभम् ॥१५०॥ उत्पाते यमघंटे च काणे क्रकचके तथा। तिथौ दग्धे च पापे च प्राक् यामात्परतः शुभम् ॥ ५१ ॥ अयोगेषु च सर्वेषु यात्रामेव विवर्जयेत्। विवाहादि न कुर्वीत गर्गादीनामिदं वचः ॥ ५२ ॥ अथ दुष्टमुहूर्ताः। अर्यम्णोर्के तुहिनकिरणे राक्षसब्राह्मसंज्ञौ पित्राग्नेयौ क्षितिसुतदिने चंद्रपुत्रेभिजिच्च। पित्रब्राह्मौ भृगुसुतदिने राक्षसाख्यौ च जीवे भौजंगेऽसौ सवितृतनये वर्जनीयौ मुहूर्तौ ॥ ५३ ॥ वसिष्ठः--अर्यम्णौ भानुवारे शशधरदिवसे राक्षसब्राह्मसंज्ञौ पित्राग्नेयौ कुजाह्ने शशिसुतदिवसे योभिजित्संज्ञकश्च। जीवे यौ राक्षसाख्यौ भृगुसुतदिवसे ब्राह्मपैत्रावहीशौ शौरावेते विवर्ज्यास्त्वथ च निधनदा मंगले दुर्मुहूर्ताः ॥ ५४ ॥ अथ वारविषघटी। वृद्धगर्गः--विंशच्चतुर्द्वादशदिक्च शैला वाणाश्च तत्वानि यथाक्रमेण। सूर्यादिवारेषु भवत्यनन्तरं नाडीविषाख्यं घटिकाचतुष्टयम् ॥ ५५ ॥ अथ तिथिविषघटी। वसिष्ठः--तिथीषु नागेंद्रगिरीषु वारिधिर्गजाद्रिदिक् पावकविश्ववासवः। मुनीभसंख्या प्रतिपत्तिथेः क्रमात्परं विषं स्याद्घटिकाचतुष्टयम् ॥ ५६ ॥ अथ नक्षत्रविषघटी। खाक्षाजिनात्रिंशदतः खवेदाः शक्राकुदस्रा खगुणा नखाश्च। दंताखरामाकरजाः पुराणा क्ष्मावाहवो विंशतिरब्धिचंद्रा ॥ ५७ ॥ इंद्रास्तु काष्ठा मनवः षडक्षा वेदाश्वनो व्योम भुजा दशाश्च। नागेंदवो भूपतयोब्धिदस्रा व्योमाग्नयो दस्रमुखर्क्षकाणाम् ॥ ५८ ॥ आद्यं परस्माद्विषनाडिकाख्यास्त्याज्याश्चतस्रः खलु शोभनेषु। विषाख्य डीषु कृतं शुभं यद्विनाशमायात्यचिरेण सर्वम् ॥ ५९ ॥ कुर्वन्ति नाशं विषनाडिकास्ता लग्नाश्रितानां सगुणान् विशेषान्। जन्तून् यथा कुष्ठभगंदराश्मर्याध्मानशूलक्षभवातरोगाः ॥ १६० ॥ नारदः--विवाहव्रतचूडासु गृहारंभप्रवेशयोः। यात्रादिशुभकार्येषु विघ्नता विषनाडिका ॥ ६१ ॥ यात्राविवाहादिषु मंगलेषु सर्वेषु नूनं विषनाडिकाश्च। कुर्वंति कर्तुर्मरणं हि शीघ्रं कृतप्रमाणायुष एव धात्रा ॥६२॥ अथास्य भंगः। विषनाड्युत्थितं दोषं हंति सौम्यर्क्षगः शशी। मित्रदृष्टोथवा स्वीयवर्गस्थो लग्नगोपि वा ॥ ६३ ॥ चन्द्रो विषघटीदोषं हंति केंद्रत्रिकोणगः। लग्नं विना शुभैर्दृष्टं केंद्रे वा लग्नपस्तथा ॥ ६४ ॥ अथ कालहोराकथनम्। श्रीपतिः--वारप्रवृत्तेर्घटिका द्विनिघ्ना कालाख्यहोरापतयः शरामाः। दिनाधिपाद्या रविशुक्रसौम्यशशांकसौरेज्यकुजाः क्रमेण ॥ ६५ ॥ केशवः--द्विघ्नेष्टनाडीशरलब्धितो वा वारप्रवेशादपि कालहोरा। संख्योक्तवृत्तास्वपि यद्युभाभ्यां क्रूरः कुवर्गश्च ददाति दोषः ॥ ६६ ॥ गर्गः--क्रूरवारे क्रूरहोरा ना शस्ता इति मंगले। नातिदुष्टा शुभे वारे रात्रौ स्वल्पफलप्रदाः ॥ १६७ ॥ इति श्रीज्योतिर्विद्रयादत्तात्मजरामदीनकृतसंग्रहे बृहद्दैवज्ञरंजने सप्तत्रिंशं वर्ज्यकालप्रकरणं समाप्तम्।

# अथाष्टत्रिंशं अपवादप्रकरणं प्रारभ्यते ।

बृहस्पतिः-अथातः संप्रवक्ष्यामि दोषाणामपवादतः । कालस्य शोभनत्वेन शास्त्रार्थस्य च पालनम् ॥ १ ॥ गुणानामपवादोस्ति दोषाणामेव शान्तिना । प्रायश्चित्तायथा दोषे स्वाचारे नैव चोदिताः ॥ २ ॥ एवमेतेषु सर्वेषु दोषेषूक्तवलेषु च । अपवादान्प्रवक्ष्यामि निमित्तेषु विशेषतः ॥ ३ ॥ मांडव्यः-दोषाणां च गुणानां च तारतम्यं विचार्यते । बलाबलविभागेन पश्चात्कालं समादिशेत् ॥ ४ ॥ गुणो वा यदि वा दोषो दुर्बलो नष्टतां व्रजेत् । स एव पुनरुत्कृष्टवीर्यवान्स फलप्रदः ॥ ५ ॥ बृहस्पतिः-दोषाश्च गदिताः सर्वे गुणेभ्यो बहवः कलौ । तथापि दोषा नश्यंति स्वापवादैर्गुणैरपि ॥ ६ ॥ जीवः सर्वबलोपेतो लग्नकेन्द्रगतो यदि । तेजस्वी सर्वदोषाणां हन्ता लग्ने विशेषतः ॥ ७ ॥ तथैव शुक्रचांद्री च बलवन्तौ प्रकाशितौ । रश्मिमन्तौ स्ववर्गस्थौ विशेषाद्दोषनाशनौ ॥ ८ ॥ यदा शुभग्रहः केन्द्रे भवेच्च शुभवीक्षितौ । त्रिषडेकादशे पापास्तदा पापोदयोपि सत् ॥ ९ ॥ यदातिबलवान्सौम्यचंद्रावन्योन्यवीक्षितौ । न चेल्लग्नांशके क्रूरस्तदा पापोदयोपि सत् ॥ १० ॥ जीवशुक्रौ यदा केन्द्रे परस्परमुपागतौ । नवांशमंडले चक्रे सर्वदोषविनाशनौ ॥ ११ ॥ यदा सर्वे ग्रहा लग्नादावर्क्षांशगतस्तदा । दोषा नाशं ययुः सर्वे यथादित्योदये तमः ॥ १२ ॥ यदा जीवस्थितांशर्क्षाद्भवराश्यंशगः सितः । तदा दोषा ययुर्नाशं यथा रामेण राक्षसाः ॥ १३ ॥ गुरुस्थितांशराशेर्वा भवराश्यंशगो बुधः । यदा तदा ययुर्दोषा नाशं पात्रेषु दानवत् ॥ १४ ॥ शुक्रस्थितांशकर्क्षात्तु भवराश्यंशगो बुधः । तदा दोषा लयं यांति दुर्गामार्जितवित्तवान् ॥ १५ ॥ बुधस्थितांशराशेस्तु भवराश्यंशगे विधौ । तदा दोषा ययुर्नाशं पापा वा भववंदनात् ॥ १६ ॥ यदा बुधोदयांशर्क्षादायराश्यंशगः सितः । तदा दोषा शमं यांति यथा रोगा भिषग्वरैः ॥ १७ ॥ लग्नांशराशे नव पंचमर्क्षनवांशगा जीवसितेंदुजाः स्युः । यदा तदा दोषगणाः प्रयांति नाशं यथा देवगणेऽसुरौघाः ॥ १८ ॥ यदा शशांकाद्गुरुरीहितार्चैः केंद्रत्रिकोणेषु समस्तवर्यैः । तदा ययुर्नाशमुदग्रवीर्या दोषा यथा हालहलो हरेण ॥ १९ ॥ जीवांशकर्क्षाद्यदि केन्द्रसंस्थो निशाकरो वास्य सुतोथ वापि । तदाधिगच्छंति विनाशमुग्रा दोषा यथाब्जा हिमसंनिपाते ॥ २० ॥ देवेज्ययुक्तांशकभाद्विलग्नं यावद्भवेत्तावति राशिगेऽर्कः । दोषास्तदा स्युर्विलयं सभार्या यथानधीताः पुरुषास्तथैव ॥ २१ ॥ यथा विलग्नांशगतोपि जीवः शुक्रांशराजा सकला बलाढ्या । तदा लयं याति बलौघदोषा यथा गजौघा हरिसन्निधाने ॥ २२ ॥ शशांकयुक्तो सकृतोपि वा यदा गुरुज्ञशुक्राः स्युरयुग्मभागगाः । यदा तदा दोषगणाः प्रयांति ते नाशं यथा ब्रह्मविदर्थसंगात् ॥ २३ ॥

शशाकलग्नांशगताः प्रयांति गुरुज्ञशुक्रा यदि लग्नभागे । यदा तदा दोषगणाः प्रयांति ते नाशं यथा ब्रह्मविदर्थसंगात् ॥ २४ ॥ शशांकयुक्तांशकराशिकेन्द्रे शुभग्रहाः स्युर्बलरश्मियुक्ताः । तदा लयं यात्यति दोषसंघं प्रतिग्रहेणैव यथा द्विजत्वम् ॥ २५ ॥ यदा शशांकोपचये त्रिकोणगः शुभग्रहाः सौम्यनिरीक्षितो बली । तदा गुणैर्दोषगणो विनश्यति यथा महादानगणस्य बाहुजः ॥ २६ ॥ इति श्रीज्योतिर्विद्रयादत्तात्मजरामदीनकृतसंग्रहे बृहद्दैवज्ञरंजने अष्टत्रिंशं अपवादप्रकरणं समाप्तम् ॥

## अथ एकोनचत्वारिंशं संधिप्रकरणं प्रारभ्यते ।



तत्रादावब्दसंधिः सोऽब्दस्त्रिधा । उक्तं च बृहस्पतिसंहितायाम्–प्राकृतोऽब्दो गुरोरब्दः सौराब्दास्त्रिविधाः स्मृताः । तेषामादौ तथांत्ये च त्र्यहं वै वर्जयेच्छुभान् ॥ १ ॥ अथ प्राकृताब्दलक्षणम् । इंदुर्द्वादशमासेन प्राकृताब्दः प्रकीर्तितः । चैत्रे सिते प्रथमयामादौ तस्यादिरुच्यते ॥ २ ॥ गुरोरब्दस्तु तत्रैव । यथा गुरूदयो भानोर्गुरोरब्दस्तथातिगः । वर्षसंधिः । सौराब्दलक्षणं सूर्यसिद्धाते संक्रात्या सौर उच्यते ॥ वसिष्ठसंहितायाम्–अब्दास्तु त्रिविधा जीवसौरचन्द्राह्वयाः सदा । तेषामादौ तथा चान्ते त्रिदिनं वर्जयेच्छुभ ॥ ३ ॥ इति दोषानिरूपणाध्याये । बृहस्पतिः–एषु सर्वेषु कालेषु बहूनां दोषसंगमात् । विषतुल्या भवन्त्येते कालास्तेषु शुभं त्यजेत् ॥ ४ ॥ परंतु यस्मिन्देशे बृहस्पतिमानेन व्यवहारस्तद्देशे बार्हस्पत्याब्दसंधिस्त्याज्यः यत्र सौरमानेन तत्र सौराब्दसंधिः अस्य नियमाः । नर्मदोत्तरगोले तु बार्हस्पत्येन वत्सरः ॥ तस्यास्तु दक्षिणे भागे सौरमानेन वर्तते ॥ ५ ॥ अत्रास्मिन् देशे विवाहादौ स्मृतः सौर इति वाक्यात्सौरमानेनैव विवाहोपनयनादिके गृह्यते । तेनात्र सौराब्दादिसंधिस्त्याज्यः प्राकृतोऽब्दस्तु लोके कालांतरादिव्यवहारो दृश्यते । माण्डव्यः–वर्षान्ते पक्षमेकं तु मासांते तु दिनत्रयम् । पक्षांते दिनमेकं तु वर्जयेच्छुभकर्माणि ॥ ६ ॥ वसिष्ठसंहितायाम्–मासांते त्रिदिनं दोषमब्दांते पक्षमेव च इति विवाहप्रकरणे । पुनः–सौराब्दांते त्यजेत्पक्षं चान्द्रे तु नवमं त्यजेत् । सावनांतेऽमं त्याज्यं नाक्षत्रे पौष्णभात्रयम् ॥ ७ ॥ गुरुः–घटिकाद्वयमृक्षान्ते मासान्ते तु दिनत्रयम् । वर्षान्ते वर्जयेत्पक्षं ग्रहणे दिनसप्तकम् ॥ ८ ॥ ऋक्षान्ते पुत्रनाशः स्यान्मासान्ते तु धनक्षयः । वर्षान्ते वर्गनाशः स्याद्ग्रहणात्सर्वनाशनम् ॥ ९ ॥ कश्यपसंहितायाम्–वत्सरायनमासर्तुसंधिर्दैन्यप्रदः शुभे । तिथिसंधौ मनस्तापो धिष्ण्यसंधौ महद्भयम् ॥ १० ॥ ज्योतिःप्रकाशे–वर्षायनर्तुमासानां संधिर्वृष्टिरकालजा । संहितासारे–पक्षोऽब्दसंधिस्त्रिदिनं च माससंधिस्त्रिनाडचोभयसंध्ययोश्च । नाडचश्चतस्रास्तिथिऋक्षयोगं संधिस्तदर्द्धं करणस्य संधिः ॥ ११ ॥ अयनसंधिः । बृहस्पतिः–मृगकर्क्योर्यदा भानोः प्रवेशसमय-

स्तद । अयनोनाम पुण्यानामधिपश्चोदितः पुनः ॥ १२ ॥ पूर्वे तु षडहं वर्ज्यमयनाख्यद्वयस्य तु । अंत्यद्वौ षडहं पुण्यमुत्तरादक्षिणाख्ययोः ॥ १३ ॥ षडहं षडहं पूर्वपश्चिमायनयोर्द्वयोः ॥ १४ ॥ वसिष्ठः—दिनमेकं सदा त्याज्यमयने विषुवद्वये । संक्रान्तिवत्तदयनं ज्ञातव्यं मङ्गलेषु च ॥ १५ ॥ अथ गोलसंधिः । बृहस्पतिः—तद्वत्क्रियतुले भानाः सयोगसमयस्ततः । पूर्वे परे च नाडीनां वर्ज्या षष्ठी च शोभने ॥ १६ ॥ गर्गः—अयने विषुवेष्वेव परं पूर्वदिनं त्यजेत् । अन्यसंक्रमणे पूर्वापराः षोडश नाडिकाः ॥ १७ ॥ अथ संक्रांतिसंधिः । स्थिराख्ये चोभयाख्ये च भानोः संवेशनं यदा । तदा संक्रांतिर्नाम स्यात्कालो राशौ विषोपमा ॥ १८ ॥ पूर्वपश्चिमयोस्तस्य त्रिंशन्नाड्यो विवर्जयेत् । शुभान् सर्वान् सयात्रादीन् धर्मान्मात्रारभेन्नृषु ॥ १९ ॥ वसिष्ठः—पूर्वतः परतश्चैव संक्रांतेश्च विवर्जयेत् । मंगलेषु सदा दुष्टनाड्यः षोडश षोडश ॥ २० ॥ यद्यायनप्रवेशः स्यात्तदा तद्राशिसंक्रमः । तस्मिन्नपि दिने त्याज्या नाड्यः षोडश षोडश ॥ २१ ॥ नारदोपि—मासांते दिनमेकं तु तिथ्यंते घटिकाद्वयम् । ऋक्षांते घटिकात्रीणि विवाहादौ विवर्जयेत् ॥ २२ ॥ मासांते म्रियन्ते कन्या तिथ्यन्ते च विपुत्रिणी । ऋक्षान्तेषु च वैधव्यं मृत्युर्विष्टौ द्वयोर्भवेत् ॥ २३ ॥ माण्डव्यः—नक्षत्रयोगतिथिसंधिषु नाडिकैका तिथ्यष्टविंशतिपलैः सहितोभयत्र । कर्कालिमीनतनुसंधिषु दिक्पलानि त्याज्यानि शेषविवरेषु च पंच पंच ॥ २४ ॥ श्रीपतिः—नक्षत्रतिथिलग्नान्तं गण्डान्तं त्रिविधं स्मृतम् । नव पंच चतुर्थान्ते द्व्येकार्द्धघटिका मता ॥ २५ ॥ सूर्यसिद्धान्ते—व्यतिपातभयं घोरं गण्डान्तत्रितयं तथा । एतद्भसंधित्रितयं सर्वकर्मसु वर्जयेत् ॥ २६ ॥ नारदः—उग्रं च संधित्रितयं गण्डान्तं त्रिविधं महत् । मृत्युदं जन्मयात्रासु विवाहस्थापनादिषु ॥ २७ ॥ तिथिसंधिः । त्रिविक्रमः—पूर्णानन्दाख्ययोस्तिथ्योः संधिनाडीद्वयं तथा । गण्डान्तं मृत्युदं जन्मयात्रोद्वाहव्रतादिषु ॥ २८ ॥ नक्षत्रसंधिः । पौष्णाश्विन्योः सार्पपित्र्यर्क्षयोश्च यच्च ज्येष्ठामूलयोरंतरालम् । तद्गण्डान्तं स्याच्चतुर्नाडिकं हि यात्राजन्मोद्वाहकालेष्वनिष्टम् ॥ २९ ॥ अश्विनीमघमूलादौ त्रिवेदनयनाडिका । रेवतीसार्पशक्रान्ते मासरुद्ररसस्तथा ॥ ३० ॥ नारदः—कुलीरसिंहयोः कीटचापयोर्मीनमेषयोः । गण्डान्तरालं स्याद्व्येकार्द्धं चैव मृतिप्रदम् ॥ ३१ ॥ अथैषामपवादः । तिथ्यादीनां संधिदोषं तथा गण्डान्तसंज्ञकम् । हंति लाभगतश्चन्द्रः केन्द्रगा वा शुभग्रहाः ॥ ३२ ॥ आवश्यके तु नक्षत्रयोगतिथिसंधिष्वित्यादि पूर्वं लिखितमत्र । कश्यपः—अब्दायनर्तुमासोत्थाः पक्षतिथ्यर्क्षसंभवाः । ते सर्वे नाशमायांति केन्द्रसंस्थे शुभग्रहे ॥ ३३ ॥ शाकल्यसंहितायां—तथैवं तिथिगण्डान्तं नास्तीन्दुबलशालिनि । तथैव लग्नगण्डान्तं नास्ति जीवे बलान्विते ॥ ३४ ॥ इति श्रीमद्दयादत्तज्योतिर्विदात्मजरामदीनज्योतिर्वित्कृते संग्रहे बृहद्दैवज्ञरंजने एकोनचत्वारिंशं संधिप्रकरणं समाप्तम् ।

---

# अथ चत्वारिंशं जन्ममासादीनां निर्णयप्रकरणं प्रारभ्यते।

अथ जन्ममासादीनां निर्णयः। हारीतः–यो जन्ममासे क्षुरकर्म यात्रां कर्णस्य वधं कुरुतेति मोहात्। नूनं सरोगं धनपुत्रनाशं प्राप्नोति मूढो वधबंधनानि॥ १॥ जन्मोदये जन्मदिने तिथौ वा मासेथवा जन्मनि तारकायाम्। प्रभूतमातंगतुरंगमोपि नृपः प्रयातारिवशं प्रयाति॥ २॥ वसिष्ठः–स्वजन्ममासर्क्षतिथिक्षणेषु वैनाशिकाद्यर्क्षगणेषु भेषु। नोद्वाहमात्माभ्युदयाभिलाषी नैवाद्यगर्भद्वितयं कदाचित्॥ ३॥ बालान्नभुक्तौ व्रतबंधने च राजाभिषेके खलु जन्मधिष्ण्यम्। शुभं त्वनिष्टं सततं विवाहे सीमंतयात्राखिलमंगलेषु॥ ४॥ शारङ्गधरः–जन्मर्क्षे सति दारिद्र्यं वैरं जन्मतिथावपि। जन्ममासेपि दौर्भाग्यं जन्मलग्नं शुभावहम्॥ ५॥ श्रीपतिः–जन्ममासि नच जन्मभे तिथौ नैव जन्मदिवसेपि कारयेत्। आद्यगर्भदुहितुः सुतस्य वा ज्येष्ठमासि नतु जातु मंगलम्॥ ६॥ महेश्वरः–न जन्ममासे न च जन्मधिष्ण्ये न जन्मकालीयदिने विदध्यात्। ज्येष्ठस्य मासि प्रथमस्य सूनोस्तथा सुतायामपि मंगलानि॥ ७॥ नारदः–जन्मभे जन्ममासं च जन्मवारे तिथिर्भवेत्। विशेषेण क्रियते कार्यमादिगर्भं परित्यजेत्॥ ८॥ रामः–जन्मर्क्षमासलग्नादौ व्रते विद्याधिको व्रती। आद्ये गर्भेपि विप्राणां क्षत्रादीनामनादिमे॥ ९॥ नारदोपि–पट्टबंधनचौलान्नप्राशने चोपनायने। शुभदं जन्मनक्षत्रमशुभं त्वन्यकर्मणि॥ १०॥ गर्गः–जन्मनक्षत्रगश्चन्द्रः प्रशस्तः सर्वकर्मसु। क्षौरभेषजवादाध्विकतनेषु च वर्जयेत्॥ ११॥ जन्मस्थेन शशांकेन पंच कर्माणि वर्जयेत्। यात्रां युद्धं गृहारंभं विवाहं क्षौरकर्म च॥ १२॥ राजमार्तंडे–जन्मोदयर्क्षमासे क्रियते मांगल्यपौष्टिकं कर्म। न शुभं वदंति गर्गाः श्रुतिवेधक्षौरयात्रासु॥ १३॥ भुजवलः–जन्मनि मासि विवाहः शुभदो जन्मर्क्षराशि च। लग्ने जन्मनि शुभदोऽशुभदो जन्मनि तिथौ भवति॥ १४॥ जन्मर्क्षे जन्ममासे जन्मतारादिने तथा। जन्मभे जन्मलग्ने च कल्पकोट्यां पतिव्रता॥ १५॥ फलप्रदीपे–जन्ममासे च पुत्राढ्या धनाढ्या जन्मभोदये। जन्मभे च भवेदूढा कन्याविविधसंततिः॥ १६॥ लल्लः–विवाहे जन्मभे-स्त्रीणां वर्जनीयं प्रयत्नतः। नैव पुंसामिह प्राहुर्ज्योतिर्मयविदो बुधाः॥ १७॥ ज्योतिःप्रकाशे–जन्मभं कृषिनृपाभिषेकयोर्भूषणे नगरगेहकर्मणि। आधिपत्यभुजि मौंजिबंधने पुंविवाह उदितं शुभं बुधैः॥ १८॥ मार्तंडे नारायणाचार्येण–आर्या उद्वहने जनुर्भममलं पट्टस्य बंधे जगुर्गेहग्रामनृपाभिषेककृषिमौंज्यन्नाशने भूषणे। इति॥ १९॥ च्यवनः–जन्मर्क्षे जन्ममासे वा तारायामथ जन्मनि। जन्मलग्ने भवेदूढा पुत्राढ्या पतिवल्लभा॥ २०॥ चण्डेश्वरः–जन्ममासेथ जन्मर्क्षे जन्मलग्नेथ जन्मभे। उद्वाहेषु च नारीणां प्रतिष्ठा महती भवेत्॥ २१॥ नारदः–न जन्ममासे जन्मर्क्षे

न जन्मदिवसेपि वा । आद्यगर्भसुतस्याथ दुहितुर्वा करग्रहः ॥ २२ ॥ शौनकः- यात्रायां पथि बंधनं कृषिविधौ सर्वस्वनाशो भवेद्भैषज्ये मरणं तथा सुनियतं दाहो गृहारंभणे । क्षौरे रोगसमागमो बहुविधं श्राद्धेर्थनाशस्तथा वादे बुद्धिविनाशनं युधि भयं प्राप्नोत्यसौ जन्मभे ॥ २३ ॥ अथ जन्ममासाद्यपवादः । गृहकौमुद्याम्- जन्ममासि विपरीतपक्षके वासरे दिननिशोर्विपर्यये । जन्मभे दलविपर्यये नरो मंगलेषु सकलेषु कारयेत् ॥ २४ ॥ भोजमार्तण्डे—जन्ममासे तिथौ भे च विपरीतदले साति । कार्यं मंगलमित्याहुर्गर्गभार्गवशौनकाः ॥ २५ ॥ मांडव्यः—जन्ममासनिषेधे तु दिनानि दश वर्जयेत् । आरभ्य जन्मदिवसात् शुभाः स्युस्तिथयो परे ॥२६॥ रेणुकः--जनेर्दिनं दुःखयते वसिष्ठश्चाष्टौ च गर्गश्च तथा दशात्रिः । स्याज्जन्मपक्षं किल भागुरिश्च शेषाः शुभा स्यात्खलु जन्ममासि ॥ २७ ॥ नारदः—आरभ्य जन्मदिवसाद्यावत्रिंशद्दिनं भवेत् । जन्ममासः स विज्ञेयः कथितः शौनकादिभिः ॥ २८ ॥ आत्रेयः—जन्मदिनादारंभो भवति हि मासस्तु खाग्निभिर्दिवसैः । विज्ञेयः शुभकार्येषु मुनिभिश्चोक्तो जन्ममासश्च ॥ २९ ॥ जगन्मोहने—जातं दिनं दूषयते वसिष्ठः पंचैव गर्गः त्रिदिनं तथात्रिः । तज्जन्मपक्षं किलभागुरिश्च व्रते विवाहे गमने सुरे च ॥ ३० ॥ व्यवहारसमुच्चये—स्नानं दानं तपो विद्या मांगल्यं हर्षवर्धनम् । उद्वाहश्च कुमारीणां जन्ममासे प्रशस्यते ॥ ३१ ॥ पूजामांगल्यवस्त्राणि विवाहो वस्तुसंग्रहम् । जन्ममासेपि कर्तव्यं क्षौराध्वानं च वर्जयेत् ॥ ३२ ॥ नारदः—जन्मराश्युद्गमे नैव जन्मलग्नोदयः शुभः । तयोरुपचयस्थानं यदि लग्नगतः शुभः ॥ ३३ ॥ इति श्रीमद्दयदत्तज्योतिर्विदात्मजरामदीनज्योतिर्वित्कृते संग्रहे बृहद्दैवज्ञरञ्जने चत्वारिंशं जन्ममासाद्यपवादप्रकरणं समाप्तम् ।

---

## अथैकचत्वारिंशं एकोदरविचारप्रकरणं प्रारभ्यते ।

अथैकोदरविचारः । वसिष्ठः—एकोदरीकरतलग्रहणं यदि स्यादेकोदरस्थवरयोः कुलनाशनं च । एकाब्दके तु विधवा भवतीह कन्या नद्यंतरे च शुभदं पृथुशैलरोधे ॥ १ ॥ मनुः--एकोदरप्रसूतानामेकस्मिन्मण्डपेहनि । एककालेपि भिन्नांशे व्रतं महति संकटे ॥ २ ॥ गर्गः--एकस्मिन्दिवसे लग्ने मण्डपे वा नवांशके । न समानक्रिया कुर्यात्सोदर्याणां कदा चन ॥ ३ ॥ नारदः—नैवेकजन्मनोः पुंसोरेकजन्मे तु कन्यके । नूनं कदाचिदुद्वाहो नैकदा मुण्डनद्वयम् ॥ ४ ॥ समानापि क्रिया कार्या मातृभेदे तथैव च ॥ विवाहे दुहितुः कार्यो न विवाहश्चतुर्दिनम् ॥ ५ ॥ एकोदरप्रसूतानामेकस्मिन्वत्सरे यदि । पाणिग्रहो भवेन्नूनं तत्रैका विधवा भवेत् ॥ ६ ॥ एकोदरप्रसूतानां नात्र कार्यत्रयं भवेत् । भिन्नोदरप्रसूतानां नेति शातातपोब्रवीत् ॥ ७ ॥

अथ प्रत्युद्वाहलक्षणमाह । स्वकन्या यस्य पुत्राय दत्ता तत्कन्यकायाः स्वपुत्रेण परिणयनं प्रत्युद्वाहः । नारदः–प्रत्युद्वाहो नैव कार्यो नैकस्मिन्दुहितृद्वयम् । नचैककन्ययोः पुंसोरेकजन्ये तु कन्यके ॥ ८ ॥ वृद्धमनुः–एकमातृजयोरेकवत्सरे पुरुषस्त्रियोः । न समानक्रियां कुर्यान्मातृभेदेपि कारयेत् ॥ ९ ॥ वसिष्ठः–न पुत्रीद्वयमेकस्मै प्रदद्यात्तु कदाचन ॥ १० ॥ स्मृतिरत्नावल्याम्–भ्रातृयुगे स्वसृयुगे भ्रातृस्वसृयुगे तथा ।एकस्मिन्मंडपे चैव न कुर्यान्मंडनद्वयम् ॥ ११ ॥ सोदरविषयमेतत् । यमः–एकोदरप्रसूतानामेकस्मिन्वासरे पुनः । विवाहो नैव कुर्वीत मण्डनोपरि मुण्डनम् ॥ १२ ॥ गार्ग्यः–भ्रातृयुगे स्वसृयुगे भातृस्वसृयुगे तथा । न कुर्यान्मंगलं किंचिदेकस्मिन्मंडपेऽहनि ॥ १३ ॥ एकस्मिन्वासरे प्राप्ते कुर्याद्यमलजातयोः । क्षौरं चैव विवाहं च मौंजीबंधनमेव च ॥ १४ ॥ ज्योतिर्विवरणे–एकोदरयोर्द्वयोरेकदिनोद्वहने भवेन्नाशः । नद्यंतरे एकदिने केप्याहुः संकटे शुभम् ॥ १५ ॥ भिन्नमातृजयोस्तु एकवासरे विवाहमाह । मेधातिथिः–पृथक् मातृजयोः कार्यो विवाहस्त्वेकवासरे । एकस्मिन्मंडपे कार्यः पृथक् वेदिकयोस्तथा ॥ १६ ॥ यमयोस्तु विशेषः । भट्टकारिकायाम्–एकस्मिन्वत्सरे चैकवासरे मण्डपे तथा । कर्तव्यं मंगलं स्वस्त्रोर्भ्रात्रोर्यमलजातयोः ॥ १७ ॥ स्मृतिसारे–पुत्रयोः स्वसृयुगयोः कुर्याद्यमलजातयोः । एकस्मिन्वत्सरे चाह्नि मण्डपेपि हि मंगलम् ॥ १८ ॥ नैकसंवत्सरे कुर्याद्भ्रात्रोर्यमलजातयोः । विवाहं व्रतबंधं च तथा व्रतविसर्जनम् ॥१९॥ स्वस्त्रोर्भ्रात्रोः स्वसृभ्रात्रोः सोदर्योश्च विशेषतः । विवाहं चैव कुर्वीत नैकाहे नैकमंडपे॥ २० ॥ वराहः–विवाहस्त्वेकजातानां षण्मासाभ्यंतरे यदि । असंशयं त्रिभिर्वर्षैस्तत्रैका विधवा भवेत् ॥ २१ ॥ च्यवनः–आदौ चौलं ततो मौंजी विवाहश्च शुभप्रदः । मातृभेदे बुधैरुक्तो मातुरैक्ये न कर्हिचित् ॥ २२ ॥ वसिष्ठः–ऋतुत्रयस्य मध्ये चेदन्याब्दस्य प्रवेशनम् । तदा ह्येकोदरस्यापि विवाहस्तु प्रशस्यते ॥ २३ ॥ इति श्रीज्योतिर्विद्दयादत्तात्मज रामदीनविरचिते संग्रहे बृहद्दैवज्ञरंजने एकचत्वारिंशं एकोदरविचारप्रकरणं समाप्तम् ।

## अथ द्विचत्वारिंशं ज्येष्ठमासनिर्णयप्रकरणं प्रारभ्यते ।

गुरुः–ज्येष्ठेन ज्येष्ठयोः कार्यं नृनार्योःपाणिपीडनम् । तयोरेकतरे ज्येष्ठे ज्येष्ठमासेपि कारयेत् ॥ १ ॥ पराशरः–अज्येष्ठकन्यका यत्र ज्येष्ठपुत्रो वरो यदि । व्यत्ययेपि तयोस्तत्र ज्येष्ठमासः शुभप्रदः ॥ २ ॥ गर्गः–ज्येष्ठायाः कन्यकायाश्च ज्येष्ठपुत्रस्य सर्वदा । विवाहो नैव कर्तव्यो यदि स्यान्निधनं ध्रुवम् ॥ ३ ॥ मिहिरोपि–ज्येष्ठस्य ज्येष्ठकन्याया विवाहो न प्रशस्यते । तयोरन्यतरे ज्येष्ठे ज्येष्ठो मासः प्रशस्यते ॥ ४ ॥ वराहः–द्वौ ज्येष्ठौ मध्यमौ प्रोक्तावेकं ज्येष्ठं सुखावहम् । ज्येष्ठत्रयं न कुर्वीत विवाहे

सर्वसंमतम् ॥ ५ ॥ चण्डेश्वरः—आद्यगर्भसुतस्याद्या दुहितुर्वा करग्रहः ॥ ६ ॥ विद्यारंभं विवाहं च चूडाकरणमेखलाः । ज्येष्ठे ज्येष्ठमकुर्वीत कर्णवेधव्रतादिकम् ॥ ७ ॥ ज्येष्ठमासनिषेधोत्र ज्येष्ठापत्यपरः स्मृतः । अन्यापत्यस्य कुर्वीत वाक्यभेदादयं विधिः ॥ ८ ॥ गर्गः—मार्गमासे तथा ज्येष्ठे क्षौरं परिणयं व्रतम् । ज्येष्ठपुत्रदुहित्रोश्च यत्नेन परिवर्जयेत् ॥ ९ ॥ वात्स्यः—मार्गशीर्षे तथा ज्येष्ठे विवाहं चौलमेव च । ज्येष्ठे पुत्रदुहित्रोश्च न कुर्वीत व्रतं तथा ॥ १० ॥ मार्तण्डे—ज्येष्ठं पूर्वभवस्येति ॥ ११ ॥ पुनः वात्स्यः—व्रतबंधं विवाहं च चूडा कर्णस्य वेधनम् । ज्येष्ठपुत्रदुहित्रोश्च जन्ममासि न कारयेत् ॥ १२ ॥ अस्यापवादः । सारसंग्रहे—ज्येष्ठगास्याद्यगर्भस्य शुभवर्ज्यं क्रिया अपि । कृत्तिकास्थं रविं त्यक्त्वा ज्येष्ठे ज्येष्ठस्य कारयेत् ॥ १३ ॥ भारद्वाजः—ज्येष्ठे ज्येष्ठस्य कुर्वीत भास्करे चानले स्थिते । चोत्सवादीनि कार्याणि दिग्दिनानि च वर्जयेत् ॥ १४ ॥ दशाहं चैव गर्गस्तु त्रिदशाहं बृहस्पतिः ॥ १५ ॥ अथ लघुज्येष्ठयोर्विचारः । देवलः—यस्य जातस्य यमयोः पश्यंति प्रथमं मुखम् । संतानयोः पिता चैव तस्मिन् ज्येष्ठं प्रतिष्ठितम् ॥ १६ ॥ मनुः—जन्मज्येष्ठे न चाह्वानं सुब्रह्मण्यास्वपि स्मृतम् । यमयोश्चैव गर्भेषु जन्मतो ज्येष्ठता मता ॥ १७ ॥ बृहल्लघुमंगलमाह सारसमुच्चये—चूडाकेशांतसीमंतविवाहोपनयनान्बुधः । गुरुमंगलमित्याहुस्तदन्यल्लघुमंगलम् ॥ १८ ॥ कात्यायनः—मातृयज्ञक्रियापूर्वं ज्येष्ठं कृत्वा तु मंगलम् । ऋतुत्रयं पुनर्यावन्न कुर्याल्लघुमंगलम् ॥ १९ ॥ चौलं मुंडनमेवोक्तं वर्जयेन्मंडनात्परम् । मौंजी चोभयतः कार्या यतो मौंजी न मुंडनम् ॥ २० ॥ अभिन्ने वत्सरेपि स्यात्तदहस्तत्र भेदयोः । अभेदे तु विनाशः स्यान्न कुर्यादेकमंडपे ॥ २१ ॥ वसिष्ठः—न पुंविवाहोर्ध्वमृतुत्रयेपि विवाहकार्यं दुहितुः प्रकुर्यात् । न मंडनाच्चापि मुंडनं च गोत्रैकतायां यदि वाक्यभेदः ॥ २२ ॥ अत्रिः—कुले ऋतुत्रयादर्वाक् मंडनान्न तु मुंडनम् । प्रवेशान्निर्गमो नेष्टो न कुर्यान्मंगलत्रयम् ॥ २३ ॥ कुर्वंति मुनयः केचिदन्यस्मिन्वत्सरे लघु । लघु वा गुरु वा कार्यं प्राप्तं नैमित्तिकं तु यत् ॥ २४ ॥ मुंडनं चौलमित्युक्तं व्रतोद्वाहौ तु मंडनम् ॥ २५ ॥ ज्योतिर्विवरणे—ऊर्ध्वं विवाहाच्छुभदो नरस्य नारीविवाहो न ऋतुत्रये स्यात् । नारीविवाहात्तदहेपि शस्तं नरस्य पाणिग्रहमाहुरार्याः ॥ २६ ॥ न मंडनान्मुंडनमूर्ध्वमिष्टं न पुत्रयोर्मुण्डनमेकवर्षे । न पुंविवाहोर्ध्वऋतुत्रयेपि विवाहकार्यं दुहितुश्च कुर्यात् ॥ २७ ॥ नारदः—मुंडनान्मंडनं कार्यं मंडनान्नैव मुंडनम् । पुत्रीविवाहात्परतः सदैव शुभप्रदं पुत्रविवाहकर्म । पुत्रद्वये नैव ऋतुत्रयेपि पुत्रीद्वये चापि कदाचिदेव ॥ २८ ॥ वात्स्यः—स्त्रीविवाहः कुले निर्गमः कथ्यते पुंविवाहः प्रवेशो वसिष्ठादिभिः । निर्गमादादितो न प्रवेशो हितस्तत्र संवत्सरांते विधिः कीर्तितः ॥ २९ ॥ कात्यायनोपि—पुत्रोद्वाहः प्रवेशाख्यः कन्योद्वाहस्तु निर्गमः ॥ ३० ॥ वसिष्ठः—द्विशोभनं त्वेकगृहेपि नेष्टं शुभं तु पश्चा-

न्नवमिर्दिनैस्तु । आवश्यके शोभनमुत्सुको वा द्विरथवाचार्यविभेदतो वा ॥ ३१ ॥ सारावल्याम्-फाल्गुने चैत्रमासे तु पुत्रोद्वाहोपनायने । भेदादब्दस्य कुर्वीत नर्तुत्रय विलंघनम् ॥ ३२ ॥ संहिताप्रदीपे-ऊर्ध्वं विवाहात्तनयस्य नैव कार्यो विवाहो दुहितः समार्द्धम् । अप्राप्य कन्यां श्वशुरालयं च वधूप्रवेशास्स्वगृहं न चादौ ॥ ३३ ॥ कपर्दिकासु-उद्वाह्य पुत्रीं न पिता विदध्यात्पुत्रांतरस्योद्वहनं कदापि । यावच्चतुर्थं दिनमत्र पूर्वं समाप्य चान्योद्वहनं विदध्यात् ॥ ३४ ॥ काश्यपः-मौंजीबंधस्तथोद्वाहः षण्मासाभ्यन्तरेपि वा । पुत्र्युद्वाहं न कुर्वीत विभक्तानां न दोषकृत् ॥ ३५ ॥

इति श्रीज्योतिर्विद्वर्यादत्तात्मजरामदीनज्योतिर्वित्कृते संग्रहे बृहद्दैवज्ञरंजने द्विचत्वारिंश ज्येष्ठमासप्रकरणं समाप्तम् ।

## अथ त्रिचत्वारिंशं सिंहस्थगुरुप्रकरणं प्रारभ्यते ।

अथ सिंहस्थगुरुविचारः । शौनकः-कीर्त्यागारविवाहयागगमनं क्षौरं च कर्णव्यधं विद्यादेवविलोकनोपनयनं दीक्षापरीक्षाव्रतम् । स्नानं तीर्थगमं वनं पुरमहीदानं प्रतिष्ठागणं सिंहस्थे विबुधार्चने न शुभदं कर्तुस्तथा सूर्यगम् ॥ १ ॥ शौनकः-सिंहस्थेऽमरमंत्रिणि । विवाहव्रतयात्रादिपुरहर्म्यगृहादिकम् । क्षौरं विद्योपविद्यां च यत्नतः परिवर्जयेत् ॥ २ ॥ कृष्णंभट्टीये स्कांदवचनम्-सिंहास्थिते गुरौ राजन् विवाहं नैव कारयेत् ॥ ३ ॥ माण्डव्यः--इष्टापूर्ते च चौलादि संस्कारान् वास्तुकर्म च । अन्यानि शुभकार्याणि न कुर्यात् सिंहगे गुरौ ॥ ४ ॥ गर्गः-न गुरौ सिंहराशिस्थे सिंहांशकगतेपि वा । क्षौरमन्नं न कुर्वीत विवाहं गृहकर्म च ॥ ५ ॥ निर्णयामृते-उद्यानचूडाव्रतबंधदीक्षा विवाहयात्रा च वधूप्रवेशः । तडागकूपत्रिदशप्रतिष्ठां बृहस्पतौ सिंहगते न कुर्यात् ॥ ६ ॥ कालनिर्णये-शांतिकं पौष्टिकं यात्रा प्रतिष्ठोद्वाहपूर्वकम् । न कुर्यात्सर्वमांगल्यं सिंहसंस्थे बृहस्पतौ ॥ ७ ॥ राजमार्तंडे--सिंहे यदा तिष्ठति देवपूज्यः पापं तदा वत्सरमादिशंति । वैधव्यमाप्नोत्यचिरेण कन्या विवाहिता स्याद्यदि माधवेन ॥ ८ ॥ विवाहचूडाव्रतकर्णवेधक्षौरप्रतिष्ठा च गृहप्रवेशः । सुवर्णशंखाद्युपभोगविद्या सिंहे सुरेज्ये न हि शोभनाः स्युः ॥ ९ ॥ मणिमालायाम्-यात्रा क्षौरं च दीक्षा च विवाहव्रतबंधनम् । प्रतिष्ठादि शुभं कार्यं त्यजेत्सिंहगते गुरौ ॥ १० ॥ लल्लः-मृगेंद्रसंस्थिते जीवे मध्यदेशे करग्रहे । मृत्युयोगो मृत्युदः स्याद्दंपत्योरिति निश्चयः ॥ ११ ॥ भृगुः-सीमंतजातकादीनि प्राशनांतानि च क्रमात् । कर्तव्यानि न दोषोस्ति पंचाननगते गुरौ ॥ १२ ॥ कल्पतरौ-नेष्टे शुक्रे तथा जीवे सिंहस्थे च बृहस्पतौ । कुर्याच्चैत्रे स्वदेव्यर्चां प्रत्यब्दं कुलधर्मतः ॥ १३ ॥ कालनिर्णये-सिंहस्थिते सुरगुरावधिमासके च ज्येष्ठे तथाद्यतनयस्य कुमारिकायाः ।

कुर्वीत नार्कगतनीचगयोर्विलग्ने जन्मेशयोश्च निखिलान्यपि मंगलानि ॥ १४ ॥ इति न्यायाद्विशेषवाक्यैः सामान्यवचनस्य बाधकत्वं भवति । कथंचिद्वाधकत्वमिति चेदुक्तम् । **अंशभेदेनापि वर्ज्यम्** । मुहूर्तचिन्तामणौ–सिंहे गुरौ सिंहलवे विवाहो नेष्ट इति । राजमार्तंडे–सिंहराशौ तु सिंहांशे यदा भवति वाक्पतिः । सर्वदेशेष्वयं त्याज्यो दंपत्योर्निधनप्रदः ॥ १५ ॥ सिंहेन्यराशिसिंहांशे यदा भवति वाक्पतिः । सर्वदेशे शुभं त्याज्यो दंपत्योर्निधनप्रदः ॥ १६ ॥ **देशभेदेनापि वर्ज्यम्** । वसिष्ठः–गोदावर्य्युत्तरे भागे भागीरथ्याश्च दक्षिणे । विवाहादि न कुर्वीत सिंहसंस्थे बृहस्पतौ ॥ १७ ॥ गर्गः–भागीरथ्युत्तरे तीरे गोदावर्याश्च दक्षिणे । व्रतोद्वाहादिकर्माणि सिंहगेज्ये न दुष्यति ॥ १८ ॥ वसिष्ठः–सिंहस्थिते सुरगुरौ यदि नर्मदाया स्तद्वर्जयेत्सकलकर्मसु सौम्यभागे । विंध्यस्य दक्षिणदिशि प्रवदंति चार्याः सिंहांशके मृगपतावपि वर्जनीयः ॥ १९ ॥ **नक्षत्रभेदेन सिंहस्थगुरुविचारः** । व्यासः–सिंहे सिंहांशके जीवे कलिंगे गौडगुर्जरे । कालमृत्युरयं योगो दंपत्योर्निधनप्रदः ॥ २० ॥ ज्योतिर्निबन्धे–गोदाया याम्यदिग्भागे भागीरथ्यास्तथोत्तरे । विवाहादि शुभं कार्यं सिंहस्थेपि बृहस्पतौ ॥ २१ ॥ वृद्धगर्गः–भागीरथ्युत्तरे कूले गौतम्या दक्षिणे तथा । विवाहो व्रतबंधो वा सिंहस्थेज्ये न दुष्यति ॥२२॥ वालभूषायाम्–गोदावरी रेविकांतः सिंहस्थस्य निषिद्धता । न गंगोत्तरतो गोदारेवयोर्दक्षिणे तथा ॥ २३ ॥ गणपतिः–सिंहे सिंहांशके जीवे विवाहादि न कारयेत् । गोदाया उत्तरे भागे भागीरथ्याश्च दक्षिणे ॥ २४ ॥ टोडरानंदे–सिंहराशौ तु सिंहांशे यदा भवति वाक्पतिः । नर्मदोत्तरगोले तु न दोषो दक्षिणामुखः ॥ २५ ॥ **मेषार्कविशेषः** । अगस्त्यः–कलिंगवंगेष्वथ मागधे च दोषः प्रपुष्टो न तथान्यदेशे ॥ २६ ॥ ज्योतिर्विदाभरणे–गोदावरीसौम्यतटप्रदेशाद्भागीरथीयाम्यतटं च यावत् । सिंधुप्रयातं सचिवे सलेपो नोद्वाहमाहुः परतो मघायाम् ॥ २७ ॥ कालनिर्णये–जीवे सिंहगतेसितास्तगदितं वर्ज्यं विधेयं तथा केचित्पत्रभगं त्यजंति च गुरून्नक्रेपि पंचाशगम् । **आवश्यके कृत्यम्** । गोदाप्राक्तटवासिनां व्रतविवाहक्षौरकार्यादिकं कार्यं तत्र सदात्र नापरतरं तर्थि हि गोदाप्लवम् ॥ २८ ॥ कल्पद्रुमे–अस्तोत्तरं सप्त च सिंहगोपि गुरुश्च भाग्यादिमपादयातः । वर्ज्योत्तरे गौतमजन्हुपुत्र्यो र्वैशाखमासेतरमासगोपि ॥ २९ ॥ वसिष्ठः–भागीरथ्युत्तरे कूले गोदावर्याश्च दक्षिणे । व्रतोद्वाहादिकं कर्म सिंहस्थेज्ये न दुष्यति ॥ ३० ॥ पराशरः–गोदाभागीरथीमध्ये नोद्वाहः सिंहगे गुरौ । मघास्थः सर्वदेशेषु तथा मीनगते रवौ ॥ ३१ ॥ लल्लः–गोदावर्य्युत्तरतो यावद्भागीरथीतटम् । याम्यं तत्र विवाहो नेष्टः सिंहस्थे देवपतिपूज्ये ॥ ३२ ॥ भृगुः–मघागतो मालवके निषिद्धः पूर्वागते पूर्वदिशि प्रदुष्टः । बृहस्पतिश्चोत्तरपादसंस्थो देशेष्वशेषेष्वपि नर्मदः स्यात् ॥ ३३ ॥ वालभूषायाम्–निंद्यो मघास्थः सर्वत्र विशेषाद्गौडगुर्जरे ॥३४॥ माणि-

मालायाम्-सिंहस्थमध्ये यदि पितृऋक्षे भवेद्गुरुः स्याच्च तदा विवाहः । कृते तु प्राप्नोति धनं च सौख्यं भाग्यं च पुत्रं पशुराजवृद्धिम् ॥ ३९ ॥ मुहूर्तमालायाम्--माघमासे पौर्णमासी मघायुक्ता यदा भवेत् । सिंहस्थस्य गुरोर्दोषस्तस्मिन्वर्षे न चान्यथा ॥ ३६ ॥ बालभूषायाम्-गुर्वंगनाक्रान्तमघया युक्ता माघी यदा भवेत् । व्रतोद्वाहौ तदा कार्याविति गर्गपराशरौ ॥ ३७ ॥ लल्लः--माघी च मघया युक्ता मघायां च गुरुर्यदा । महामाघस्तदा प्रोक्तो व्रतोद्वाहादि वर्जयेत् ॥ ३७ ॥ मणिमालायाम्--मघां त्यक्त्वा यदा गच्छेत्फाल्गुनीं च बृहस्पतिः । पुत्रिणी धनिनी कन्या सौभाग्यसुखमश्नुते ॥ ३९ ॥ सिंहेपि भगदैवत्ये गुरौ पुत्रवती भवेत् । अत्यन्तसुभगा साध्वी धनधान्यसमन्विता ॥ ४० ॥ चूडामणौ--गोदावरीसौम्यतटाच्च यावद्भागीरथी याम्यतटं न शस्तम् । विवाहकृत्यं च गुरौ हरिस्थे हरे लवस्थे क्रियगेर्क इष्टम् ॥ ४१ ॥ मणिमालायाम्-सिंहे जीवे रवौ मेषे विवाहं तत्र कारयेत् । पुत्रपौत्रादिसौभाग्यं लभते सुखसंपदाम् ॥ ४२ ॥ ज्योतिर्निबंधे-मंगलानीह कुर्वीत सिंहस्थौ वाक्पतिर्यदा । भानौ मेषगते सम्यगित्याहुः शौनकादयः ॥ ४३ ॥ वसिष्ठः--पाणेस्तु ग्रहणं कार्यं सिंहस्थो वाक्पतिर्यदा । भानौ मेषगते शस्तमित्याहुः शौनकादयः ॥ ४४ ॥ शौनकः--मेषस्थे दिवसकरे सिंहस्थे वज्रपाणिसचिवे च । यस्याः परिणयनमसौ साध्वी सुखसंपदोपेता ॥ ४५ ॥ सिंहगते सुरमंत्रिणि कन्या मेषगते तपने परिणीता । भूषणरत्नयुता च सुशीला सत्यवती गुणकीर्तिसमेता ॥ ४६ ॥ मुहूर्तमालायाम्--गंगागोदावरीमध्ये वर्ज्यः सिंहगते गुरौ । न दोषभाङ्मेषगेर्के न चेद्भागाद्यपादगः ॥ ४७ ॥ सिंहे गुरौ सिंहनवांशकोद्धे गोदावरीदक्षिणकूलजातैः । उद्वाहकालात्ययदोषभीतैः कार्यो विवाहश्च्यवनो ब्रवीति ॥ ४८ ॥ शौनकीयपटले-वरलाभोतिकालाभ्यां दुर्भिक्षाद्देशविप्लवात् । विवाहः शुभदो नित्यं सिंहस्थेपि बृहस्पतौ ॥ ४९ ॥

इति श्रीज्योतिर्विद्वर्यदत्तात्मजरामदीनकृते संग्रहे बृहद्दैवज्ञरंजने द्विचत्वारिंशं सिंहस्थगुरुविचारप्रकरणं समाप्तम् ।

## अथ चतुश्चत्वारिंश मकरस्थगुरुप्रकरणं प्रारभ्यते ।

अथ मकरस्थगुरुविचारः--वाक्पतौ मकरराशिमुपेते पाणिपीडनविधिर्न विधेयः । तत्र दूषणमुशंति मुनींद्राः केवलं परमनीचनवांशे ॥ १ ॥ लल्लः--अवन्तिदेशे भृगुकच्छगुर्जरे मरुस्थले दक्षिणमध्यदेशे । वराडकालिंजरपूर्वमालवे नीचस्थितो देवगुरुर्न शोभनः ॥ २ ॥ मालवे सिन्धुदेशे च गौडदेशे च कौंकणे । नीचादिस्थो गुरुर्वर्ज्यो नान्यदेशे कदाचन ॥ ३ ॥ नर्मदापूर्वभागे तु शोणस्योदक् च दक्षिणे । गण्डक्याः पश्चिमे भागे मकरस्थो न दोषभाक् ॥ ४ ॥ शौनकः--रेवापूर्वे गण्डकीपश्चिमे च

शोणस्योदक्दाक्षिणे नीच इज्यः । वर्ज्यो नायं कौंकणे मागधे च गौडे सिन्धौ वर्जनीयः शुभषु ॥ ५ ॥ भृगुः–मृगराशिं गते जीवे दिनषष्टिं विवर्जयेत् । गर्गादि मुनिवाक्यत्वात्कर्तव्यं शुभमन्यतः ॥ ६ ॥ भीमपराक्रमे–वापीकूपतडागादि निषिद्धं सिंहगे गुरौ । मकरस्थे तु तत्कार्यं न दोषः काललोपतः ॥ ८ ॥ कार्यं मकरगे नीच विवाहाद्यखिलं बुधैः । ननु सिंहगते जीवे कुर्वाणो मृत्युमाप्नुयात् ॥ ८ ॥ व्यवहारोच्चये–नचिस्थोपि गुरुर्वक्री वर्ज्यो वै मागधे जने । अन्यदेशे शुभं प्राहुः वसिष्ठात्रिपराशराः ॥ ९ ॥ अन्यानि शुभकार्याणि जीवे नक्रातिचारिणि । विवर्ज्यानि विवाहस्तु कार्यं त्यांगलवं विना ॥ १० ॥ नीचराशिगतो जीवः प्रशस्तः सर्वकर्मसु । नीचांशकगतस्त्याज्यो यस्माद्देशेषु नीचता ॥ ११ ॥ दैवज्ञमनोहरे–मागधे गौडदेशे च सिन्धुदेशे च कौंकणे । व्रत चूडाविवाहं च वर्जयेन्मकरे गुरौ ॥ १२ ॥ भीमः–नक्रे गुरौ समायाते शुभकर्म परित्यजेत् । तत्रापि षष्टिंदिवसान् सर्वकर्मसु वर्जयेत् ॥ १३ ॥ गर्गः–मृगराशौ गुरौ याते सर्वसौम्यं परित्यजेत् । तथापि षष्टिदिवसा वर्जनीयाः सदा बुधैः ॥ १४ ॥ देवीपुराणे–मकरस्थो यदा जीवो वर्जयेत्पंचमांशकम् । शेषेष्वपि च मागेषु विवाहः शोभनो मतः ॥ १५ ॥ टोडरानन्दे–अतिचारे सप्तदिनं वक्रे द्वादशमेव च । नीचास्थितेपि वागीशे मासमेकं विवर्जयेत् ॥ १६ ॥ गरुडपुराणे–यदा सिंहगतो जीवो नैव कल्याणमाचरेत् । मकरस्थेपि कर्तव्यं नात्र कार्या विचारणा ॥ १७ ॥

इति श्रीमज्ज्योतिर्विद्वर्यादत्तात्मजरामदीनकृते संग्रहे बृहद्दैवज्ञरंजने मकरस्थगुरुविचारप्रकरणं समाप्तम् ।

## अथ पंचचत्वारिंशं गुरुवक्रप्रकरणं प्रारभ्यते ।

अथ गुरुवक्रदोषविचारः । लल्लः–अतिचारे च वक्रे च वर्जयेत्तदनन्तरम् । व्रतोद्वाहादिचूडायामष्टाविंशति वासरान् ॥ १ ॥ अतिचारे त्रिपक्षं च वक्रे पक्षद्वयं तथा । व्रतोद्वाहौ न कर्तव्यौ जीवे वक्रातिचारगे ॥ २ ॥ मुहूर्तकल्पद्रुमे–वक्रे सुरेज्ये स्वगृहे दिनत्रयं वर्ज्यं मुनींद्रैरखिलेषु कर्मसु । अन्यत्र राशौ मुनयस्त्यजंति अष्टाधिकं विंशति वासराणि ॥ ३ ॥ शौनकः–राशौ वक्रे राशिचारे यदि स्याद्वाचामीशोनिष्टदः सर्वकार्ये । अष्टाविंशद्वासराणामधस्तात्तस्मादूर्ध्वं नैव दोषः कदाचित् ॥ ४ ॥ अन्यत्रापि–अतिचारगते जीवे वर्जयेत्तदनन्तरम् । व्रतोद्वाहादि चूडायामष्टविंशति वासराः ॥ ५ ॥ एतेपि तद्देशविशेषा अतस्तु आचार्येणोक्ताः सिंहराशिस्थदोषो जाह्नवीगोदावरीमध्यदेशादन्यत्र नास्त्येव परं । यत्र देशे सर्वजनवृद्धव्यवहारेण वर्ज्यंते तद्देशे वर्जित एव । एवमन्येषां वक्ष्यमाणानां दोषाणामपि देशकुलाचारतो व्यवस्था ज्ञेया । इतिश्रीमज्ज्योतिर्विद्वर्यादत्तात्मजरामदीनकृतसंग्रहे बृहद्दैवज्ञरंजने पंचचत्वारिंशं गुरुवक्रप्रकरणं समाप्तम् ।

## अथ षट्चत्वारिंशं गुर्वादित्यविचारप्रकरणं प्रारभ्यते।

जगन्मोहने-गुर्वर्केण युतः करोति मरणं कालांशके भास्करे नक्षत्रैकगते वदंति यवनाः पादस्थिते देवलः। प्राहुर्गर्गपराशरादिमुनयश्चास्तंगते जीवके तस्मादस्तमिते सुरेंद्रसचिवे कार्यं न कार्यं बुधैः॥ १॥ गुर्वर्कयोगे युवतीवियोगो यद्येक ऋक्षे यवना वदन्ति। अस्तंगते देवगुरौ भृगुश्च हारीतपूर्वाश्चरणैकसंस्थे॥ २॥ भृगुः-एकर्क्षे गुर्वर्के व्रतबंधोद्वाहकादयः सर्वे। न शुभफलदाश्च गदिता अस्तमितेज्येऽनर्थदः प्रोक्तः॥ ३॥ राजमार्तंडे-यात्रां चूडां विवाहं श्रुतिविवरविधिशंखसद्मप्रवेशं प्रासादोद्यानहर्म्यं सुरवरभवनारंभविद्याविधानम्। मौंजीवन्धं प्रतिष्ठां मणिरदकनकाधारणं कुर्वते ये मृत्युस्तेषां च सिंहे गरुदिनकरयोरेकराशिस्थयोश्च॥ ४॥ लल्लः-गुरुसूर्यौ यदा काले एकराशौ च संस्थितौ। विवाहे म्रियते कन्या पतिश्चापि न जीवति॥ ५॥ ज्योतिःप्रकाशे-गुर्वर्कयोगसमये शौनकवाल्मीकिगौतमाद्यैश्च। उद्वाहव्रतमुख्या न शुभफलाः कीर्तिता मुनिभिः॥ ६॥ कर्णवेधं विवाहं च क्षौरं च व्रतबंधनम्। गुर्वादित्ये न कुर्वीत पुत्रदारधनक्षयः॥ ७॥ होराप्रकाशे गुरुः-रविक्षेत्रगते जीवे जीवक्षेत्रगते रवौ। गुर्वादित्यः स विज्ञेयो गर्हितः सर्वकर्मसु॥ ८॥ वराहः-एकराशिगतौ स्यातां देवाचार्यदिनेश्वरौ। गुर्वादित्यः स विज्ञेयः स तु गुर्वस्तसंज्ञकः॥ ९॥ गुर्वादित्ये दशाह्नि स्यादस्ते मासद्वयं तथा। वर्जयेद्गुरुशुक्राभ्यामष्टाविंशति वासरान्॥ १०॥ इति श्रीज्योतिर्विद्वर्यादत्तात्मज रामदीनविरचिते संग्रहे बृहद्दैवज्ञरंजने षट्चत्वारिंशं गुर्वादित्यप्रकरणं समाप्तम्।

## अथ सप्तचत्वारिंशं गुरुशुक्रयोरस्तादिविचारप्रकरणं प्रारभ्यते।

**अथ गुरुशुक्रयोः समदृष्टिविचारः।** समदृष्टौ गुरोः शुक्रस्तन्मासे तु प्रयत्नतः। विवाहादि न कुर्वीत नर्मदातीर उत्तरे॥ १॥ गुरुः-यदा जीवसितौ शक्र परस्परनिरीक्षितौ। सप्तमस्थौ तदा भेदो मूढत्वादतिरिच्यते॥ २॥ भारद्वाजः-गुरुशुक्रौ यदा मूढौ यदावान्योन्यवीक्षितौ। यदा वापि दिवा दृष्टौ तदा कर्म शुभं त्यजेत्॥ ३॥ गुरुः-यदा दिनैव दृश्यन्ते जीवशुक्रौ नभस्तले। तयोरन्यतरे वापि स कालो बहुदोषदः॥ ४॥ ततः प्रभृति सप्ताहान् स कालः शुभनाशनः। दिनानि दर्शनात्पश्चात्प्रत्येकं सप्त सप्त च॥ ५॥ गुरोःस्थानात्तु शीतांशुः षडंत्यं संस्थितोष्टमम्। योगोयं शकटो नाम वधं दद्याच्छुभे पदे॥ ६॥ तत्र शुक्रास्ते पूर्वपश्चिमस्थितिदिनानि। सार्द्धाष्टमासे भृगुपूर्वभागे अस्तंगते तिष्ठति पंच पक्षम्। यश्चोदये मासनवानि भुक्तः शुक्रो दशाहे उदिते च पूर्वे॥ ७॥ ज्योतिःसारे-यमशरासुज-

वासरवज्रिणो दिशि द्वि सप्त सितास्तमनं तथा। गगनबाणयमा दिशि पश्चिमे नव दिनास्तमनं तु भृगोर्बुधैः ॥ ८ ॥ पश्चिमास्तं मासमेकं नान्यथा मुनिरब्रवीत्। अन्यत्रापि-यथा रवेर्मंगलमेति काव्यो विनष्टतेजो गुरुरप्यथैवम्। यज्ञस्य दीक्षा व्रततीर्थयात्रायज्ञोत्सवानां च विनाशकृत्स्यात् ॥ ९ ॥ गणपतिः-नेत्रेषुद्दग्मितश्चैव दृश्यो भवति भार्गवः। वसुशैलमितैस्तत्र यातोस्तं नैव दृश्यते ॥ १० ॥ खबाणाश्विमितान् घस्रान् प्रतीच्यां दृश्यते भृगौ। तत्रैवार्ककरग्रस्तो नवाहानि न दृश्यते ॥ ११ ॥ गुरोरस्तविचारः। प्रायो वाचस्पतिर्मासं भवत्यक्षणामगोचरः। प्राच्यामुदयते मासं याति पश्चानुवत्सरात् ॥ १२ ॥ अन्यत्रापि-गुरोरेकादशं मासमुदयं पूर्वदिग् भवेत्। पश्चिमास्तं मासमेकं नान्यथा मुनिरब्रवीत् ॥ १३ ॥ माण्डव्यः-त्यजेद्दशाहं शिशुवृद्धयोश्च सितेज्ययोश्चेति वदंति गार्ग्याः। कालांशतुल्यानि दिनानि चैके सप्ताहमन्ये त्वपरे त्रिरात्रम् ॥ १४ ॥ माहेश्वरः-बालः शुक्रो दिवसदशकं पंचकं चैव वृद्धः पश्चादह्नां त्रितयमुदितः पक्षमैन्द्र्यां क्रमेण। जीवो वृद्धः शिशुरपि सदा पक्षमन्यैः शिशूतो वृद्धौ प्रोक्तो दिवसदशकं चापरैः सप्तरात्रम् ॥ १५ ॥ श्रीपतिः-प्रागुद्गतः शिशुरहस्त्रितयं सितः स्यात्पश्चाद्दशाहमिह पंचदिनानि वृद्धः। प्राक्पक्षमेव कथितोत्र वसिष्ठमुख्यैर्जीवस्तु पक्षमपि वृद्धशिशुर्विवर्ज्यः ॥ १६ ॥ राजमार्तंडे-बालो दशाहाभ्युदितिः परेण पूर्वेण बालो दिवसत्रयं स्यात्। वृद्धस्तु पूर्वेण तु पक्षमेकं पश्चाद्गतः पंच दिनानि शुक्रः ॥ १७ ॥ संहिताप्रदीपे-स्यात्सप्तरात्रं गुरुशुक्रयोश्च बालत्वमह्नां दशकं च वार्द्धम्। वृद्धौ सितेज्यावशुभौ शिशुत्वे शस्ते यतः स्यादुपचीयमानौ॥१८॥ पंचदिनानि वसिष्ठः शौनक एकदिनत्रयं गर्गः। यवनाचार्यमते पंचमुहूर्तं भृगुस्त्याज्यः ॥ १९ ॥ बहवो दर्शिताः कालाः ये बाल्ये वार्द्धकेपि वा। ग्राह्यास्तत्राधिकाः शेषाः देशभेदादिनापरे ॥ २० ॥ सिद्धांतगणितासारौ शुक्रेन्दुकलित। गतिः। वर्जनीया प्रयत्नेन वृद्धौ पंच शिशुत्रयम् ॥ २१ ॥ गुरौ भृगौ प्राक्चपरा च काले विन्ध्ये दशावंतिकसप्तरात्रान्। हूणेषु वंगेषु च पंचषट्कशेषेषु देशे त्रिदिनं विवर्ज्यम् ॥ २२ ॥ कर्नाटदेशे दिनपंच वर्ज्यो गुरुः काविर्बालकवृद्धशून्या। सौराष्ट्रदेशे त्रिदिनं विवर्ज्य शेषेषु देशे शिवनेत्रसंख्या ॥ २३ ॥ ब्रह्मपुराणे-यदा रवेर्मंडलमेति काव्यो विनष्टतेजा गुरुरप्यथैवम्। कालस्य दीक्षाव्रततीर्थयात्रायज्ञोत्सवानां च विनाशकृत्स्यात् ॥ २४ ॥ रत्नकोशे-अस्तमिते भृगुतनये नारी म्रियते बृहस्पतौ पुरुषः। दंपत्योः सह मरणं केतोरुदये करग्रहणे ॥ २५ ॥ नष्टे चन्द्रे तथा शुक्रे नष्टे चैव बृहस्पतौ। मंगलानि तथोद्वाहं त्वरितेपि न कारयेत् ॥ २६ ॥ लल्लः-शुक्रे नष्टे गुरौ सिंहे गुर्वादित्ये मलिम्लुचे। गृहकर्म व्रतं यात्रा मनसापि न चिन्तयेत् ॥ २७ ॥ वसिष्ठः-शुक्रे चास्तं गते जीवे चन्द्रे वास्तमुपागते। तेषां वृद्धे च बाल्ये च शुभं कर्म भयप्रदम् ॥ २८ ॥ वृद्धत्वमिन्दोस्त्रिदिनं दिनार्द्धं बालत्वमस्तत्वमहर्द्वयं च

अस्ते विधौ मृत्युमुपैति कन्या बाल्येन्यसक्ता विधवा च वृद्धे ॥ २९ ॥ वृद्धः शुक्रो हरेत्कन्यां बालशुक्रो हरेत्पतिम् । वृद्धर्जीवो हरेत्कन्यां बालजीवो हरेत्पतिम् ॥ ३० ॥ बादरायणः–गुरोरस्तं पतिं हन्याच्छुक्रास्ते चैव कन्यका । चन्द्रे नष्टे उभौ हन्यात्तस्मादस्तं विवर्जयेत् ॥ ३१ ॥ बालभावे स्त्रियं हन्याद्वृद्धभावे नरं तथा । तस्माद्बाल्ये च वृद्धे च विवाहं नैव कारयेत् ॥ ३२ ॥ कालनिर्णये–वापीकूपतडागयज्ञगमनं देवप्रतिष्ठा व्रतं विद्यामंदिरकर्णवेधनमही दुर्गं वनं सेवनम् ॥ तीर्थस्नानविवाहशान्तिहवनं मंत्राग्निर्देवेक्षणं दूरेणैव जिजीविषुः परिहरेदस्तं गते भार्गवे ॥ ३३ ॥ प्रदीपे–अग्न्याधेयं प्रतिष्ठां नरपतिगमनं चौलकर्माभिषेको दानं गेहं च विद्याव्रतमखरशनाबंधमोक्षौ विवाहम् । यावत्केतूदयस्थः सुरगुरुभृगुजे सूर्यलुप्तेऽधिमासे नो कार्यं पंडितेन श्रियमभिलषता देवतीर्थाभियानम् ॥ ३४ ॥ ज्योतिःप्रकाशे–वक्रे चैवातिचारे त्रिदशपतिगुरौ दैत्यपूज्ये च लुप्ते गुर्वादित्येऽधिमासे दिनकरहिमगोः संगमे चैत्रपौषे । विष्ट्यां केतूद्गमे वा मकरसुरगुरौ सिंहसंस्थे सुरेज्ये वर्षात्प्राप्नोति वोढा सुनियतमरणं देवकन्याश्च भर्ता ॥ ३५ ॥ दैवज्ञवल्लभे–नीचस्थे वक्रसंस्थेप्यतिचरणगते बालवृद्धेस्तगे वा संन्यासो देवयात्रा व्रतविषमविधिः कर्णवेधस्तु दीक्षा । मौंजीवन्धोङ्गनानां परिणयनविधिर्वास्तुदेवप्रतिष्ठा वर्ज्याः सद्भिः प्रयत्नात्रिदशपतिगुरौ सिंहराशिस्थिते च ॥ ३६ ॥ अस्तं प्रयाते च गुरौ भृगौ वा सूर्ये निरंशे हिमगौ च नष्टे । न कूपवाप्योद्वहनादिकर्म शुभं प्रदिष्टं नच वाटिकादेः ॥ ३७ ॥ अस्तगे च गुरौ शुक्रे बाल्ये वृद्धे मलिम्लुचे । उपनयनमुपाकर्म व्रतानां नैव कारयेत् ॥ ३८ ॥ अस्तापवादः । गर्गः–नित्ययाने गृहे जीर्णे प्राशने परिधानके । वधूप्रवेशे मांगल्ये न मौढ्यं गुरुशुक्रयोः ॥ ३९ ॥ गुरुः–कंटके समये याने राजदुर्भिक्षपीडिते । समूलतूलयात्रायां शुक्रदोषो न विद्यते ॥ ४० ॥ चतुष्पदां विशेषेण न दोषः शुक्रगोचरः । सिते स्वतुंगस्वक्षेत्रे युते दोषो न विद्यते ॥ ४१ ॥ उत्सवेषु च सर्वेषु सीमंतऋतुकर्म च । सुरासुरेज्ययोश्चैव चातुर्मास्यव्रतेषु च ॥ ४२ ॥ धर्मप्रदीपे–गोदावर्यां गंयायां च श्रीशैले ग्रहणद्वये । अयने विषुवे चैव मौढ्यदोषो न विद्यते ॥ ४३ ॥ संहितासारे–यदास्तमायाति गुरुर्भृगुर्वा वार्द्धे च बालत्वमकीर्णजातेः । चौलादि कार्याणि शुभानि न स्युः संकीर्णजातेस्तु शुभावहानि ॥ ४४ ॥ **तीर्थादौ निषेधः** । कालनिर्णये–नष्टे शुक्रे तथा जीवे सिंहस्थे च बृहस्पतौ । कार्या चैत्रे स्वदेव्यर्चा प्रत्यब्दं कुलधर्मतः ॥ ४५ ॥ बाले वा यदि वा वृद्धे शुक्रे चास्तमुपागते । मलमास इवैतानि वर्जयेद्देवदर्शने ॥ ४६ ॥ व्यासः–अधिमासे च जन्मर्क्षे नष्टयोर्गुरुशुक्रयोः । तीर्थयात्रा न कर्तव्या गयां गोदावरीं विना ॥ ४७ ॥ प्रेतमंजर्याम्–प्रेतकार्याणि सर्वाणि व्रतस्नानजपादिकम् । वर्ज्यं शुक्रेज्ययोरस्ते गयां गोदावरीं विना ॥ ४८ ॥ ज्योतिर्विदाभरणे–न तीर्थकामः सति पाणिजायुधेऽन्तजौ शिशौ

वृद्धघने च नीचगे । नरोऽमरार्च्ये गमनं प्रकारयेद्विनैव कुंभस्थलगौतमी गया ॥४९॥ तीर्थखण्डे—गुरुशुक्रास्तादिदोषः प्रोक्तो यस्तीर्थयात्रिणाम् । अपूर्वयायिनामेव नतत्सौ पूर्वगामिनाम् ॥ ५० ॥ आवश्यके शान्तिः । गुरुः—आवश्यभेषु कार्येषु राज्ञां तत्कर्मकारिणाम् । विवाहादीनि कुर्वीत मौढ्येपि गुरुशुक्रयोः ॥ ५१ ॥ शांतिं कृत्वा तयोस्तद्वच्छुक्रदेवेंद्रमंत्रिणः । होमैर्दानैर्जपैर्वापि तयोरुक्तैश्च मंत्रकैः ॥ ५२ ॥ वैदिकमंत्रैर्यथाविध्यागुरुशुक्रयोः शान्तिं कृत्वा विवाहादि कुर्यात् । इति श्रीमद्दयादत्तज्योतिर्विदात्मजरामदीनज्योतिर्वित्कृते संग्रहे बृहद्दैवज्ञरंजने सप्तचत्वारिंशं गुरुशुक्रयोरस्तादिविचारप्रकरणं समाप्तम् ।

## अथाष्टचत्वारिंशं देशाचारप्रकरणं प्रारभ्यते ।

अथ शास्त्रार्थशिष्टाचारप्रमाणविचारः—शास्त्रार्थाद्बलवान् शिष्टाचारोत्र बहुसंमतम् । शिष्टाचारस्य कालेन विलुप्ताः श्रुतयोपथा । महाभारते—तर्कोप्रतिष्ठः श्रुतयो विभिन्ना नैको मुनिर्यस्य वचः प्रमाणम् । धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पंथाः ॥ १ ॥ भगवद्गीतायाम्—यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ २ ॥ कात्यायनसूत्रे—विवाहश्मशानयोर्ग्रामं प्रविशता तस्मात्तयोर्ग्रामः प्रमाणमिति श्रुतेः । कारिकायाम्—प्रमाणं ग्रामवचनं विवाहादौ तथात्यये । यतः परंपरायातं धर्मं विन्दन्ति ते खलु ॥ ३ ॥ संहिताप्रदीपे—शास्त्रोत्थितोर्थोपि न च प्रमाणं स्त्रीशूद्रगोपा अपि यं वदंति । यथा हि भांडोत्कृषणो न रात्रौ भवेत्पशूनां किल मूर्ध्नि पीडा ॥ ४ ॥ स्मृत्यंतरे—सोनुष्ठेयो भवेद्धर्मो यो लोकश्रुतिसंमतः । शास्त्रशिष्टविरुद्धस्तु धर्मस्त्याज्यो बुधैः सदा ॥ ५ ॥ कुलस्य देशस्य च चित्तवृत्तिर्न खंडनीया विदुषा कदाचित् । यो लोकशास्त्रानुमतः स्वधर्मो लोको बलीयाननयोर्विरोधे ॥ ६ ॥ बृहज्ज्योतिषार्णवे—देशाचारः कुलाचारो जात्याचारो विशेषतः । कर्तव्यो विदुषा तत्र सारासारं विचार्य च ॥ ७ ॥ बृहत्संहितायां वाराहः—देशाचारस्तावदादौ विचिन्त्यो देशे देशे या स्थितिः सैव कार्या । लोके दुष्टं पंडिता वर्जयंति दैवज्ञोतो लोकमार्गेण यायात् ॥ ८ ॥ अन्यः—लोकविद्विष्टमस्वर्ग्यं धर्ममप्याचरेन्न तु । शिष्टाचारविरुद्धत्वादातिथ्ये गोवधो यथा ॥ ९ ॥ देशान्तरलक्षणमाह । भाषाभेदविभेदाभ्यां यत्र स्यान्मध्यमो गिरिः । महापगा यत्र गा च स वै देशान्तरं विदुः ॥ १० ॥ श्रीपतिः—शास्त्रस्वरूपं बहवोप्यबुध्वा वदंति यच्चानुमितं हितं नः । देशं गतोप्येकविलोचनानां निमील्यनेत्रं निविशेन्मनीषी ॥११॥ बृहस्पतौ गोचरशोभनस्थे विवाहमिच्छंति हि दाक्षिणात्याः । रवौ शुभस्थे प्रवदंति गौडा नागोचरो मालवके प्रमाणम् ॥ १२ ॥ गौडाः सूर्यं गोचरेण प्रशस्तं

वाच्छत्यार्यं दाक्षिणात्या विवाहे । लाटाः प्रायः स्थानवीर्याश्रिताः स्युरावन्त्यानां गोचरेण प्रमाणम् ॥ १३ ॥ चण्डेश्वरः-भौमप्रशस्ते यमुनातटोद्भवा हिमालयस्थाः शशिजे शुभर्क्षगे । कैलासदेशप्रभवाः शनैश्चरे भृगोः सुते सागरसन्निवेशः ॥ १४ ॥ गौडेऽमरेज्यार्कशशांकशुद्धौ बुधस्य चैकस्य च कामरूपे । कर्नाटलाटांगकलिंगदेशे जीवस्य चात्युन्नतिदो विवाहः ॥ १५ ॥ ज्योतिर्विदाभरणे कालिदासः-कुमारिकामंडलवासि माथुरा नयंति पाणिग्रहमुत्तमं नराः । मध्यं जनस्थानमुखांध्रमालवाः परेधमं दुष्टकलौ निसर्गतः ॥१६ ॥ अदंति गौडाः पललं च पंचमान् पंचालकन्या कुरुते धवानपि । कर्नाटके गोगमनं च धर्षणी सिंधौवशा वाडवहाद्रिखंडवित् ॥ १७ ॥ मृतासुपा देवरचारिणीमरौ सौराज्यके च प्रमदा रजोवती । अदोषमान्या मरुमत्स्यमानवैः कन्यार्थभुग्गुर्जरदेशगो जनः ॥ १८ ॥ एकागमे दक्षिणवासिनो जना विवाहमिच्छंति कुरौ च शस्त्रिणः । सद्राविणांध्रा श्रुतिधर्मचारिणः स्वनामपुत्राद्धतमंगला क्वचित् ॥ १९ ॥ पुराणवेदस्मृतिधर्मतो वहिर्धर्मोयमत्र प्रतिपादनीयः । शास्त्रप्रमाणादपि लोकधर्मप्रमाणमेतद्बलवत्तदादरात् ॥ २० ॥ स्यादेशकालः प्रबलस्तु शास्त्रादतः स कार्यः खलु सज्जनानाम् । तद्देशदोषान्परिवर्जयंति मनीषिणो दैवविदः प्रयोगात् ॥ २१ इति श्रीज्योतिर्विद्वयादत्तात्मजरामदीनकृतसंग्रहे बृहद्दैवज्ञरंजने अष्टचत्वारिंशं देशाचरणप्रकरणं समाप्तम् ।

---

## अथैकोनपंचाशत्तमं संस्कारप्रकरणं प्रारभ्यते ।



स च संस्क्रियते अनेनेति व्युत्पत्या आत्मनः शुद्धिविशेषयोग्यतासंपादक इति लभ्यते । अथ सर्वक्रियाकर्माधिकारिता संस्कारस्य तज्जाते अर्थादेव सर्वाधिकारासिद्धिर्निष्पन्ना भवतीति तदारभ्यते । ते च गर्भाधानादि उत्तरक्रियापर्यंतं षोडश संति । षोडशसंस्काराणां नामानि । व्यासः-गर्भाधानं पुंसवनं सीमंतो जातकर्म च । नामक्रिया निष्क्रमणोन्नाशनं वपनाक्रिया ॥१ ॥कर्णवेधो व्रतादेशो वेदारंभक्रियाविधिः । केशान्तःस्नानमुद्वाहो विवाहाग्निपरिग्रहः ॥ २ ॥ त्रेताग्निसंग्रहश्चेति संस्काराः षोडश स्मृताः ॥ ३ ॥ शूद्रस्य द्वादश संस्कारा उक्ताः । वेदव्रतोपनयनं महानाम्नी महाव्रतम् । विना द्वादश शूद्राणां संस्कारान्तममन्त्रतः ॥ ४ ॥ कारिकायाम्-जातकर्मादिकाः स्त्रीणां चूडाकर्मांतिकाः क्रियाः । तूष्णीं होमे तु मंत्रः स्यादिति गोभिलभाषितम् ॥ ५ ॥ तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समंत्रकः । नवैताः कर्णवेधांता मंत्रवर्ज्यं क्रियाः स्त्रियः ॥ ६ ॥ विवाहो मंत्रतस्तस्याः शूद्रस्यामंत्रतो दश ॥ ७ ॥ शारंगधरस्तु-द्विजानां षोडशैव स्युः शूद्राणां द्वादशैव हि । पंचैव मिश्रजातीनां संस्काराः कुलधर्मतः ॥ ८ ॥ तत्रादौ गर्भाधानम् । तच

स्त्रीणां यौवनाविर्भाव एव भवति। तदुक्तं विधानपारिजाते-नाभिमूले स्थितं पुष्पं चतुर्दलसमन्वितम्। तस्मिन्सर्वाश्च दधते गर्भसंभवकारणम् ॥ ९ ॥ अधोमुखं स्थितं स्त्रीणां बाल्ये तु मुकुलीकृतम्। बाल्यात्परं वयःप्राप्तौ मुकुलं विकसद्भवेत् ॥ १० ॥ उत्फुल्ले कुसुमे स्त्रीणां स्वभावेन भवेद्रजः। तदाप्रभृति सर्वासां मासि मासि ऋतुर्भवेत् ॥ ११ ॥ वसिष्ठेन द्वादशाब्दे रजोदर्शनं सोपपत्तिकं निरूप्यते। सामात्मिकाः क्रियाः सर्वाः पुरुषा भास्करात्मकाः। तस्माचंद्रवशात्तासां तेषां सर्वं हि सूर्यतः ॥ १२ ॥ अर्कात् पुंसः शशी यद्वद्द्वादशांशादुदस्यति । रजोदर्शनमप्याय द्वादशाब्दे स्वजन्मतः ॥१३॥ बृहस्पतिनापि-असृग्यद्योनिसंभूतं तदार्तवमिति स्मृतम् । त तस्त्वृतुमती नारी नाम्ना यापि भवेत्स्वयम् ॥ १४ ॥ अन्यदपि-प्राप्ते च द्वादशे वर्षे याता कन्या रजस्वला। वर्षाद्द्वादशकादूर्ध्वं यदि पुष्पं वहिर्न हि ॥ १५ ॥ अंतः पुष्पं भवत्येव पनसोदुंबरादिवत् ॥ १६ ॥ अथ प्रथमार्तवे मासफलम् । चैत्रे स्यात्प्रथमर्तौ तु नारी वैधव्यभागिनी। वैशाखे धनपुत्राढ्या ज्येष्ठे रोगान्विता भवेत् ॥ १७ ॥ आषाढे च मृतापत्या श्रावणे च धनान्विता। भाद्रपदे दुर्भगा च आश्विने च तपस्विनी ॥ १८ ॥ ऊर्जे चाल्पायुषी नारी मार्गशीर्षे बहुप्रजा । पौषे तु पुंश्चली नारी माघे पुत्रान्विता भवेत् ॥१९॥ फाल्गुने श्रीमती नारी क्रमान्मासफलं स्मृतम् ॥२०॥ अथ पक्षफलम् । शुक्लपक्षे सुशीला स्यात्कृष्णे तु कुलटा भवेत्। कृष्णस्य दशमी यावन्मध्यमं फलमादिशेत् ॥ २१ ॥ अथ तिथिफलम्। सुभगा धनपुत्राढ्या सुतयुक्ता च दुर्भगा। पतिप्रिया क्लेशयुता धनाढ्या कलहप्रिया ॥ २२ ॥ विधवा बहुभाग्या च पुत्रिणी कुलटामतिः। धनाढ्या पुंश्चली दर्शे विधवा भवति वत्सरे ॥ २३ ॥ पौर्णिमायां भवेन्नारी पुत्रपौत्रसमन्विता। तिथिक्षये निषिद्धं स्यात्तिथीनां फलमीरितम् ॥ २४ ॥ अथ वारफलम्। विधवा कन्यकाढ्या च मृतिप्राप्ता च दुःखिनी । पुत्रिणी भोगसंपूर्णा वंध्या सूर्यादि वारतः ॥ २५ ॥ अथ नक्षत्रफलम्। आश्विन्यादिषु वोद्धव्यं फलं च प्रथमार्तवे । पुत्राढ्या दुर्भगा साध्वी धनाढ्या सुतशालिनी ॥ २६ ॥ समशीला सुपुत्राढ्या पुत्रिणी निधनाधना। सुभगा चार्थिनी विज्ञा श्रीयुता पतिवल्लभा ॥ २७ ॥ धनिनी निर्धना भाग्या दुःशीला क्लेशकारिणी। सुभगा श्रीयुतार्थाढ्या निर्धना कलहप्रिया ॥ २८ ॥ सुशीला धनपुत्राढ्या क्रमेणैवमुदाहृतम्। कृत्तिकादित्यरौद्रेपि मघा ज्येष्ठा रजस्वला ॥ २९ ॥ आदिपादे शुभं प्रोक्तं सा कन्या मंगलप्रदा । द्विपादे चेद्रजो दृष्टं पंचविंशति भोजनम् ॥ ३० ॥ त्रिपादे च चतुष्पादे शान्तिं कुर्याद्यथाविधि ॥ ३१ ॥ अथ योगफलम्। विरुद्धयोगेष्वशुभं शुभयोगे शुभं भवेत् ॥ ३२ ॥ अथ लग्नफलम्। आत्मघ्नी भ्रूणहा मेषे वृषे पुत्रवती भवेत्। द्वंद्वे कन्याप्रसूर्नारी मृतापत्या च कर्किणी ॥ ३३ ॥ सिंहे वैधव्यमाप्नोति कन्यायां स्त्रीप्रसूर्भवेत् । तुलायां बहुपुत्राढ्या

दृढकर्मरतालिनि ॥ ३४ ॥ चापे पुत्रधनाढ्या स्यान्मकरे सुखिनी भवेत् । सकृत्प्रजावती कुंभे मीने चाल्पप्रजा भवेत् ॥ ३५ ॥ अथ वर्गफलम् । आरोग्यसौभाग्यवती च सौम्यवर्गे शुभा पुष्पवती च कन्या । दुःखाभयानर्थविवादशीला वर्गेषु सौम्येषु च दुर्मतिः स्यात् ॥ ३६ ॥ अथ वेलाफलम् । पूर्वाह्णे पुत्रसंयुक्ता मध्याह्ने सुखभागिनी । स्वैरिणी चापराह्णे स्यान्निशायां विधवा भवेत् ॥ ३७ ॥ संध्ययोरुभयोर्वेश्या प्रथमर्तौ फलं स्मृतम् । शेषं विवाहवत्सर्वं पुष्पे लग्नादि चिन्तयेत् ॥ ३८ ॥ अथ वस्त्रफलम् । सुभगा श्वेतवस्त्रा च रोगिणी रक्तवाससा । नीलांबरधरा नारी विधवा प्रथमार्तवा ॥ ३९ ॥ भोगिनी पीतवस्त्रा च दृढवस्त्रा पतिव्रता । दुर्भगा जीर्णवस्त्रा स्यात्सुभगा चारुवस्त्रिणी ॥ ४० ॥ प्रथमर्तौ फलं स्त्रीणामुच्यते रजसा तु तत् ॥ ४१ ॥ अथ रक्तफलम् । सुभगा पुत्रसंयुक्ता शुक्लवर्णे यदार्तवे । शशशोणितसंकाशौ यद्वालक्तकसंनिभे ॥ ४२ ॥ पुत्रकन्याप्रसूतिः स्यान्नीले तु स्यान्मृतप्रजा । कर्बुरे म्रियते साच पिंगले च मृतप्रजा ॥ ४३ ॥ कृष्णे तु विधवा नारी रजस्येवं फलं वदेत् । शोणिते विंदुमात्रेण स्वैरिणी चाल्पशोणिता ॥ ४४ ॥ अथ स्थानफलम् । ग्रामाद्बहिः परग्रामे नारी स्याद्व्यभिचारिणी । पतिव्रता शुभस्थाने सुभगा गृहमध्यतः ॥ ४५ ॥ ग्राममध्ये तु वृद्धिश्च विधवा च दिगंबरा । उपरागे तु दुःशीला आयुष्यं जलसन्निधौ । धनमध्ये तु कन्याया धनधान्यसमन्विता ॥ ४६ ॥ देवराजः—संमार्जनीकाष्ठतृणाग्निशूर्पान् हस्ते दधाना कुलटा तदा स्यात् । तल्पोपभोगे सपदि स्थिताश्चेद्दृष्टं रजो भाग्यवती तदा स्यात् ॥ ४७ ॥ अथ स्थानविशेषे अपवादः । देवस्थाने पितृस्थाने निन्द्यस्थानेन्यवेश्मनि । पुष्पवत्याः फलं न स्यान्मार्गे चांडालवेश्मनि ॥ ४८ ॥ पुष्पं दृष्ट्वा निंदितेभे यदि स्याच्छान्तिं कुर्यादङ्गनायां च पूर्वम् । तत्संयोगं वल्लभा वर्जयेयुर्यावद्भूयः शस्तभे नैव दृष्टम् ॥ ४९ ॥ नारदः—निंद्यर्क्षतिथिवारेषु यत्र पुष्पं प्रदृश्यते । तत्र शान्तिं प्रकुर्वीत घृतदूर्वातिलाक्षतैः ॥ ५० ॥ प्रत्येकमष्टशतं मंत्रैर्गायत्र्या जुहुयात्ततः । स्वर्णगोभूतिलान् दद्यात्सर्वदोषापनुत्तये ॥ ५१ ॥ यावच्छांतिं प्रकुर्वीत तावत्तां नावलोकयेत् । भर्ता तत्राभिगमनं वर्जयेच्छुभवाञ्छया ॥ ५२ ॥ अथ रजस्वलाधर्मः । ज्योतिषसारे—आर्तवाभिप्लुता नारी चैकवेश्मनि संश्रयेत् । न चान्यजातिसंस्पर्शं कुर्यात्स्पर्शं न च क्वचित् ॥ ५३ ॥ त्रिरात्रं स्वमुखं नैव दर्शयेद्यस्य कस्यचित् । स्ववाक्यं श्रावयेन्नैव न कुर्याद्दन्तधावनम् ॥ ५४ ॥ न कुर्यादार्तवे नारी ग्रहाणामीक्षणं तथा । अंजनाभ्यंजनं स्नानं प्रवासं वर्जयेत्तथा ॥ ५५ ॥ नखादिकृंतनं रज्जुतालपत्रादि बंधनम् । नवे शरावे भुंजीत तोयं चांजलिना पिबेत् ॥५६॥ प्रथमेहनि चांडाली द्वितीये ब्रह्मघातिनी । तृतीये रजकी प्रोक्ता चतुर्थेहनि शुद्ध्यति ॥ ५७ ॥ भर्तुः स्पर्शो चतुर्थेह्नि स्नाने च स्त्रीरजस्वला । पंचमेहनि योग्या

सा दैवे पित्र्ये च कर्माणि ॥ ५८ ॥ रजोदर्शनतोऽस्पृश्या नार्यो दिनचतुष्टयम् । ततः शुद्धाः क्रियास्वेताः सर्ववर्णेष्वयं विधिः ॥ ५९ ॥ अथ प्रतिमासे ऋतुयोगः । बृहस्पतिः—अंगनाजन्मनक्षत्रात्पीडा तारागते विधौ । भौमे चास्यां तथा योगे मासि मास्यृतुधारणम् ॥ ६० ॥ बादरायणः—स्त्रीणां गतोऽनुपचयर्क्षमनुष्णरश्मिः संदृश्यते यदि धरातनयेन तासाम् । गर्भग्रहार्तवमुशंति तदा सुवन्ध्या वृद्धातुराल्पवयसामपि नैतदिष्टम् ॥ ६१ ॥ लक्षणान्तरम्—इन्दुर्जलं कुजोऽग्निर्जलमिश्रं त्वग्निरेव पित्तं स्यात् । एवं रक्ते क्षुभिते पित्तेन रजः प्रवर्तते स्त्रीषु ॥ ६२ ॥ एवं यद्भवति रजो गर्भस्यनिमित्तमेव कथितं तत् । उपचयसंस्थे विफलं प्रतिमासदर्शनं तस्य ॥ ६३ ॥ अन्यत्र बालवृद्धातुरवन्ध्याभ्यः एवं गर्भग्रहणयोग्यमार्तवं प्रदर्श्य स्त्रीपुरुषसंयोगसंभावासंभवौ चाह । बादरायणः—पुरुषोपचयगृहस्थो गुरुणा यदि दृश्यते हिममयूखः । स्त्रीपुरुषसंयोगं तदा वदेदन्यथा नैव ॥ ६४ ॥ नन्वत्र स्त्रिया उपचयस्थः कथं नोक्तः अयुक्तमेतत् प्राधान्यात् पुरुषस्यैव कस्मिन्कालेऽयं विचारः उच्यते । ऋतौ गर्भयोगः । चतुर्थदिने स्नातायामिति अथान्यदाह ग्रंथान्तरे—बलान्वितार्कसितौ स्वभांशे पुंसां यदा चोपचये भवेताम् । तथांगनानां शशिभूमिजौ वा तदा भवेद्गर्भसमुद्भवश्च ॥ ६५ ॥ स्त्रीणां विधौ चोपचये कुजेन दृष्टेऽपि गर्भग्रहणेऽपि योग्या । पुंसां तथा गीष्पतिना प्रदिष्टे स्त्रीपुंसयोर्योगमतोऽन्यथा न ॥ ६६ ॥ पराशरः—रोगेण यद्रजः स्त्रीणामन्वहं तु प्रवर्तते । नाशुचिः स्यात्ततस्तेन तत्स्याद्वैकारिकं मलम् ॥ ६७ ॥ अष्टादश दिनादर्वाक् स्नानमेव रजस्वला । अत ऊर्ध्वं त्रिरात्रं स्यादुशना मुनिरब्रवीत् ॥ ६८ ॥ स्मर्यते—स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला । पात्रांतरिततोयेन स्नानं कृत्वा व्रतं चरेत् ॥ ६९ ॥ सिक्तमात्रा भवेदाद्भिः सांगोपांगा कथंचन । न वस्त्रपीडनं कुर्यान्नान्यद्वासांश्च धारयेत् ॥ ७० ॥ अथ रजस्वलायाः प्रथमदिननिर्णयः । पारिजाते चतुर्विंशन्मते—पूर्वांशयोस्तु रात्रौ चेज्जननं मरणं रजः । दृष्टे पूर्वं दिनादित्वं तृतीये त्वितरेहानि ॥ ७१ ॥ केचिद्दिवोदिते चैव जननं मरणं तथा । रजो वा दृश्यते स्त्रीणां यस्याहस्तस्य शर्वरी ॥ ७२ ॥ अपरे त्वर्द्धरात्रात्प्राक् मृतौ रजसि सूतके । पूर्वमेव दिनं प्राहुरूर्द्धे चेदुत्तरेहनि ॥ ७३ ॥ ज्वरितारजस्वलाशुद्धिः । संग्रहे—आतुरा चेदृतुमती तस्याः स्नानं कथं भवेत् । स्पृष्ट्वा तु तां परा स्नायाद्दश कृत्वा ह्यनातुरा ॥ ७४ ॥ वासोभिर्दशभिश्चैव परिधार्य यथाक्रमम् । ब्राह्मणान् भोजयित्वा तु पुण्याहेन विशुद्ध्यति ॥ ७५ ॥ अथ रजस्वलास्नानमुहूर्तः । अत्रिः—ब्राह्म्यानुराधाश्विभसौम्यभेषु हस्तानिलाखंडलवासवेषु । विश्वर्यमर्क्षोत्तरभाद्रभेषु वरांगनास्नानविधिः प्रदिष्टः ॥ ७६ ॥ अन्यदपि—आश्विनी रोहिणी चित्रा स्वाती पौष्णं तथोत्तरा । ऋतुस्नानायनं मैत्रं हस्तपुष्यो मृगो वसु ॥ ७७ ॥ सोमे क्लेशं भयं शुक्रे नाशं च शनिसौम्ययोः । गुरुसूर्यकुजानां तु वाराः सर्वार्थसिद्धिदाः ॥७८॥

निशावसाने दिवसे चतुर्थे शुभे दिने वाथ तिथौ च ऋक्षे ।, एला घनौशीर-जलैः सचन्दनैः स्नायाच्च नारी ऋतुसंप्रयोगे ॥ ७९ ॥ अथ रजस्वलाशुद्धि-मंत्रः । आदिर्भवान् गुप्तमनुं तन्मध्ये रजस्वलां देवि वयं नमामः । उपोषिता त्रीणि दिना भवंतो मुक्तैरेतद्वासुदेवं नमामः ॥ ८० ॥ अथ गर्भाधानमुहूर्ताः । तद्वि-धिश्च । दैवज्ञः-अलंकृतामार्तवसंयुतां च गेहे शुभे दीपयुते निवेशयेत् । तिला-गुडापूपयुतं च पूगं स्त्रीभ्यश्च दद्याद्द्विजमंत्रपूजयेत् ॥ ८१ ॥ आरोपयेदिमां तत्र पट्टके शोभने ततः । पुण्याहं वाचयित्वा तु ब्राह्मणान् भोजयेत्सुधीः ॥ ८२ ॥ त्रिरात्रं च सकृद्भुक्त्वा स्मृतिप्रोक्तैः व्रतैर्युता । चतुर्थे संगमेतीते स्नात्वा धर्मं समारभेत् ॥ ८३ ॥ नारदः-षोडशर्तुनिशाः स्त्रीणां तस्मिन्युग्मासु संविशेत् । युग्मासु जायते पुत्रास्त्रियो युग्मासु रात्रिषु ॥ ८४ ॥ तुर्ये पुत्रभवे क्लेशं पंचमे समता फलम् । षष्ठेल्पायुः सुतः प्रोक्तः सप्तमे कन्यका तथा ॥ ८५ ॥ अष्टमे पुत्र उत्कृष्टो नवमे कन्यका शुभा । दीर्घायुर्दशमे पुत्रः कन्यकैकादशां वरा ॥ ८६ ॥ द्वादशे धर्मकृत्पुत्रो सती कन्या त्रयोदशे । चतुर्दशदिने पुत्रः लक्ष्मीवान्सात्विकः शुभः ॥ ८७ ॥ पंचदशदिने कन्या लक्ष्मीसौभाग्यसंयुता । दिने षोडशके पुत्रो' दीर्घायुर्नृपतिर्भवेत् ॥ ८८ ॥ बृहस्पतिः-निशाषोडशकं नारी सज्ञां नर्तुमतीति सा । तावन्योन्यं प्रजास्थाने नैवाद्या हि चतुष्टयम् ॥ ८९ ॥ शेषेष्वोजे स्त्रियो जन्म युग्म पुंसः प्रकीर्तितम् । इति कृत्वा निषेकं तु प्रजा भवति केवलम् ॥ ९० ॥ बृहस्पतिः-हरिहस्ता-नुराधाश्च स्वाती वारुणवासवम् । त्रीण्युत्तराणि मूलं च रोहिणी चोत्तमाः स्मृताः ॥ ९१ ॥ चित्रादित्येन्द्रश्चातिष्य तुरंगं चातिमध्यमा । शेषभान्यधमान्याहुं-र्वर्जनीया निषेकके ॥९२॥ सोमज्ञगुरुशुक्राणां वारा वर्गादयः शुभाः । तेषां दृष्टचाद-यश्चैव न तेषां सर्वदा गुणान् ॥ ९३ ॥ शुक्रेधिके वलैर्युक्ते पुमान्वायौ च दक्षिणे । रक्ताधिके वलैर्युक्ते नारी वायौ च वामगे ॥ ९४ ॥ माहेश्वरः-लब्ध्वा चंद्रवलं ऋतौ स्वयुवतीं गच्छेत्सुतार्थी पुमांस्त्यक्त्वा रात्रिचतुष्टयं प्रथमकं मूलं ,मघां रेवतीम् । पक्षार्द्धं च चतुर्दशीं प्रमुदितः पक्षांतदर्शौ निशां श्राद्धस्याद्यादिनं दिनं दिननिशोः संधिं च पर्वाण्यपि ॥ ९५ ॥ वसिष्ठः-पौष्णद्वये पैत्रभयाम्यसार्पविष्णुद्वये नैधन-जन्मभेषु । उत्पातपापग्रहदूषितेषु न कार्यमाधानमनिष्टलग्ने ॥ ९६ ॥ उपप्लवे वैधृ-तिपातयोश्च विष्टिचंदिवापारिघपूर्वभागे । संध्यासु सर्वास्वपि मातृपित्रोर्मृतेह्नि पत्नीगमने विवर्ज्यम् ॥ ९७ ॥ अथ लग्नशुद्धिः । शुक्रजातके-सूर्यशुक्रौ स्वांश-स्थौ पुरुषोपचयर्क्षगौ स्त्रीणाम् । कुजेन्दू वीर्याढचौ स्वांशोपचयसंस्थितौ ॥ ९८ ॥ गर्भप्रदौ पंचमे च निर्वले क्रूरसंयुते । सुतेशेऽस्तंगते नीचे न गर्भः क्रूरसंयुते ॥ ९९ ॥ गर्गः-लग्नस्थो वा सुतस्थो वा धर्मस्थो वा बली ग्रहः । प्रोक्तर्क्षे शुभवारे च धारये-द्गर्भमुत्तमम् ॥ १०० ॥ गुरुः-स्वांशके वा स्वराशौ वा शुक्रार्कोपचये पुमान् ।

त्रिकोणे वलवज्जीवे योगात्रितयमुच्यते ॥ १ ॥ गुर्वर्कावोजराशिस्थावोजांशेषु: विलग्नतः । जीवेन्दौ वा विलग्नस्थौ स्थानादिबलसंयुतौ ॥ २ ॥ एवं योगैश्चतुर्भिस्तु पुत्राह्वतौ निषेकतः । विविजानामि मे न स्युः उलूकस्यार्करश्मिवत् ॥ ३ ॥ वाराहः-ओजर्क्षे विषमांशकेषु बलिभिर्लग्नार्कगुर्विन्दुभिः पुंजन्म प्रवदेत्समांशकगतैर्युग्मेषु तैर्योषितः । गुर्वर्कौ विषमे नरं शशिसुतौ वक्रश्च युग्मे स्त्रियं द्व्यंगस्था बुधवीक्षणाञ्च यमलौ कुर्वंति पक्षे स्वके ॥ ४ ॥ पराशरः-ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति । घोरायां भ्रूणहत्यायां पच्यते नात्र संशयः ॥ ५ ॥ अस्यापवादः । मदनरत्ने व्यासः-व्याधितो बंधनस्थो वा प्रवासेष्वथ पर्वसु । ऋतुकालेपि नारीणां भ्रूणहत्या प्रमुच्यते ॥ ६ ॥ अथ प्रतिमासे गर्भस्यावयवोत्पत्तिमासाधिपाः । यवनः-आद्ये तु मासे कललं द्वितीये शिरस्तृतीयेपि भवंति शाखाः । अस्थीमथ स्नायुशिराश्चतुर्थे मज्जा च चर्माण्यपि पंचमे च ॥ ७ ॥ षष्ठे त्वसृक्रोमनखाः सकृच्चचेतस्थिता सप्तममासि चेष्टा । तृष्णाशनास्वादनमष्टमे स्यात्पूर्वापराद्धा नवमे रतिश्च ॥ ८ ॥ स्रोतोभिरुद्घाटितपूर्णदेहो गर्भोर्कमासे दशमे प्रसूतः ॥ ९ ॥ अथ मासेश्वराः । कुजास्फुजिज्जीवरवींदुसौरशशांकलग्नेन्दुदिवाकराणाम् । मासाधिपत्यप्रभवो न चैषा जयोपघातैर्ग्रहवद्भवन्ति ॥ ११० ॥ तथाच सूक्ष्मजातके-कलुषैः पीडापतनं निपीडितैर्निर्मलैः पुष्टिरिति ॥ १११ ॥ इति श्रीज्योतिर्विद्दयादत्तात्मजरामदीनकृते संग्रहे बृहद्दैवज्ञरंजने संस्कारोक्तं एकोनपंचाशत्तमं गर्भाधानप्रकरणं समाप्तम् ।

---

## अथ पंचाशत्तमं पुंसवनप्रकरणं प्रारभ्यते ।

उत्पत्स्यमानस्य वैजिकगार्भिकदोषपरिहारपुरुषताज्ञानोदयप्रतिरोधिपरिहारं पुंसवनम् । बृहस्पतिः-गर्भसुस्थापिते चास्य वक्ष्ये पुंसनवस्य च । काले यस्मिन्कृतो गर्भः पुमान्भवति निश्चितम् ॥ १ ॥ स्त्रीणां सर्वक्रियारंभे भर्तुर्गोचरतः फलम् । यात्रा पुंसवनोद्वाहे विशुद्धिर्योषितः सदा ॥ २ ॥ व्यवहारचण्डेश्वरः-विवाहकार्ये कुसुमप्रतिष्ठा गर्भप्रतिष्ठा वनिता विशुद्धौ । अन्यानि कार्याणि धवस्य शुद्धौ पत्यौ निवृत्ते पुनरात्मशुद्ध्या ॥ ३ ॥ संहिताप्रदीपे-उद्वाहकर्मसु शशांकबलं यथावल्लग्नप्रदानसमये वरकन्ययोस्तु । ग्राह्यं विवाहसमयादथ भर्तुरेव सीमंतपुंसवनयोः पुनरंगनायाः ॥ ४ ॥ आधाने संप्रदाने च विवाहे गर्भशोधने । स्त्रीणां चन्द्रबलं योज्यं पुंसां नैव कदाचन ॥ ५ ॥ स्त्रीणां सर्वक्रिया कार्या विशुद्ध्या स्वामिनः सदा । स्वशुद्ध्या पतिशुद्ध्या वा गर्भाधानादिकं पुनः ॥ ६ ॥ नारदः-प्रसिद्धविषये गर्भे तृतीये वाथ मासि च । तृतीये वा द्वितीये वा मासि पुंसवनं भवेत् ॥ ७ ॥ व्यक्ते गर्भे भवेत्कार्यं सीमंतेन सहाथवा ॥ ८ ॥ गर्गः-अथ पुंसवनं कुर्यात्तृतीये मासि

पुंस्त्विदम् । शुक्लपक्षे च पूर्वाह्णे चन्द्रताराबलान्विते ॥ ९ ॥ स्मृतिकारिकायाम्–तृतीये गर्भसंस्कारो मासि पुंसवनं भवेत् । आद्यगर्भो न विज्ञातस्तृतीये मासि वै यदि ॥ १० ॥ चतुर्थे मासि कर्तव्यमादिगर्भे स्मृतो विधिः । केपि संतो वदंत्येवं प्रतिगर्भे तु पुंस्त्विदम् ॥ ११ ॥ पुंसवने गुरुमौढ्यादि । अथ मासप्राधान्येन विहितत्वात् । गुरुशुक्रमौढ्येपि मलमासेपि कर्तव्यम् । तदाह बृहस्पतिः–मासप्रयुक्तकार्येषु मूढत्वं गुरुशुक्रयोः । न दोषकृत्तदा मासलक्षणो बलवानिति ॥ १२ ॥ यमः–गर्भवार्द्धुषिते भृत्ये श्राद्धकर्मणि मासिके । सपिंडीकरणे नित्ये नाधिमासं विवर्जयेत् ॥ १३ ॥ निबन्धचूडामणौ–कुर्यात्पुंसवनं प्रसिद्धविषये गर्भे तृतीयेपि वा मासस्फीततनौ तुषारकिरणे पुष्ये्थवा वैष्णवे । हित्वा कर्कटकं नृयुग्ममबलामन्येष्व-रिक्ते तिथौ शुद्धे नैधनधाम्नि शुक्रशशभृज्ज्ञेसौरिणां वासरे ॥ १४ ॥ लल्लः–मूलादित्यशशांकपुष्यहरिभे हस्ते च पुंवासरे लग्ने कुंभनृयुग्मसिंहगुरुभे नंदे सभद्रे तिथौ । मासे युग्मतृतीयकेथ धवले पक्षे शुभे रात्रिपे कुर्यात्पुंसवनं च वृद्धिसुखदं केन्द्रत्रिकोणे शुभे ॥ १५ ॥ काकीव वन्ध्या भवतीति शुक्रे स्वल्पप्रजाः पुंसवने बुधे तु । सौरेण मृत्युः पयहानिरिंदौ भौमार्कजीवैर्बहुपुत्रलाभः ॥ १६ ॥ मुहूर्तार्णवे–पुष्यार्कचन्द्रशिवमूलपुनर्वसुश्राप्याषाढयुग्महरिभाद्रपदद्वयं च । एतानि पुंसि कथितानि शुभानि भानि अन्येषु गर्भपतनादिभयानि भेषु ॥ १७ ॥ श्रीपतिः–श्रवणः सकरः पुनर्वसुर्निर्ऋतिभं च सपुष्यगो मृगः । रविभूसुतजीववासराः कथिताः पुंसवनादिकर्मसु ॥ १८ ॥ मणिमालायाम्–नन्दाभद्रार्कजीवे कुजशशिपवने मैत्रमूले मृगेश्वे पौष्णयादित्या तु पुष्ये श्रुतित्रयपितरे तारका चन्द्रशुद्धे । लग्ने कन्यालिकर्के हरिझष-सहिते क्रूरगा व्यायुषष्ठे सौम्या केन्द्रत्रिकोणे शुभदिनसहिते कारयेत्पुंसकर्म ॥ १९ ॥ नंदाभद्रा भवेत्पुंसि स्त्री च पूर्णा जया स्मृता । रिक्ता नपुंसके ज्ञेया तस्मात्तां परिवर्जयेत् ॥ २० ॥ नृसिंहः–गुरुशुक्रबुधेन्दूनां द्रेष्काणा दिवसांशकाः । तेषामुदयहोरायां पुंसवेति शुभावहाः ॥ २१ ॥ बृहस्पतिः–रिक्तां च पर्वनवमीं त्यक्त्वा पुंसवने शुभाः ॥ २२ ॥ अथ गर्भे मासाधिपाः । सितावनेयामरपूज्यसूर्यचन्द्रार्किसौम्योदयचन्द्रसूर्याः । मासाधिपाःस्युः क्रमशो दशैते निपीडितो नाशयति स्वमासि ॥ २३ ॥ इति श्रीज्योतिर्विद्वयादत्तात्मजरामदीनकृते संग्रहे बृहद्दैवज्ञरंजने संस्कारोक्ते पंचाशत्तमं पुंसवनप्रकरणं समाप्तम् ।

---

## अथ एकपंचाशत्तमं सीमंतप्रकरणं प्रारभ्यते ।



अथ भार्यायां गर्भाभिवृद्धिपरिपंथिपिशितरुधिरप्रियालक्ष्मीभूतराक्षसगणदूरनिरस-नक्षमसौभाग्यनिदानसंभूतं सीमंतम् । बृहस्पतिः–अथातः संप्रवक्ष्यामि कालं

सीमंतकर्माणि । प्राप्तिः शुद्धिरिति प्रोक्तं सीमंतं कर्म ब्रह्मणा ॥ १ ॥ सौरेणैव चतुर्थे स्यान्मासि षष्ठेऽष्टमेपि वा । मासप्रोक्ता क्रिया ये स्युस्ते सर्वे सौरमासतः ॥ २ ॥ एषु मासेषु सर्वेषु प्राप्ते वा जीवशुक्रयोः । मूढभावेन दोषः स्यादधिमासादिनानि च ॥ ३ ॥ नारदः—चतुर्थे मासि षष्ठे वाप्यष्टमेवा तदीश्वरे । बालोपपन्नो दंपत्योश्चन्द्रताराबलान्विते ॥ ४ ॥ कार्ष्णाजिनिः—गर्भालंभनमालभ्य यावता प्रसवस्तदा । सीमंतोन्नयनं कुर्याच्छंखस्य वचनं यथा ॥ ५ ॥ मनुः—चतुर्थे गर्भमासे स्यात्सीमंतोन्नयनक्रिया । षष्ठेष्टमे वा कुर्वीत सूत्रांतरविधानतः ॥ ६ ॥ स्वीकृता यदि सीमंतं प्रसूयेत कथंचन । पुत्रं गृहीत्वा विधिवत्पुनः संस्कारमर्हति ॥ ७ ॥ कालविधाने—चतुर्थषष्ठाष्टममासि भाजि सौरेण गर्भे प्रथमं विधेयाः । सीमंतकर्म द्विजभामिनीनां मासेष्टमे विष्णुबलिं च कुर्यात् ॥ ८ ॥ आधानादष्टमे मासि सीमंतोन्नयनं शुभम् । नवमे मासि वा कुर्याद्यावद्गर्भविमोचनम् ॥ ९ ॥ वसिष्ठः—चतुर्थे सावने मासि षष्ठे वाप्यष्टमेपि वा । अरिक्तपर्वदिवसे कुजजीवार्कवासरे ॥ १० ॥ शुक्लपक्षे च पूर्वाह्णे सीमंताख्यो विधिः स्मृतः ॥ ११ ॥ नारदः—विप्रक्षत्रिययोः कुर्याद्दिवा सीमंतकर्म तत् । वैश्यशूद्रकयोरेतद्दिवानिश्यपि केचन ॥ १२ ॥ हारीतः—सीमंतं प्राशनं चैव कृष्णपक्षे तु कारयेत् । वपनं शुक्लपक्षे च शेषं कर्म द्विपक्षयोः ॥ १३ ॥ शुक्लकृष्णभेदस्तु पक्षप्रकरणे लिखितमस्ति । रामः—स्त्रीणां विधोर्बलमुशंति विवाहगर्भसंस्कारयोरितरकर्मसु भर्तुरेव ॥ १४ ॥ चन्द्रताराबले कार्यं दंपत्योश्च प्रयत्नतः ॥ १५ ॥ चूडामणौ—षष्ठे वाप्यथवाष्टमे शुभतिथौ कन्यालिसिंहे झषे लग्ने कर्कटके नरग्रहदिने पुंभे अषाढाद्वये । रौद्रे भाद्रयुते शुभे च करणे केन्द्रत्रिकोणे गुरौ षट्त्र्यायारिगते खले शुभतिथौ सीमंतकर्म स्मृतम् ॥ १६ ॥ मुक्तावल्याम्—मासे षष्ठाष्टमे वा मृगकरहरिभे मूलपुष्यादितिश्च नंदा भद्रा च पूर्णा जयतिथि च शुभा भूसुतेर्केज्यवारे । त्यक्त्वा गण्डांतभद्रागरकरणतथा वज्रविष्कंभयोश्च कुर्यात्सीमंतकर्म शशिनि बलशुभे सिंहकुंभालिलग्ने ॥१७॥ चूडामणौ—पुन्नाम श्रवणं तिष्य स्वाती हस्त पुनर्वसु । मूलं प्रोष्ठपदं चानुराधामृगशिरोश्विनी ॥ १८ ॥ रोहिण्यामैन्दवा तिष्य पुष्यहस्तोत्तरा त्रिषु । पौष्णवैष्णवयोश्चैव शुभं सीमंतकर्मणि ॥ १९ ॥ वाराहः—शस्ते तिथौ जीवकुजार्कवारे हस्तेन्दुतिष्यादितिविष्णुभेषु । विधातृपौष्णोत्तरभेषु नूनं सीमंतकार्यं शुभदं वदंति ॥ २० ॥ केन्द्रत्रिकोणत्रिधनाय सौम्यैर्दुश्चिक्यलाभरिगतैश्च पापैः । षडष्टलग्नांत्यविवर्जितेंदौ सीमंतकार्यं शुभदं शुभांशैः ॥ २१ ॥ नारदः—सीमंतलग्नादेकोपि क्रूरो व्ययसुताष्टसु । हंति सीमंतिनीं नारीं तद्गर्भं वा न संशयः ॥ २२ ॥ वसिष्ठः—मासे मासे मासपादिग्रहाणां शान्तिं कुर्याच्छान्तिवाक्यैर्जपैश्च । होमैर्दानैः सज्जनानां च वाक्यैः गर्भं सम्यक्रक्षयेत्पुत्रकामी ॥ २३ ॥ गुरुः—रोहिणी मित्रभेदित्ये पुष्यो हस्तोत्तरात्रिषु । पौष्णवैष्णवयोरेव सीमंते शुभदस्तदा ॥ २४ ॥ शोभनांशे शुभे लग्ने लेयकौर्प्यौ विनाशुभाः । पक्षाछिद्राश्च रिक्ताश्च विना पंचदशी शुभाः ॥ २५ ॥

असंभवे यथोक्तस्य कालस्योक्तस्य मासि च । दोषापवादे दृष्टे वा योगे दोषहरेपि वा ॥ २६ ॥ अनेन सार्द्धं पुंकर्म अयं पुंसवनेन वा । अमंत्रकं च पुंकर्म तत्सीमंतं शुभार्थिनाम् ॥ २७ ॥ दीपिकायाम्-चतुर्थाद्यष्टपर्यंतं मासि पुंनामभे सकृत् । सीमंतोन्नयनं स्त्रीणां गर्भस्य प्रतिगर्भकम् ॥ २८ ॥ हारीतः--सकृत्सकृत्संस्काराः सीमंतेन द्विजैस्त्रियः । यं यं गर्भं प्रसूयेत स सर्वः संस्कृतो भवेत् ॥ २९ ॥ सीमन्तानन्तरवर्ज्यम् । दहनं वपनं चैव न कुर्याद्गुर्विणीपतिः ॥ ३० ॥ आमिषस्याशनं यत्नात्प्रमदापरिवर्जयेत् । देवारामनदीयानं प्रयोगं पुरुषस्य च ॥ ३१ ॥ स्मृतिसारे-उदन्वतोंभसि स्नानं नखकेशनिकृंतनम् । नांतर्वत्न्या पतिः कुर्यादप्रजो भवति ध्रुवम् ॥ ३२ ॥ सिंधुस्नानं द्रुमच्छेदं वपनं प्रेतवाहनम् । विदेशगमनं चैव न कुर्याद्गर्भिणीपतिः ॥ ३३ ॥ राजा योगी पुरंध्री च मातापित्रोस्तु जीवतोः । मुंडनं सर्वतीर्थेषु न कुर्याद्गर्भिणीपतिः ॥ ३४ ॥ अन्तर्वन्त्या तु जायायां तीर्थे क्षौरं न कारयेत् । प्रेतवाहादिकं चैव सीमंतोन्नयनादनु ॥ ३५ ॥ क्षौरं नैमित्तिकं कुर्यान्निषेधस्यात्यपि ध्रुवम् । पित्रोः प्रेतावधानं च न दोषस्तत्र विद्यते ॥३६॥ गङ्गायां भास्करक्षेत्रे मातापित्रोर्मृतेहनि । आधाने सोमपाने च षड्भिः क्षौरं विधीयते ॥ ३७ ॥ ज्योतिषसारे-भूम्यां चैवोच्चनीचायामारोहणवरोहणे । नदीप्रतरणं चैव शकटारोहणं तथा ॥ ३८ ॥ उग्रौषधं तथा क्षारं मैथुनं भारवाहनम् । कृते पुंसवने चैव गर्भिणी परिवर्जयेत् ॥ ३९ ॥ कारिकायाम्-अंगारभस्मास्थिकपालचूल्हीशूर्पादिकेषूपविशेन्न नारी । सोलूखलाद्ये दृषदादिके वा यंत्रे तुषाद्येन तथोपविष्टाम् ॥ ४० ॥ नो मार्जनीगोमयपिंडकादौ मूत्रं पुरीषं शयनं च कुर्यात् । नो मुक्तकेशी विवशाथ वास्याद्भुक्ते न संध्यावसरे न शेते ॥ ४१ ॥ ना मंगलं वाक्यमुदीरयेत्सा शून्यालयं वृक्षतलं न यत्यात् ॥ ४२ ॥ प्रयोगपारिजाते-गर्भिणीकुंजराश्वादिशैलहर्म्यादिरोहणम् । व्यायामं शीघ्रगमनं शकटारोहणं त्यजेत् ॥ ४३ ॥ शोकरक्तविमोक्षं च साध्वसं कुक्कुटासनम् । व्यवसायं दिवास्वापं रात्रौ जागरणं त्यजेत् ॥ ४४ ॥ याज्ञवल्क्यः-दौहृदस्याप्रदाने गर्भो दोषमवाप्नुयात् । वैरूप्यं मरणं वापि तस्मात्कार्यं प्रियं स्त्रियः ॥ ४५ ॥ दौहृदं गर्भिणीप्रियम् । मदनरत्ने -हरिद्रां कुंकुमं चैव सिंदूरं कज्जलं तथा । कूर्पासकं च तांबूलमांगल्याभरणं शुभम् ॥ ४६ ॥ केशसंस्कारकवरीकरकर्णविभूषणाम् । भर्तुरायुष्यमिच्छंती धारयेद्गर्भिणी नहि ॥ ४७ ॥ आहाराचारचेष्टाभिः यादृशीभिः समन्विता । स्त्रीपुरुषौ समेपेतां तयोः पुत्रोपि तादृशः ॥ ४८ ॥ सीमंतानंतरं विष्णुपूजां कुर्यात् । अथ विष्णुपूजा । मासेऽष्टमे विष्णुविधातृजीवैर्लग्नेशुभे मृत्युगृहे च शुद्धे ॥ ४९ ॥ अन्यः--रोहिण्येब्जे वैष्णवे पूर्वपक्षे द्वादश्यां वा सप्तमी वा तिथौ हि । मध्याह्ने वा पूर्वभागेनुकूले विष्णोः पूजां कारयेद्गर्भपुष्ट्यै ॥ ५० ॥ विष्णोः कृत्वा च पूजां हि गर्भसंरक्षणाय च । ब्राह्मणेभ्यः प्रदातव्या प्रतिमा वस्त्रसंयुता ॥ ५१ ॥ अन्योपि-रोहिण्यां श्रवणे पुष्ये लग्ने सौम्ये शुभे

युते । दृष्टेवाप्यष्टमे शुद्धे विष्णुपूजाष्टमे विधिः ॥ ५२ ॥ विष्णोर्मूर्तिं सुवर्णस्य कारयेद्वित्तमानतः । वस्त्रोपेतां यथोक्तेन पूजां कुर्याद्विधानतः ॥५३॥ततो वेदविदां दद्याद्गर्भसंरक्षणाय च ॥ ५४ ॥ इति श्रीज्योतिर्विद्वर्यादत्तात्मजरामदीनविरचिते संग्रहे बृहद्दैवज्ञरंजने संस्कारोक्तं एकपंचाशत्तमं सीमंतविष्णुपूजाप्रकरणं समाप्तम् ।

## अथ द्विपंचाशत्तमं सूतिकाग्रहप्रवेशप्रकरणं प्रारभ्यते ।

तत्सूतिकागृहं पारिजाते--वसिष्ठः--ऐंद्रेतु विक्रमस्थानं आग्नेय्यां पचनालयम् । वारुण्यां भोजनगृहं नैर्ऋत्यां सूतिकागृहम् ॥ १ ॥ वाराहीये--नैर्ऋतीवारुणीमध्ये प्रमदासूतितस्कराः ॥ २ ॥ वास्तुराजवल्लभे--हस्तादित्यशशांकपुष्यपवनप्राजेशमित्रोत्तराचित्राश्विश्रवणेषु वृश्चिकघटौ त्यक्त्वा विरिक्ते तिथौ । शुक्राचार्यशनैश्चरज्ञशशिनां वारेनुकूले विधौ सद्भिर्वेश्मनि सूतिकाग्रहविधिः क्षेमंकरः कीर्तितः ॥ ३ ॥ तत्प्रवेशकालं गर्गः--रोहिण्यैंदवपौष्ण्येषु स्वातीवारुणयोरपि । पुनर्वसुपुष्यहस्तधनिष्ठात्र्युत्तरासु च ॥ ४ ॥ मैत्रे त्वाष्ट्रे तथाश्विन्यां सूतिकागारवेशनम् । प्रसूतिसंभवे काले सद्य एव प्रवेशयेत् ॥ ५ ॥ तद्विधिः पाद्मे--प्रविशेत्सूतिकासंज्ञं कृतरक्षं समंततः । सुभूमौ निर्मितं रम्यं वास्तुविद्याविशारदैः ॥ ६ ॥ प्राग्द्वारमुत्तरद्वारमथवा सुदृढं शुभम् । देवानां ब्राह्मणानां च गवां कृत्वा च पूजनम् ॥ ७ ॥ विप्रपुण्याहशब्देन शंखवाद्यरवेन च । प्रसूता बहवस्तत्र तथा क्लेशक्षमादयः ॥ ८ ॥ हृद्या विश्वसनीयाश्च प्रविशेयुः स्त्रियश्च तत् ॥ ९ ॥ अथ सुखप्रसवोपायः । एरंडमूलचूर्णं न सघृतं च तथैव ताम् । सुखप्रसवनार्थाय पश्चात्कार्यं तु तत्क्षिपेत् ॥ १० ॥ प्रसवनिर्वंधे तन्निवर्तकमृगूविधाने--प्रथमं दिने ऋचं त्वेकां जपेद्गर्भप्रमोचनीम् । इन्द्रं च मनसा ध्यायेन्नारी गर्भं प्रमुंचति ॥ ११ ॥ विजहीर्ये वनस्पते तदिदं च्यावनं स्मृतम् । पंच वा पितुः कामाः स्याच्च्यावयेत इदं जपन् ॥ १२ ॥ स्त्रियं गर्भप्रसूतां वा पाययेदनुमंत्रितम् । उदकं च्यावनेनैव गर्भोंधः च्यवते सुखम् ॥ १३ ॥ सुखप्रसवे प्रकारान्तरमाह । मदनरत्ने नारायणीघटिकायाम्--करंकीभूत गोमूर्ध्ना सूतिकाभवनोपरि । तत्कालनिहितो नार्याः सुखप्रसवकारकः ॥ १४ ॥ अस्थिमात्रावशिष्टगोप्रसव इत्यर्थः । उपोदक्यास्तु मूलानि तैलयुक्तानि कारयेत् । योनिप्रलेपो दातव्यः सुखं नारी प्रसूयते ॥ १५ ॥ वंशनिंबयोस्त्वक्तुलसीमूलं कपित्थपत्रं च । कारवीरमेतत्पिष्ट्वा क्षीरेण माहिषेणैव ॥ १६ ॥ समतोलितं सतैलं योनिं लिप्त्वा च तेनापि । मृतगर्भं निःसारयति किमत्र चित्रं सुखप्रसवे ॥ १७ ॥ अथाधानकाले चन्द्रवशात्प्रसवकालज्ञानमाह । आधानं यदि दृश्यते स्थिरगते चण्डीशचूडामणौ नारीणां प्रसवस्तदा खलु भवेद्युग्मांकपक्षै २९३ दिनैः । सप्ताशीत्यधिकैश्च पक्षसहिते २८७ स्तस्मिंश्चरक्षेत्रगे चंद्राष्टाश्वि २८१ दिनैरसातलभुजै २७६ र्वा द्विस्व

भावे विधौ ॥ १८ ॥ अथ कैश्चित्पृच्छति ममगृहे प्रसवसमयोऽद्यैवास्ति कस्मिँल्लग्ने भविष्यतीति चेत् दिवा निकटवर्ती तदा यस्मिन्नृक्षे रविः तस्याधः स्थाने यल्लग्नं तन्मध्ये जन्म वदेत् । अधोधस्त्रीण्यपि लग्नस्थानानि अश्विन्यामर्के मेषे मिथुने कन्यायां वा जन्म । रात्रौ वृश्चिकमकरमीने वा जन्म वाच्यम् ।

दिनेसूर्यर्क्षादेषु लग्नेषु जन्म वाच्यम् ।

| अ | भ | कृ | रो | मृ | आ | पु | पु | श्ले | म | पू | उ | ह | चि |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | १ | २ | २ | ३ | ३ | ३ | ४ | ४ | ५ | ५ | ६ | ६ | ७ |
| ३ | ४ | ४ | ५ | ५ | ६ | ६ | ७ | ७ | ७ | ८ | ८ | ९ | ९ |
| ६ | ७ | ७ | ७ | ८ | ८ | ९ | ९ | १० | ११ | ११ | ११ | ११ | १२ |

दिने सूर्यर्क्षादेषु लग्नेषु जन्म वाच्यम् ।

| स्वा | वि | अ | ज्ये | मू | पू | उ | श्र | ध | श | पू | उ | रे | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ७ | ७ | ८ | ८ | ९ | ९ | १० | १० | ११ | ११ | ११ | १२ | १२ | |
| १० | १० | ११ | ११ | ११ | १२ | १२ | १ | १ | २ | २ | ३ | ३ | |
| १२ | १ | १ | २ | २ | ३ | ३ | ३ | ४ | ४ | ५ | ५ | ६ | |

रात्रौ सूर्यर्क्षादेषु लग्नेषु जन्म वाच्यम् ।

| अ | भ | कृ | रो | मृ | आ | पु | पु | श्ले | म | पू | उ | ह | च |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ८ | ८ | ८ | १० | १० | ११ | ११ | ११ | १२ | १२ | १ | १ | २ | २ |
| १० | १० | ११ | १२ | १२ | १२ | १ | १ | २ | २ | ३ | ३ | ४ | ४ |
| १२ | १२ | १३ | २ | ३ | २ | ३ | ३ | ४ | ४ | ५ | ५ | ६ | ६ |

रात्रौ सूर्यर्क्षादेषु लग्नेषु जन्म वाच्यम् ।

| स्वा | वि | अ | ज्ये | मू | पू | उ | श्र | ध | श | पू | उ | रे | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ३ | ३ | ४ | ४ | ५ | ५ | ६ | ६ | ७ | ७ | ८ | ८ | ९ | |
| ५ | ५ | ६ | ६ | ७ | ७ | ८ | ८ | ९ | ९ | १० | १० | ११ | |
| ७ | ७ | ८ | ८ | ९ | ९ | १० | १० | ११ | ११ | १२ | १२ | १ | |

चन्द्रलग्नाधिपो यत्र तत्त्रिकोणमथोपि वा । तत्सप्तमे त्रिकोणे वा संशये लग्ननिर्णयः ॥ १ ॥ इति श्रीज्योतिर्विद्वर्यादत्तात्मजरामदीनकृते संग्रहे बृहद्दैवज्ञरंजने संस्कारोक्तं द्विपंचाशत्तम सूतिकागृहप्रवेशप्रकरणं समाप्तम् ।

## अथ त्रिपंचाशत्तमं जातकर्मप्रकरणं प्रारभ्यते ।

अथ जातकर्म । तत्प्रयोजनं चाह बृहस्पतिः–अथातः संप्रवक्ष्यामि जातकर्मक्रियां शुभाम् । जातस्यारिष्टनाशाय नीरोगित्वाय सर्वदा ॥ १ ॥ दीर्घायुष्यमवश्यैव सर्वसंपद्विवृद्धये । जन्मन्यशुभदोषाणां विनाशाय विशेषतः ॥ २ ॥ जातमात्रे पिता कुर्यात्पुत्रस्य मुखदर्शनम् । स्तनाशनात्पुरो वापि नाभिच्छेदात्पुरोथवा ॥ ३ ॥

जातके दानविषयवाक्यम् । एष्वतीतेषु कालेषु शुभयोगे शुभोदये । जातकर्मक्रिया कुर्यात्पुत्रायुःश्रीविवृद्धये ॥ ४ ॥ ग्रहदोषविनाशाय सूतिकाशुभविच्छिदे । कुमारग्रहनाशाय पुंसां सत्त्वविवृद्धये ॥ ५ ॥ तस्मात्पुत्रस्य रक्षायै कर्तव्यं जातकर्म च । देवानां मानुषाणां च चातुर्वर्ण्येषु कीर्तितम् ॥ ६ ॥ अन्यः—यस्मिन्मुहूर्ते जनिते कुमारे तस्मिन्विधेयं खलु जातकर्म । विनिर्गतेवाप्यथ सूतकेपि तस्मिन्दिने तस्य च नामधेयम् ॥ ७ ॥ संतर्प्य देवान्सपितॄन् द्विजांश्च सुवर्णगोभूतिलकांस्यवस्त्रैः । गुडाज्यरौप्यैर्लवणैः सहोमैं रक्षोघ्नमन्त्रैः सह जातकर्म ॥ ८ ॥ जातके शौचशुद्धिः । जातमात्रस्य पुत्रस्य मुखमस्यावलोकयेत् । नान्दीमुखं ततः कुर्यात्पितॄणां तुष्टिहेतवे ॥ ९ ॥ वसिष्ठः—जातमात्रकुमारस्य मुखमस्यावलोकयेत् । पितृऋणं विमुच्येत पुत्रस्य मुखदर्शनात् ॥ १० ॥ कन्यापुत्रविवाहेषु प्रवेश नववेश्मनः । नामकर्मणि वालानां चूडाकर्मादिके तथा ॥ ११ ॥ सीमन्तोन्नयने चैव पुत्रादि मुखदर्शने । नान्दीगणान् पितृगणान् पूजयेत्प्रयतो ग्रहैः ॥ १२ ॥ पितॄणां रूपमास्थाय देवो ह्यन्नं समुष्णते । तस्मात्सव्येन दातव्यं वृद्धिश्राद्धेषु दातृभिः ॥ १३ ॥ दूर्वावदरैर्मिश्रानपि दधिपिण्डान्मुदायुतः । नान्दीमुखेभ्यः पितृभ्यः दद्याद्वै श्रद्धया युतः ॥ १४ ॥ मातॄणां प्रथमं श्राद्धं पितॄणां तदनंतरम् । ततो मातामहानां च वृद्धिश्राद्धे प्रकीर्तितम् ॥ १५ ॥ जाते पुत्रे पिता स्नानं सचैलं कर्तुमर्हति ॥ कुर्यान्नैमित्तिकं स्नानं शीताद्भिः काम्यमेव च ॥ १६ ॥ वसिष्ठः—श्रुत्वा जातं पिता पुत्रं सचैलं स्नानमाचरेत् । उत्तराभिमुखो भूत्वा नद्यां वा देवखातके ॥ १७ ॥ जातकर्म च कर्तव्यं तस्मिञ्जाते मुहूर्तके । दानं देयं च विप्रेभ्यो यदीच्छेदात्मनः शिवम् ॥१८॥ रात्रौ यद्दीयते दानं तत्सर्वं निष्फलं भवेत् । स्मृत्यंतरेपि लिखितं व्यासाचार्यमतेन च ॥ १९ ॥ दाने विधिनिषेधः । नित्यं नैमित्तिकं काम्यं दानं त्रिविधसंज्ञकम् । ग्रहणोद्वाहसंक्रांतौ यात्रादौ प्रसवेषु च ॥ २० ॥ दानं नैमित्तिकं ज्ञेयं रात्रावपि न दुष्यति ॥ २१ ॥ रात्रावुदकादिगमनाशक्तौ विशेषमाह । शंखायनः—दिवा यदाहृतं तोयं कृत्वा स्वर्णद्रुतं तु तत् । रात्रिस्नाने तु संप्राप्ते स्नायादनलसंन्निधौ ॥ २२ ॥ वसिष्ठः—पुत्रजन्मनि यज्ञे च तथा संक्रमणे रवेः । राहोश्च दर्शने स्नानं प्रशस्तं नान्यथा निशि ॥ २३ ॥ प्रजापतिः—सूतके तु समुत्पन्ने पुत्रजन्म यदा भवेत् । कर्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुद्ध्यति ॥ २४ ॥ आचतुर्थाद्भवेत्स्रावः पातः पंचमषष्ठयोः । अत ऊर्द्ध्वं प्रसूतिः स्याद्दशाहं सूतकं भवेत् ॥ २५ ॥ यावन्न छिद्यते नालं तावन्नाप्नोति सूतकम् । छिन्ने नाले ततः पश्चात्सूतकं तु विधीयते ॥ २६ ॥ प्रसूतिशुद्धिदिवसाः । अन्यच्च—अजा गावो महिष्यश्च ब्राह्मणी च प्रसूतिका । दशरात्रेण शुद्ध्यंति भूमिस्थं च नवोदकम् ॥ २७ ॥ अन्योपि—गावश्च महिषी चैव अजाश्च ब्राह्मणीस्तथा । दशाहेनैव शुद्ध्यंति प्रसूतिःस्याद्यदा तदा ॥ जाबालिः—दश रात्रेण शुद्ध्यंति प्रसूतिः स्याच्च ब्राह्मणी । अजागोमहिषीश्चैव तथैव मुनिरब्र-

बीत् ॥ २९ ॥ अथजातकानंतरं कर्तव्यमाह । वसिष्ठः--दत्वा गोभूहिरण्यादि ततो लग्नं निरीक्षयेत् । लग्नमेव प्रशंसंति ज्योतिःशास्त्रविदो जनाः ॥ ३० ॥ अरिक्तपाणिर्दैवज्ञाच्छ्रुणुयात्पुत्रजन्मानि ॥ ३१ ॥

श्रीकाश्यां लग्नसारणीयम् ।

| ० | श्री | ० | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ | १९ | २० | २१ | २२ | २३ | २४ | २५ | २६ | २७ | २८ | २९ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ० | | २ | २ | ३ | ३ | ३ | ३ | ३ | ३ | ३ | ३ | ४ | ४ | ४ | ४ | ४ | ४ | ४ | ५ | ५ | ५ | ५ | ५ | ५ | ५ | ६ | ६ | ६ | ६ | ६ | ६ |
| ७ | ० | ४८ | ५५ | २ | १० | १७ | २५ | ३२ | ३९ | ४८ | ५६ | ४ | १३ | २१ | ३० | ३८ | ४७ | ५५ | ३ | १२ | २० | २९ | ३७ | ४६ | ५४ | २ | ११ | १९ | २८ | ३६ | ४५ |
| २९ | | १२ | ३४ | ५६ | १८ | ४० | २ | २४ | ४६ | १ | २७ | ५३ | १९ | ४५ | ११ | ३७ | ३ | २९ | ५५ | २१ | ४७ | १३ | ३९ | ५ | ३१ | ५७ | २३ | ४९ | १५ | ४१ | ७ |
| ० | | ६ | ७ | ७ | ७ | ७ | ७ | ७ | ७ | ८ | ८ | ८ | ८ | ८ | ८ | ९ | ९ | ९ | ९ | ९ | ९ | १० | १० | १० | १० | १० | १० | ११ | ११ | ११ | ११ |
| ८ | १ | ५३ | १ | १० | १८ | २० | ३५ | ४४ | ५१ | २ | १२ | २२ | ३२ | ४२ | ५३ | ३ | १३ | २३ | ३३ | ४३ | ५३ | ४ | १४ | २४ | ३४ | ४४ | ५४ | ४ | १४ | २५ | ३५ |
| २६ | | ३३ | ५९ | २५ | ५१ | १७ | ४३ | ९ | ३५ | २६ | ३४ | ४२ | ५० | ५८ | ६ | १४ | २२ | ३० | ३८ | ४६ | ५४ | २ | १० | १८ | २६ | ३४ | ४२ | ५० | ५८ | ६ | १४ |
| ० | | ११ | ११ | १२ | १२ | १२ | १२ | १२ | १२ | १३ | १३ | १३ | १३ | १३ | १४ | १४ | १४ | १४ | १४ | १५ | १५ | १५ | १५ | १५ | १५ | १४ | १६ | १६ | १६ | १६ | १७ |
| १० | २ | ४५ | ५५ | ५ | १५ | २५ | ३६ | ४६ | ५६ | ७ | १८ | ३० | ४१ | ५३ | ४ | १५ | २७ | ३८ | ५० | १ | १२ | २४ | ३५ | ४७ | ५८ | ९ | २१ | ३२ | ४४ | ५५ | ६ |
| ८ | | २२ | ३० | ३८ | ४६ | ५४ | २ | १० | १८ | २९ | ५३ | १७ | ४१ | ५ | २९ | ५३ | १७ | ४१ | ५ | २९ | ५३ | १७ | ४१ | ५ | २९ | ५३ | १७ | ४१ | ५ | २९ | ५३ |
| ० | | १७ | १७ | १७ | १७ | १८ | १८ | १८ | १८ | १८ | १९ | १९ | १९ | १९ | १९ | १९ | २० | २१ | २० | २० | २० | २१ | २१ | २१ | २१ | २१ | २२ | २२ | २२ | २२ | २२ |
| ११ | ३ | १८ | २९ | ४१ | ५२ | ३ | १५ | २६ | ३८ | ४९ | १ | १२ | २४ | ३५ | ४७ | ५८ | १० | २१ | ३३ | ४४ | ४६ | ७ | १९ | ३० | ४२ | ५३ | ५ | १६ | २८ | ३९ | ५१ |
| २४ | | १७ | ४१ | ५ | २९ | ५३ | १७ | ४१ | ५ | ३४ | ४ | ३४ | ४ | ३४ | ४ | ३४ | ४ | ३४ | ४ | ३४ | ४ | ३४ | ४ | ३४ | ४ | ३४ | ४ | ३४ | ४ | ३४ | ४ |
| ० | | २३ | २३ | २३ | २३ | २३ | २४ | २४ | २४ | २४ | २४ | २४ | २५ | २५ | २५ | २५ | २५ | २६ | २६ | २६ | २६ | २६ | २६ | २७ | २७ | २७ | २७ | २७ | २८ | २८ | २८ |
| ११ | ४ | २ | १४ | २५ | ३७ | ४८ | ० | ११ | २३ | ३४ | ४५ | ५६ | ७ | १८ | ३० | ४१ | ५२ | ३ | १४ | २५ | ३७ | ४८ | ५९ | १० | २१ | ३२ | ४४ | ५५ | ६ | १७ | २८ |
| ३० | | ३४ | ४ | ३४ | ४ | ३४ | ४ | ३४ | ४ | १७ | २७ | ३७ | ४७ | ५७ | ७ | १७ | २७ | ३७ | ४७ | ५७ | ७ | १७ | २७ | ३७ | ४७ | ५७ | ७ | १७ | २० | ३७ | ४७ |
| ० | | २८ | २८ | २९ | २९ | २५ | २९ | २९ | २९ | ३० | ३० | ३० | ३० | ३० | ३१ | ३१ | ३१ | ३१ | ३१ | ३२ | ३२ | ३२ | ३२ | ३२ | ३२ | ३३ | ३३ | ३३ | ३३ | ३३ | ३४ |
| ११ | ५ | ३९ | ५१ | २ | १३ | २४ | ३५ | ४६ | ५८ | ९ | २० | ३१ | ४२ | ५३ | ५ | १६ | २७ | ३८ | ४९ | ० | १२ | २३ | ३४ | ४५ | ५६ | ७ | १९ | ३० | ३१ | ५२ | ३ |
| १० | | २७ | ७ | १७ | २७ | ३६ | ४७ | ५७ | ७ | १७ | २७ | ३७ | ४७ | ५७ | ७ | १७ | २७ | ३७ | ४७ | ५७ | ७ | १७ | २७ | २७ | ४७ | ५७ | ७ | १७ | २७ | ३७ | ४७ |
| ० | | ३४ | ३४ | ३४ | ३४ | ३४ | ३५ | ३५ | ३५ | ३५ | ३५ | ३६ | ३६ | ३६ | ३६ | ३६ | ३७ | ३७ | ३७ | ३७ | ३७ | ३८ | ३८ | ३८ | ३८ | ३८ | ३९ | ३९ | ३९ | ३९ | ३९ |
| ११ | ६ | १४ | २६ | ३७ | ४८ | ५९ | १० | २१ | ३३ | ४६ | ५६ | ७ | १९ | ३० | ४२ | ५३ | ५ | १६ | २८ | ३९ | ५१ | २ | १४ | २५ | ३७ | ४८ | ० | ११ | २३ | ३४ | ४६ |
| १८ | | २७ | ७ | १७ | २७ | ३७ | ४७ | ५७ | ७ | ३४ | ४ | ३४ | ४ | ३० | ४ | ३४ | ४ | ३४ | ४ | ३४ | ४ | ३४ | ४ | ३४ | ४ | ३४ | ४ | ३० | ४ | ३४ | ४ |

श्रीकाश्यां लग्नसारिणीयम् ।

| | | | | | | | | | | | | | | | | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ० | | ३१ | ४० | ४० | ४० | ४० | ४० | ४१ | ४१ | ४१ | ४१ | ४१ | ४२ | ४२ | ४२ | ४२ | ४२ | ४३ | ४३ | ४३ | ४३ | ४३ | ४३ | ४४ | ४४ | ४४ | ४४ | ४४ | ४५ | ४५ | ४५ |
| ११ | ७ | ५७ | ९ | २० | ३२ | ४३ | ५५ | ६ | १८ | २९ | ४० | ५२ | ३ | १५ | २६ | ३७ | ४९ | ० | १२ | २३ | ३४ | ४६ | ५७ | ९ | २० | ३१ | ४३ | ५४ | ६ | १७ | २८ |
| ३० | | ३४ | ४ | ३४ | ४ | ३४ | ४ | ३४ | ४ | २९ | ५३ | १७ | ४१ | ५ | २९ | ५३ | १७ | ४१ | ५ | २९ | ५३ | १७ | ४१ | ५ | २९ | ५३ | १७ | ४१ | ५ | २९ | ५३ |
| ० | | ४५ | ४५ | ४६ | ४६ | ४६ | ४६ | ४६ | ४७ | ४७ | ४७ | ४७ | ४७ | ४७ | ४८ | ४८ | ४८ | ४८ | ४८ | ४८ | ४९ | ४९ | ४९ | ४९ | ४९ | ४९ | ५० | ५० | ५० | ५० | ५० |
| ११ | ८ | ४० | ५१ | ३ | १४ | २५ | ३७ | ४८ | ० | १० | २० | ३० | ४० | ५० | १ | ११ | २१ | ३१ | ४१ | ५१ | १ | १२ | २२ | ३२ | ४२ | ५२ | २ | १२ | २२ | ३३ | ४३ |
| २४ | | १७ | ४१ | ५ | २९ | ५३ | १७ | ४१ | ५ | २६ | ३४ | ४२ | ५० | ५८ | ६ | १४ | २२ | ३० | ३८ | ४६ | ५४ | २ | १० | १८ | २६ | ३४ | ४२ | ५० | ५८ | ६ | १४ |
| ० | | ५० | ५१ | ५१ | ११ | ५१ | ५१ | ५१ | ५२ | ५२ | ५२ | ५२ | ५२ | ५२ | ५२ | ५३ | ५३ | ५३ | ५३ | ५३ | ५३ | ५३ | ५४ | ५४ | ५४ | ५४ | ५५ | ५४ | ५४ | ५५ | ५५ |
| १० | ९ | ५३ | ३ | १३ | २३ | ३३ | ४४ | ५४ | ४ | १३ | २१ | २९ | ३८ | ४६ | ५५ | ३ | १२ | २० | २८ | ३७ | ४५ | ५४ | २ | ११ | १९ | २७ | ३६ | ४४ | ५३ | १ | १० |
| ८ | | २२ | ३० | ३८ | ४६ | ५४ | २ | १० | १८ | १ | २७ | ५३ | १९ | ४५ | ११ | ३७ | ३ | २९ | ५५ | २१ | ४७ | १३ | ३९ | ५ | ३१ | ५७ | २३ | ४९ | १५ | ४१ | ७ |
| ० | | ५५ | ५५ | ५५ | ५५ | ५५ | ५६ | ५६ | ५६ | ५६ | ५६ | ५६ | ५६ | ५६ | ५७ | ५७ | ५७ | ५७ | ५७ | ५७ | ५७ | ५७ | ५८ | ५८ | ५८ | ५८ | ५८ | ५८ | ५८ | ५८ | ५८ |
| ८ | १० | १८ | २६ | ३५ | ४३ | ५२ | ० | ९ | १७ | २५ | ३२ | ३९ | ४७ | ५४ | १ | ९ | १६ | २४ | ३१ | ३८ | ४६ | ५३ | ० | ८ | १५ | २३ | ३० | ३७ | ४५ | ५२ | ५९ |
| २६ | | ३३ | ५९ | २५ | ५१ | १७ | ४३ | ९ | ३५ | ८ | ३० | ५२ | १४ | ३६ | ५८ | २० | ४२ | ४ | २६ | ४८ | १० | ३२ | ५४ | १६ | ३८ | ० | २२ | ४४ | ६ | २८ | ५० |
| ० | | ५९ | ५९ | ५२ | ५९ | ५९ | ५९ | ५९ | ५९ | ० | ० | ० | ० | ० | ० | ० | ० | १ | १ | १ | १ | १ | १ | १ | १ | २ | २ | २ | २ | २ | २ |
| ७ | ११ | ७ | १४ | २१ | २९ | ३६ | ४४ | ५१ | ५८ | ६ | १३ | २० | २८ | ३५ | ४२ | ५० | ५७ | ५ | १२ | १९ | २७ | ३४ | ४१ | ४९ | ५६ | ४ | ११ | १८ | २६ | ३३ | ४० |
| २२ | | १२ | ३४ | ५३ | १८ | ४० | २ | २४ | ४६ | ८ | ३० | ५२ | १४ | ३६ | ५८ | २० | ४२ | ४ | २६ | ४८ | १० | ३२ | ५४ | १६ | ३८ | ० | ५२ | ४४ | ६ | २८ | ५० |

यत्सूर्यराश्यंशसमानकोष्ठे घट्यादिकं स्वेष्टघटीयुतं तत् ॥ तत्तुल्यघट्यादि भवेद्धि यत्र तत्तिर्यगूर्ध्वांकमितंहिलग्नम् ॥ १ ॥ लग्नवीर्यं विनायत्रयत्कर्म्मक्रियतेबुधैः ॥ तत्फलं विलयंयांतिग्रीष्मे कुसरितो यथा ॥ २ ॥ नतिथिर्नचनक्षत्रं नयोगं नैन्दवं बलम् ॥ लग्नमेकंप्रशंसंतिगर्गनारदकश्यपाः ॥ ३ ॥ स्वामिना बलिना दृष्टः सत्वलैश्चशुभग्रहैः ॥ नदृष्टोनयुतःपापैः सलग्नः सबलःस्मृतः ॥ ४ ॥

अथ षष्ठे दिवसे षष्ठीपूजनम् । मुहूर्तगणपतौ–जन्मतः पंचमे घस्रे जीवन्त्याः पूजनं निशि । षष्ठेह्नि षष्ठिका पूज्या गीतैर्जागरणादिभिः ॥ १ ॥ रात्रौ जागरणं कुर्याज्जन्मदानां तथा बलिः । पुरुषाः शस्त्रहस्ताश्च नृत्यगीतैश्च योषितः ॥ २ ॥ गौरीपुत्रो यथा स्कन्दः शिशुत्वे रक्षितः पुरा । तथा ममाप्ययं बालः षष्ठिके रक्षिते नमः ॥ ३ ॥ लग्ननिश्चयार्थं प्राणपदम् । स्वस्ति संवत् १९५४ शके १८१९ ज्येष्ठशुक्लपौर्णिमायां चन्द्रवासरे ५३।२४ ज्येष्ठानक्षत्रे ४६।५९ साध्ययोगे १४।५० बालवकरणे सूर्योदयादिष्टं ५४।४१ मेषलग्नोदये रुद्रप्रसादस्य जन्मासीत् । तत्र सूर्यः २।१।३४।५५ लग्नं १।२८ अथात्र प्राणपदे चन्द्र चन्द्रेशानामन्यतमस्य स्थानात् । जन्मांगस्य शुद्धिज्ञानमाह । लग्नं क्रमात् सार्द्धघटीद्वयं स्यान्मेषादिनेशस्थितकोणभानाम् । राशेश्वरात्प्राणपदं क्रमेण घटीचतुर्थांशमुशंति तज्ज्ञाः ॥ ४ ॥ घटी चतुर्गुणा कार्या तिथ्याप्तैश्च पलैर्युता । दिवाकरेणापहृतं शेषं प्राणपदं स्मृतम् ॥ ५ ॥ शेषां पलां तद्द्विगुणी विधाध राश्यंशसूर्यर्क्षनियोजिताय । तत्रापि तद्राशिचराक्रमेण लग्नांशप्राणांशपदैक्यता स्यात् ॥ ६ ॥ अन्यच्च–स्वेष्टकालं पलीकृत्य तिथ्याप्तं भादिकं च यत् । चरागद्विभगे भानौ योज्यं स्वे नवमे सुते ॥ ७ ॥ स्फुटं प्राणपदं तस्मात्पूर्ववच्छोधयेत्तनुः ॥ ८ ॥ उदाहरणम् । इष्टघटी ५४ चतुर्गुणितं २१६ पलेषु ४१ पंचदशभक्ते लब्धं २ युतं २१८।११ द्वादशभक्ते शेषं २।११ अथवा स्वेष्टकालं ५४।४१ पलीकृत्य ३२।८१ तिथ्याप्ते लब्धं २१८।११ द्वादशतष्टे शेषं २।११ अत्र द्विस्वभावस्थिते भानौ तेन सूर्यात्सुते चरराशौ तुला तद्युते जातं ९।११ तस्माद्धनराशौ प्राणपदं स्यादतः जन्मकाले मेषलग्नं सिद्धम् । प्राण-




त्रिकोणे प्रवदंति लग्नं तदेव माघान्वितराशिकोणे । शशांकसंयुक्तभकोणराशौ तदंशकात्तन्मदकोणभे वा ॥ ९ ॥ लग्ने बले भां दिवसाद्विलग्नं चन्द्रे बले चन्द्रवशाद्विलग्नम् । प्रश्नेपि तज्जन्मसमानकाले लग्नस्य निश्चायकमत्र तज्ज्ञाः ॥ १० ॥ द्वयोर्हीनबलेप्येवं गुलिकात्परिचिन्तयेत् । विना प्राणपदाच्छुद्धो गुलिकाद्वा निशाकरात् ॥ ११ ॥ तदशुद्धं विजानीयात्स्थावराणां तदैव हि ॥ १२ ॥ अन्यच्च–चन्द्रलग्नाधिपो यत्र तत्त्रिकोणमथापि वा । तत्सप्तमे त्रिकोणे वा संशये लग्ननिर्णयः ॥ १३ ॥

**अथ गुलिकसाधनम्** । चन्द्र २६ रुद्र २२ जय १८ वैद्य १४ नया १० तो-६ नाखु २ नाडिनिहताद्दिनमानात् । नाग ३० लब्धिमितमांदिघटी स्याल्लग्नवत्स्फुटगुलिक हायने ॥ १४ ॥ स्फुटगुलिकनाडिकाभिस्तत्कालार्केण सायनेनापि । लग्नवदानेतव्यो राश्यंशकादिरूपको गुलिकः ॥ १५ ॥ चन्द्ररुद्रेत्यादि एतन्नाडिकादिनमानात्ताडिता त्रिंशल्लब्धेन मांदिघटिका आयाति । तद्घटिस्थलग्नानीतं तद्गुलिकः स्यात् । उदाहरणम् । संवत् १९५४ ज्येष्ठ शुक्ल १५ सोमे इष्टं ५४।४१ तत्कालार्कः २।१।३४।५५। अयनांशाः सोमवार ध्रुवा २२ दिनमानं ३४।३ अनेन गुणिते जातं ७४९।६ त्रिंशद्भक्ते लब्धं २४।५८।१२ जातं मान्यघटी अत्र स्पष्टः सूर्यः । अनेनानीतमान्यघट्यां लग्नम् । स एव गुलिकः । **अथोपसूतिकादिज्ञानम्** । मीनाजलग्ने खलु पक्षसंख्या वृषे घटे वेदकुलीरलग्ने । चापैणगे बाणमिताश्च शेषे शिवाक्षसंख्या उपसूतिकायाः ॥ १६ ॥ शशिलग्नांतरसंस्था ग्रहतुल्याः सूतिकाश्च वक्तव्याः । उदगर्द्धेभ्यंतरगा बाह्या चक्रस्य दृश्यर्द्धे ॥ १७ ॥ पापग्रहस्तु विधवा सधवा सौम्यखेचरा । बुधचन्द्रौ कुमारी स्याद्गुरुसूर्यौ प्रसूतिका ॥ १८ ॥ अन्यग्रहेषु वृद्धा स्याल्लग्नं सम्यग्विचारयेत् । वर्गोत्तमे स्वराशौ स्वद्रेष्काणनवांशके द्विगुणम् ॥१९॥ मीने मेषे तथाप्येकां चत्वारि वृषकुंभयोः । अन्यलग्ने भवेत्त्रीणि बाणं च धनुककर्योः ॥ २० ॥ मेषे चापमृगेंद्रयोर्यदि शिशुः प्राचीशिरो जायते गोकन्यामकरेषु दक्षिणशिरा जातो भवेन्निश्चितम् । मीने वृश्चिककर्किणोर्यदि तदा कौवेरमूर्द्धा भवेत्कुंभाख्ये घटयुग्मके यदि ततः पश्चान्मुखः शोभनः ॥ २१ ॥ मेषत्रिपंचानन चापलग्ने विस्मृत्य सर्वं वहु रोदति स्म । अल्पं घटे स्त्रीवणिजे परेषु रुदंति नो ज्ञानवलस्य सत्वात् ॥ २२ ॥ मेषे वृषे यदा भानुः प्राच्यां दीपः प्रवर्तते । मिथुने च यदा सूर्यः अग्निकोण प्रदीपकः ॥ २३ ॥ कर्के सिंहे यदा सूर्यो दक्षिणस्यां प्रदीपकः । कन्यायां च यदा सूर्यो दीपो नैर्ऋतकोणगः ॥ २४ ॥ तुले च वृश्चिके सूर्ये पश्चिमायां तु दीपकः । धने वायव्यकोणे च मृगे कुंभे तथोत्तरे ॥ २५ ॥ मीने चैव यदा सूर्यः पृथिव्यां दीपमेव च ॥ २६ ॥ पूर्णं तैलं दीपके पूर्वदृक्के मध्येऽर्धस्यात्तत्रिभागं तृतीये । वर्तिर्लग्नात्तद्वदेवं प्रकल्प्यं वाच्यं सम्यग्बुद्धिमद्भिः स्वबुद्ध्या ॥ २७ ॥ खट्वांगे स्याद्भास्करो यत्र तत्र वाच्यो दीपश्चालितं चंचलर्क्षे । वारं वारं द्व्यंगभे चैकवारं तत्रस्थो वै स्यात्स्थिरर्क्षे प्रदीपः ॥ २८ ॥ चरलग्नेषु हस्ते च स्थिरे स्थानस्थिते स्मृता । द्विस्वभावे प्रचालिता नात्र कार्या विचारणा ॥ २९ ॥ अरुणधवलपाचीपाटलो तोयदाभं रजनिधवलयुक्तो चित्रवर्णोथ कृष्णः । कनकरजनिवर्णः कर्बुरो बभ्रुः स्वक्षः क्रियत इह सुवाच्यं चांबरं सूतिकायाः ॥ ३० ॥ मातृवस्त्रं वदेत्तत्र वा विलग्ननवांशपात् । तुर्येशवशतो वाच्यं सूतेः प्राङ्मातृभोजनम् ॥ ३१ ॥ कठिनं मधुरं रूक्षं लेह्यपेयादिकं मृदुः । शोषणाम्लगुडं दुग्धं विचित्रं स्वल्प-

भोजनम् ॥ ३२ ॥ वटकाद्यं बहुरसं पेयादिमधुरं हिमम् । क्रोधादिना कदन्नं स्यात् सूर्यादेः श्लोकपादतः ॥ ३३ ॥ यावत्संख्या ग्रहाणां च चतुर्थदशमे गृहे । दृष्टिः स्यात्तावता ज्ञेया चूडिकावर्णमादिशेत् ॥ ३४ ॥ शुभग्रहैः खबंधुगैः सुखेन संयुतः समः । सुतांकसप्तमस्थितैरसद्ग्रहैस्तु कष्टतः ॥ ३५ ॥ यथा राहुस्तथा शय्या भौमे खट्वांगभंगता । रविस्थाने भवेद्दीपः शनिस्थाने तु नालकम् ॥ ३६ ॥ अथ जातकप्रसंगेन गंडांतादिविचारः । गण्डांतस्त्रिविधस्त्याज्यो नक्षत्रतिथिलग्नतः । नवपंच चतुर्थ्यंते द्व्येकार्द्धं घटिका मताः ॥ ३७ ॥ अश्विनीमघमूलादौ त्रिवेदनवनाडिका । रेवतीसर्पशक्रान्ते मासरुद्ररसस्तथा ॥ ३८ ॥ वसिष्ठः-भुजंगपित्र्योरथचेंद्रमूलयोः पौष्णाश्वयोश्चापि यदंतरालम् । नाडीचतुष्कं खलु गण्डसंज्ञं तत्रोद्भवं पुत्रमपि त्यजेच्च ॥ ३९ ॥ अन्यः-गण्डांत्याहिपुरंदरे द्विघटिकाः प्रान्त्ये मघामूलयोर्दस्राद्येपि च कर्कटे अलिभवे मीनेर्द्धदण्डोंत्यके । पंचम्यां दशमीदिने शशितिथीष्वंते च दण्डात्मको यात्रायां जनने तथा परिणये त्याज्यः सदा सूरिभिः ॥ ४० ॥ गर्गः-नाक्षत्रं मातरं हंति तिथिजं पितरं तथा । लग्नोत्थं जातकं हंति तस्माद्गण्डांतमुत्सृजेत् ॥ ४१ ॥ बादरायणः-दिवाजं पितरं हंति रात्रिजं मातरं तथा । संध्ययोर्जातमात्मानं गण्डजं नो निरामयम् ॥ ४२ ॥ संध्यारात्रिदिवा भागे धिष्ण्यगण्डोद्भवः शिशुः । आत्मानं मातरं तातं ध्रुवं हंति यथाक्रमम् ॥ ४३ ॥ मातरं तातमात्मानं तिथिगण्डांतजस्तथा । लग्नगण्डांतजस्तद्वत्तातमात्मानमातरम् ॥ ४४ ॥ लल्लः-पितृहा तु दिवागण्डो रात्रौ गण्डस्तु मातृहा । आत्महा संध्ययोर्जातौ नास्ति गण्डो निरामयम् ॥ ४५ ॥ गण्डान्तेषु च ये जाता नरनारीतुरंगमाः । स्वगृहे नैव तिष्ठंति चेत्तिष्ठंति शुभावहाः ॥ ४६ ॥ सर्वेषां गण्डजातानां परित्यागो विधीयते । अथवा दर्शनं तस्य मासषट्कं न कारयेत् ॥ ४७ ॥ राजमार्तंडे-गण्डप्रसूतं पुरुषं शुभमाहुरपश्यताम् । अन्ये तु होमपूर्वेण दानेन दर्शनं शुभम् ॥ ४८ ॥ फलप्रदीपे-विवाहादौ भवेन्मृत्युर्जातके कुलनाशनम् । यात्रायां सर्वनाशश्च कार्यनाशोन्यकर्मणि ॥ ४९ ॥ व्यवहारचण्डेश्वरः-जातो न जीवति नरो मातुरपत्यो भवेत्स्वकुलहंता । यदि जीवति गण्डांतं बहुगजतुरगो भवेद्भूपः ॥ ५० ॥ अथ गण्डांतशान्तिः । तत्र राजमार्तंडे-ब्रह्मपुराणोक्तं । यथा सर्पविषश्चैव मंत्रश्रवणाद्विलीयते । तथैव गण्डदोषोपि विधानेन विलीयते ॥ ५१ ॥ कांस्यपात्रं प्रकुर्वीत पलैः षोडशभिर्बुधः । अष्टाभिर्वा चतुर्भिर्वा द्वाभ्यां वा शोभनं समम् ॥ ५२ ॥ तन्मध्ये स्थापयेद्देवं नवनीतप्रपूरिते । राजतं चन्द्रमभ्यर्च्य सितपुष्पसहस्रकैः ॥ ५३ ॥ दैवज्ञः सोपवासश्च शुक्लांबरधरः शुचिः । सोमोहमिति संचिंत्य कुर्याद्देवमतंद्रितः ॥ ५४ ॥ जपेत्साहस्रिकं मंत्रं श्रद्दधानः समाहितः । दद्याद्वै दक्षिणामिष्टां गण्डदोषोपशान्तये ॥ ५५ ॥ शुद्धं चामीकरं दद्यात्ताम्रपात्रं तिलान्वितम् । गण्डदोषोपशात्यर्थं

ज्योतिर्वेदविदे शुचिः ॥ ५६ ॥ ॐअमृतात्मने नमः । अयं मंत्रः—कुंकुमं चन्दनं कुष्ठं गोरोचनमथापि वा । घृतपूर्णेषु पात्रेषु चतुर्षु प्रक्षिपेत्क्रमात् ॥ ५७ ॥ सहस्राक्षेण मंत्रेण बालकं स्थापयेत्ततः । पितृयुक्तं दिवा जातं मातृयुक्तं च रात्रिजम् ॥ ५८ ॥ स्थापयेत्पितृमातृभ्यां संध्ययोरुभयोरपि । कांस्यपात्रं घृतैः पूर्णं गण्डदोषोपशांतये ॥ ५९ ॥ सक्षीरमौक्तिकं शंखं श्वेतवस्त्रयुगं शुभम् । यजुर्वेदविदे दद्याद्गंडदोषापनुत्तये ॥ ६० ॥ दद्याद्धेनुं हिरण्यं च ग्रहांश्चापि प्रपूजयेत् । आयुर्वेदकरं जप्त्वा कुर्याद्ब्राह्मणतर्पणम् ॥ ६१ ॥ सहस्राक्षेण शतशारदेनेत्यादि ऋचानां । शौनकीयसूत्रे—पुत्रो यदि पितुर्गण्डे दिवा चैव प्रजायते । कन्यकाजननं रात्रौ मातृगण्डे तथैव च ॥ ६२ ॥ संध्ययोर्द्धनगण्डे च प्रसूतिर्यदि जायते । विनाशो जायते शीघ्रं मध्यमं तद्विपर्यये ॥ ६३ ॥ यवनः—यत्र गण्डे क्रूरयुते महादोषकरं भवेत् । शुभग्रहसमायोगे ईषच्छुभकरं भवेत् ॥ ६४ ॥ दिनक्षये व्यतीपाते व्याघाते विष्टिवैधृतौ । शूले गण्डातिगण्डे च परिघे यमघंटके ॥ ६५ ॥ ब्रह्मदण्डे मृत्युयोगे प्राप्ते गण्डदिने शिशुः । जातो हंति कुलं सर्वं तस्मात्कुर्वीत शांतिकम् ॥ ६६ ॥ धनगण्डे दरिद्रोपि शांतिं कुर्यात्स्वशक्तितः । अन्यथा नाशमाप्नोति चाभुक्तर्क्षे विशेषतः ॥ ६७ ॥ अथाभुक्तमूलविचारः । तत्र च्यवनः—अभुक्तमूलसंभवं परित्यजेच्च बालकम् । समाष्टकं पिताथवा न तन्मुखं विलोकयेत् ॥ ६८ ॥ वसिष्ठः—ज्येष्ठांत्ये घटिका चैका मूलादौ घटिकाद्वयम् । अभुक्तमूलमित्याहुस्तत्र जातं त्यजेच्छिशुम् ॥ ६९ ॥ बृहस्पतिः—ज्येष्ठांत्ये घटिकार्द्धं च मूलादौ घटिका तथा । तयोरंतर्गता नाडी अभुक्तमूलमुच्यते ॥ ७० ॥ लल्लः—ऐंद्रान्त्यघटिका चैका मूलादौ घटिका तथा । तयोरंतरनाडी द्वे अभुक्तमूलमुच्यते ॥ ७१ ॥ बृहन्नारदः—अभुक्तमूलगण्डान्तं नाडिकानां चतुष्टयम् । तच्चैंद्रान्त्यघटी द्वन्द्वं मूलाद्यं द्वन्द्वमेव च ॥ ७२ ॥ अथ मूलजातस्य फलम् । श्रीपतिः—तदाद्यपादके पिता विपद्यते जनन्यथा । धनक्षयस्तृतीयके चतुर्थकः शुभावहः ॥ ७३ ॥ वसिष्ठः—जातापत्यं पितरमथवात्मानमाद्ये च पादे युग्मे धात्रीं हरति च धनं भ्रातरं वा तृतीये । पादे तुर्ये शुभमतितरां राज्यसाम्राज्यलक्ष्मीं मूले जातं वितरति तथा काद्रवेये प्रतीपम् ॥ ७४ ॥ कात्यायनसूत्रे—मूलस्य प्रथमेंशे जातपितुरनिष्टो द्वितीये मातुः तृतीये धनस्य चतुर्थे कुलशोकावह आत्मनः पुण्यभागी स्यादिति ॥ ७५ ॥ अन्यः—दिवा सायं निशि प्रातः तातस्य मातुलस्य च । पशूनां मित्रवर्गस्य क्रमान्मूलमनिष्टदम् ॥ ७६ ॥ गर्गः—मूलाद्यांशे पितुर्नाशः मातुश्च द्वितीयांशके । तृतीये धनधान्यस्य नाशस्तुर्ये धनागमः॥ ७७ ॥ गृहं क्षेत्रं धनं धान्यं गृहोपकरणादिकम् । पशुवस्त्रादिकं चेति धनमित्युच्यते बुधैः ॥ ७८ ॥ चित्राद्यर्द्धे पुष्यमध्ये द्विपादे पूर्वाषाढा धिष्णपादे तृतीये । जातः पुत्रश्चोत्तराद्ये विधत्ते मातापित्रोर्भ्रातरं बालनाशम् ॥ ७९ ॥ श्रीपतिः—प्रतीपमन्त्यपादतः फलं तदेव

सर्पभे । तदुत्थदोषशान्तये विधेयमत्र शांतिकम् ॥ ८० ॥ अथ मूलवृक्षविचारः जयार्णवे–मूलं स्तंभं तथा शाखा पत्रपुष्पं फलं शिखा । तत्रागा ७ ष्ट ८ दशे १० श ११ के १२ पंचा ५ ब्द्ध४ ग्नि ३ घटीफलम् ॥ ८१ ॥ केचित्तु–वेदाश्च ४ मुनयश्चैव ७ दिशश्च १० वसव ८ स्तथा । नंदा ९ बाणा ५ रसा ६ रुद्रा ११ मूलभेदं प्रकीर्तितम् ॥ ८२ ॥ मूले स्वामिविनाशाय स्तंभे हानिस्त्वचे सहजनाशः । जननीनाशः स्कंधे दले कलावान् नृपप्रियः पुष्पे ॥ ८३ ॥ राज्यावाप्तिः फले चैव शिखायां स्वल्पजीवनम् । अष्टांगमेतन्मूलस्य विन्यसेत्तत्र नाडिकाः ॥ ८४ ॥ अन्यस्तु–पितुर्मृतिर्वेदघटीषु मूले धनक्षतिस्तत्परतस्तु पंचके । बंधोर्विनाशः परतोथ संख्ये मातुर्मृतिश्चेद्दश तत्परस्था ॥ ८५ ॥ आत्मक्षयं तत्परतो नवाख्ये ततोपि षट्के नृपमंत्रिता स्यात् । राज्यं ततः पंच समुद्रसंख्ये स्वल्पायुरन्यस्य च सेवकः स्यात् ॥ ८६ ॥ जयार्णवे–वसु ८ तर्का ६ क ९ रुद्रा ११ श्व ७ सप्त ७ पंचां ५ ग ६ संख्यकाः । यस्मिन्भागे भवेज्जन्म फलं तत्र विनिर्दिशेत् ॥ ८७ ॥ मूले मूलविनाशः स्यात्स्तंभे हानिर्धनक्षयम् । त्वचायां बन्धुनाशश्च शाखायां मातृपीडनम् ॥ ८८ ॥ पत्रे कुटुंबहानिः स्यात्पुष्पे नृपतिसंमतः । फले च कुरुते राज्यं शिखायां स्वल्पजीवनम् ॥ ८९ ॥ अथ मूलपुरुषविचारः । भूपालवल्लभे–मूलस्य घटिकान्यासो मूर्ध्नि पंच नृपो भवेत् । मुखे सप्त मृतिः पित्रोः स्कंधे वेदो महाबलः ॥ ९० ॥ बाह्वोरष्टौ बली पाण्योस्तिस्रो हत्यान्वितो भवेत् । हृदि खेटा भूपमंत्री नाभौ द्वे ब्रह्मविद्भवेत् ॥ ९१ ॥ गुह्ये दशेतिकामी स्याज्जानुनोष्षण्महामतिः । पादयोः षण्मृतिस्तस्येत्युक्तवान्कमलासनः ॥ ९२ ॥ सहदेवः–मूर्द्धा वक्त्रं तथा बाहू हृन्नाभी च कटिद्वयम् । गुह्यं पादौ दशस्थानं कट्यां षट्क्रमात्फलम् ॥ ९३ ॥ मूर्ध्नि घातो मुखे क्षेमं भ्रातृमातुलघौ करौ । हृदये शुभसौख्यं च नाभ्यां स्वामिविघातकः ॥ ९४ ॥ करद्वये मातृहन्ता गुह्ये तस्कर एव च । पादयो धनहानिः स्यान्मूलचक्रफलं विदुः ॥ ९५ ॥ अन्यः–मस्तके घटिका पंच वदने पच योजयेत् । स्कंधे चत्वारि चत्वारि भुजयोरष्टकं तथा ॥ ९६ ॥ एकैकं हस्तयोर्द्वयो हृदये चाष्टमं न्यसेत् । द्वौ च नाभौ प्रदातव्यं गुह्ये दश तथैव च ॥ ९७ ॥ जानुनो रससंख्या च पादयोश्च षडेव हि । शिरःस्थे बालको जातो स्वकुलं घातयेद्ध्रुवम् ॥ ९८ ॥ अथाश्लेषापुरुषविचारः । मूर्ध्नि पंचसु राज्याप्तिर्मुखे सप्तपितृक्षयः । नेत्रे द्वे जननीनाशो ग्रीवायां त्रिभिर्लंपटः ॥ ९९ ॥ स्कंधे वेदा गुरोर्भक्तो हस्तेऽष्टौ च बली भवेत् । हृद्येकादशभिश्चात्मघाती संजायते नरः ॥ १०० ॥ स्त्रीवान्नाभौ भ्रमी षड्भिः गुदे नव तपोधनः । पादे पंचधनं हंति सार्पोदेतत्फलं क्रमात् ॥१०१॥ रुद्रयामले–फलं पुष्पं दलं शाखा त्वग्लतास्कंध एव च । फलं क्रमादृशा १० ज्ञां ५ क ९ स्वर ७ विश्वा १३ के १२ सागराः ४ ॥ २ ॥ नाडिकास्त–

द्ध्वं बालं फलं कुर्याद्यथाक्रमम् । श्रियं राजभयं हानिं मातृपित्रात्मसंक्षयम् ॥ ३ ॥ भास्करव्यवहारे–सार्पांशे प्रथमे राज्यं द्वितीये च धनक्षयः । तृतीये जननीनाशश्चतुर्थे मरणं पितुः ॥ ४ ॥ निबन्धचूडामणौ–मुखे सार्पस्याद्यपादं द्वितीयं गलकं स्मृतम् । तृतीयं नाभिसंज्ञं च चतुर्थं पुच्छमीरितम् ॥ ५ ॥ मुखे राज्यस्य संप्राप्तिर्गले सौख्यमुदाहृतम् । नाभौ बन्धुविनाशः स्यात्पुच्छे मृत्युर्न संशयः ॥ ६ ॥ अथ त्रिंशन्नाडचात्मकफलम् । कूर्मयामले–त्रिंशन्नाडचात्मकं मूलफलम् उक्तं । च । राक्षसो यातुधान्यश्च सोमशुक्रौ फणीश्वरः । पितृमातृयमः कालो वैश्वदेवो महेश्वरः ॥७॥ साध्यदेवकुवेरश्च शुक्रो मेघो दिवाकरः । गन्धर्वो यमदेवश्च ब्रह्माविष्णुक्षयस्तथा ॥ ८ ॥ ईश्वरो विष्णुरिन्द्रश्च पवनो मुनयस्तथा । षण्मुखो भृंगरीटी च गौरी लक्ष्मी सरस्वती ॥ ९ ॥ प्रजापतिश्च मूलस्य त्रिंशन्मुहूर्तनायकाः । विपरीता पुनर्ज्ञेया अश्लेषामूलतः पुनः ॥ ११० ॥ आद्यो द्वितीयः षष्ठश्चाष्टमो नवम एव च । अष्टादशस्त्वेकविंशश्चाष्टाविंशन्मुहूर्तकाः ॥ १११ ॥ दुःखदा मूलनक्षत्रे कथिता पूर्वसूरिभिः ।कूर्मयामले–पाताले ज्येष्ठवैमार्गे स्वर्गे भाषाश्विमाघके ॥ १२॥ पौषश्रवोर्जेचैत्रेषु स्थितिर्मूलस्य भूतले ॥ १३ ॥ मणिमालायाम्–फाल्गुने ज्येष्ठवैशाखे मार्गे मूले रसातले । आषाढे चाश्विने माघे स्वर्गे भाद्रपदे स्थितिः ॥ १४ ॥ श्रावणे कार्तिके चैत्रे पौषे च मृत्युमण्डले । शुभं स्यात्स्वर्गपाताले मृत्युलोके च मृत्युदः ॥ १५ ॥ रवियुक्ताश्विनी सौम्यादित्यहस्तादिकत्रयम् । मैत्रं च रेवतीज्येष्ठा तदा मूलं न दोषकृत् ॥ १६ ॥ तृतीया दशमी षष्ठी शनिभौमसमान्विता ।शुक्ला चतुर्दशी मूले जातं संहरते कुलम्॥१७॥ अथ मूलजातेऽर्भकदर्शनम् । रुद्रयामले–शाक्रे पक्षं च गण्डांतं मूल्योर्वत्सराष्टकम् । मासानां नवकं सार्पे त्यजेत्संदर्शनं शिशोः ॥ १८ ॥ भुक्तमूलर्क्षजं बालं षण्मासं नावलोकयेत् । ततः संदर्शनं कुर्याद्विधिं वांच्छंति पूर्वकम् ॥ १९ ॥ भुक्तमूलभवं बालं दिनानि सप्तविंशतिः । पित्रा नालोकनं कार्यं ततः शांतिं समाचरेत् ॥ १२० ॥ गण्डांतमूलसार्पेंद्रपातवैधृतिदर्शजे । पैत्रोपरागजे शान्तिं कुर्यात्तत्र दिने बुधः ॥ १२१ ॥ मूलस्य प्रथम पादे न पश्येच्च समाष्टकम् । द्वितीयेषु चतुर्थं स्यात्तदर्द्धं तु तृतीयके ॥ २२ ॥ षण्मासस्तु चतुर्थे तु तदंते सुखभाजनः ॥२३॥ द्विमासश्चोत्तरादोषः पुष्ये चैव त्रिमासिकः । पूर्वाषाढाष्टमे मासि चित्रा षण्मासकं फलम् ॥ २४ ॥ नवमासं तथाश्लेषा मूले चाष्टकवर्षकम् । ज्येष्ठापंचदशे मासि पुत्रदर्शनवर्जिता ॥ २५ ॥ तिथिगण्डे त्वनड्वाहं नक्षत्रे धेनुरुच्यते । कांचनं लग्नगण्डे तु गण्डदोषो विनश्यति ॥ २६ ॥ उत्तरे तिलपात्रं स्यात्पुष्ये गोदानमुच्यते । अजाप्रदानं त्वाष्ट्रे स्यात्पूर्वाषाढे च कांचनम् ॥ २७ ॥ उत्तरातिष्यचित्रासु पूर्वाषाढोद्भवस्य च । कुर्याच्छांतिं प्रयत्नेन नक्षत्रकरजां बुधः ॥ २८ ॥ अथ ज्येष्ठाजननाविचारः । ज्येष्ठं ज्येष्ठाद्यजो हंति द्वितीयेप्यथ सोदरम् । तृतीये मातरं हंति

स्वयंजातश्चतुर्थके ॥ २९ ॥ अन्यः-ज्येष्ठजा श्रेष्ठजां हंति द्वितीये धनहानिदा । तृतीये मातरं हंति पितरं हन्ति तुर्यके ॥ १३० ॥ अन्यस्तु-ज्येष्ठाद्यपादजो वृद्धं वन्धुवर्गं द्वितीयजः । धनं तृतीयजो हन्ति तथात्मानं चतुर्थजः ॥ ३१ ॥ अन्यदपि-ज्येष्ठादौ जननी माता द्वितीये जननी पिता । तृतीये जननी भ्राता स्वयं माता चतुर्थके ॥ ३२ ॥ आत्मानं पंचमे हन्ति षष्ठे गोत्रक्षयो भवेत् । सप्तमे चोभयकुलं ज्येष्ठजातस्तु अष्टमे ॥ ३३ ॥ नवमे श्वशुरं हन्ति सर्वं हन्ति दशांशके ॥ ३४ ॥ गर्गः-मूलजा श्वशुरं हन्ति सार्पजा च तदंगना । ज्येष्ठजा तु पतिं ज्येष्ठं देवरं तु द्विदैवजा ॥ ३५ ॥ नारदः-ज्येष्ठांत्यपादजो ज्येष्ठं हन्ति वालो न बालिका । न बालिका तु मूलर्क्षे मातरं पितरं तथा ॥ ३६ ॥ ज्येष्ठोत्पन्ना नरा नार्यो घ्नंति चन्द्रबलोज्झिते । कुलं वृद्धं पितुर्मातृपक्षजं च दिवानिशि ॥ ३७ ॥ ज्येष्ठांत्यपादजातस्तु पितुः स्वस्य विनाशनम् । जायते नात्र संदेहो दशाहाभ्यन्तरे यतः ॥ ३८ ॥ गर्गः-ज्येष्ठर्क्षे कन्यका जाता हंति शीघ्रं धवाग्रजम् । तस्माच्छान्तिं प्रवक्ष्यामि गण्डदोषप्रशांतये ॥ ३९ ॥ अथ मूलसार्पजातस्यापवादः । वादरायणः-सार्पनैर्ऋतिगण्डांतविषकन्यादियोगजाः । न स्युरुक्तफला लग्ने यदि तद्बलदाः खगाः ॥ १४० ॥ सारावल्याम्-गण्डान्तमूलजाता विषकन्याख्या भवति नोक्तफलाः । यदि जन्मलग्नखेटास्तद्दोषस्यापहन्तारः ॥ ४१ ॥ च्यवनः-मूलसार्पादिजं दौष्ट्यं स्यादपश्यति लग्नपे । सक्रूरे विवले खेटे शुभदृष्टिविवर्जिते ॥ ४२ ॥ ब्रह्मर्षिसंहितायाम्-पितरं हन्ति मूलाद्यपादेऽन्यत्र च मातरम् । पितृमातृग्रहौ नस्तौ यद्योजसमराशिगौ ॥ ४३ ॥ बृहज्जातके-दिवार्कशुक्रौ पितृमातृसंज्ञितौ शनैश्चरेन्दू निशि तद्विपर्ययात् । पितृव्यमातृष्वसृसंज्ञितौ तावथोजयुग्मर्क्षगतौ तयोः शुभौ ॥ ४४ ॥ अथ मूलशान्तिः । अदर्शनपक्षे विशेषः । सद्वारे सत्तिथौ भेषु गुरुपुष्यादिके शुभे । सुलग्नेऽजबलं लब्ध्वा मूलादुत्थभयच्छिदे ॥ ४५ ॥ विधेयं शान्तिकं यच्च यथावित्तानुसारतः । काले दर्शनयोग्ये वा मासांते द्वादशेऽह्नि वा ॥ ४६ ॥ उत्पलाचार्यवृत्तौ-मूलमुत्थ दुष्टफलं परित्यागाद्विलीयते । शिशोरदर्शनाद्वापि दानहोमजपैरपि ॥ ४७ ॥ श्रीपतिः-शतौषधीमूलमृदंबुरत्नैः सबीजगर्भैः कलशैः समंत्रैः । कुर्याज्जनित्री पितृबालकानां स्नानं शुभार्थी सह होमदानम् ॥ ४८ ॥ शतौषधिनामानि । पुराणे-बर्हिःशिखा १ हरिक्रान्ता २ सहदेवी ३ पुनर्नवा ४ । शरपुंखा ५ वराही च ६ काकजंघा ७ सुलक्ष्मणा ८ ॥ ४९ ॥ तुंबिका चैव ९ कर्कंधू १० कर्पूरी ११ कारवेल्लिका १२ कर्कोटी १३ चैव चक्रांका १४ श्वेतार्को १५ व्याघ्रपत्रकः १६ ॥ ५० ॥ रुदंती १७ चाश्वगंधा च १८ मुसली १९ गिरिकर्णिका २० । इन्द्रवारु २१ ण्यपामार्गः २२ शंखपुष्पी २३ कुमारिका २४ ॥ ५१ ॥ शल्लकी २५ वाथ गंधारी २६ निर्गुण्डी २७ देवदारिका २८ वटः २९ शमी ३० तथा प्लक्षः ३१ पालाशो ३२ श्वत्थ एव च

३३॥५२॥ चूत ३४ श्चोदुम्बरो ३५ जम्बू ३६ नंदीवृक्षो ३७ थ वेतसः ३८ पुन्नागो ३९ प्यर्जुनो ४० शोको ४१ बकुलो ४२ श्मन्तकस्तथा ४३ ॥ ५३ ॥ साल ४४ स्ताल ४५ स्तमालश्च ४६ पाटलः ४७ शतपत्रिका ४८ मधूकश्च ४९ शिरीषश्च ५० श्रीवृक्षो ५१ बृहतीद्वयम् ५२॥५३॥५४॥ बला ५४ चातिबला ५५ चैव पाठा ५६ नागवली ५७ तथा । जाती ५८ बकुलकश्चैव ५९ केतकी ६० कदली ६१ तथा॥५५॥ मातुलिंगी ६२ जयंती च ६३ यवानी ६४ पुंड्रिका ६५ तथा । द्रोणपुष्पी ६६ तथा कुंभी ६७ श्रीपर्णी ६८ दमनस्तथा ६९ ॥ ५६ ॥ चंपकः ७० पद्मकश्चैव ७१ तथा कांचनपुष्पिका ७२ सिद्धेश्वरी ७३ च बदरी ७४ राजवृक्षा ७५ धवस्तथा ७६ ॥५७॥कुन्दश्च ७७ मुचकुन्दश्च ७८ गोजिह्वा ७९ क्षीरकंदुका ८० । दाडिमी ८१ बीजपूरी च ८२ ब्राह्मी ८३ चामलकी ८४ तथा॥५८॥भृंगराज ८५ अधोपुष्पी८६ मत्स्याक्षी ८७ चाटरूषका ८८। तरंगिणी ८९ गुडुची ९० च निशाह्वा ९१ शतमूलिका ९२ ॥ ५९ ॥ बाकुची ९३ काकजंघा ९४ च बर्बरी ९५ तुलसी ९६ तथा । कुशः ९७ काश ९८ श्चेक्षुमूलं ९९ तथा सर्षपमूलकम् १००॥६०॥ अलाभे चोक्तवृक्षाणां सद्वृक्षाणां समाहरेत् । एवं मूलशतं ग्राह्यं ततः कुम्भे विनिक्षिपेत्॥ ६१ मूलानि शतमूलानि । तदलाभे—विष्णुक्रांतसहदेवी तुलसी तु शतावरी मूलनामानि गृह्णीयाच्छताभावे विशेषतः ॥ ६२ ॥ शतौषधीनामभावे तु गृह्णीयात्सर्वमौषधम् ॥ ६३ ॥ सर्वौषधिनामानि । कर्णिकारं वचं कुष्ठं शालेयं रजनीद्वयम् । सुंठीचंपकमुस्ता च सर्वौषधिगणाः स्मृताः ॥ ६४॥ अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमाद्ध्रदात् । राजद्वाराच्च गोष्ठाच्च मृद्ग्राह्या कुंभगे क्षिपेत् ॥ ६५ ॥ वज्रमौक्तिकवैडूर्यपुष्परागेंद्रनीलकम् । पंचरत्नमिदं प्रोक्तं मंत्रैः कुंभे विनिक्षिपेत् ॥ ६६ ॥ गोमूत्रं गोमयं क्षीरं दधि सर्पिः समाहरेत् । पंचगव्यमिदं कुंभे क्षिपेद्गजमदान्वितम् ॥६७॥ राजतं कांचनं ताम्रं विद्रुमं तीर्थवारि च । निक्षिपेद्धेममूलं च दशाष्टयवनिर्मितम् ॥ ६८ ॥ देवदारुं च शैलेयं पद्मं नीलोत्पलं तथा । वचां लोध्रं प्रियंगुं च जलदं श्वेतसर्षपान् ॥६९॥ धात्रीफलं च तगरुं निशा मांसीपुरस्तथा । उशीरं चंदनं कुष्ठं शतच्छिद्रे घटे क्षिपेत् ॥ ७० ॥ शतरन्ध्रे घटे नव्ये सर्वमेतत्प्रपूरयेत् । रन्ध्रतो निर्गतैस्तोयैः स्नापयेत्पितरौ शिशुम् ॥७१॥ वंशपात्रे परिन्यस्तशतच्छिद्रघटोदकैः । पितृमातृशिशूनां तन्मंत्रैः स्नानं तु कारयेत् ॥ ७२ ॥ मूलरूपं विधातव्यं श्यामं कुणपवाहनम् । खड्गखेटधरं चोग्रं द्विभुजं च वृकाननम् ॥ ७३ ॥ स्थापयेन्नवग्रहांश्चैव वस्त्रगंधादिभिर्यजेत् । चरुं च श्रपयेत्तत्र नैर्ऋतं दुष्टवारुणम् ॥ ७४ ॥ जुहुयादाज्यभागांतं पायसं नैर्ऋतिं ततः । पुष्पस्नानोक्तमंत्रैश्च स्नापयेद्दंपती शिशुम् ॥ ७५ ॥ प्रच्छादनोर्णवस्त्रादि दद्याद्धेनुं च कांचनम् । स्नानं कुंभांबुभिः कुर्याद्द्विजभोज्यं शांतिकृद्भवेत् ॥ ७६ ॥ अथाश्लेषाशान्तिः । आश्लेषायां तु जातानां शांतिं वक्ष्याम्यतःपरम् ।

जातस्य द्वादशाहेव शान्तिहोमं समाचरेत् ॥ ७७ ॥ **मानवसंहितायाम्** । असंभवे तु जन्मर्क्षे अन्यस्मिन्वा शुभे दिने । स्नानाभ्यंगादिभिस्तास्मिन्वरयेत द्विजोत्तमान् ॥ ७८ ॥ विभवे पंच कुंभांस्तु द्वयं वा तदलाभतः । देवतास्थापने चैकमेक रुद्राभिषेचने ॥ ७९ ॥ नागप्रतिकृतिं कुर्यात्सौवर्णीं पलमानतः । अथवा शक्तितः कुर्याद्वित्तशाठ्यं विवर्जयेत् ॥ ८० ॥ मूले यत्तु विधानं स्यात्तत्समं सर्पदैवते । कद्रुद्राय प्रचेतस इति मंत्रविशेषतः ॥ ८१ ॥ नैवेद्यं ह्यामिषं चास्ति पूजादानकृतिः समाः । अयुतं हवनं ह्यत्र तिलैः साज्यैः प्रधानकैः ॥ ८२ ॥ ब्रह्मवृक्षस्य समिधः शतमष्टोत्तरं शुभाः । शुभा इति द्वादशांगुलयुताः साग्रा अवक्राः अव्रणा असत्वं च । अन्यत्सर्वं मूलविधानवत् '। अत्रामिषे विशेषोक्तिः । रक्तचंदनपुष्पाद्यैः पुष्पैः कृष्णसितादिभिः । मेषशृंगादिधूपैश्च घृतदीपैस्तथैव च ॥ ८३ ॥ सुरापोलिकमांसाद्यैर्नैवेद्यं भोजनादिभिः । मत्स्यमांससुरादीनि ब्राह्मणानां विवर्जयेत् ॥ ८४ ॥ सुरास्थाने प्रदातव्यं क्षीरं सैंधवमिश्रितम् । पायसं लवणोपेतं मांसस्थाने प्रकल्पयेत् ॥ ८५ ॥ **अथ ज्येष्ठाशांतिः** । सुदिने शुभनक्षत्रे चन्द्रताराबलान्विते । सूतकान्तेथवा कुर्याज्ज्येष्ठाशांतिं विधानतः ॥ ८६ ॥ वज्रांकुशधरं देवमैरावतगजान्वितम् । कुर्याच्छचीपतिं रम्यं देवेंद्रं सुरनायकम् ॥ ८७ ॥ कर्षमात्रसुवर्णेन कर्षार्द्धेनाथ पादतः । तद्विधानं प्रकुर्वीत वित्तशाठ्यं न कारयेत् ॥ ८८ ॥ शांतितंदुलसंपूर्णकुंभस्योपरि पूजयेत् । इन्द्रायेंद्रो मरुत्वत इति मंत्रेण वाग्यतः ॥ ८९ ॥ गंधपुष्पैर्धूपदीपैर्नानाभक्ष्यसमन्वितः । पूजयेद्विधिना विप्रं लोकपालगुणान्वितम् ॥ ९० ॥ रक्तवस्त्रद्वयोपेतं पूजयेत्सुरनायकम् । तत्र संस्थापयेत्कुंभांश्चतुर्दिक्षु विशेषतः ॥ ९१ ॥ तन्मध्ये स्थापयेत्कुंभं शतच्छिद्रसमन्वितम् । पुण्योदकसमायुक्तान् वस्त्रयुग्मेन वेष्टितान् ॥ ९२ ॥ कुंभेषु विन्यसेद्धीमान्पंचगव्यं समंत्रकम् । पंचामृतं पञ्चरत्नं मृत्तिका पंच संख्यका ॥ ९३ ॥ पंचवृक्षकषायांश्च पंच पल्लवकांस्तथा । सुवर्णकुशदूर्वाश्च शतौषधिविनिक्षिपेत् ॥ ९४ ॥ पूजयेद्वारुणैर्मंत्रैः कुंभान् धीमान् प्रयत्नतः । त्वन्नो अग्ने जपेदादौ सत्वन्नोपि द्वितीयकम् ॥ ९५ ॥ समुद्रज्येष्ठा इति च इमं गंगे चतुर्थकम् । पूजयेद्वस्त्रपुष्पाद्यैश्चतुरः कलशानपि ॥ ९६ ॥ जपं कुर्युः प्रयत्नेन मंत्रैरोभिर्द्विजोत्तमैः । आनोभद्रा जपं चादौ भद्रा अग्नेर्द्वितीयकम् ॥ ९७ ॥ तृतीयं पुरुषं सूक्तं कद्रुद्राय चतुर्थकम् । आचार्यो मूलमंत्रेण जपं कुर्याद्विशेषतः ॥ ९८ ॥ इंद्रसूक्तं रुद्रजपं मृत्युंजयजपं ततः । इत्थं संपूज्य देवेंद्रं वरुणं कुंभसंस्थितम् ॥ ९० ॥ सुसंकल्पविधानेन होमकर्म ततश्चरेत् । समिद्भिर्ब्रह्मवृक्षस्य शतमष्टोत्तरं ततः ॥ १०० ॥ सर्पिषा चरुणा चैव मूलमंत्रेण वाग्यतः । हुनेज्जाप्यं च तेनैव यतइन्द्र भेवति च' ॥ १०१ ॥ तिलान्व्याहृतिभिर्हुत्वा शतमष्टोत्तरं पृथक् । भार्यां शिशुसमोपेतां यजमानं विशेषतः ॥ २ ॥ अभिषेकं प्रकुर्वीत सूक्तै-

वारुणसंज्ञकैः । समुद्रज्येष्ठादिभिर्मंत्रैरिमं मे वरुणस्तथा ॥ ३ ॥ द्यौःशान्त्यादिभिर्मंत्रैरभिषेकं समाचरेत् । अभिषेकनिवृत्तौ तु यजमानः समाहितः ॥ ४ ॥ शुक्लांबराणि धृत्वाथ कुर्यादाज्यावलोकनम् । रूपंरूपं तु मंत्रेण चित्रं तच्चक्षुरेव च ॥ ५ ॥ देवतापुरतः स्थित्वा धूपदीपनिवेदनम् । दद्याच्चाचमनं सम्यक्तांबूलार्घं तथैव च ॥ ६ ॥ नमस्ते सुरनाथाय नमस्तुभ्यं शचीपते । गृहाणार्घ्यं मया दत्तं गण्डदोषप्रशांतये ॥७॥ आचार्याय च गां दद्यात्सुशीलां च पयस्विनीम् । रक्तवर्णां वस्त्रयुतां सर्वालंकारसंयुताम् ॥ ८ ॥ वस्त्रयुग्मविधानं च यथाविभवसारतः । यक्षगंधर्वसिद्धैश्च पूजितोसि शचीपते ॥ ९ ॥ दानेनानेन देवेश गण्डदोषं विनाशय । अष्टोत्तरशतं संख्या कुर्याद्ब्राह्मणभोजनम् ॥ १० ॥ तेभ्योपि दक्षिणां दत्वा प्रणिपत्य क्षमापयेत् । इमं कृत्वा ज्येष्ठाशान्तिं यथाविध्युक्तमागतः ॥ ११ ॥ ज्येष्ठानक्षत्रसंभूतगण्डदोषप्रशांतये । अज्ञानाद्वा यथा ज्ञानाद्वैकल्याद्वा धनस्य च ॥ १२ ॥ यन्न्यूनमतिरिक्तं वा तत्सर्वं क्षन्तुमर्हसि ॥ १३ ॥ **अथैकनक्षत्रजननशान्तिः ।** समानभौ यदा देवि पितापुत्रौ च सोदरौ । भगिन्यौ वा स्त्रबंधू वा तदा पूर्वस्य नाशनम् ॥ १४ ॥ वृद्धगार्ग्यः—एकस्मिन्नेव नक्षत्रे पुत्र्युर्वा पितृपुत्रयोः । प्रसूतश्च तयोर्मृत्युर्भवेदेकस्य निश्चयः ॥ १५ ॥ विधानं तत्र कर्तव्यं जन्मनक्षत्रपूजनम् । नक्षत्रदेवता पूज्या त्वधिप्रत्यधिपूर्वकम् ॥ १६ ॥ यस्य ऋक्षस्य यद्द्रव्यं दक्षिणा विधिमंत्रिणम् । तच्च तस्य विधातव्यमृक्षदैवततुष्टये ॥ १७ ॥ गृह्योक्तेन विधानेने हवनं तत्र कारयेत् । भक्त्या हरिहरौ देवौ स्वर्णरूपमयौ शुभौ ॥ १८ ॥ **मूर्तिदानमंत्रः।** विविधस्यास्य विश्वस्य पितरौ विश्वतो मुखौ । प्रीयेतां मूर्तिदानेन देवौ हरिहरावुभौ ॥ १९ ॥ दानं होमं विधेः पश्चाद्दानादन्वभिषेचनम् । अभिषेचनपूर्वात्र विधिपूजा स्मृता शिवे ॥ १२० ॥ ततोभिगम्य गोविंदशूलिनोश्च निकेतनम् । तूर्याणां च निनादेन जयघोषेण पार्वति ॥ २१ ॥ पूजाविधिं समाप्यैवं सर्वोपस्करसंयुतम् । पार्थयेद्देवदेवेशौ लक्ष्मीशैलसुतेश्वरौ ॥ २२ ॥ दण्डवत्प्रणिपातेन वंदनीयौ पुनः पुनः । ततः स्वगृहमागत्य ब्राह्मणान् भोजयेत्सुधीः ॥ २३ ॥ तोषयेद्दाक्षिणादानैर्यथाशक्त्या वरानने । एवं कृते विधाने तु विघ्ननाशो भवेद्ध्रुवम् ॥ २४ ॥ तुष्टिदं पुष्टिदं नृणां विधानं तत्र सुंदरि॥ २५ ॥ **अथ कृष्णचतुर्दशीजननशान्तिः।** मंदारस्थं सुखासीनं गर्गं मुनिवरं शुभम् । नमस्कृत्वा तु पप्रच्छ शौनको मुनिपुंगवः ॥ २६ ॥ शान्तिकर्माणि सर्वाणि त्वत्तो जानाम्यहं पुरा । अधुना श्रोतुमिच्छामि कृष्णपक्षचतुर्दशीम् ॥ २७ ॥ दिवा वा यदि वा रात्रौ प्रसूतेः किं फलं वद । कृष्णपक्षे चतुर्दश्यां प्रसूतेः षड्विधं फलम् ॥ २८ ॥ चतुर्दशीं च षड्भागं कुर्यादादौ शुभं स्मृतम् । द्वितीये पितरं हंति तृतीये मातरं तथा ॥ २९ ॥ चतुर्थे मातुलं हंति पंचमे वंशनाशनम् । षष्ठे तु धनहानिः स्यादात्मनो वंशनाशनम् ॥ १३० ॥ तस्मात

सर्वप्रयत्नेन शान्ति कुर्याद्विधानतः । अचार्यं वरयेद्धीमान् पुत्रदारसमन्वितम् ॥ ३१ ॥ स्वकर्मनिरतं शांतं श्रोत्रियं वेदपारगम् । सर्वालंकारसंयुक्तं सर्वलक्षणसंयुतम् ॥ ३२ ॥ ब्राह्मणानृत्विजांश्चैव स्वस्तिवाचनपूर्वकम् । रुद्राधिदेवता तस्याः कर्षमात्रसुवर्णतः ॥ ३३ ॥ तदर्द्धार्द्धेन वा कुर्याद्वित्तशाठ्यविवर्जितः । प्रतिमां कारयेच्छंभोः सर्वलक्षणसंयुताम् ॥ ३४ ॥ वृषभे च समासीनं वरदाभयपाणिनम् । शुद्धस्फटिकसंकाशं श्वेतमाल्यांबरान्वितम् ॥ ३५ ॥ त्र्यंबकेन च मंत्रेण पूजां कुर्याद्विधानतः । स्थापयेच्चतुरः कुंभान् चतुर्दिक्षु यथाक्रमम् ॥ ३६ ॥ पुण्यतीर्थजलोपेतां धान्यस्योपरि विन्यसेत् । तन्मध्ये स्थापयेत्कुंभं शतच्छिद्रसमन्वितम् ॥ ३७ ॥ पंचामृतं च रत्नानि पंच त्वक् पंच पल्लवान् । पंचधान्यं सुवर्णं च तत्तन्मंत्रैर्विनिक्षिपेत् ॥ ३८ ॥ शतौषधानि निक्षिप्य श्वेतवस्त्रैश्च वेष्टयेत् । सर्वे समुद्रा । सरितः तीर्थानि जलदानदाः ॥ ३९ ॥ आयांतु यजमानस्य दुरितक्षयकारकाः ॥ १४० ॥ शेषं मूलशांतिवत् । अथ **सिनीवालीशान्तिः** । गर्गः–सिनीवाल्यां प्रसूता स्याद्यस्य भार्या पशुस्तथा । गजाश्वमहिषी चैव शक्रस्यापि श्रियं हरेत् ॥ ४१ ॥ ये सन्ति सकलाश्चान्ये स्वप्रसादोपजीविनः । वर्जयेत्तानशेषांस्तु पशुपक्षिमृगादिकान् ॥ ४२ ॥ कुहूप्रसूतिरत्यर्थं सर्वदोषकरी महत् । यस्य प्रसूतिरेतस्य तस्यायुर्धनवर्द्धनम् ॥ ४३ ॥ सर्वगण्डसमस्तत्र दोषोयं प्रवलो भवेत् । शांतिं विना विशेषेण परित्यागो विधीयते ॥ ४४ ॥ परित्यागात्तत्र शान्ति कुर्याद्धीमान्विचक्षणः । तत्फलं तत्क्षणार्द्धेन पुनरेवानुपालनम् ॥ ४५ ॥ कल्पोक्तशान्तिः कर्तव्या शीघ्रं दोषापनुत्तये । रुद्रः शक्तश्च पितरः पूज्याः सुदेवताक्रमात् ॥ ४६ ॥ कर्षमात्रसुवर्णेन तदर्द्धार्द्धेन वा पुनः । अथवा शक्तितः कुर्याद्वित्तशाठ्यं न कारयेत् ॥ ४७ ॥ प्रतिमां कारयेच्छंभोः चतुर्भुजसमन्विताम् । त्रिशूलखड्गवरदाभयहस्तां यथाक्रमात् ॥ ४८ ॥ श्वेतवर्णां श्वेतपुष्पां श्वेतांबरवृषस्थिताम् । त्रियंबकेन मंत्रेण पूजां कुर्याद्यथाविधि ॥ ४९ ॥ इंद्रश्चतुर्भुजो वज्रांकुशचापः ससायकः । रक्तवर्णो गजारूढो यतइंद्रेति मंत्रतः ॥ १५० ॥ पितरः कृष्णवर्णाश्च चतुर्हस्ता विमानगाः । यष्ट्याक्षसूत्रकमंडलुमयस्यैव धारिणः ॥५१॥ ये सत्या इति मंत्रेण पूजां कुर्यादनंतरम् । आग्नेयां दिशमारभ्य कुंभान् कोणेषु विन्यसेत् ॥ ५२ ॥ कल्पोक्तशान्तिः कर्तव्या कुर्यात्क्षिप्रं स्वशक्तितः । गोदानं वस्त्रदानं च सुवर्णं चोर्वरां शुभाम् ॥५३ ॥ दशदानानि चोक्तानि क्षीरमाज्यं गुडं तथा । आज्यावेक्षणमेतानि तत्तन्मंत्रैश्च कारयेत् ॥ ५४ ॥ समिदाज्यचरोर्होमं तिलमाषैश्च सर्षपैः । अश्वत्थवृक्षपालाशसमिद्भिः खादिरैः शुभैः ॥ ५५ ॥ अष्टोत्तरशतमुखं प्रत्येकं जुहुयाद्द्विजः । त्रियंबकेन मंत्रेण तिलान्व्याहृतिभिः पुनः ॥ ५६ ॥ चतुर्भिः कलशैर्युक्तं बृहत्कुंभसमन्वितम् । शांतिवत्कलशं कार्यमभिषेकं च कारयेत् ॥ ५७ ॥ पितृमातृशिशूनां च अभिषेकं तु वारुणैः । शंकरस्याभिषेकं तु कुर्याद्ब्राह्मणभोज-

नम् ॥ ५८ ॥ अन्येषां चैव सर्वेषां ब्राह्मणानां च तर्पणम् । यथाशक्त्यनुसारेण द्विजसेवा च पूर्वकम् ॥ ५९ ॥ अथ गोप्रसवविधिः । गर्गः—प्रणिपत्य रविं वक्ष्ये प्रायश्चित्तमनुस्मरन् । सर्वारिष्टविनाशाय यदुक्तं शांतिकार्णवे ॥ १६० ॥ पित्रारिष्टे सुतारिष्टे मात्रारिष्टे तथैव च । प्रायश्चित्तं तदा कुर्यात्तत्तद्दोषस्य शान्तये ॥ ६१ ॥ पूषाश्विनौ गुरौ सार्पमघाचित्रेंद्रमूलभे । एषु ऋक्षेषु जातस्य कुर्याद्गोजननं तथा ॥ ६२॥ जन्मर्क्षे वा त्रिजन्मर्क्षे शुभे वारे शुभे दिने । कृत्वाभ्यंगादिकं सर्वं गृहालंकारपूर्वकम् ॥ ६३ ॥ गोमयेनोपलिप्याथ गृहस्येशानकोणके । पंकजं कर्णिकायुक्तं रजोभिः श्वेतवर्णकैः ॥ ६४ ॥ व्रीहीं तत्र विनिक्षिप्य यथावित्तानुसारतः । नवशूर्पं तु तन्मध्ये रक्तवस्त्रं प्रसारयेत् ॥ ६५ ॥ स्थापयित्वा शिशुं तत्र पुनः सूत्रेण वेष्टयेत् । प्राङ्मस्तकमवाक्पादंतिलगर्भगतं शिशुम् ॥ ६६ ॥ गोमुखं दर्शयित्वा तु पुनर्नीतं तु गोमुखात् । विष्णुर्योनीति सूक्तेन गव्येन स्थापयेच्छिशुम् ॥ ६७ ॥ गवामंगेषु विप्रेण गवामंगेषु संस्पृशेत् । विष्णोः श्रेष्ठेति मंत्रेण गोः प्रसूतं तु बालकम् ॥ ६८ ॥ साचार्यस्तं समादाय पश्चान्मात्रे ददत्पिता । माता जघन्यभागस्थं शिशुमानीय तन्मुखात् ॥ ६९ ॥ ततः पित्रे तदा दद्यात्ततो मात्रे प्रदापयेत् । वस्त्रे स्थाप्य पितास्याथ पुत्रस्य मुखमीक्षयेत् ॥ १७० ॥ गोमूत्रं गोमयं क्षीरं दधिसर्पिश्च संयुतम् । आपोहिष्ठादिभिर्मंत्रैरभिषिंचन्ततः शिशुम् ॥ ७१ ॥ मूर्ध्नि चाघ्राय तत्पुत्रं तन्मन्त्रेण तदा पिता ॥ ७२ ॥ मूर्ध्निचुम्बनमंत्रः । अंगादंगात्संभवसि हृदयादभिजायसे । आत्मा वै पुत्रनामासि सजीव शरदां शतम् ॥ ७३ ॥ मूर्ध्नि त्रिवारमाघ्राय तं शिशुं स्थापयेत्ततः । पुण्याहं वाचयेत्पश्चाद्ब्राह्मणान् वेदपारगैः ॥ ७४ ॥ दरिद्रायाथ विप्राय तां गां चाभ्यर्च्य दापयेत् । गोवस्त्रस्वर्णधान्यानि दद्यादर्कादितः क्रमात् ॥ ७५ ॥ यथाशक्तिधनं दद्याद्ब्राह्मणेभ्यस्तदा पिता । ततो होमं प्रकुर्वीत स्वस्वशाखोक्तमार्गतः ॥ ७६ ॥ उल्लेखनादिकं कृत्वा चाज्यभागान्तमाचरेत् । होमस्येशानभागे तु धान्योपरिशुभं घटम् ॥ ७७ ॥ पंचगव्यं घटे स्थाप्य तिलांस्तत्र विनिक्षिपेत् । क्षीरद्रुमकषायांश्च पंचरत्नानि निक्षिपेत् ॥ ७८ ॥ वस्त्रयुग्मेन संछाद्य गंधादिभिरथार्चयेत् । विष्णुं वरुणमभ्यर्च्य प्रतिमां च विधानतः ॥ ७९ ॥ यत इंद्रादिभिर्मंत्रैः कुंभं स्पृष्ट्वाभिमन्त्रयेत् । दधिमध्वाज्ययुक्तेन होमं कुर्याद्विधानतः ॥ १८० ॥ आपोहिष्ठेति तिसृभिरप्सुमे सोम इत्यतः । तद्विष्णोः परमंपदमभिक्ष्यांत्ये च सूक्ततः ॥ ८१ ॥ ऋग्भिराभिः प्रत्यृचमष्टाविंशतिसंख्यया । असक्तश्चाष्टसंख्या वा दधिमध्वाज्यसंयुतम् ॥ ८२ ॥ आदित्यादिग्रहाणां च होमं कुर्यात्समंत्रकम् ॥ ८३ ॥ वैधृतिव्यतीपातशांतिः । अथातः संप्रवक्ष्यामि शौनकीं शांतिमुत्तमाम् । वैधृतौ च व्यतीपाते महादोषोभिजायते ॥ ८४ ॥ कुमारजन्मकाले च व्यतीपातश्च वैधृतिः । संक्रांतिश्च रवेस्तत्र जातो दारिद्र्यकारकः ॥ ८५ ॥ दरिद्राणां महादुःखं सर्वनाशकरो

भवेत् । शांतिर्वा पुष्कला कार्या तत्र दोषो न कश्चन ॥ ८६ ॥ गोमुखप्रसवं कुर्या-च्छांतिं कुर्यात्प्रयत्नतः । जपाभिषेकदानैश्च होमादपि विधानतः ॥ ८७ ॥ नवग्रह-मखं कुर्यात्तस्य दोषप्रशांतये । प्रथमं गोमुखाज्जन्म ततः शांतिं समाचरेत् ॥ ८८ ॥ अथ त्रीतरशांतिः । गर्गः—सुतत्रये सुता चेत्स्यात्तत्रये वा सुतो यदि । माता-पित्रोः कुलस्यापि तदानिष्टं महद्भवेत् ॥ ८९ ॥ ज्येष्ठनाशो धने हानिः दुःखं वा सुम-हद्भवेत् । तत्र शांतिं प्रकुर्वीत वित्तशाठ्यविवर्जितः ॥ १९० ॥ जातस्यैकादशाहे वा द्वादशाहे शुभे दिने । आचार्यो ऋत्विजो वृत्वा ग्रहयज्ञपुरःसरम् ॥ ९१ ॥ ब्रह्मा-विष्णुमहेशेन्द्रप्रतिमाः स्वर्णतः कृताः । पूजयेद्धान्यराशिस्थकलशोपरि शक्तितः॥ ९२ ॥ पंचमे कलशे रुद्रं पूजयेद्रुद्रसंख्यया । रुद्रसूक्तानि चत्वारि शांतिसूक्तानि सर्वशः ॥ ९३ ॥ आचार्यो जुहुयात्तत्र समिदाज्यं तिलांश्चरुम् । अष्टोत्तरसहस्रं वा शतं वा त्रिशतं तु वा ॥ ९४ ॥ देवताभ्यश्चतुर्वक्रादिभ्यो ग्रहपुरःसरम् । ब्रह्मादिमं-त्रैरिंद्रस्य यत इंद्रभयामहे ॥ ९५ ॥ ततः स्विष्टकृतं हुत्वा बलिं पूर्णाहुतिं ततः । अभिषेकं कुटुंबस्य शांतिपाठं तु कारयेत् ॥ ९६ ॥ ब्राह्मणान्भोजयेच्छक्त्या दीना-नाथांश्च तर्पयेत् । कृत्वैवंविधिना शांत सर्वारिष्टाद्विमुच्यते ॥ ९७ ॥ कांस्यपात्रं शर्कराज्यपलैः षोडशमानतः । ब्राह्मणेभ्यः प्रदातव्यं शुभं भवति नान्यथा ॥ ९८ ॥ अथ यमलजननशांतिः । काशीखण्डे—त्रिविधा यमलोत्पत्तिर्जायते योषितामिह । सुतौ च सुतकन्ये वा कन्य एव तथा पुनः ॥ ९९ ॥ एकलिंगौ विनाशाय द्विलिंगौ मध्यमौ स्मृतो । पित्रोर्विघ्नकरौ ज्ञेयौ तत्र शांतिर्विधीयते ॥ २०० ॥ हेममूर्ती विधा-तव्ये दस्रयोश्च द्विजोत्तम । पलेन वा तदर्द्धेन तदर्द्धार्द्धेन वा पुनः ॥ १ ॥ ब्रह्मवृक्षस्य पट्टे च स्थापयेद्रक्तवाससी । स्वस्तिके तंडुलानां च न्यस्ते पीठे द्विजोत्तम ॥ २ ॥ पूजयेद्रक्तपुष्पैश्च चन्दनेनानुलेपयेत् । दशांगेनैव धूपेन धूपयेत्प्रयतः पुमान् ॥ ३ ॥ दीपैर्नीराजयेच्चैव नैवेद्यं परिकल्पयेत् । यस्मै त्वं सुकृते जातवेद इति मंत्रेणाक्षतैरर्च-येत् ॥ ४ ॥ अनेनैव तु मंत्रेण होमं कुर्यादतंद्रितः । अष्टोत्तरसहस्रं च पायसेन ससर्पिषा ॥ ५ ॥ शांतिपाठं जपेद्विद्वान् सूर्यसूक्तं जपेत्ततः । विष्णुसूक्तं तथा गाथां वैश्वदेवीं जपेद्बुधः ॥ ६ ॥ अश्वदानं ततो दद्यादाचार्याय कुटुंबिने । तयोर्मूर्ती प्रदा-तव्ये यजमानेन धीमता ॥ ७ ॥ तत्र दानमन्त्रः । अश्वरूपौ महाबाहू अश्विनौ दिव्यचक्षुषौ । अनेन वाजिदानेन प्रीयेतां मे यशस्विनौ ॥ ८ ॥ मूर्तिदानमन्त्रः । आचार्यः प्रथमे वेधा विष्णुस्तु सविता भगः । दस्रमूर्तिप्रदानेन प्रीयतामाश्विनौ भगः ॥९॥ ततोभिषेचनं कार्यं दंपत्योर्विधिवद्बुधैः । ब्राह्मणान्भोजयेत्पश्चाद्दक्षिणाभिश्च तोषयेत् ॥ २१० ॥ सालंकारैश्च वस्त्रैश्च प्रार्थयेद्वचनैः शुभैः । एवं कृते विधाने यमलोत्पत्तिशांतिकम् ॥ ११ ॥ अथ गोमहिष्यादिप्रसवशांतिः । भानौ सिंहगते चैव यस्य गोः संप्रसूयते । मरणं तस्य निर्दिष्टं षड्भिर्मासैर्न संशयः ॥ १२ ॥

तत्र शांतिं प्रवक्ष्यामि येन संपद्यते शुभम् । प्रसूतां तत्क्षणादेव ता गां विप्राय दापयेत् ॥ १३ ॥ ततो होम प्रकुर्वीत घृताक्तै राजसर्षपैः । आहुतीनां घृताक्तानामयुतं जुहुयात्ततः ॥ १४ ॥ व्याहृतिभिरत्रायं होमः कार्यः । सोपवासमयत्नेन दद्याद्विप्राय दक्षिणाम् । माघे बुधे च महिषी श्रावणे वडवा दिवा । सिंहे गावः प्रसूयन्ते स्वामिनो मृत्युदायकाः ॥ १५ ॥ पौषे च महिषी सूते दिनेवाश्वतरी तथा । तदारिष्टं भवेत्किंचिच्छान्तौ शांतिकमाचरेत् ॥ १६ ॥ इत्यत्रापि शांतितः शुभं तेन क्षेमाय शांतिः कार्या । अथ सूतिकास्नानम् । कृत्तिका भरणीमूलआर्द्रातिष्यपुनवसु । मघा चित्रा विशाखा च श्रवणो दशमस्तथा ॥ १७ ॥ एताः प्राणहरास्तारा स्तासु स्नानं न कारयेत् । यदि स्नानं प्रकुर्वीत पुनः सूती न जायते ॥ १८ ॥ प्रतिपच्च नवम्यां च षष्ठ्यां च शनिशुक्रयोः । विधवा त्रीणि जन्मानि पुनः सूती न जायते ॥ १९ ॥ उत्तरात्रयरोहिण्यां सौम्यः पवनेरेवती । प्रसूती वनिता स्नायाद्धस्तमैत्र्याश्विनीषु च ॥ २२० ॥ करेंद्रभाग्यानिलवासवांत्यमैत्र्यध्रुवाश्विध्रुवभेह्नि पुंसाम् । तिथावरिक्ते शुभमामनंति प्रसूतिकास्नानविधिं मुनींद्राः ॥ २१ ॥ स्नाता प्रसूता असुता बुधेन स्नाता च वंध्या भृगुनंदनेन । सौरेषु मृत्युः पयहानिरिन्दौ पुत्रार्थकामा रविभौमजीवाः ॥ २२ ॥ अथ स्तनपानम् । मुक्तावल्याम्—पुनर्वसौ पुष्यमघासु मूले त्रिरुत्तरा चैव विशाखिका च । वारेर्कजीवे बुधशुक्रचन्द्रे स्तनपानकार्ये शुभदा भवंति ॥ २३ ॥ रिक्तां भौमं परित्यज्य विष्टिं पातं च वैधृतिम् । मृदुध्रुवक्षिप्रभेषु स्तनपानं हितं शिशोः ॥ २४ ॥ मुहूर्तगणपतौ—जातकर्मोक्तनक्षत्रे श्रवणे च पुनर्वसौ । त्यक्त्वा स्वातीस्तन्यपानं शुभं प्रोक्तं शुभेहनि ॥ २५ ॥ अथ सूतिकाक्वाथः । भैषज्यगदिते धिष्णे वारे दुर्योगवर्जिते । आरोग्यहेतवे क्वाथः सूतिकायाश्च तच्छिशोः ॥ २६ ॥ अथ सूतिकापथ्यम् । मुहूर्तगणपतौ—अन्नाशनोक्तनक्षत्रे शुभाहे सांशुमालिनि । हित्वा रिक्तां च दुर्योगं सूतिकापथ्यमीरितम् ॥ २७ ॥ इति श्रीज्योतिर्विद्दयादत्तात्मज रामदीनकृते संग्रहे बृहद्दैवज्ञरंजने संस्कारोक्तं त्रिपंचाशत्तमं जातकर्मप्रकरणं समाप्तम् ।

---

## अथ चतुष्पंचाशत्तमं नामकर्मप्रकरणं प्रारभ्यते ।

कुमारस्यायुरभिवृद्धिव्यवहारसिद्धिबीजगर्भसमुद्भवैनोनिबर्हणार्थम् । गुरुः— अथातः संप्रवक्ष्यामि मुहूर्तं नामकर्मणः । नामकर्मक्रियाकाले सर्वसंपद्विवर्धनः ॥ १ ॥ नामाखिलस्य व्यवहारहेतुः शुभावहं कर्म शुभांगहेतुः । नाम्नैव कीर्तिं लभते मनुष्यस्ततः प्रशस्तं खलु नामकर्म ॥ २ ॥ नारदः—सूतकांते नामकर्म विधेयं स्वकुलोचितम् । नामपूर्वं प्रशस्तं स्यान्मंगलैः शुभमांक्षता ॥ ३ ॥ व्यासः—नामधेयं दशम्यां

तु केचिदिच्छंति सूरयः । द्वादश्यामाहुरन्ये तु मासे पूर्णे तथापरे ॥ ४ ॥ अष्टादशेहनि तथा वदंत्यन्ये मनीषिणः ॥ ५ ॥ बृहस्पतिः—द्वादशे दशमे वाऽपि जन्मतो दिवसे शुभम् । षोडशे विंशतिश्चैव द्वाविंशे वर्णतः क्रमात् ॥ ६ ॥ प्राप्तकालेपि विशेषमाह । गर्गः—व्यतीपाते च संक्रांतौ ग्रहणे वैधृतावपि । श्राद्धं विना शुभं नैव प्राप्तकालेपि मानवः ॥ ७ ॥ व्यवहारचण्डेश्वरः—व्यतीपाते तथा वज्रे विष्ट्यांगारकवासरे । दग्धे दिने निरंशे च प्रयत्नेन विवर्जयेत् ॥ ८ ॥ नृसिंहः—सायाह्ने दुष्टयोगे च शनिभूमिजवारयोः । रिक्तापर्वोष्टमी षष्ठी किंस्तुघ्नं च विशेषतः ॥ ९ ॥ एतैर्दोषैर्युते काले रात्रावपि न कारयेत् । छिद्राख्या पूर्णिमा रिक्ता हित्वा शेषाः शुभावहाः ॥ १० ॥ शकुन्यादीनि विष्टिं च नामकर्मणि वर्जयेत् । शुभनक्षत्रयोगेषु शुभेषु शुभमीरितम् ॥ ११ ॥ बृहस्पतिः—पूर्वाह्णे श्रेष्ठ इत्युक्तो मध्याह्ने स्याद्विशेषतः । अपराह्णं च रात्रिं च वर्जयेन्नामकर्मणि ॥ १२ ॥ स्वामिनामानि रात्रौ च न दोषं शुभदं च तत् । अमासंक्रांतिविष्ट्यादौ प्राप्तकालेपि नाचरेत् ॥ १३ ॥ अत्राहनीति दिवसविधानेनैव कर्मणि गुरुशुक्रमूढता नास्तीति । बृहस्पतिः—यानि कार्याणि चोक्तानि मासि मासि शचीपते । तेषु तेष्वेवमेव स्यान्मासकालस्तु साधनात्॥१४॥मासि प्रोक्तेषु कालेषु मूढत्वं गुरुशुक्रयोः । न दोषकृत्तदा मासलक्षणोथ बलान्वितः ॥ १५ ॥ मासप्रयुक्तकार्येषु प्रोक्ता दोषा न दोषदाः ॥ १६ ॥ नारदः—देशकालोपघाताद्यैः कालातिक्रमणं यदि । अनस्तगे भृगावीज्ये तत्कालं चोत्तरायणे ॥ १७ ॥ गर्गः—एकादशेह्नि विप्राणां क्षत्रियाणां त्रयोदशे । वैश्यानां षोडशे कार्यं मासान्ते शूद्रजन्मनः ॥ १८॥ माहेश्वरः—कार्यं सूनोर्जननसमये जातकर्माथ नामा पित्राद्यैर्वा जननदिवसाद्द्वादशान्त्याद्यके वा । नक्षत्रैर्वा ध्रुवमृदुचरक्षिप्रसंज्ञैस्तु शुक्रे केंद्रस्थे वा सुरपतिगुरौ वासरे सद्ग्रहाणाम् ॥ १९ ॥ नारदः—चरक्षिप्रध्रुवे मैत्रे नक्षत्रे शुभवासरे । चन्द्रताराबलोपेते दिवसे च शिशोः शुभे ॥ २० ॥ चण्डेश्वरः—वस्वादित्यगुरूत्तरादितिमृगैश्चित्रानुराधानिलैर्मूलवैष्णवरेवतीद्रुतुरगैः संज्ञां प्रकुर्याच्छिशोः । वारेणार्कशशिज्ञवाक्पतिगुरोर्लग्नस्थिते शोभने सौम्ये केन्द्रनवात्मजन्मसहितैः पापैश्च शेषस्थितैः ॥ २१ ॥ बृहस्पतिः—शुभवारे च तद्वर्गे शुभानां नामसंपदे । राशयश्च स्थिरा श्रेष्ठा द्विस्वभावाः शुभैर्युताः ॥ २२ ॥ शुभलग्ने शुभांशे च नैधने शुद्धिसंयुते । उच्चग्रहोदये वास्य दर्शने वा विशेषतः ॥ २३ ॥ अलाभे प्रोक्तकालस्य योगाद् वक्ष्यामि नामानि । केंद्रत्रिकोणे वा जीवे पापे अन्यतरो भवेत् ॥ २४ ॥ चन्द्रे शुभांशके सौम्ये योगो नामानि शोभनः । भवे शुक्रेऽथवा क्रूरे केन्द्रे शीतकरे गुरौ ॥ २५ ॥ सितपक्षे शुभो योगः संपदे नामकर्मणि ॥ २६ ॥ संग्रहकारः—देवग्रामगजाश्वानां वृक्षाणां वापि कूपयोः । सर्वोपकरणानां च चिह्नानां योषितां नृणाम् ॥ २७ ॥ काव्यादीनां कवीनां च पश्वादीनां विशेषतः । राजप्रासादसंज्ञानां नामकर्म विधि-

ष्यते ॥ २८ ॥ गर्गस्तु–मासनाम गुरोर्नाम दद्याद्बालस्य वै पिता । कृष्णोनंतो-
च्युतश्चक्री वैकुंठोथ जनार्दनः ॥ २९ ॥ उपेंद्रो यज्ञपुरुषो वासुदेवस्तथा हरिः ।
योगीशः पुण्डरीकाक्षो मासनामान्यनुक्रमात् ॥ ३० ॥ नामधेयं तु वर्णानां
कर्तव्यं तु समाक्षरम् । शर्मान्तं ब्राह्मणस्योक्तं वर्मांतं क्षत्रियस्य तु ॥ ३१ ॥
गुप्तदासांतकं नाम कथितं वैश्यशूद्रयोः । नामधेयं तु कर्तव्यं स्वकुलानुगमेन
वा ॥ ३२ ॥ स्त्रीणामोजाक्षरं शांतं विस्पष्टार्थं मनोरमम् । नाम कार्यं नराणां च न कार्यं
विषमाक्षरम् ॥ ३३ ॥ दीर्घनाम कृतं कुर्यान्न च युग्माक्षरांतकम् । अकारांतं न कर्तव्यं
स्त्रियैतच्च हितप्रदम् ॥ ३४ ॥ **अथावकहडाचक्रम्** । चूचे चोलाश्विनी ज्ञेया लीलू
लेलो भरण्यथ । अइउए कृत्तिकायां ओवावीवू च रोहिणी ॥ ३५ ॥ वेवोकाकी
मृगशिरः कुघङछ तथार्द्रका । केकोहाही पुनर्वसु हूहेहोडा तु पुष्यभम् ॥ ३६ ॥
डीडूडेडो तु आश्लेषा ममीमूमे मघा स्मृता । मोटाटीटू पूर्वफाल्गु टेटोपाप्युत्तरं
तथा॥३७॥ पूषणठहस्ततारा पेपोरारी तु चित्रका । रूरेरोता स्मृता स्वाती तीतूतेतो
विशाखिका ॥ ३८ ॥ नानीनूनेऽनुराधर्क्षं ज्येष्ठा नोना यियूस्मृता । येयो भाभी मूल-
तारा पूर्वाषाढा भुधाफडा ॥ ३९ ॥ भेभोज्याज्युत्तराषाढा जूजेजोषाभिजिद्भवेत् । खिखू
खेखो श्रवणभं गागीगूगे धनिष्ठिका ॥ ४० ॥ गोसाशिशू शतभिषक् सेसो दादी तु
पूर्वभात् । दुथ भूञउत्राभाद्रा देदो चाची तु रेवती ॥ ४१ ॥ **राशिप्रविभागमाह**–
वाराहीसंहितायाम्–अश्विन्योथ भरण्यो बहुलापादश्च कीर्त्यते मेषः । वृषभो बहु-
लाशेषं रोहिण्यर्द्धं च मृगशिरसः ॥ ४२ ॥ मृगशिरसोर्धं रौद्रं पुनर्वसोश्चांशकत्रय-
मिथुनम् । पादश्च पुनर्वसुतस्तिष्योऽश्लेषा च कर्कटः ॥ ४३ ॥ सिंहोथ मघा पूर्वा च
फाल्गुनी पाद उत्तरायाश्च । तत्परिशेषं हस्ताश्चित्राद्यर्द्धं च कन्याख्यः ॥४४॥ तौलिनि
चित्रांत्यार्द्धं स्वातिः पादत्रयं विशाखायाः । अलिनि विशाखापादस्तथानुराधान्वित
ज्येष्ठा ॥ ४५ ॥ मूलमाषाढा पूर्वाप्रथमश्चाप्युत्तरांशको धन्वी । मकरस्तत्परिशेषं
श्रवणः पूर्वं धनिष्ठार्द्धम् ॥ ४६ ॥ कुंभोन्त्यधनिष्ठार्द्धं शतभिषगं सत्रयं च पूर्वायाः
भाद्रपदायाः शेषं तथोत्तरा रेवती च झषः ॥ ४७ ॥ यवनमतम्–यत्र स्थितः शीतकरो
नराणां स्याजन्मराशिं तमुदाहरंति । यथा तथा येषु खगाः स लग्नास्थिता न हि
सम कुतो भवंति ॥४८ ॥ अतोष्टराशिमनुजोथ सर्वः प्रोक्तानि तेभ्यश्च शुभाशुभानि
फलानि तेषां तु वियोगयोगादष्टवर्गोत्थफलं स्फुटं स्यात् ॥ ४९ ॥ भोगादौ
लग्नभं योज्यं राजकार्यर्कभं तथा । चंद्रभं सर्वकार्येषु संग्रामादौ च भौमभम् ॥ ५० ॥
विद्याभ्यासे बुधर्क्षं च विवाहे गुरुभं स्मृतम् । शुक्रयुग्मं प्रयाणे च दीक्षायां
शनिभं बुधैः ॥ ५१ ॥ बृहस्पतिः–व्यवहारराजसेवायां संग्रामग्रामधामगेहेषु
ज्ञातोपि जन्मराशौ फलमुक्तं नामराशिवशात् ॥ ५२ ॥ अन्योपि–विवाहे सर्वमांगल्ये
यात्रादौ ग्रहगोचरे । जन्मराशिप्रधानत्वं नामराशिं न चिन्तयेत् ॥ ५३ ॥ देशे ग्रा

ग्रहे युद्धे सेवायां व्यवहारके। नामराशिप्रधानत्वं जन्मराशिं न चिन्तयेत् ॥ ५४ ॥ स्वरशास्त्रे–प्रसुप्तो येन जागर्ति येनागच्छाति शब्दितः। तत्र नामादिमो वर्णो ग्राह्यः स्वरविशारदैः ॥ ५५ ॥ न प्रोक्ता ङञणा वर्णानामादौ संति ते न हि। चेद्भवंति तदा ज्ञेया गजडास्ते यथाक्रमम् ॥५६॥षशौ शशौ ववौ चैव ज्ञेयाविति परस्परम्। संयोगाक्षरगे नाम्नि ग्राह्यस्तत्रादिमाक्षरम् ॥ ५७ ॥ वहूनि यस्य नामानि नरस्य स्युः कथंचन। तस्य पश्चाद्भवं नाम ग्राह्यं स्वरविशारदैः ॥ ५८ ॥ इति श्रीज्योतिर्विद्वयादत्तात्मजरामदीनकृते संग्रहे बृहद्दैवज्ञरंजने संस्कारोक्तं चतुष्पंचाशत्तमं नामकरणप्रकरणं समाप्तम्।

## अथ पंचपंचाशत्तमं खट्वारोहणप्रकरणं प्रारभ्यते।

बृहस्पतिः–खट्वारोहस्तु कर्तव्यो दशमे द्वादशेपि च। षोडशे दिवसे वापि द्वात्रिंशद्दिवसेपि वा ॥ १ ॥ भविष्योत्तरपुराणे–अभीष्टपुण्यदिवसे चन्द्रताराबलान्विते। मृदुध्रुवक्षिप्रभे तु स्वमाता कुलयोषितः ॥ २ ॥ योगशायिं हरिं स्मृत्वा प्राक्शिर्षे विन्यसेच्छिशुम् ॥ ३ ॥ अथ खट्वाचक्रम्। खट्वाचक्रं प्रवक्ष्यामि यथा गर्गेण भाषितम्। येन विज्ञानमात्रेण ज्ञायते च शुभाशुभम् ॥ ४ ॥ सूर्यऋक्षाच्चतुष्कं च देयं धिष्णं तु मस्तके। कोणयोरष्टनक्षत्रं शाखायामष्ट एव च ॥ ५ ॥ खट्वामध्ये त्रिकं चैव वेदसंख्या च पादयोः। मस्तके च शुभं ज्ञेयं कोणयोरष्ट मृत्युदाः ॥ ६ ॥ शाखाष्टकं शुभं प्रोक्तं त्रिकं मध्ये सुखप्रदम्। पादयोर्वेदनक्षत्रं हानिमृत्युमहद्भयम् ॥७॥ सूर्यभाद्दिनभं गण्यं खट्वाचक्रं विशेषतः ॥ ८ ॥ वाराहः–असनस्पंदनचन्दनहारिद्रसुरदारुतिंदुकी शाला। काश्मर्यंजनपद्मकशाका वा शिंशपा च शुभाः ॥ ९ ॥ कंटकिनो वा ये स्युर्महानदीसंगमोद्भवा ये च ॥ श्रीपतिः–गोधान्यदेवाग्निगुरूपदिष्टान्स्वपेन्न चैवापरसौम्यमूर्द्धा। न चानुवंशो न जलार्द्रपादः श्रियोभिलाषी पुरुषो न नग्नः ॥ १० ॥ इति श्रीज्योतिर्विद्वयादत्तात्मजरामदीनेकृते संग्रहे बृहद्दैवज्ञरंजने संस्कारोक्तं पंचपंचाशत्तमं खट्वारोणहप्रकरणं समाप्तम्।

## अथ षट्पंचाशत्तमं कर्णवेधप्रकरणं प्रारभ्यते।

बृहस्पतिः–अथातः संप्रवक्ष्यामि कर्णवेधस्य शोभनम्। कालं चतुर्मुखात् प्रोक्तं नीरोगाय श्रियाय च ॥ १ ॥ कृते सुखविवृद्ध्यैतत्कर्तव्यं कर्णयोर्व्यधम्। अंगहीनभयात्केचित्केचिदंगादिनां क्षयः ॥२॥ इति मत्वा न कुर्वंति नैवमाह पितामहः ॥३॥ यो वेधेत्कर्णवेधेने स्वाङ्गे हानि तु तैरपि। नाभिच्छेदं न कर्तव्यं अंगहीनभयादिति ॥ ४ ॥ जन्मतो दशमे वाह्नि द्वादशे वाथ षोडशे। सप्तमे मासि वा कुर्यादष्टमे मासि वा पुनः॥५॥

चूडामणौ-मासे षष्ठे सप्तमे चाष्टमे वा वेध्यौ कर्णौ द्वादशे षोडशेह्नि। मध्ये चाह्नः पूर्वभागे न रात्रौ नक्षत्रे द्वे द्वे तिथी वर्जनीयौ॥६॥बृहस्पतिः-यस्मिन्वारे तिथी तारे द्वौ द्वौ युक्तौ न शोभनौ। संधिद्वयोः पुरो लग्नाद्यदि स्यात्र शुभता तयोः॥ ७ ॥ मध्याह्ने तु प्रशस्तं स्यादपराह्ने न शोभनम्। मध्याह्ननिशिवर्ज्यं तन्मुहूर्तस्यातिनाडिकम् ॥ ८ ॥ गर्गः-मासे षष्ठे सप्तमे वाप्यष्टमे द्वादशेह्नि वा। कर्णवेधं प्रशंसंति पुष्ट्यायुःश्रीविवृद्धये ॥९॥ यस्मिन्नहनि नक्षत्रद्वयं तिथिद्वयं वा भवति तत्र कर्णवेधं न कुर्यात्। अर्केनुकूले शशिनि प्रशस्ते तारावले चन्द्रविवृद्धिपक्षे। अयुग्मवर्षे शुभदः शिशूनां कर्णस्य वेधं मुनयो वदन्ति ॥ १० ॥ चिरप्रवासयात्रायां गृहे कर्णस्य वेधने। चूडाकृतौ प्रतिष्ठायां भानुशुद्धिर्विधीयते ॥ ११ ॥ न जन्ममासे न च चैत्रपौषे न भाद्रसंज्ञे न हरौ प्रसुप्ते। तिथौ न रिक्ते न च विष्टिदुष्टे कर्णस्य वेधं मुनयो वदन्ति ॥ १२ ॥ नृसिंहः-वेध्यौ कर्णावदंतस्य विषमेऽब्देऽथवा शिशोः। शुक्लपक्षे शुभे वारे चैत्रपौषोर्जेफाल्गुने ॥ १३ ॥ गर्गः-कार्तिके पौषमासे च चैत्रे वा फाल्गुनेपि वा। कर्णवेधं प्रशंसंति शुक्लपक्षे शुभे दिने ॥ १४ ॥ चण्डेश्वरः-न श्रावणे तथा भाद्रे नैव चाश्विनकार्तिके। पौषे चैव न कुर्वीत कर्णयोरपि वेधनम् ॥ १५ ॥ हरौ प्रसुप्ते नच चैत्रपौषे न भाद्रसंज्ञे न च जन्ममासे। रोगं विना न प्रवदन्ति नित्यं कर्णस्य वेधं मुनयो वदन्ति ॥ १६ ॥ जन्मर्क्षे जन्ममासे च रिक्तापर्वावमेषु च। भद्रायामशुभे चन्द्रे न कुर्यात्कर्णवेधनम् ॥ १७ ॥ बृहस्पतिः-द्वितीया दशमा षष्ठी सप्तमी च त्रयोदशी। द्वादशी पंचमी शस्ता तृतीया कर्णवेधने ॥ १८ ॥ एकादश्यष्टमी पर्व रिक्ता वर्ज्याः शुभावहाः। शिष्टाश्च तिथयः सर्वाः कृष्णे चान्त्यात्रिकं विना ॥ १९ ॥ मंदारार्कांशवाराः स्युर्वर्ज्याः शेषास्तु शोभनाः। गुरुशुक्रेंदुजेंदूनां पूज्या वारांशकोदयाः ॥ २० ॥ चंडेश्वरः-हस्तादितिश्रवणमैत्रभवासवेषुपौष्ण्याश्विनितिष्यमरुदिंदुसचित्रभानि। श्रेष्ठानि मूलमरुणात्मजभानि पूर्वात्रीण्युत्तरात्रितयमग्निभानिंदितानि॥२१॥ भरणीकृत्तिकाश्लेषाविशाखार्द्रामुपेंद्रजम्। कर्णवेधविधौ सप्त भानि वर्ज्यानि यत्नतः॥२२॥ राजमार्तंडे-मैत्रे हस्ते सवित्रे हरिगुरुसहिते स्वातिपौष्ण्याश्विनीषु शक्रादित्ये च सौम्ये शशिकरणसुते भार्गवेंदौ गुरौ वा। पक्षे शुक्ले च नास्तंगतवति भृगुजे नैव रिक्ते तिथौ च केंद्रे जीवे भृगौ वा सहजरिपुगतैः पापकैः कर्णवेधः ॥ २३ ॥ श्रीपतिः-पौष्णवैष्णवकराश्विनी चित्रापुष्यवासवपुनर्वसुमित्रैः। सेंदवैः श्रवणवेधविधानं निर्दिशंति मुनयो हि शिशूनाम् ॥ २४ ॥ चूडामणौ-ज्येष्ठादित्यसमीरणार्कशतभे पुष्यश्रविष्ठाश्विनी चित्रावैष्णववायुपौष्णमृगभे वारे बुधादित्रये। भ्रात्रापारिगते खले च शुभदे केन्द्रत्रिकोणस्थिते वर्षे चायुजि कर्णवेधनविधिः पक्षे सिते शोभनः ॥ २५ ॥ वृद्धनारदः-वृषभे मिथुने मीने कुलीरे कन्यकासु च। तुलाचापे तु कुर्वीत कर्णवेधं शुभाप्तये ॥ २६ ॥ मेषश्च मकरश्चैव मध्यमो गुरु-

चोदितौ । सिंहवृश्चिककुंभाश्च अधमत्वाद्विवर्जिताः ॥ २७ ॥ चण्डेश्वरः-देवाचार्यशशांकपुत्रभृगुजाः केंद्रस्थिताः शोभनाः तिग्मांशुक्षितिसूनुसूर्यतनयः शस्तास्त्रिषष्ठायगाः । षष्ठाष्टांत्यगतस्तथा परहिते शेषे शशी शोभनः श्रुत्योर्वेधविधौ वदंति मुनयः श्रेष्ठाः समस्ता इमे ॥ २८ ॥ बृहस्पतिः-रन्ध्रारिव्ययगो नेष्टो गुरुः शेषेषु शोभनः । सुतरन्ध्रगतः सोमो नेष्टस्त्वन्यत्र शंकरः ॥ २९ ॥ षट् सप्ताष्टगतः शुक्रो न शुभोप्यत्र शोभनः । चन्द्रो द्वित्रिसुतास्तेषु धर्मकर्मांशगः शुभः ॥ ३० ॥ त्रिषडायगताः पापाः शुभाः स्युः कर्णवेधने । अनुक्तेष्वपि भावेषु स्ववर्गस्थाः स्वतुंगगाः ॥ ३१ ॥ मित्रराशिरताश्चैव मित्रदृष्टाश्च शोभनाः । अष्टमस्था ग्रहाः सर्वे नेष्टाः स्युः कर्णवेधने॥३२॥ महाबलयुतो जीवः शुक्रस्योपचये स्थितः । शुक्रोपि तद्वदिंदोश्चेत्स योगः कर्णवेधने ॥ ३३ ॥ शातकुंभमयी सूची वेधने शोभनप्रदा । राजता वायसी वापि यथा विभवतः शुभा ॥ ३४ ॥ आदौ संपूज्य दैवज्ञं भिषजां दैवमेव च । विदुषां ब्राह्मणांश्चैव कर्मकारं तथैव च ॥ ३५ ॥ ब्राह्मणैराशिषं कृत्वा वांदिभिश्च प्रियैर्जनैः । दासीभिश्चापि शंखैश्च भेरीदुंदुभिपूर्वकैः ॥ ३६ ॥ सुभूमौ प्रवणे रम्ये शुचौ देशेंवरे रवौ । संनिधौ वेधयेत्कर्णौ स्त्रीपुंसोर्वामदक्षिणौ ॥ ३७ ॥ कर्णवेधोक्तभे शस्तं कन्याया घ्राणवेधनम् । त्र्युत्तराजलपस्वातौ पूर्वाह्ने शुक्लपक्षके ॥ ३८ ॥ शुक्लसूत्रसमायुक्ता ताम्रसूच्याथ वेधयेत् । वेधा तृतीयनक्षत्रे क्षालयेदुष्णवारिणा ॥ ३९ ॥ देवलः-कर्णरन्ध्रे रवेश्छाया न विशेदग्रजन्मनः । तं दृष्ट्वा विलयं यांति पुण्यौघाश्च पुरातनाः ॥४०॥ शंखः-अंगुष्ठमात्रौ सुखिनौ कर्णौ न भवतो यदि । तस्मै श्राद्धं न दातव्यं यदि चेदासुरं व्रजेत् ॥ ४१ ॥ इति श्रीज्योतिर्विद्दयादत्तात्मज रामदीनकृते संग्रहे बृहद्दैवज्ञरंजने संस्कारोक्तं षट्पंचाशत्तमं कर्णवेधप्रकरणं समाप्तम् ।

---

## अथ सप्तपंचाशत्तमं दोलारोहणप्रकरणं प्रारभ्यते ।



करद्वये वै श्रुतिरेवतीचादितिद्वये चाश्विनिवासवेषु । कृत्वा शिशूनां नृपतेश्च तद्वद्विलंबिता सा सुखदा नृपाणाम् ॥ १ ॥ रामोपि-दोलारोहेर्कभात्पंच शरपंचेषु सप्तभैः । नैरुज्यं मरणं कार्श्यं व्याधिः सौख्यं क्रमाच्छिशोः ॥ २ ॥ तदन्यः-सूर्यभाचन्द्रभं यावत्पंच पंच चतुर्दिशम् । मध्ये तु सप्त देयानि दोलिका चक्र उत्तमे ॥ ३ ॥ पूर्वभागे निरोगित्वं दक्षिणे मरणं ध्रुवम् । पश्चिमे तु कृशो बाल उत्तरे व्याधिसंभवः ॥ ४ ॥ शेषेषु सप्तधिष्ण्येषु बालकः शयने सुखी ॥ ५ ॥ ज्योतिःसारे-आंदोलशयनं पुंसो द्वादशे दिवसे शुभः । त्रयोदशे तु कन्याया न नक्षत्रविचारणा ॥ ६ ॥ इति श्रीज्योतिर्विद्दयादत्तात्मज रामदीनकृते संग्रहे बृहद्दैवज्ञरंजने संस्कारोक्तं सप्तपंचाशत्तमं दोलारोहणप्रकरणं समाप्तम् ।

---

## अथाष्टपंचाशत्तमं दुग्धपानविधिप्रकरणं प्रारभ्यते ।

नृसिंहः—एकत्रिंशद्दिने चैव पयः शंखेन पाययेत् । अन्नप्राशननक्षत्रे दिवसोदयराशिषु ॥ १ ॥ नक्षत्रे मासि संपूर्णे जातर्क्षे तु विशेषतः । मासांते दुग्धपानं स्यात् पश्चात्काले सुशोभने ॥ २ ॥ उत्तरात्रयहस्तश्च त्वाष्ट्रवैष्णववासवाः । पौष्णाश्विनौ मघा स्वाती वारुणादितिजीवभम् ॥ ३ ॥ रोहिण्यैंदवमैत्राश्च दुग्धपाने शिशोः शुभाः । षष्ठी रिक्ताष्टमी चैव वर्ज्या विष्टिस्थिराणि च ॥ ४ ॥ वर्ज्यास्त्वशुभयोगाश्च कृष्णे चांत्यत्रिभागकम् । अधोमुखानि वर्ज्याणि मीनाजालिगृहाणि च ॥ ५ ॥ जीवशुक्रेंदुसौम्यानां वारवर्गे क्षणाः शुभाः । शुभानां राशयः श्रेष्ठा विशेषाच्छुभकर्मणि ॥ ६ ॥ आयारिभ्रातृगाः पापा विशेषेण शिशोः शुभाः । पूर्वाह्णे चापि मध्याह्ने कुर्याद्रात्रिं तु वर्जयेत् ॥ ७ ॥ योगिनी राहुरुद्रादि मुखं चैव विवर्जयेत् ॥ ८ ॥ वारयोगिनी । इन्द्रवायुयमशूलिपाशिना वह्निषा श्रवणरक्षसी क्रमात् । अर्धयाममनुवासरादितो दिक्षु संभ्रमति योगिनी चरा ॥ ९ ॥ अथ राहुलक्षणम् । गुरुभान्वोर्वसेत्प्राच्यामिन्दौ शुक्रे च दक्षिणे । कालराहुः कुजे प्रत्यग्गुत्तरे बुधमंदयोः ॥ १० ॥ अथ रुद्रलक्षणम् । हरिसोमवह्निराक्षसयवमरुणानिलहरेष्वेवम् । उदयति भ्रमति सदा घटिकारुद्रो महाप्रबलः ॥ ११ ॥

| | | |
|---|---|---|
| ई. ४ | पू. १ | अ. ६ |
| उ. ७ | | द. ३ |
| वा. २ | प. ५ | नै. ८ |

इति श्रीज्योतिर्विद्वर्यादत्तात्मजरामदीनकृते संग्रहे बृहद्दैवज्ञरंजने संस्कारोक्तं अष्टपंचाशत्तमं दुग्धपानविधिप्रकरणं समाप्तम् ।

## अथैकोनषष्टितमं दन्तोत्पत्तिकरणं प्रारभ्यते ।

व्यवहारचण्डेश्वरः—प्रथमे दंतजननात्स्वयमेव विनश्यति । द्वितीये भ्रातरं हंति तृतीये भगिनीं तथा ॥ १ ॥ चतुर्थे मातरं हंति पंचमे ज्येष्ठभ्रातरम् । षष्ठे परान्नभोगी स्यात्सप्तमे पितृसौख्यदः ॥ २ ॥ अष्टमे पुष्टिजनको नवमे लभते धनम् । लभते दशमे मासि सौख्यमेकादशेऽपि च ॥ ३ ॥ द्वादशे सुखसम्पत्तिर्दंतानां पावनं फलम् ॥ ४ ॥ रामाचार्योऽपि—मासे चेत्प्रथमे भवेत्सदशनो बालो विनश्येत्स्वयं हन्यात्सः क्रमतोऽनुजातभगिनी भ्रात्रग्रजां द्व्यादिके । षष्ठादौ लभते हि भोगमतुलं तातात्सुखं पुष्टतां

लक्ष्मीसौख्यमथो जनौ सदशनो चोर्द्धस्वपित्रादि हा ॥ ५ ॥ अथ दन्तोत्पन्न शांतिः। पुष्कर उवाच । कथयस्व मुनिश्रेष्ठ महर्षे भार्गव प्रभो। शुभाशुभं च तच्छांतिं वद जन्मफलं शिशोः ॥ ६ ॥ भार्गव उवाच । उपरि प्रथमं यस्य जायते च शिशोर्द्विजः । दंतैर्वा सह यस्य स्याज्जन्म तद्बालकं न सत् ॥ ७ ॥ मातरं पितरं खादेदात्मानं वापि मातुलान् । सदंतं बालकं विंद्याद्राक्षसांतकुलांतकृत् ॥ ८ ॥ यदि दंतैः समं जन्म यदिदमुशना शिशोः । स्युर्मध्ये सप्तमासानां कुलनाशस्तदा ध्रुवम् ॥९॥ अष्टमादिषु मासेषु दंतोत्थानं शुभावहम् । अथ तद्दोषनाशाय विधानं शृणु सत्तम ॥ १० ॥ प्रथमं पूजयेत्तत्र देवदेवं च केशवम् । अग्निं संस्थाप्य जुहुयाद्घृतेन चरुणा पृथक् ॥ ११ ॥ देवदेवं केशवं च वृद्धिसोमं समीरणम् । धातारं च विधातारं कुलदेवं नवग्रहान् ॥ १२ ॥ यजेत्तल्लिंगजैर्मंत्रैर्नाममंत्रैरथापि वा । यथाशक्ति सहस्रं वा शतं वाथाष्टविंशतिः ॥ १३ ॥ ऋत्विग्भ्यो दक्षिणा देया ततः स्नानं शिशोर्मतम् । भद्रासने निवेश्यैनं मृद्भिः सर्वौषधैः फलैः ॥ १४ ॥ सर्वैर्मनोरमैर्गंधैः स्नापयेत्तीर्थ वारिणा । तदनु ब्राह्मणा भोज्याः सुवासिन्यः सुहृद्गणाः ॥ १५ ॥ विष्णुधर्मोत्तरे-गजपृष्ठगतं बालं नौःस्थं वा स्नापयेद्गुरुः । तदभावे कांचनेन निर्मिते च वरासने ॥ १६ ॥ सर्वौषधैः सर्वगंधैर्बीजैः पुष्पैः फलैः शुभैः । पंचगव्यैश्च रत्नैश्च छत्रं शिरसि धारयेत् ॥ १७ ॥ विप्रभोज्यं ततः कुर्याच्छक्त्या दद्याच्च दक्षिणाम् । अकालदंतजे दोषे शांतिरेवं विधीयते ॥ १८ ॥ चुंबेत्कुमारं त्रीन्वारं प्रायश्चित्तमिदं स्मृतम् । मृदं वांगारकान् भक्तं दधिसिंधुमुखे क्षिपेत् ॥ १९ ॥ नौकामारोहयेद्बालं सह धात्र्याथवाग्रजम् । स्वर्णं दद्याद्द्विजा भोज्याः सर्पिषा पायसेन च ॥ २० ॥ रुद्रयामले-प्रथमं दंतनिर्मुक्तिरूर्ध्वं बालस्य चेद्भवेत् । क्लेशाय मातुलस्येह तदा प्रोक्ता महर्षिभिः ॥ २१ ॥ सौवर्णं राजतं वापि ताम्रं कांस्यमयं तु वा । दध्योदनेन संपूर्तं पात्रं दद्याच्छिशोः करे ॥ २२ ॥ समंत्रं भाजनं दत्वा स पश्येन्मातुलः शिशुम् । सालंकारं सवस्त्रं च शिशुमालिंग्य सादरः ॥ २३ ॥ तत्र मंत्रः । रक्ष भो भागिनेय त्वं रक्ष मे सकलं कुलम् । गृहीत्वा भाजनं सान्नं प्रसन्नो भव मे सदा ॥ २४ ॥ निर्विघ्नं कुरु कल्याणं निर्विघ्नां च स्वमातरम् । अध्यात्मानमधिष्ठाप्यं चिरंजीव मया सह ॥ २५ ॥ ततोभिनंदयेद्विद्वान्भगिनीं भगिनीपतिम् । होमं कृत्वा तिलाज्येन ब्राह्मणानपि पूजयेत् ॥ २६ ॥ एवंकृते विधानेन विघ्नं कोपि न जायते ॥ २७ ॥ नागार्जुनसंहितायाम्-सदंतं बालकं दद्याद्ब्राह्मणाय सदक्षिणम् । वत्सस्य मधुलाजानां प्राङ्मुखं दधिदीपयोः ॥ २८ ॥

इति श्रीज्योतिर्विद्दयादत्तात्मज रामदीनकृते संग्रहे बृहद्दैवज्ञरंजने संस्कारोक्तं एकोनषष्टितमं दन्तोत्पत्तिप्रकरणं समाप्तम् ।

---

## अथ षष्टितमं ताम्बूलभक्षणप्रकरणं प्रारभ्यते ।



व्यवहारचण्डेश्वरः—सार्द्धमासद्वये दद्यात्ताम्बूलं प्रथमं शिशोः । कर्पूरादिकसंमिश्रं विलासाय सुखाय च ॥ १ ॥ निबंधचूडामणौ—तांबूलं शिशवे दद्याद्ब्राह्मणेभ्योति भक्तितः । मेधावी सुभगः प्राज्ञो दर्शनीयश्च जायते ॥ २ ॥ गर्गः—दिनकरचन्द्रसमीरण मित्रं पुष्य पुनर्वसुरेवती चित्रा । मृगघटमन्मथकन्या समेतं पूगफलाशनमेभिरभीष्टम् ॥ ३ ॥ नृसिंहः—मूलादितिद्रविणपुष्यकरोत्तरासुपौष्णाश्विविष्णुरजनीकरशक्रभेषु । वारेषु जीवशशिसूर्यसितेंदुजानां तांबूलभक्षणविधिः कथितः शिशूनाम् ॥ ४ ॥ व्यवहारचण्डेश्वरः—मूलातिष्यकरेंदुविष्णुवरुणज्येष्ठाश्विनी रोहिणीमित्रर्क्षे रविजीवशुक्ररजनीनाथात्मजानां दिने । कन्यामीननृयुग्मगोः समुदये शस्तेषु चन्द्रादिषु प्रागपूगाशनमिष्यते शिशुजनस्यान्नादिकं प्राशनम् ॥ ५ ॥ दुश्चिक्यलाभारिपुकर्मगताश्च पापाः सौम्यग्रहा नवमपंचमकेन्द्रसंस्थाः । आरोग्यता विपुलभोगसुखोपभोक्ता तांबूलभक्षणविधौ च नरः प्रसिद्धः ॥ ६ ॥ रामः—वारे भौमार्किहीने ध्रुवमृदुलघुभैर्विष्णुमूलादितींद्रस्वातीवस्वम्बुपेतैर्मिथुनमृगवधूकुंभगे मीनलग्ने । सौम्येकेंद्रत्रिकोणैरशुभगगनगैः शत्रुलाभत्रिसंस्थैस्तांबूलं सार्द्धमासद्वयमितसमये प्रोक्तमन्नाशनेर्वा ॥ ७ ॥ निबंधचूडामणौ—मूलाश्विमित्रकरपुष्यहरींदुपूषाचित्रोत्तरा पवनशक्रपुनर्वसौ च । वारे रवींदुगुरुबोधनभार्गवानां तांबूलभक्षणविधिः शुभदः शिशूनाम् ॥ ८ ॥ त्रिषडायगते क्रूरे शुभे केन्द्रत्रिकोणगे । शिशोः सार्द्धद्वयेमासे सुभगं पूगभक्षणम् ॥९॥ राजमार्तंडे—पुष्योत्तरादितिदिवाकरवाजिपौष्णमूलानुराधवसुवासववैष्णवेषु ॥ वारेषु शौरिधरणीसुतवारवर्ज्यं तांबूलनूतनफलाद्यशनं शुभाय ॥१०॥ पर्णाग्रं पर्णमूलं च चूर्णपर्णं द्विपर्णकम् । गलितं शुष्कपर्णं च शक्रस्यापि श्रियं हरेत् ॥ ११॥ वसिष्ठः—पर्णमूले भवेद्व्याधिः पर्णाग्रे पापसंभवः । चूर्णपर्णं हरत्यायुः शिरा बुद्धिविनाशिनी ॥ १२ ॥ तस्मादग्रं च मूलं च शिरां चैव विशेषतः । चूर्णपर्णं वर्जयित्वा ताम्बूलं खादयेद्बुधः ॥ १३ ॥ अथ तांबूले ग्राह्यत्वं तत्रैव । सुपूगं च सुपत्रं च चूर्णेन च समन्वितम् । अदत्वा द्विजदेवेभ्यस्तांबूलं वर्जयेद्बुधः ॥ १४ ॥ एकपूगं सुखारोग्यं द्विपूगं निष्फलं भवेत् । अतिश्रेष्ठं त्रिपूगं च ह्यधिकं नैव दुष्यति ॥ १५ ॥ भारद्वाजः—पत्राणि नागवल्यास्तु द्विगुणं शुक्तिचूर्णकम् । अन्यैरस्पष्टके पंच पृष्ठचूर्णमलाततः ॥ १६ ॥ कर्पूरसंयुतं यत्तत्तांबूलमितिभाषितम् । प्रभाते पूगमधिकं मध्याह्ने खादिरं तथा ॥१७॥ निशासु चूर्णमधिकं तांबूलं भक्षयेत्सदा । भुक्तस्योपरितांबूलं लवंगं वा हरीतकीम् ॥ १८ ॥ आहारस्य तु पाकार्थं भोजयोद्भिषगुत्तमः । तांबूलेक्षुफले चैव भुक्तस्नेहानुलेपने ॥ १९ ॥

मधुपर्के च सोमे च नोच्छिष्टं मनुरब्रवीत् ॥ २० ॥ अथ चन्द्रसूर्ययोर्दर्शनम् । चूडामणौ–ततस्तृतीये कर्तव्यं मासि सूर्यस्य दर्शनम् । चतुर्थे मासि कर्तव्यं शिशोश्चन्द्रस्य दर्शनम् ॥ २१ ॥ इति श्रीमज्ज्योतिर्विद्वयादत्तात्मजरामदीनकृते संग्रहे बृहद्दैवज्ञरंजने संस्कारोक्तं षष्टितमं तांबूलभक्षणप्रकरणं समाप्तम् ।

## अथैकषष्टितमं निष्क्रमणप्रकरणं प्रारभ्यते ।

बृहस्पतिः–अथ वक्ष्ये शुभं काल उपनिष्क्रमणस्य तु । उपनिष्क्रमणो नाम गृहात्प्रथमनिर्गमः ॥ १ ॥ अकृतेस्यां क्रियायां वा श्रीरायुर्नाशनं शिशोः । कृते संपद्विवृद्धिः स्यादायुर्वर्धनमेव च ॥ २ ॥ अत्रिः–आर्द्राधोमुखवर्जितानुपहतेर्क्षे वाप्यरिक्ते तिथौ वारे भौमशनीतरे घटतुलासिंहालिकन्योदये । सद्दृष्टेथ चतुर्थमासि यदि वा मासे तृतीये शशिन्यक्षीणे शुभदं शिशोरथ गृहान्निष्कासनं कारयेत् ॥ ३ ॥ यमः–तृतीये मासि कर्तव्यं महः सूर्यस्य दर्शनम् । उपनिष्क्रमणं कुर्याच्चतुर्थे मासि सावने ॥ ४ ॥ व्यासः–मैत्रे पुष्यपुनर्वसुप्रथमभे पौष्णेनुकूले विधौ हस्ते चैव सुरेश्वरे च मृगभे तारासु शस्तासु च । कुर्यान्निष्क्रमणं शिशोर्बुधगुरौ शुक्रेष्वरिक्तातिथौ कन्यां कुंभतुलामृगारिभवने सौम्यग्रहालोकिते ॥ ५ ॥ चूडामणौ–ज्येष्ठादित्यकरोत्तराश्विविधिभे वातानुराधाहरौ पूषावार्द्धकिमूलवासवगुरौ मासे तृतीयेऽथवा । मंदारोत्थितवासरेथ धवले पक्षे शुभे रात्रिपे कुर्यादष्टमकेंद्रकोणरहिते पापे शिशोर्निष्क्रमम् ॥ ६ ॥ व्यवहारचंडेश्वरः–चतुर्थे निष्क्रमं कुर्यात्तृतीये योषितां सदा । तृतीये शुक्लपक्षे वा शिशोर्निष्क्रमणं गृहात् ॥ ७ ॥ मासे प्रशस्ते शशिवृद्धिपक्षे क्षपाकरे गोचरशोभनस्थे । उत्पातपापग्रहवर्जिते भे निष्कासनं सौख्यकरं शिशूनाम्॥ ८ ॥ कारिकायाम्–चतुर्थे मासि पुण्यर्क्षे शुक्ले निष्क्रमणं भवेत् । स्नातं स्वलंकृतं चाभिहितं स्वस्त्ययनं शुभम् ॥ ९ ॥ बहिर्निष्कासयेद्गेहाच्छंखपुण्याहनिस्वनैः । आदाय गेहान्निष्काम्य गच्छेयुर्देवतालयम् ॥ १० ॥ अभ्यर्च्य देवतां सम्यगाशिषो वाचयेदथ । कृत्वा प्रदक्षिणं गेहमानयंति ततः स्वकम् ॥ ११ ॥ इति श्रीज्योतिर्विद्वयादत्तात्मजरामदीनकृते संग्रहे बृहद्दैवज्ञरंजने संस्कारोक्तं एकषष्टितमं निष्क्रमणप्रकरणं समाप्तम् ।

## अथ द्विषष्टितमं उपवेशनप्रकरणं प्रारभ्यते ।

पंचमे च तथा मासि भूमौ समुपवेशयेत् । तत्र सर्वे ग्रहाः शस्ता भौमोप्यत्र विशेषतः ॥ १ ॥ तिथीं विवर्जयेद्रिक्तां शस्तान्यच्छृणु भामिनि । उत्तरात्रितयं सौम्यं पुष्यर्क्षं शक्रदैवतम् ॥ २ ॥ प्राजापत्यं च हस्तं च शस्तमश्विनमित्रभम् । वाराहं

पूजयेद्देवं पृथिवीं च तथा द्विजम् ॥ ३ ॥ पूजनं पूर्ववत्कृत्वा गुरुदैवद्विजन्मनाम् । भूभागमुपलिप्याथ तत्र कृत्वा सुमण्डलम् ॥ ४ ॥ शंखपुण्याहशब्देन भूमौ समुपवेशयेत् ॥ ५ ॥ मंत्रस्तु । रक्षेनं वसुधे देवि सदा सर्वगते शुभे । आयुःप्रमाणं सकलं निक्षिपस्व हरिप्रिये ॥ ६ ॥ बृहस्पतिना तु—चत्वरे सुशुचौ देशे गोमयाक्ते च सुस्थिते । समभूमौ सुपुष्पाढ्ये सुभृत्यैः परिवारिते ॥ ७ ॥ धान्यपद्मे सुखासीनं बालं बालामथापि वा । अर्चयेद्गंधपुष्पाढ्यं भस्म मूर्ध्नि ललाटके ॥ ८ ॥ न्यस्य रक्षां ततः कृत्वामृतसंजीविनीं जपेत् । तत्रार्चयेद्गणेशानं भूतेशानं तथैव च ॥ ९ ॥ अन्नेनैव बलिं दद्याद्दिक्षु सर्वासु दैववित् । दैवज्ञभिषगोपूजां यावच्छक्यंप्रयोजयेत् ॥ १० ॥ रामाचार्योपि चिंतामणौ—पृथिवीं वराहमभिपूज्य कुजे विशुद्धे रिक्ते तिथौ व्रजति पंचममासि बालम् । बध्वा शुभेह्नि कीटसूत्रमथ ध्रुवेंदु ज्येष्ठर्क्षमैत्रलघुभैरुपवेशयेत्कौ ॥ ११ ॥ तस्मिन् काले स्थापयेत्तत्पुरस्ताद्वस्त्रं शस्त्रं पुस्तकं लेखनीं च । स्वर्णं रौप्यं यच्च गृह्णाति बालस्तैराजीवैस्तस्य वृत्तिः प्रदिष्टा ॥१२॥ अन्यत्रापि-अग्रतोपि विनिक्षिप्य शिल्पभांडानि सर्वतः । शस्त्राणि चैव शास्त्राणि ततः पश्येत्तु लक्षणम् ॥ १३ ॥ प्रथमं यत्स्पृशेद्बालस्ततो भाण्डं स्वयं तदा । जीविका तस्य बालस्य तेनैव तु भविष्यति ॥ १४ ॥ तदन्यः—वस्त्रं शस्त्रं पुस्तकं लेखनीं च स्वर्णं रौप्यं शिल्पभांडादिकं च । काले तस्मिन्स्थापयेद्बालकस्य आदौ देवान् ब्राह्मणान् पूजयित्वा ॥ १५ ॥ यद्यद्वस्तु चास्पृशेद्बालकादौ तत्तत्तस्याजीविका वै वदंति । अथ दत्तकपुत्रपरिग्रहविधिः । पारिजाते शौनकः—अपुत्रो मृतपुत्रो वा पुत्रार्थं समुपोष्य च । वाससी कुंडले दत्वा उष्णीषं चांगुलीयकम् ॥ १६ ॥ बन्धूनन्नेन संभोज्य ब्राह्मणांश्च विशेषतः । अन्वाधानादि यत्तंत्रं कृत्वाज्योत्पवनांतकम् ॥ १७ ॥ तदा समक्षं गत्वा तु पुत्रं देहीति याचयेत् । दाने समर्थो दातास्मै येयज्ञेनेति पंचभिः ॥ १८ ॥ देवस्यत्वेति मंत्रेण हस्ताभ्यां परिगृह्य च । अंगादंगेत्यृचं जप्त्वा आघ्राय शिशुमूर्धनि ॥ १९ ॥ गृहमध्ये तमाधाय चरुं हुत्वा विधानतः । यस्त्वाहृदेत्यृचा चैव तुभ्यमग्र ऋचैकया ॥ २० ॥ सोमोददित्येताभिः प्रत्यृचं पंचभिस्तथा । स्विष्टकृदादि होमं च कृत्वा शेषं समापयेत् ॥ २१ ॥ ब्राह्मणानां सपिंडे च कर्तव्यः पुत्रसंग्रहः । तदभावे सपिंडो वा अन्यत्र तु न कारयेत् ॥ २२ ॥ वसिष्ठः—नत्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा न स्त्रीपुत्रं दद्यात्प्रतिगृह्णीयाद्वा अत्रानुज्ञानाद्भर्तुरिति । यत्तु समंत्रकहोमस्य पुत्रप्रतिग्रहांगत्वात् व्याहृत्यादि मंत्रपाठे च स्त्रीशूद्रयोरनधिकारात्तयोर्दत्तकः पुत्रो न भवत्येवेति शुद्धिविवेके । तन्नेत्यन्ये । भर्तुरनुज्ञया स्त्रिया अपि प्रतिग्रहोक्तेः । यद्यपि मेधातिथिना भार्यात्ववददृष्टरूपं दत्तकत्वं होमसाध्यमुक्तम् । स्त्रियाश्च होमासंभवस्तथापि व्रतादिवद्विप्रद्वारा होमादि कारयेदिति हरिनाथादयः । संबंधतत्वेप्येवं शूद्रस्यापि चैवं स्त्रीशूद्राश्च सधर्माणा इति स्मृतेः । अत-

एव पराशरेण शूद्रकर्तृको होमो विप्रद्वारैवोक्तः। दत्तके विशेषः। कालिकापुराणे- पितुर्गोत्रेण यः पुत्रः संस्कृतः पृथिवीपते। आचूडान्तं न पुत्रः सपुत्रतां याति चान्यतः॥ २३॥ चूडोपानयसंस्कारा निजगोत्रेण वै कृताः। दत्ताद्यास्तनयास्ते स्युरन्यथा दास उच्यते॥ २४॥ ऊर्ध्वं तु पंचमाद्वर्षान्न दत्ताद्याः सुता नृप। गृहीत्वा पंचवर्षीयं पुत्रेष्टिं प्रथमं चरेत्॥ २५॥ तन्मुहूर्तः। हस्तादि पंचकाभिषग्वसुपुष्यभेषु सूर्येक्षमाजगुरुभार्गववासरेषु। रिक्ताविवर्जिततिथिष्वलिकुंभलग्ने सिंहे वृषे भवति दत्तपरिग्रहोयम्॥ २६॥ इति श्रीज्योतिर्विद्वयादत्तात्मजरामदीनकृते संग्रहे बृहद्दैवज्ञरंजने संस्कारोक्तं द्विषष्टितमं उपवेशनप्रकरणं समाप्तम्।

## अथ त्रिषष्टितमं अन्नप्राशनप्रकरणं प्रारभ्यते।

भार्गवपुराणे असितवाक्यम्-अन्नमेव परब्रह्म प्रपंचत्वं च तत्कृतम्। प्रकृतिर्नाति संदेहः कथं चैतन्निबोध मे॥ १॥ ब्रह्मादितृणपर्यंतं यदेतदखिलं जगत्। सर्वमन्नमयं यस्मात् ब्रह्मा चेद्गूहि पार्थिवम्॥ २॥ बृहस्पतिनापि-शिशूनामन्नभुक्त्यर्थं वदामि समयं शुभम्। आदौ भोजनशक्तिः स्याद्भोजने जगतःस्थितिः॥ ३॥ निरोगित्वं च भोज्ये न बलं तेजोजवस्तथा। दीर्घायुष्यं च सर्वेषां श्रीमता च तथा नृणाम्॥ ४॥ षष्ठे मासि शुभे चंद्रे पक्षे चाप्यसितेतरे। अन्नस्य प्राशनं कुर्याद्द्विताय प्रथमं शिशोः॥ ५॥ पुंसोन्नप्राशनं कुर्यान्मासे षष्ठे सदा बुधैः। स्त्रीणां तु पंचमके मासि आधानादष्टकेपि च॥ ६॥ नारदः-षष्ठे मास्यष्टमे वापि पुंसां स्त्रीणां तु पंचमे। सप्तमे मासि वा कार्यं नवान्नप्राशनं शुभम्॥ ७॥ गर्गः-युग्मेषु मासेषु च षट्सु पुंसां संवत्सरे वा नियतं शिशूनाम्। अयुग्ममासेषु च कन्यकानां नवान्नसंप्राशनमिष्टमेतत्॥ ८॥ षष्ठादि युग्ममासेषु शिशूनामन्नभोजनम्। कन्यानां पंचमान्मासादयुग्मे भोजनं स्मृतम्॥ ९॥ वसिष्ठः-बालान्नभोजनविधौ गुरुशुक्रमौढ्यं मासप्रयुक्तमशुभं त्वधिमासदोषः। नास्त्यत्र सावनविधाविह मासि षष्ठे युग्मे च मासि परतः सितचन्द्रपक्षे॥ १०॥ नारदः-सीमंतादीनि कर्माणि प्राशनांतानि यानि वै। न दोषो मलमासस्य मौढ्यस्य गुरुशुक्रयोः॥ ११॥ रिक्तादिनक्षयं नंदा द्वादशीमष्टमीममाम्। त्यक्त्वान्यतिथयः श्रेष्ठाः प्राशने शुभवासराः॥ १२॥ पंचपर्वसु रिक्तायां नंदायामाद्यभोजनम्। बलमायुर्यशो हंति सप्तम्यां चेति केचन॥ १३॥ एकादश्यां च सप्तम्यां द्वादश्यां पंचपर्वसु। बलमायुर्यशो हन्याच्छिशूनामन्नभोजने॥ १४॥ वाचालो बलवन्दिने दिनकरे अत्यंतदीप्तानलो देहहनिहुताशनः शशिरुचो भौमे रुजापीडितः। बोधे भोगसुखी प्रियः प्रथमभुक् जीवे चिरायुः सुखी शुक्रे कांतिबलाधिकेतिमलिनो मंदे च मंदानलः॥ १५॥ राजमार्तंडे-

हस्तः पुष्यपुनर्वसूकमलजत्वाष्ट्रेंदुमित्राश्विनीवायव्योत्तरवासवानिलमघापौष्णेष्वरिक्ते तिथौ । वारेष्विंदुजभार्गवेंदुदिनकृद्वाचस्पतीनां शिशोरन्नप्राशनमंगनामिथुनगोमीनोदये शोभनम् ॥ १६ ॥ प्रदीपे-विष्णुरुष्णकिरणो हिमरश्मिः वायुमित्रवरुणादितिचित्रा । अश्वितिष्यवसुपौष्णरोहिणी त्र्युत्तराश्च शिशुभोजनतारा ॥ १७ ॥ चूडामणौ-रेवत्यश्विपुनर्वसूहरियुगब्राह्मचानुराधा गुरुस्वातीभानुमघाविशाखरजनीनाथोत्तरा त्वष्ट्रिभे । वारे सूर्यशशांकबोधनगुरौ शुक्रेप्यरिक्ते तिथावन्नप्राशनमीरितं मिथुनगोकन्याझषे सूरिभिः ॥ १८ ॥ रामाचार्यः-रिक्तानंदाष्टदर्शं हरिदिवसमथो सौरिभौमार्कवारं लग्नं जन्मर्क्षलग्नाष्टमगृहलवगं मीनमेषालिकं च । हित्वा षष्ठात्समेमास्यथ च मृगदृशां पंचमादोजमासे नक्षत्रैः स्यात्स्थिराख्यैः समृदुलघुचरैर्बालकान्नाशनं सत् ॥ १९ ॥ नारदः-षष्ठे मासि सिते पक्षे शुभे केंद्रत्रिकोणगे । त्रिषडायगते क्रूरे चन्द्रे मृत्यार वर्जिते ॥ २० ॥ ज्योतिर्विवरणे-जन्मर्क्षे श्रीक्षयं विंद्यात्कर्मर्क्षे चापि सौख्यकृत् । आधानर्क्षे च बालानां भोजनं रोगनाशनम् ॥ २१ ॥ वृद्धनारदः-यदा वाराधिपस्तिष्ठेत्स्वोच्चमित्रगते तदा । गुरुणा वलिना वापि वीक्षितश्च वलान्वितः ॥ २२ ॥ बृहस्पतिः-केंद्रत्रिकोणयोराद्ये लग्ने शोभनदो गुरुः । अशोभनस्तु षष्ठाष्टभ्रातृष्वन्त्यगतस्तथा ॥ २३ ॥ लग्नार्थसहजात्मार्थ वंध्वायाष्टनवस्थितः । शुक्रः शुभकरो भुक्तो स्मरार्यस्तेन शोभनः ॥ २४ ॥ त्रिषडायगताः सूर्यराहुभौमयमास्तथा । भोक्तुः शुभकराः सर्वे पापाः शेषास्त्वशोभनाः ॥ २५ ॥ सितपक्षे शुभांशस्थे चन्द्रे जीवस्त्रिकोणगे । शुक्रे च कंटके लग्नाद्योगोयं नवभोजने ॥ २६ ॥ त्रिषडायेष्वथैकस्मिन्क्रूरे वलसमन्वितः । केंद्रे शुभे वलयुते योगो भोजनशोभनः ॥ २७ ॥ भवोदयार्थभ्रातृस्था मंदशुक्रज्ञभास्कराः । क्रमाद्रवौ कुजे वापि योगोमृतसमः शनैः ॥ २८ ॥ शुभांशे शीतगो भोक्तुर्दद्युरायुः श्रियं शुभाम् । एवं भोज्यं नवत्वेपि कथित ब्रह्मणा स्वयम् ॥ २९ ॥ नवारामादिभिः सिद्धः फलपत्रादयस्तथा । गजादिवाहनाः सर्वे नवभोज्याश्चिरायते ॥ ३० ॥ कालिदासः-अज्ञातिजातिगुणरूपविधानकानामन्नादिबीजरसपुष्पफलौषधानाम् । संसेवनं सुकृतसौख्ययशोभिवृद्ध्यै निःसंशयं नरवरो विदधीतनात्र ॥ ३१ ॥ शिरावेष्टस्तु यो भुंक्ते दक्षिणाभिमुखस्तु यः । वामपादकरः स्थित्वा तद्वै रक्षांसि भुंजते ॥ ३२ ॥ इति श्रीज्योतिर्विद्वयादत्तात्मज रामदीनकृते संग्रहे बृहद्दैवज्ञरंजने त्रिषष्टितमं अन्नप्राशनप्रकरणं समाप्तम् ।

## अथ चतुष्षष्टितमं अब्दपूर्तिप्रकरणं प्रारभ्यते ।



मुहूर्तगणपतौ-प्रतिवर्षं तु जन्माहे स्नायादुत्सवपूर्वकम् । गणेशांबां समभ्यर्च्य देवताश्चिरजीविनः ॥ १ ॥ कृत्वायुष्यं च विध्युक्तं कर्मदानान्यनेकशः । वध्वा मंगल-

सूत्रं च भुक्तमिष्टजनैः सह ॥ २ ॥ ज्योतिषरत्ने श्रीधरः–वर्षांतजन्मदिवसे रविमासशुद्धे संस्नाप्य शांतिकरकर्मचिराय कृत्वा । आविध्य हेमकटिसूत्रमथानुकूले लग्ने शिशोर्नवतरांवरयोगमाहुः ॥ ३ ॥ विधिरत्ने–अब्देन सौरेण शिशोः समांते बालं सुसंस्नाप्य च जन्मधिष्णे । कृत्वायुषो वृद्धिकरं च कर्म तं धारयेच्छांतिं सुवर्णसूत्रम् ॥ ४ ॥ मुहूर्ततत्त्वे–जन्मर्क्षे वाह्नि हैमं सुतनुषु कटिसूत्रादि वध्वाब्दपूर्तिः । पारिजाते–प्रतिसंवत्सरांतर्क्षे वक्ष्ये नृणां विधिं पराम् । दत्वा गोभूहिरण्यादि तथा स्वर्णादि निर्मितम् ॥ ५ ॥ बध्नीयात्कटिसूत्रं च वासः संगृह्य नूतनम् । दूर्वांकुरैरथाद्येन चरुणा च पिनाकिनम् ॥ ६ ॥ आयुष्यहोमं कृत्वा च तर्पयेत्पितृदेवताः ॥ ७ ॥ आदित्यपुराणे–सर्वैश्च जन्मदिवसे स्नातैर्मंगलवारिभिः । गुरुविप्राग्निदेवाश्च पूजनीयाः प्रयत्नतः ॥ ८ ॥ स्वनक्षत्रं च पितरस्तथा देवाः प्रजापतिः । प्रतिसंवत्सरं यत्नात्कर्तव्यं च महोत्सवः ॥ ९ ॥ विवादं च उदासीनं तथा च कटुभोजनम् । मुंडनं नखकेशानां मैथुनं नैव कारयेत् ॥ १० ॥ खर्जूरमात्मगात्राणि त्यागं च नखकेशयोः । मैथुनं च विवादं च वर्जयेदिह जन्मनि ॥ ११ ॥ अथ तैलाभ्यंगः । रविस्तापं कांतिं वितरति शशी भूमितनयो मृतिं लक्ष्मीं चांद्रिः सुरपतिगुरुर्वित्तहरणम् । विपत्तिं दैत्यानां गुरुरखिलभोगानुभवनं नृणां तैलाभ्यंगात्सपदि कुरुते सूर्यतनयः ॥ १२ ॥ रवौ पुष्पं गुरौ दूर्वां भौमवारे च मृत्तिकाम् । शुक्रे च गोमयं क्षिप्यं तैले स्नानं सुखावहम् ॥ १३ ॥ नार्कारवारे न च संक्रमेपि न वैधृतौ न व्यतिपातयोगे । न पक्षमध्ये न च विष्टिषष्ठ्योरभ्यंग इष्टो न च पर्वसूक्तः ॥ १४ ॥ चतुर्दश्यष्टमी दर्शे पौर्णिमास्यर्कसंक्रमे । तैलस्नानं न कुर्वीत सुतबन्धुधनक्षयः ॥ १५ ॥ सार्षपं गंधतैलं च पक्वतैलं यदौषधे । अन्यद्रव्ययुतं वापि तत्तैलं नैव दुष्यति ॥ १६ ॥ धर्मसारे–मंत्रितं क्वथितं तैलं सार्षपं पुष्पवासितम् । द्रव्यान्तरयुतं वापि नैव दुष्येत्कदाचन ॥ १७ ॥ स्त्रीसंगं खादनं पानं स्वाध्यायं क्षुरकर्म च । न कुर्याद्दन्तसंघर्षं तैलं शिरसि संस्थिते ॥ १८ ॥ तैलाभ्यंगो न दोषाय प्रत्यहं क्रियते च यः । उत्सवे वातरोगे वा यत्र वाचनिकोपि वा ॥ १९ ॥ इति श्रीज्योतिर्विद्वयादत्तात्मजरामदीनकृते संग्रहे बृहद्दैवज्ञरंजने संस्कारोक्तं चतुष्षष्टितमं अब्दपूर्तिप्रकरणं समाप्तम् ।

## अथ पंचषष्टितमं चूडाप्रकरणं प्रारभ्यते ।

अथ मुंडनप्रकारमाह । बृहस्पतिः–अथानंतरमुक्तं हि क्षुरकर्म विचक्षणैः । क्षुरेणैवायुषो वृद्धिः कृतेन समये शुभे ॥ १ ॥ अशुभे समये चैव कृतमायुःक्षयाय च । तेजोबलं यशो वीर्यं वृद्धिनाशक्रमात्तथा ॥ २ ॥ तस्मात्सम्यक्परीक्ष्यैव कर्तव्यं क्षौरमायुषे । बुधैरायुष्यमित्युक्तं चूडाकर्मैव तेन हि ॥ ३ ॥ शतवर्षे स्थिते

नृणां अर्थान्मृत्युं जिघांसते । कुर्वंत्यकाले ये क्षौरं तेनायुर्हीयते यतः ॥ ४ ॥ क्षौरेणायुर्विवृद्धिः स्यात्क्षौरेणायुःक्षयस्तथा । सदसत्कालयोर्नॄणां कृते चाल्पदिने दिने ॥ ५ ॥ अनाचाराननाज्ञानानकाले क्षुरकारिणः । दुरंत्याद्यास्तमालस्यान्मृत्युर्मर्त्यान्समाप्नुयात् ॥ ६ ॥ तृतीयेब्दे शिशोर्गर्भाज्जन्मतो वा विशेषतः । पंचमे सप्तमे वापि स्त्रियः पुंसोथवा समे ॥ ७ ॥ द्वितीये जन्मनि सार्द्धं कदाचिदाभिधीयते । त्रैवर्णिकानामेवैतन्नान्येषां समयोंत्यगः ॥ ८ ॥ चंडेश्वरः—चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः । प्रथमेब्दे तृतीये वा कर्तव्यं श्रुतिदर्शनात् ॥ ९ ॥ षड्गुरुशिष्यः—आद्येब्दे कुर्वते केचित्पंचमेन्ये द्वितीयके । उपनीतया सहैवेति विकल्प्या कुलधर्मतः ॥ १० ॥ नारदः—तृतीये पंचमेब्दे वा स्वकुलाचारतोपिवा । बालानां जन्मतः कार्यं चौलमावत्सरत्रयात् ॥ ११ ॥ वृद्धनारदः—जन्मतस्तु तृतीयेब्दे श्रेष्ठमिच्छंति पंडिताः । पंचमे सप्तमे वापि जन्मतो मध्यमं भवेत् ॥ १२ ॥ अधमं गर्भतः स्यात्त नवमैकादशेपिवा ॥ १३ ॥ बृहस्पतिः—उत्तरायणगे सूर्ये विशेषात्सौम्यगोलके । अधिमासोतिनिंद्यः स्यात्संसर्पांहस्पतौ तथा ॥ १४ ॥ गुरुशुक्रौ सुदृश्येते यदातिस्फुटमंबरे । बालवृद्धाह्वयं कालं प्रतीत्येव तयोर्द्वयोः ॥ १५ ॥ यस्याः क्रियायाः समोक्तः काले मासैर्दिनैरपि । तस्या न दोषमूढत्वं वक्रं वा जीवशुक्रयोः ॥ १६ ॥ वर्षसंख्याविधिः प्रोक्तः शुभेष्वेवाशुभास्तयोः । मूढतामरिशत्रूणां ब्रह्मणा चोदिता स्वयम् ॥ १७ ॥ देवानां स्थापने काले यज्ञादावथ नित्यके ॥ राज्ञाभिषेके पूर्वं च तयोर्मौढ्यमशोभनम् ॥ १८ ॥ नगरग्रामपूर्वाणांमालिकारंभणादिषु । गर्भन्यासादिनां चैव तयोर्मौढ्यमशोभनम् ॥ १९ ॥ माहेश्वरः—चूडाकर्म नृपाभिषेकनिलयाग्न्याधानपाणिग्रहो देवस्थापनमौंजिबंधनविधिः कुर्यान्न याम्यायने । देवेज्यास्फुजिते न चास्तमितयोर्वृद्धे च बाल्ये तयोः केतावभ्युदिते तथा ग्रहणतो यावत्तिथिश्चाष्टमी ॥ २० ॥ रामः—ऋतुमत्याः सूतिकायाः सूनोश्चौलादि नाचरेत् ॥ २१ ॥ विशेषतस्तु विवाहप्रकरणे द्रष्टव्यम् । गर्भिण्यां मातरि शिशोः क्षौरकर्म न कारयेत् । पुत्रचूडाकृतौ माता गर्भिणी यदि सा भवेत् । शस्त्रेण मृत्युमाप्नोति तस्मात्क्षौरं विवर्जयेत् ॥ २२ ॥ नारदः—चूडाकर्म न कर्तव्यं यस्य माता तु गुर्विणी । करोति यदि मूढात्मा तदा गर्भस्य नो शुभम् ॥ २३ ॥ परिशिष्टे—माता कुमारमादायेत्युक्तं कात्यायनादिभिः । सा चेद्यदि सगर्भा स्यात्तदा चौलं न कारयेत् ॥ २४ ॥ चूडामणौ—पुत्रचूडाकृतौ माता गर्भिणी यदि सा भवेत् । विपद्यते गुरुश्चैव दंपती चतुरब्दतः ॥ २५ ॥ गर्भे मातुः कुमारस्य न कुर्याच्चौलकर्म तु । पंचमासादधः कुर्यादत ऊर्ध्वं न कारयेत् ॥ २६ ॥ अस्यापवादः । नारदः—सूनोर्मातरि गर्भिण्यां चूडाकर्म न कारयेत् । पंचमाब्दादथोर्ध्वं तु गर्भिण्यामपि कारयेत् ॥ २७ ॥ गर्गः—ज्वरमुत्पादनं यस्य लग्नं तस्य न कारयेत् । दोष-

निर्गमनात्पश्चात्स्वस्थो धर्मं समाचरेत् ॥ २८ ॥ पराशरः-माघादिपंचके चौलं हित्वा क्षीणं विधुं मधुम् । क्रूरवारं तिथिं रिक्तां षष्ठिं संध्यां च जन्मभम् ॥ २९ ॥ चूडामणौ-न जन्म मासे न च जन्मभे तथा विधौ विरुद्धे शुभतारकासु । युग्माब्दमासे न च कृष्णपक्षे चूडा न कार्या खलु चैत्रमासे ॥ ३० ॥ क्षौरं च व्रतबन्धं च विद्यारंभस्तथैव च । गलग्रहे न कर्तव्यं यदिच्छेत्पुत्रजन्मनि ॥ ३१ ॥ षष्ठ्यष्टमीद्वादशीषु रिक्तापर्वाविमेषु च । गलग्रहे च भद्रायां क्षुरकर्म न कारयेत् ॥ ३२ ॥ बृहस्पतिः-शुक्लपक्षे शुभं प्रोक्तं कृष्णपक्षे शुभेतरम् । अशुभोंत्यत्रिभागः स्यात्कृष्णपक्षे निराकृते ॥ ३३ ॥ मनुः-द्वितीया च तृतीया च पंचमी दशमी नृणाम् । एकादशी द्वादशी च प्रशस्ता क्षौरकर्मणि ॥ ३४ ॥ वसिष्ठः-द्वित्रिपंचमसप्तम्यामेकादश्यां तथैव च । दशम्यां च त्रयोदश्यां कार्यं क्षौरं विजानता ॥ ३५ ॥ चंडेश्वरः-आयुःक्षयं प्रकुरुते दिनकृद्दिने च दोषापतेरपि सुखानि च दीर्घमायुः । पृथ्वीसुतस्य च सुरैरपि रक्षितानां क्षौरं करोति निधनं न चिरान्नराणाम् ॥ ३६ ॥ आरोग्यमिंदुजदिने चिरजीवितश्च जीवस्य जीवितमति प्रबलं बलं च । नानाविधं विषयभोगसुखं सितस्य मंदस्य मुंडनविधौ विभवत्प्रणाशः ॥ ३७ ॥ वासं हरेत्क्षौरमिहायुषोर्कः शनैश्चरः पंचकुजस्तथाष्टौ । आचार्यभृग्विदुबुधाः क्रमेण दध्युर्दशैकादशसप्तमं च ॥ ३८ ॥ गुरुः-पापग्रहाणां वाराश्च निंदिताः क्षुरकर्मणि । शुभग्रहाणां ये वारास्ते पूज्या ब्रह्मणोदितम् ॥ ३९ ॥ बुधवारो शुभः प्रोक्तः पापग्रहयुते बुधे । सोमवारः सिते पक्षे पूज्यः कृष्णेतिगर्हितः ॥ ४० ॥ नक्षत्रेषु करक्षपाकरगुरुज्येष्ठाधनिष्ठाश्विनीपौष्णादित्यनिलर्क्षवारुजहरित्वाष्ट्रेषु शस्ते क्षणे । कर्तव्यं क्षणदाकरे बलवति क्षौरं सुताराग्विते प्रोक्तर्क्षेपि नवे हि पक्षविरतौ कुर्यान्नरिक्ते तिथौ ॥ ४१ ॥ राजमार्तंडेपौष्णाश्वितिष्यवसुवासववासुदेववातार्कचन्द्रवरुणादितिचित्रभेषु । वारेषु सोमबुधवाक्पतिभार्गवानां क्षौरं हितं शुभफलं शुभतारकासु ॥ ४२ ॥ बृहस्पतिः-नक्षत्राणां तथा तेषामश्विन्याद्यं पृथक् पृथक् । शुभाशुभफलं वक्ष्ये नव क्षौरे न वा नवे॥ ४३ ॥ अश्विन्यां तुष्टिमाप्नोति भरण्यां मरणं भवेत् । कृत्तिकासु क्षयो रोगो रोहिण्यां रोगनाशनम् ॥ ४४ ॥ सौभाग्यवृद्धिः सौम्ये स्याद्रौद्रे वित्तस्य नाशनम् । पराक्रमं पुनर्वस्वोः पुष्ये मानार्थसिद्धये ॥ ४५ ॥ सार्पे शरीरपीडा स्याद्धननाशश्च पैतृके । व्याधयो बहवो भाग्ये फाल्गुने रोगनाशनम् ॥ ४६ ॥ तेजोवृद्धिश्च हस्ते स्यात्सौभाग्यं त्वाष्ट्रभे भवेत् । स्वात्यां दुःखविनाशः स्यादैंद्राग्नेर्वै नाशनम् ॥ ४७ ॥ मैत्रे मित्रविरोधः स्याज्ज्येष्ठायां भूतिनाशनम् । समूलनाशनं मूले पूर्वाषाढे च पूर्ववत् ॥ ४८ ॥ सौम्यमत्युत्तराषाढे वैष्णवे रूपशोभनम् । वासवे ह्यायुषो वृद्धिर्वारुणे बलवर्द्धनम् ॥ ४९ ॥ पूर्वप्रोष्ठपदे मृत्युरहिर्बुध्न्ये सुखावहः । पौष्णे स्यान्महती वृद्धिरेवं क्षौरे फलं क्रमात् ॥ ५० ॥ संपदि क्षेमभे मैत्रे साधकेभेति मैत्रके । क्षुरकर्म प्रशस्तं

स्याच्छोभनांशगते विधौ ॥ ५१ ॥ आद्यंशो विपदि त्याज्यः प्रत्यरे चरमांशकः । वधे त्याज्यः तृतीयांशः शेषांशा अपि शोभनाः ॥ ५२ ॥ जन्माष्टमे विधौ याति क्षौरमायुःक्षयाय च । तस्माच्चन्द्राष्टमं वर्ज्यं सर्वथा क्षुरकर्मणि ॥ ५३ ॥ आकोकेरश्च मत्स्यश्च बुधशुक्रेंदुराशयः । क्षुरकर्मणि पूज्याः स्युः ग्रहाणां च स्वभावतः ॥ ५४ ॥ व्याधिशोकप्रदौ सिंहवृश्चिकौ क्षुरकर्मणि । अतीवदुःखदो मेषश्चापोराजभयप्रदः ॥ ५५ ॥ कुंभः कुलविनाशाय कथितः क्षुरकर्मणि । शुभैर्युक्तोपि दृष्टोपि न शुभः कुंभधृग्ग्रहः ॥ ५६ ॥ चण्डेश्वरः—क्षौरर्क्षे स्वकुलोद्भवेन विधिना चूडा विधेया बुधैर्लग्नस्थे भृगुजे चतुष्टयगते जीवेथवा बोधने । मंदार्कावनिनंदनैश्च शशिना क्षीणेन युक्तेषु च लाभारातितृतीयभेषु विहिते लग्नोद्गमे सर्वदा ॥ ५७ ॥ बृहस्पतिः—अष्टमस्था ग्रहाः सर्वे नेष्टाः शुक्रविवर्जिताः । शुक्रो निधनगः क्षौरे सर्वसंपत्प्रदः शिशोः ॥ ५८ ॥ त्रिकोणकंटके वापि सत्कर्मणि रते विधौ । गुरुर्वातिवलीप्रोक्तः क्षौरयोगः शुभावहः ॥ ५९ ॥ सिते पक्षे विधौ पूर्णे भवेल्लग्नाद्ग्रहो वली । लग्नस्थोपचये नाथे चूडायोगः शुभावहः ॥ ६० ॥ गुरुर्भृगुर्वा चन्द्रो वा शुभांशस्थो वलान्वितः । यदोपचयगो लग्नात्क्षौरयोगः शुभावहः ॥ ६१ ॥ लग्नेंदुराशिनाथौ द्वौ भवनाथयुतेक्षितौ । भवेत्कश्चिद्वलीस्यार्थे चूडायोगः शुभावहः ॥ ६२ ॥ मीनशुक्रेण लग्नस्थो भवे भानौ चतुष्टये । गुरौ याते वरो योगः शुभदः क्षुरकर्मणि ॥ ६३ ॥ घटे सशुक्रे लग्नस्थे सबुधे व्ययगे रवौ । त्रिकोणगे गुरौ चन्द्रे चूडायोगोयमुत्तमः ॥६४॥ मीने मेषे वृषे लग्ने ससिते भवगे रवौ । बुधोदये च योगाः स्यु श्चूडाकर्मणि शोभनाः ॥ ६५ ॥ यमे कर्किणि सिंहेन सहिते भृगुजे बुधे । रवौ भवे व्यये वापि योगः क्षौरे शुभावहः ॥ ६६ ॥ भवव्ययोदये भानुः बुधशुक्रौ यदा स्थितौ । चन्द्रे शुभांशके केंद्रे चूडायोगः शुभावहः ॥ ६७ ॥ त्रिषडायेषु पापेषु शुभाः केंद्रत्रिकोणयोः । एको द्वौ वा यथालाभं चूडायोगः शुभावहः ॥ ६८ ॥ क्षौरे स्मरस्थौ भौमार्कौ मृत्युदं नियतं शिशोः । यमो भाग्यविनाशाय सर्वनाशाय भार्गवः ॥ ६९ ॥ स्मरेज्ञचन्द्रजीवाः स्युः क्षौरे संपद्विवृद्धये । राहुकेतू स्मरस्थाने सर्वकार्यविनाशनौ॥ ७० ॥ पापग्रहाणां वारादौ विप्राणां तु शुभो रवेः । क्षत्रियाणां क्षमासूनुर्विट्शूद्राणां शनिः शुभः ॥ ७१ ॥ संध्ययोर्निशि निर्वेशः प्रवेशः क्षुरकर्मजः । प्रधानं चैव वर्ज्यास्युस्तैलाभ्यंगं विशेषतः ॥ ७२ ॥ श्रीपतिः—षट्कृत्तिका पंच मघास्त्रिमैत्रो ब्रह्म्याष्टको यश्चतुरुत्तराश्च । क्षौरं सवर्षं चतुराननोपि न प्राणतीति प्रकटप्रवादः ॥ ७३ ॥ गर्गः—क्षौरकर्म महीशानां पंचमे पंचमेहनि । कर्तव्यं क्षौरनक्षत्रेप्यथवा तन्मुहूर्तके ॥ ७४ ॥ राज्ञः कुर्यात्पंचमे पंचमेह्नि क्षौरर्क्षे वा श्मश्रुकर्मोदये वा । त्यक्त्वा ताराः पंचसप्तत्रिपूर्वाः यात्राकाले नैव कार्यं न युद्धे ॥ ७५ ॥ चन्द्रशुद्धिर्यदा नास्ति तारायाश्च विशेषतः । अक्षौरभेपि कर्तव्यं वारेण बुधसोमयोः ॥ ७६ ॥

प्राचीमुखः सौम्यमुखोपि भूत्वा कुर्यान्नरः क्षौरमनुत्कटस्थः ॥ ७७ ॥ नृपाज्ञया ब्राह्मणसंमतौ च बद्धस्य मोक्षे क्रतुदीक्षणे च। विवाहकाले मृतसूतके च सर्वेषु शस्तं क्षुरकर्मभेषु ॥ ७८ ॥ नृपविप्राज्ञया यज्ञे मरणे बंधमोक्षणे। उद्वाहे खिल्वारर्क्षतिथिषु क्षौरमिष्टदम् ॥ ७९ ॥ बृहस्पतिः-राजाज्ञया च दीक्षायां प्रत्यये रोगपीडिते। क्षुरकर्माणि कर्तव्या नास्ति कालविधिर्नृणाम् ॥ ८० ॥ राजकार्यनियुक्तानां नटानां रूपजीविनाम्। श्मश्रुरोमनखच्छेदे नास्ति कालविशेषता ॥ ८१ ॥ मृते च सूतके चैव व्रतान्ते निष्कृतिं तथा। विवाहे द्वादशाहे वा सीमंते राजशासन ॥८२॥ क्षौरं सद्यः प्रयुंजीत देहरंगोपजीविनाम्। एवं भूतेषु चान्येषु प्राप्ते त्वावश्यकेष्वपि ॥ ८३ ॥ क्षौरेषु कालो नापेक्ष्यो वज्रिन् कर्तव्यतां ययुः। चिरं बिभ्रंति ये केशान् श्मश्रूंस्ते ब्रह्मचारिणः ॥ ८४ ॥ कारणे सति कुर्वंति क्षौरं हि परमायुषः। दर्शे च पौर्णिमास्यां च द्वादश्यां सोमपः शुभः ॥ ८५ ॥ अस्यैव रात्रौ कर्तव्यमन्येषां च विवर्जयेत् ॥ ८६ ॥ पंचाशद्वायनात्पूर्वं क्षौरं नैमित्तिकं विना। कुर्यान्नरस्तदूर्ध्वं तु स्वेच्छया वपनं चरेत् ॥ ८७ ॥ शुद्धानि यानि मुनिभिः क्षौरं धिष्ण्यानि संप्रदिष्टानि। दंतनखकूर्चवपने प्रोक्तानि शुभानि तान्येव ॥ ८८ ॥ न स्नातमात्रगमनोत्सुकभूषितानामभ्यक्तभुक्तरणकालनिवेशितानाम्। संध्या निशा कुजदिने च तिथौ च रिक्ते क्षौरं हितं न नवकेऽह्नि न चापि विष्टयाम् ॥ ८९ ॥ नारदः-अभ्यक्ते संध्ययोर्नीत निशि भोक्तुर्न चाहवे। नोत्कटे भूषिते नैव यानेन नवमेऽह्नि च ॥ ९० ॥ भद्रापक्षांतरिक्ताव्रतदिनवसुभूश्राद्धषष्ठीषु रात्रौ सध्यापातारभास्वत्शनिषु घटधनुःकर्ककन्यागतेर्के। जन्मर्क्ष जन्ममासे सुरदिनयजने भूषितो ग्रामयायी भुक्तोभ्यक्तोभिषिक्तः समदिनराजिभः श्मश्रुकार्यं न कुर्यात् ॥ ९१ ॥ चूडाकरणे क्षौरे च मन्त्रस्मरणम्। केशवमानर्तपुरं पाटलिपुत्रं पुरीमहच्छत्रम्। दितिरदितिश्च स्मरता क्षौरविधौ भवति कल्याणम् ॥ ९२ ॥ इति श्रीज्योतिर्विद्वयादत्तात्मजरामदीनज्योतिर्वित्कृते संग्रहे बृहदैवज्ञरंजने संस्कारोक्तं पंचषष्टितमं चूडाप्रकरणं समाप्तम्।

---

## अथ षट्षष्टितमं दंतधावनप्रकरणं प्रारभ्यते।



बृहस्पतिः-अथानंतरमुक्तं हि दंतधावनकर्मणः। पंचमे सप्तमेऽब्दे वा स्त्रियः पुंसोऽथवा समे ॥ १ ॥ दंता नित्यं सुधाख्यास्युर्यतिभिः सोमयाजिभिः। एतैस्तु शुक्रवारे वा भानुवारेन्दुयोरपि ॥ २ ॥ नक्षत्रे विषता न स्याद्दंतधावनकारिणः। पक्षयोगास्तथा नैव विशेषाद्दंतधावने ॥ ३ ॥ नारदः-दर्शषष्ठ्यां प्रतिपदि द्वादश्यां प्रतिपर्वसु। प्रतिपद्दर्शषष्ठीषु न कदाचिद्दंतधावनम् ॥ ४ ॥ चंद्रोदये विष्णुः-प्रतिपद्दर्शषष्ठीषु चतुर्दश्यष्टमीषु च। नवम्यां भानुवारे च दंतकाष्ठं विवर्जयेत् ॥ ५ ॥

दर्शषष्ठ्यां प्रतिपादि द्वादश्यां प्रतिपर्वसु । नवम्यां न च कुर्वीत कदाचिद्दंत-
धावनम् ॥ ६ ॥ नारदः—चतुर्दश्यमष्टमी पौर्णमासीसंक्रमणेषु च । नंदासु
च नवम्यां च दंतकाष्ठं विवर्जयेत् ॥ ७ ॥ श्राद्धे यज्ञे च नियमे तथा प्रोषित-
भर्तृका । व्यतीपाते च संक्रांत्यां नंदाभूताष्टपर्वसु ॥ ८ ॥ तैलं क्षौरं रतिं
मांसं दंतकाष्ठं विवर्जयेत् ॥ ९ ॥ वसिष्ठः—शन्यर्कशुक्रवारेषु कुजाहे व्रतवासरे ।
जन्माहे श्राद्धदिवसे दंतकाष्ठं विवर्जयेत् ॥ १० ॥ चतुर्दश्यष्टमी कृष्णा
त्वमावस्या च पूर्णिमा । पुण्यानि पंच पर्वाणि रविसंक्रातिरेव च ॥ ११ ॥
पंचपर्वसु नंदासु न कुर्याद्दन्तधावनम् । तत्र कुर्याद्दनादत्य स नरो विधि-
हंतकः ॥ १२ ॥ संवर्तः—रवौ विवाहे आशौचे वर्जयेद्दन्तधावनम् ॥ १३ ॥
हेमाद्रौ स्कान्दे—अभ्यंगे जलधिस्नाने दंतधावनमैथुने । जाते च निधने चव तत्काल
व्यापिनी तिथिः ॥ १४ ॥ वाराहीये—वल्ली लतागुल्मतरुप्रभेदैः स्युर्दंतकाष्ठानि
सहस्रशो यैः । फलानि वाच्यान्यपि तत्प्रसंगान्माभूदतो वच्म्यथ कामिकानि ॥१५॥
अज्ञातपूर्वाणि न दंतकाष्ठान्यद्यान्नपत्रैश्च समन्वितानि । न युग्मपर्वाणि न पाटि-
तानि न चौर्ध्वशुष्काणि विना त्वचा वा ॥ १६ ॥ वैकंकतश्रीफलकाश्मरीषु ब्राह्मी
द्युतिः क्षेमतरोरुदारा । वृद्धिर्वटेर्के प्रचुरं च तेजः पुत्रा मधूकैः ककुभे प्रियत्वम् ॥१७॥
लक्ष्मीशिरीषे च तथा करंजे प्लक्षेर्थसिद्धिः समभीप्सिता स्यात् । मानत्वमायाति
जनस्य जात्यां प्राधान्यमश्वत्यतरौ वदंति ॥ १८ ॥ आरोग्यमायुर्बदरी बृहत्योरैश्व-
र्यवृद्धिः खदिरे सबिल्वे । द्रव्याणि चेष्टान्यतिमुक्तके स्युः प्राप्नोति तान्येव पुनः
कदंबे ॥ १९ ॥ निम्बेर्थाप्तिः करवीरेन्नलब्धिर्भांडीरे स्यादिदमेव प्रभूतम् । शम्य
शत्रूनपहंत्यर्जुने च श्यामायां च द्विषतामेव नाशः ॥ २० ॥ शालेश्वकर्णे च
वदंति गौरवं सभद्रदारावपि चाटरूषके । वाल्लभ्यमायाति जनस्य सर्वतः प्रियंग
पामार्गसजंबुदाडिमैः ॥ २१ ॥ उदङ्मुखः प्राङ्मुख एव वाब्दं कामं यथेष्टं हृद
निवेश्य । आद्यादनिंद्यं च सुखोपविष्टं प्रक्ष्याल्य जह्याच्च शुचिप्रदेशे ॥ २२ ।
अभिमुखपातितं प्रशांतादिक्स्थं शुभमतिशोभनमूर्ध्वसंस्थितं यत् । अशुभकरमतो
न्यथा प्रदिष्टं स्थितपतितं च करोति मिष्टमन्नम् ॥ २३ ॥ आह्निकाचारतत्त्वे—द्वादशां
गुलविप्राणां क्षात्रियाणां नवांगुलम् । अष्टांगुलं तु वैश्यानां शूद्राणा च षडंग
लम् ॥ २४ ॥ चतुरंगुलमानं तु नारीणां विधिरुच्यते । कनिष्ठाग्रसमस्थूलपर्वाग्रकृत
कूर्चकम् ॥ २५ ॥ पैठीनसिः—अलाभेवा निषेधे वा काष्ठानां दंतधावने । पर्णादि
विशुद्ध्येत जिह्वोल्लेखः सदैव हि ॥ २६ ॥ व्यासः—अलाभे दंतकाष्ठानां निषिद्धाय
तथा तिथौ । अपां द्वादशगंडूषैः विदध्याद्दंतधावनम् ॥ २७ ॥ दंतधावने आद
प्रार्थनामंत्रः । आयुर्बलं यशोवर्चः प्रजा पशुवसूनि च । ब्रह्म प्रज्ञां च मेधां
त्वन्नो देहि वनस्पते ॥ २८ ॥ मुखदुर्गंधिनाशाय दंतानां च विशुद्धये । ष्ठीवना

च गात्राणां कुर्वेहं दंतधावनम् ॥ २९ ॥ महाभारते-दंतशुद्धिं विना भुंक्ते पादौ प्रक्षालनं विना। अदृष्टदेवगोविंदः सोपि चाण्डालमुच्यते ॥ ३० ॥ मनुः-दंतशुद्धिं विना योहि पादप्रक्षालनं विना। भुज्यते हि नरो सम्यक्पुनः संस्कारमर्हति ॥ ३१ ॥ अथाक्षरारंभः। श्रीधरीये-उदग्गते भास्वति पंचमेब्दे प्राप्तेक्षरस्वीकरणं शिशूनाम्। सरस्वतीं विघ्नविनायकं च गुडोदनाद्यैरभिपूज्य कुर्यात् ॥ ३२ ॥ विधिरत्ने-बालस्य पंचमे वर्षे प्राप्ते भानौ मृगादिके। आरभेताक्षरविधिः शुभे काले यथोदिते ॥ ३३ ॥ नृसिंहः-अक्षरस्वीकृता प्रोक्ता प्राप्ते पंचमहायने। उत्तरायणगे सूर्ये कुंभमासं विवर्जयेत् ॥ ३४ ॥ विश्वामित्रः-प्राप्ते तु पंचमे वर्षे त्वप्रसुप्ते जनार्दने। विद्यारंभस्तु कर्तव्यो यथोक्तविधिवासरे ॥ ३५ ॥ आषाढशुक्लद्वादश्यां शयनं कुरुते हरिः। निद्रां त्यजति कार्तिक्यां तयोः संपूज्यते हरिः ॥ ३६ ॥ हस्तादित्यसमीरमित्रपुरजित्पौष्णाश्विचित्राच्युतेश्वाराकीशदिनोदयादिरहिते चांशौ स्थिते चोभये। पक्षे पूर्णनिशाकरे प्रतिपदं रिक्तां विहायाष्टमीं षष्ठीमष्टमशुद्धभाजि भवने प्रोक्ताक्षरस्वीकृतिः ॥३७॥ प्राक् चूडाकरणाद्बालः यावदन्नप्राशनाच्छिशुः। कुमारकस्तु विज्ञेयो यावन्मौंजीनिबंधनम् ॥ ३८ ॥ अथानुपनीतधर्माः। माधवीये विष्णुपुराणे-भक्ष्याभक्ष्ये तथा पेये वाच्यावाच्ये तथानृते। अस्मिन्काले न दोषः स्यात्स यावन्नोपनायनम् ॥ ३९ ॥ इतिश्री ज्योतिर्विद्वयादत्तात्मज रामदीनकृते संग्रहे बृहद्दैवज्ञरंजने षट्षष्टितमं दंतधावनप्रकरणं समाप्तम्।

---

## अथ सप्तषष्टितमं व्रतबंधप्रकरणं प्रारभ्यते।



बृहस्पतिसंहितायाम्-अथातः संप्रवक्ष्यामि द्विजानां व्रतबंधनम्। कालः प्रोक्तोमराणां च नराणां च द्विजन्मनि ॥ १ ॥ नारदः-आधानादष्टमे वर्षे जन्मतो वाग्रजन्मनाम्। राज्ञामेकादशे मौंजीबंधनं द्वादशे विशाम् ॥ २ ॥ अत्रिः-गर्भाष्टमेष्टमे वाब्दे पंचमे सप्तमेपिवा। द्विजत्वं प्राप्नुयाद्विप्रो वर्षे त्वेकादशे नृपः ॥ ३ ॥ नारदः-जन्मतः पंचमे वर्षे वेदशास्त्रविशारदः। उपनीतो यतः श्रीमान्कार्यं तत्रोपनायनम् ॥ ४ ॥ संग्रहे-ब्रह्मवर्चसमोजश्च विद्या श्रीश्च यशः सुखम्। विप्रादेरुपनीतस्य पंचमादब्दतः फलम् ॥ ५ ॥ विष्णुः-षष्ठे तु धनकामश्चेद्विद्याकामस्तु सप्तमे। अष्टमे सर्वकामस्य नवमे कांतिमिच्छता ॥ ६ ॥ कर्तव्यं दशमे वर्षे धनकामस्य वांछया। एकादशे सुखार्थी स्याद्द्वादशाब्देपि तत्फलम् ॥ ७ ॥ द्वादशाब्देप्यतिक्रांते प्रायश्चित्तार्हको द्विजः ॥ ८ ॥ बृहस्पतिः-आषोडशाब्दको विप्रो नोपनीयः कदाचन। क्षत्रियो विंशतेरूर्ध्वं न वैश्यः पंचविंशतिः ॥ ९ ॥ चण्डेश्वरः-अतऊर्ध्वं त्रयोप्येते यथाकालमसंस्कृताः। सावित्रीपतिता व्रात्या व्रात्यस्तोमादृतेन हि ॥१० ॥

वसंत ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यमिति । वसंताद्या द्विजादीनां मुख्याः स्युर्व्रतबंधने ॥ ११ ॥ माघादि मासषट्केषु मेखलाबंधनं मतम् । चूडाकरण-मन्यत्र श्रावणादौ विवर्जयेत् ॥ १२ ॥ नान्यकालनिषेधाय तथा गर्गवचः शृणु । माघे द्रविणशीलाढ्यः फाल्गुने च दृढव्रतः ॥ १३ ॥ मार्गशीर्षे भवेद्भ्रष्टः शेषे दुःख-मवाप्नुयात् ॥ १४ ॥ बृहस्पतिः–मृगकुंभगते भानौ मध्यमं मीनमेषयोः । उत्तमांगो यमस्यैके मध्यमं ह्यौपनायनम् ॥ १५ ॥ मार्तण्डे–माघे मासि महाधनो धनपतिः प्रज्ञा बलं फाल्गुने मेधावी भवति व्रतोपनयने चैत्रे चतुर्वेदवित् । वैशाखे निखिलोप-भोगसहितो ज्येष्ठे वरिष्ठो बुधश्चाषाढेपि महामखप्रकरणः प्राप्नोति निष्ठां भुवि ॥ १६ ॥ गर्गः–ज्येष्ठमासे विशेषेण सर्वज्येष्ठस्य चैव हि । उपनीतस्य पुत्रस्य जडत्वं मृत्युरेव च ॥ १७ ॥ रत्नकोशे–वसंतसमये दद्यादष्टे गर्भाष्टमेपि वा । मेधावी मेखलाबंधो जन्ममासेथ जन्मभे ॥ १८ ॥ वसिष्ठः–यज्वा वसंतसमये बहुवित्तभोगी वर्षाष्टमे विविधशास्त्रविशारदस्तु । वेदार्थपालनपरः खलु जन्ममासे ऋक्षेपि जन्मनि बहुक्रतु-भाजनं स्यात् ॥ १९ ॥ जन्मोदये जन्मसु तारकासु मासेथवा जन्मनि जन्मचन्द्रे । व्रतेन विप्रस्तु बहुश्रुतोपि प्रज्ञाविशेषे कथितः पृथिव्याम् ॥ २० ॥ गर्भाष्टमे गर्ग-पराशराद्यैः फलं यदुक्तं व्रतबंधनेन । ततोधिकं जन्मसु तारकासु मासेथवा जन्मनि मानवानाम् ॥ २१ ॥ शस्ते शशिनि सुरेज्ये सवितरि शस्ते च मेखलाबंधः । भवति चिरायुर्विद्वानुक्ते संवत्सरे विप्रः ॥ २२ ॥ नीचारिराशावतिनीचगे वा पराजितो वापि गुरौ सिते वा । मौंजीव्रतं यस्य करोति नूनं सवेदशास्त्रस्मृतिकर्महीनः ॥ २३ ॥ बृहस्पतिः–भृगोरंगिरसो मूढे कर्तव्यं नोपनायनम् । तयोर्बाल्ये च वार्द्धक्येऽधि-मासे दक्षिणायने ॥ २४ ॥ चण्डेश्वरः–अस्तंगते दैत्यगुरौ च जीवे ऋक्षेप्यनुक्तेप्यथ पापयुक्ते । व्रतोपनीतो दिवसैः प्रणाशं प्रयाति देवैरपि रक्षितोपि ॥ २५ ॥ व्रत-बंधं विवाहं च चूडां कर्णस्य वेधनम् । ज्येष्ठपुत्रदुहित्रोश्च ज्येष्ठमासे न कारयेत् ॥ २६ ॥ वसिष्ठः–उपनयनं विप्राणां गोदानं विवाहमंगलादीनि । कुर्याद्बलवति चन्द्रे जीवे भानौ च नियमेन ॥ २७ ॥ नारदः–बालस्य बलहीनोपि शांत्या जीवो बलप्रदः । यथोक्तवत्सरे कार्यमनुक्ते नोपनायनम् ॥ २८ ॥ बृहस्पतिः–झषचापकु-लीरस्थो जीवोप्यशुभगोचरः । अतिशोभनतां दद्याद्विवाहोपनयादिषु ॥ २९ ॥ विशेषाद्देवमंत्री चेदशुभे गोचरे स्थितः । चापमीनकुलीरेषु शुभदश्चोपनायने ॥ ३० ॥ धनमीनकुलीरस्थो जीवो जन्मांत्यमृत्युगः । अतिसौख्यं बटोः कुर्याद्वसिष्ठवचनं यथा ॥ ३१ ॥ वसिष्ठः–स्वोच्चे स्वमित्रे स्वगृहे त्रिकोणे जीवे स्थिते यद्युपनीतकाले । शिशोः सहोत्थे चतुरष्टकर्मजन्मांत्यषष्ठेपि शुभं वदंति ॥ ३२ ॥ धर्मार्थलाभसुत-भार्यगते सुरेज्ये मौंजीव्रतं शुभकरं च बटोः पितुश्च । जन्माष्टबंधुरिपुरिःफनभस्तृ-तीये दारिद्र्यशोकबहुरोगयुतो द्विजन्मा ॥ ३३ ॥ जन्मतस्त्रिरिपुराशिसंस्थे इच्छंति

पूजां दशमे सुरेज्ये । नेच्छंति पूजांबुधिगे व्ययस्थे पुरातना अष्टमगेपि जीवे ॥ ३४ ॥
संग्रहे–हरिनीचारिभागेपि व्रतोद्वाहादि मंगलम् । न निषिद्धं यदि स्वोच्चे स्वभे वा
संस्थिते गुरुः ॥ ३५ ॥ गोचरेपि सुराचार्यो वेदवर्णेश्वरोऽथवा । अशुभोपि शुभो ज्ञेयो
यदि स्वोच्चे स्वभे स्थितः ॥ ३६ ॥ व्रतकाले तु संप्राप्ते शुद्धिर्यस्य न जायते ।
कृत्वार्चां शक्तितः पश्चाद्विधेयं मौंजिबंधनम् ॥ ३७ ॥ बृहस्पतिः–व्रते जन्मत्रिखारिस्थे
जीवोपीष्टोर्चनात्सकृत् । शुभोतिकाले तुर्याष्टव्ययस्थे द्विगुणार्चनात् ॥ ३८ ॥ शुभाब्दे
देवमंत्री चेदशुभे गोचरे शिशोः । स शांत्या शुभतां याति सर्वेप्येवं ग्रहा
ययुः॥३९॥ अशुभेब्दे ग्रहाः सर्वे शुभगोचरगा अपि । शांतिभावाच्छुभं नैव यात्यब्दः
कालमृत्युकृत् ॥ ४० ॥ मुख्यकालस्तु बलवान्व्रते गोचरशुद्धितः । यतो निषिद्धवर्षस्य
शांतिर्नो दृश्यते क्वचित् ॥ ४१ ॥ तस्माद्ग्रहेभ्यः कालत्वाद्बली संवत्सरः स्मृतः ।
शांतिर्ग्रहाणां कर्तव्या नतु संवत्सरस्य सा ॥ ४२ ॥ पराशरः–गोचरे नाबलो जीवः
सूर्यचन्द्रे च निर्बले । विचार्याष्टकवर्गोत्थबलं कुर्याद्बले व्रतम् ॥ ४३ ॥ अष्टकवर्ग-
विशुद्धेषु गुरुशीतांशुभानुषु । व्रतोद्वाहौ च कर्तव्यौ गोचरे न कदाचन ॥ ४४ ॥
अष्टवर्गेषु ये शुद्धास्ते शुद्धाः सर्वकर्मसु । अविशुद्धा विशुद्धास्ते निर्दिष्टा यवना-
दिभिः ॥ ४५ ॥ नृसिंहः–मौंजीबंधे विवाहे च प्रतिष्ठायां विशेषतः । गोचरेणैव कर्तव्यं
वेधाबलमकारणम् ॥ ४६ ॥ वेधाबलं वामवेधबलम् । श्रीपतिः–वर्णाधिपे बलोपेते
उपवीतक्रिया हिता । सर्वेषां वा गुरौ चन्द्रे सूर्ये च बलशालिनि ॥ ४७ ॥ शाखा-
धिपे बलिनि केंद्रगतेथवास्मिन्वारेस्य चोपनयनं गदितं द्विजानाम् । नीचस्थिते रिपु-
गृहे च पराजिते स्याज्जीवे भृगौ श्रुतिविधिस्मृतिकर्महीनः ॥ ४८ ॥ माहेश्वरः–
नानध्याये रविसुतदिने कृष्णपक्षे निशायां सप्तम्यां च क्रमशशिमितायां च रिक्ते
तिथौ च । मौंजीबंधः सुरपतिगुरौ नीचराशिप्रपन्ने कार्यस्तज्ज्ञैः रिपुभवनगते वाजिते
वास्तिते वा॥४९॥पती सितेज्यौ विप्राणां नृपाणां कुजभास्करौ। वैश्यानां शशभृत्सौम्या-
विति वर्णाधिपाः स्मृताः ॥ ५० ॥ गुरौ शुक्रेनुकूले वा द्विजस्य व्रतबंधनम् । गोचरे
च रवौ भौमे सुस्थिते क्षत्रियस्य च ॥ ५१ ॥ वैश्यानां चन्द्रशुद्धौ च कारयेद्व्रतबंध-
नम् ॥ ५२ ॥ ऋग्वेदाधिपतिर्जीवो यजुर्वेदपतिः सितः । सामवेदाधिपो भौमोऽथर्व-
वेदाधिपो बुधः ॥ ५३ ॥ नारदः–शाखाधिपतिवारश्च शाखाधिपबलं शिशोः । शाखा-
धिपतिलग्नं च दुर्लभं त्रितयं व्रते ॥ ५४ ॥ चूडामणौ–परमोच्चगतो जीवो शाखेशे
वाथवा सिते । व्रताच्छिशुर्धनाढ्यः स्याद्वेदशास्त्रविशारदः ॥ ५५ ॥ अथान-
ध्यायाः । नारदः–चतुर्दशीद्वयं चैव प्रतिपच्चाष्टमी तथा । पक्षयोरुभयोरेकमनध्या-
याष्टकं विदुः ॥ ५६ ॥ पूर्वापर तिथीयां तदुक्तं मौंजीनिबंधने । त्याज्यमन्येप्यन-
ध्याया परित्यक्तास्तु केवलाः ॥ ५७ ॥ अष्टकासु च सर्वासु युगमन्वंतरादिषु ।
अनध्यायं प्रकुर्वीत तथा सोपपदास्वपि ॥ ५८ ॥ सोपपदास्तु स्मृत्यर्थसारे–सिता

ज्येष्ठे द्वितीया च आश्विने दशमी सिता । चतुर्थी द्वादशे मावे एताः सोपपदाः स्मृताः ॥ ५९ ॥ चण्डेश्वरः—वेदव्रतोपनयने स्वाध्यायाध्ययने तथा । न दोषो यजुषां सोपपदास्वध्ययनेपि च ॥ ६० ॥ अयने विषुवे चैव सूतके मृतके तथा । तात्कालिकेप्यनध्याये प्रदोषेध्ययनं त्यजेत् ॥ ६१ ॥ तृतीया प्रहरे न्यूना द्वादशी प्रहरद्वयम् । षष्ठी रात्रेः सार्धयामात्प्रदोषो जायते तदा ॥६२॥ गर्गः—चतुर्थी याममेकं तु सार्द्धयामं तु सप्तमी । त्रयोदशी चार्द्धरात्रं प्रदोषो रजनीमुखे ॥ ६३ ॥ त्रयोदश्यादि चत्वारि सप्तम्यादि दिनत्रयम् । चतुर्थी दिनमेकं स्यादष्टावेते गलग्रहाः ॥६४॥ नारदः—शुक्लपक्षे शुभः प्रोक्तो त्वशुभः कृष्णपक्षगः । कृष्णाष्टम्यूर्ध्वतिथिषु व्रतबंधेष्वनिष्टदम् ॥ ६५ ॥ शुक्लपक्षे द्वितीया च तृतीया पंचमा तथा । त्रयोदशी च दशमी सप्तमी व्रतबंधने ॥ ६६ ॥ श्रेष्ठा त्वेकादशी षष्ठी द्वादश्येतास्तु मध्यमाः । एकां चतुर्थी संत्यक्त्वा कृष्णपक्षेपि मध्यमा ॥ ६७ ॥ बृहस्पतिः—व्रतं शुक्ले त्रिपंचांगदशेशार्कमिते तिथौ । देयं द्विसप्तकामेषु कुमारे वयसोधिके ॥ ६८ ॥ कृष्णे भूनेत्रवह्नीशतिथौ स्वेशबले दिति । संकटादौ व्रतं कार्यमिति प्राह बृहस्पतिः ॥ ६९ ॥ व्यवहारसारे—द्वितीया पंचमी षष्ठी तृतीया द्वादशी तथा । दशम्येकादशी शस्ता तिथयो व्रतबंधने ॥ ७० ॥ मन्वंतरादि तिथिषु युगादावष्टकासु च । व्रताध्ययनकं कर्म नेष्टदं गालवोऽब्रवीत् ॥ ७१ ॥ मनुः—या चैत्रवैशाखसिता तृतीया माघस्य सप्तम्यपि फाल्गुनस्य । कृष्णे तृतीयोपनये प्रशस्ता प्रोक्ता भरद्वाजमुनीन्द्रमुख्यैः ॥ ७२ ॥ चण्डेश्वरः—प्रतिपदि मदिरासक्तः श्रुतिपटुरुचिरो भवेद्द्वितीयायाम् । नीतिज्ञो मेधावी जितसकलरिपुस्तृतीयायाम् ॥ ७३ ॥ मतिर्गतवित्तो दीनश्चपलश्चतुर्थ्यां स्यात् । पंचम्यां बहुवित्तः पूर्णायुर्धनपतिमान् ॥ ७४ ॥ षष्ठ्यामशुचिः सुभार्यः सप्तम्यां व्याधिभिर्युक्तः । अष्टम्यामनायुष्यं स्यान्नवम्यां धनवर्जितः ॥ ७५ ॥ दशम्यां सर्वसंपूर्ण एकादश्यां गुणान्वितः । द्वादश्यां श्रुतिशास्त्रज्ञः त्रयोदश्यां मृतिर्भवेत् ॥ ७६ ॥ चतुर्दश्यां भवेन्नाशः पंचदश्यां क्षयो भवेत् । अमावास्यां भवद्दुःखा वेदस्मृतिविवर्जितः ॥ ७७ ॥ नारदः—आचार्यसौम्यकाव्यानां वाराः शस्ताः शशीनयोः । वारौ तौ मध्यफलदावितरौ निंदितौ व्रते ॥ ७८ ॥ सर्वेषां जीवशुक्रज्ञवाराः शस्ताः शशीनयोः । वारौ तौ मध्यमौ ज्ञेयौ सामबाहुजयोः कुजः ॥ ७९ ॥ वारौ मंदारयोर्वर्ज्यौ कृष्णे वर्ज्यौ निशांपतेः । अस्तंगतस्य सौम्यस्य वारो वर्ज्यो द्विजन्मनि ॥ ८० ॥ ज्योतिःप्रकाशे—मेधा भानुदिने जडत्वहिमगौ चन्द्रात्मजे बोधवान् पंचत्वं कुजमंदयोर्भृगुसुते वाग्मी बलीयान् शुचिः । षट्कर्माभिरतः सुखी सुरगुरौ विद्वान् चिरायुर्नरो धिष्णे पापनिपीडिते च हिमगौ मूढो गतायुर्भवेत् ॥ ८१ ॥ बुधेषु शास्त्रे गुरवे च विद्या देवज्ञशुक्रे रविराधिपत्यम् । सोमे अविद्या मरणं च भौमे मंदो मतिः सौम्यव्रतोपनीयात् ॥ ८२ ॥ श्रीपतिः—सौम्ये पौष्णे वैष्णवे वासवाख्ये

हस्तस्वातित्वाष्ट्रपौष्णाश्विभेषु । ऋक्षेदित्ये मेखलाबंधमोक्षौ संस्मृज्येते नूनमाचार्यवर्यैः ॥८३॥ राजमार्तंडे-शुक्लेपक्षे शशिदिनकरे देवपूज्ये च सम्यक् वारे भानोः सितस्य त्रिदशपतिगुरोश्चोत्तरे तिग्मभानौ । हस्ताश्चित्राश्विशक्रादितिवसुवरुणोपेन्द्रपुष्येन्दुपौष्णे स्वातिष्ठाव्याहतासु स्मृतमुपनयनं भार्गवाद्यैर्मुनीन्द्रैः ॥ ८४ ॥ व्यवहारचण्डेश्वरः-हस्तत्रये दैत्यरिपुत्रये च शक्रेंदुपुष्याश्विनिरेवतीषु । वारेर्कशुक्रज्ञबृहस्पतीनां हितानुबंधी द्विजमौंजिबंधः ॥ ८५ ॥ सार्पिविशाखापितृपूर्वभाद्रपदं कृशानुजलमुत्तराश्च । याम्यं द्विजानां व्रतबंधनेऽत्र मृत्युर्भवेत्पूर्वमुनिप्रवादः ॥ ८६ ॥ मैत्रादितिब्राह्मभगार्कमूलऋक्षेषु पंचस्वपितौ निषेधः । कालातिवाहे तु विना विधेयं कर्तव्यमत्रापि हि मौंजिबंधः ॥ ८७ ॥ समुच्चये-पूर्वाषाढहरित्रयेश्विमृगभे हस्तत्रयं रेवती ज्येष्ठा पुष्यभगेषु चोत्तरगते भानौ च पक्षे सिते । गोमीनौ प्रमदा धनुर्वनचरे शुक्रार्कजीवे तिथौ पंचम्यां दशमी त्रये व्रतमिह श्रेष्ठं द्वितीयाद्वयम् ॥ ८८ ॥ ज्येष्ठापुष्यहरित्रयाश्विमृगभे हस्तत्रये पूषभे वारे सूर्यबृहस्पतीन्दुजभृगौ सूर्ये च सौम्यायने । सिंहे तौलिमृगांगनाहयझषे लग्ने च पक्षे सिते मौंजीबंधनमामनंति मुनयस्ताराधिपे शोभने ॥ ८९ ॥ बृहस्पतिः-व्याघातं परिघं वज्रं व्यतीपातोथ वैधृतिः । गण्डातिगण्डशूलं च विष्कंभं नव वर्जयेत् ॥ ९० ॥ अथ वेदपरत्वे नक्षत्रविचारः । संग्रहे-पूर्वाहस्तत्रयाद्यार्द्रा श्रुतिमूलेषु ऋग्गृचाम् । यजुषां पौष्णमैत्रार्कादित्यपुष्यमृदुध्रुवैः ॥ ९१ ॥ सामगानां हरीशार्कवसुपुष्योत्तराश्विभैः । धनिष्ठादितिमैत्रार्कोर्ष्विदुपौष्णेष्वथर्वणम् ॥९२॥ अन्यत्रापि-मूले हस्तत्रये सार्पे शैवे पूर्वात्रये श्रुतौ । ऋग्वेदाध्यायिनां कार्यं मेखलाबंधनं बुधैः ॥ ९३ ॥ पुष्ये पुनर्वसौ पौष्णे हस्तं मैत्रे शशांकभे । ध्रुवेषु च प्रशस्तं स्याद्यजुषां व्रतबंधनम् ॥ ९४ ॥ पुष्यवासवहस्ताश्विशिवकर्णोत्तरात्रयम् । प्रशस्तं रशनाबंधं बटूनां सामगायिनाम् ॥ ९५ ॥ मृगमैत्राश्विनीहस्तरेवत्यदितिवासवम् । अथर्वशाखिनां शस्तो भगणोयं व्रतार्पणे ॥ ९६ ॥ ज्योतिःप्रकाशे-ग्रहणोत्पातऋक्षे च विद्धर्क्षे पापसंयुते । व्रतबंधे द्विजातीनां मृत्युरोगौ न संशयः ॥ ९७ ॥ चक्रे सप्तशलाकाख्ये सर्वकर्माणि निश्चितम् । वर्जयित्वा विवाहं च कुर्याद्वेधस्यनिर्णयः॥९८॥ कर्णवेधे विवाहे च व्रते पुंसवने तथा । प्राशने अन्नचूडायां विद्धमृक्षं विवर्जयेत् ॥ ९९ ॥ कृष्णे प्रदोषे नाध्याये शनौ निश्यपराह्णके । प्राक्संध्यागर्जितो नेष्टो व्रतबंधो गलग्रहे ॥ १०० ॥ अथ लग्नफलम् । जडत्वं मेषलग्ने स्याद्विद्यावित्तं वृषोदये । ज्ञानी च मिथुने लग्ने कुलीरे च षडंगवित् ॥ १ ॥ शिल्पिकर्मकरः सिंहे पंडितः कन्यकोदये । तुलोदये वणिक्जीवी वृश्चिके रोगभाग्भवेत् ॥ २ ॥ पूज्यो धनाढ्यो धनुषि शूद्रवृत्तिर्मृगे भवेत् । नृपप्रेष्यो घटे लग्ने झषे वेदार्थविद्धनी ॥ ३ ॥ वाकूटः श्रुतिमान् वक्ता जडः क्रूरोर्थवान्गुणी । क्रूरः पूज्यः खलः प्रेष्यो धीमान्

मेषादिकेंशके ॥ ४ ॥ रव्याद्यंशैः क्रमात्क्रूरो जडः पापरतः सुधीः । यज्वा च दीक्षितो मूर्खः षड्वर्गेणापि तत्फलम् ॥ ५ ॥ गुरुः—जीवोदये जीवगृहोदये वा जीवांशके जीवनिरीक्षिते वा । अल्पश्रुतोपि व्रतबंधनेषु वागीशतुल्यो भवति द्विजेंद्रः ॥ ६ ॥ श्रीपतिः—लग्ने जीवे भार्गवे च त्रिकोणे शुक्रांशस्थे स्याद्विधौ वेदवेदी । सौरांशस्थे सूरिलग्ने सशुक्रे विद्याशीलप्रोज्झितः स्यात्कृतघ्नः ॥ ७ ॥ स्वानुष्ठाने रतः स्यात्प्रवरमतियुतः केंद्रसंस्थे सुरेज्ये विद्यासौख्यार्थयुक्तो ह्यशनासि शशिजेऽध्यापकश्च प्रदिष्टः । सूर्ये राजोपसेवी भवति धरणिजे शस्त्रवृत्तिर्द्विजन्मा शीतांशौ वैश्यवृत्तिर्दिनकरतनये सेवकश्चांत्यजानाम् ॥ ८ ॥ शन्यंशे ह्यदयति मूर्खतार्कभागे क्रूरत्वं भवति च पापधीः कुजांशे । चन्द्रांशेत्वाति जडता बुधे पटुत्वं यज्ञत्वं गुरुभृगुभागयोर्गृणांति॥९ ॥ सार्के जीवे निर्गुणेर्थेन हीनः क्रूरः सारे स्यात्पटुः सत्समेते । भानोः पुत्रे नालसो निर्गुणश्च स्याच्छुक्रेन्दू जीववत्संप्रकल्प्यौ ॥ ११० ॥ जीवशुक्रबुधाः केंद्रे बलिनेकेंदु वेदपः । उपनीतस्तदा शिष्यो दीर्घायुर्यज्ञकृद्भवेत् ॥ ११ ॥ संग्रहे—मौंजीबंधे विशेषण प्राग्लग्नं पंचमं तथा । भाव्यं क्रूरग्रहैर्मुक्तं भृगुराहू तथाष्टमम् ॥ १२ ॥ मेखला बंधकार्ये च सर्वथा पंचमं गृहम् । शुभयुक्तं प्रशसोत तदालिखितमेव च ॥ १३ ॥ अथ ग्रहाणां पृथक् स्थानफलम् । गुरुः—मृत्युर्हानिर्ज्ञानवान् बंधुनाशः काणो हीनो व्याधिहा दाहकारी । व्याधिप्राप्तिः सुंदरः कर्मसिद्धिर्ज्ञानी हानिर्लग्नतः सूर्ययोगात् ॥ १४ ॥ कृष्ण नेष्टो द्रव्यवृद्धिः प्रमोदा बंधोर्वृद्धिः कृष्णचंद्रस्तु नेष्टः । शत्रोर्हानिः शास्त्रद्रष्टा च रोगा धर्मी कर्मी लाभदो वित्तनाशः ॥ १५ ॥ शीघ्रं वृद्धिश्चौरभीतिः सुखी च सत्याहीनो धीविनाशश्च सौख्यम् । दाहो मृत्युर्द्रव्यवृद्धिस्त्वकर्मी लाभो नाशो मूर्तितो भूमिजश्चेत् ॥ १६ ॥ सौम्ये विद्याद्रव्यवान्हर्षयुक्तः बंधोः सौख्यं सत्कवित्वे निरोगी । बुद्धिश्चायुर्धर्मयुक्तः सुकर्मी द्रव्यप्राप्तिः पुण्यमार्गे व्ययः स्यात् ॥१७॥ कीर्तिर्द्रव्यो बंधुभार्निंदितश्च सौख्यं कीर्तिः शत्रुपक्षक्षयं च । द्रव्यप्राप्तिर्दीर्घजीवी च धर्मी भोगी कीर्तिद्रव्यवान्देवपूज्यः ॥ १८ ॥ लोभी भोगी ज्ञानवान् बंधुवृद्धिर्धीमान् शत्रोर्नाशकः शास्त्रद्रष्टा । नाशं धर्मी सुप्रियाचैव सौख्यं वित्तप्राप्तिर्लग्नतः शुक्रयोगात् ॥ ११९ ॥ रोगी चौरो ज्ञानवान्सप्रमादो रोगी कीर्तिर्मृत्युभीतिश्च मूर्खः । मूर्खस्यापि ज्ञानवान्कुव्ययी च शौरिश्चैवं राहुकेतू च लग्नात् ॥ १२० ॥ नवम दशमे राहुर्म्लेच्छः पापी तदा भवेत् । व्रतबंधे च मोक्षे च शेषस्थाने च सूर्यवत् ॥ २१ ॥ संग्रहे—केंद्रस्थितैरिनाद्यैर्नृपसेवाविट्क्रयोस्त्रवृत्तिश्च । वेदाभ्यासी यज्वा क्रतुकर्ता हीनसेवको भवति ॥ २२ ॥ सिते त्रिकोणगे चंद्रे शुक्रांशे लग्नगे गुरौ । उपनीतो भवेद्विप्रो वेदशास्त्रार्थपारगः ॥ २३ ॥ चंद्रक्रूरास्तनौ नेष्टाः सर्वे रंध्र व्यये कविः । सितेन्दुलग्नपाः षष्ठे मौंजी विद्यासु कर्मसु ॥ २४ ॥ अनिष्टस्थानगोप्यत्र ग्रहः कोपि न दोषकृत् । शुभदृष्टः शुभायै स्यात्साम्यमार्गे यदि स्थितः ॥ २५ ॥

रन्ध्रांत्यारिगतः शुक्रो लग्नेशो वा षडष्टगः । चंद्रे लग्नारिरन्ध्रस्थे वटोः प्राणापहारकः ॥ २६ ॥ मौंजीवंधे विशेषेण प्राग्लग्नं पंचमं तथा । भव्यं क्रूरग्रहैर्मुक्तं भृगुराहु तथाष्टकम् ॥ २७ ॥ मौंजीपटले-शुभदो बलवान्भानुः लग्नगो दशमस्तथा । सर्वशाखाधिपो यस्मात् सर्वेषां व्रतबंधने ॥ २८ ॥ सर्वशाखाधिपो भानुः केचिदूचुर्महर्षयः । तस्माद्गत्यन्तराभावे लग्नस्थोर्कः प्रशस्यते ॥ २९॥ नारदः-स्वोच्चसंस्थेपि शीतांशुर्व्रतिनो यदि लग्नगः । तं करोति शिशुं निस्वं तत् क्षयोयक्ष्मरोगिणम् ॥ १३० ॥ चंद्रोदये भिषक्कृतस्याक्षयरोगी सितेतरे । सिते पक्ष भवेज्जस्वा स्वभे तुंगे विशेषतः ॥ ३१ ॥ संग्रहे-लग्नाश्रितेषु रध्रेषु पापेषु मरणं वटोः । सौख्यं स्यात्रिषडायेषु जडत्वमितरेषु च ॥३२॥ अरंध्रारिगताः श्रेष्ठाः शुभा सर्वत्रगा व्रते । व्ययेपि न शुभः प्रोक्तो तथाब्जे दृष्टलग्नगाः ॥ ३३ ॥ बृहस्पतिः-अनिष्टस्थानगोप्यत्र ग्रहः कोपि न दोषकृत् । सद्वर्गे शुभदृष्टो वा स्वोच्चे स्वर्क्षे विशेषतः ॥ ३४ ॥ विद्याप्राप्तां विनश्येतां भौममंदौ द्वितीयगौ । अन्योन्यमथवा दृष्टौ द्वादशस्थौ तु वंधदौ ॥ ३५ ॥ यथोक्तसमयालाभे योगान्वच्मि शुभप्रदान् । द्विजन्मकालसंभूतान्वासिष्ठाङ्गिरसोक्तितः ॥ ३६ ॥ केंद्रत्रिकोणगे जीवे भानुः शुक्रेथवा व्यये । द्वितीये ज्ञे शुभो योगो द्विजानामुपनायने ॥ ३७ ॥ लग्नार्थभ्रातृगे शुक्रे जीवे कोणार्थकंटके । त्रिषडेकादशे क्रूरे व्रती भवति धार्मिकः ॥ ३८ ॥ गुरौ केंद्रे भवे भानौ चंद्रे शुभनवांशके । कर्किचापझषस्थेऽस्मिन्व्रता वेदार्थविद्भवेत् ॥ ३९ ॥ दशमायोदये जाताः शुक्रभान्विदुजाः क्रमात् । चंद्रे शुभनवांशस्थे योगः स्यादुपनायने ॥ १४० ॥ मौंजीपटले-अतीव दुष्टे सुरराजपूज्ये सिंहस्थिते वा द्विजपुंगवानाम् । व्रतस्य वंधः खलु मासि चैत्रे कृताश्चिरायुः सुखसंपदः स्यात् ॥ ४१ ॥ गर्गः-शुद्धिर्न विद्यते यस्य प्राप्ते वर्षेष्टमे यदि । चैत्रे मीनगते भानौ तस्योपनयनं शुभम् ॥४२॥ नष्टे शुक्रे गुरौ चास्ते गुर्वादित्ये मलिम्लुचे । तत्रोपनयनं कार्यं चैत्रे मीनगते रवौ ॥ ४३ ॥ नष्टे शुक्रे तथा ◌िवे दुर्बले चंद्रभास्करे । तत्रोपनयनं कार्यं चैत्रे मीनगते रवौ ॥ ४४ ॥ गोचराष्टकवर्गाभ्यां गुरुशुद्धिर्न लभ्यते । तत्रोपनयनं कार्यं चैत्रे मीनगते रवौ ॥ ४५ ॥ जन्माभादष्टगे सिंहे नीचे वा शत्रुभे गुरौ । मौंजीवंधः शुभः प्रोक्तश्चैत्रे मीनगते रवौ ॥ ४६ ॥ जीवभार्गवयोरस्ते सिंहस्थे देवतागुरौ । मेखलावंधनं शस्तं चैत्रे मीनगते रवौ ॥ ४७ ॥ मीनस्थितेर्के खलु चैत्रमासे शुभप्रदो, ब्राह्मणमौंजिवंधनम् ॥ ४८ ॥ मुहूर्ततत्त्वटीकायाम्-सौम्यायने व्रतं कार्यं चैत्रे मासि विशेषतः । विवाहं नैव मीनस्थे मेषेर्के च व्रतं नहि ॥ ४९ ॥ मीनस्थे पद्मिनीमित्रे नीचेरिस्थे च वाक्पतौ । व्रतादिषु निषेधः स्याद्विंध्यस्योत्तरवासिनाम् ॥ १५० ॥ गर्भिणी यस्य वै माता मासादूर्ध्वं तु पंचमात् । तस्योपनयनं नैव प्रागेवादि हि कारयेत् ॥ ५१ ॥ मनुः-उद्वाहव्रतचूडासु यस्य माता रजस्वला । तदा न मंगलं कार्यं शुद्धे कार्यं शुभेप्सुभिः ॥५२॥

प्रदोषे निश्यनध्याये मंदे कृष्णे गलग्रहे । मधुं विना चोपनीतः पुनः संस्कारमर्हति ॥ ५३ ॥ विनर्तुना वसंतेन कृष्णे पक्षे गलग्रहे । अपराह्णे चोपनीतः पुनः संस्कारमर्हति ॥ ५४ ॥ ताराचन्द्रानुकूलेपि ग्रहाब्देषु शुभेष्विह । पुनर्वसौ कृती विप्रः पुनः संस्कारमर्हति ॥ ५५ ॥ देवेज्यशुक्रयोरस्ते पुनर्वसौ गलग्रहे । उपनीतस्त्वनध्याये पुनः संस्कारमर्हति ॥ ५६ ॥ अजिनं मेखला दण्डो भैक्षचर्या व्रतानि च । निवर्तन्ते द्विजातीनां पुनः संस्कारकर्माणि ॥ ५७ ॥ यो न मंत्रैः स्वशाखोक्तैः संस्कृतो नाधिकारिणा । नासौ द्विजत्वमाप्नोति पुनः संस्करणं विना ॥ ५८ ॥ व्रतेह्नि पूर्वसंध्यायां वारिदो यदि गर्जति । तद्दिनं स्यादनध्यायं व्रतं तत्र न कारयेत् ॥ ५९ ॥ अभ्रिमा यानहानिस्तु जातिहीनस्तु गर्जिमा । वृष्टिमाप्राणसंदेहो इत्येवं मुनिरब्रवीत् ॥ १६० ॥ आभ्रिमा वस्त्रदानेन धेनुदानेन गर्जिमा । वृष्टिमा हिरण्यदानेन दोषो मुनिरब्रवीत् ॥ १६१ ॥ धराकंपकेतूदयोल्कादिपातोपरागौ च दिग्दाहनिर्घातघोषे । अकालेथ विद्युद्घनवर्षणं च न कुर्याद्व्रतं सप्तरात्रिं न यात्रा ॥ ६२ ॥ ज्योतिर्निबंधे—नांदीश्राद्धं कृतं चेत्स्यादनध्यायस्तु कालिकः । तदोपनयनं कार्यं वेदारंभं न कारयेत् ॥ ६३ ॥ विधिनाग्नयसामीप्यनयनं तूपनायनम् । एतत्प्रधानं सावित्र्यवचनं वान्यवादकम् ॥ ६४ ॥ संस्कार्यप्रसंगात् स्मृत्यंतरोक्ता अपि संस्कारा लिख्यंते । पंढान्धबधिरस्तब्धजडगद्गदपंगुषु । कुब्जवामनरोगार्तशुष्कांगिविकलांगिषु ॥ ६५ ॥ मत्तोन्मत्तेषु मूकेषु शयनस्थे निरिंद्रिये । ध्वस्तपुंस्त्वेपि चैतेषु संस्काराः स्युर्यथाचिताः ॥ ६६ ॥ औरसः पुत्रिकापुत्रः क्षेत्रजो गूढजस्तथा । कानीनश्च पुनर्भूतो दत्तः क्रीतश्च कृत्रिमः ॥ ६७ ॥ दत्तात्मा च सहोढश्च त्वपविद्धसुतस्ततः । पिंडदोंशहरश्चैषां पूर्वाभावे परः परः ॥ ६८ ॥ एते द्वादश पुत्राश्च संस्कार्या स्युर्द्विजातयः । केचिदाहुर्द्विजैर्जातौ संस्कार्यौ कुंडगोलकौ ॥ ६९ ॥ अमृते च मृते पत्यौ जारजौ कुंडगोलकौ । मूकौन्मत्तौ न संस्कार्याविंत्येके । शंखलिखितौ—नोन्मत्तमूकान् संस्कुर्यात् ॥ विष्णुना परीक्षितं याजयेत् ॥ १७० ॥ नाध्यापयेन्नोपनयेत् ॥ इति श्रीज्योतिर्विद्वर्यदत्तात्मज रामदीनकृते बृहद्दैवज्ञरंजने संग्रहे सप्तषष्टितमं व्रतबंधप्रकरणं समाप्तम् ।

---

## अथाष्टषष्टितमं विद्यारंभप्रकरणं प्रारभ्यते ।

---

बृहस्पतिः—अथोपनीतस्तत्काले तदा ह्यस्तमयेऽथवा । संध्या सम्यगुपासीत सायंस्व... प्रातर्दिने दिने ॥ १ ॥ शशी यदातिसम्पूर्णः श्रावणे प्रोष्ठपद्दिवा । द्वयोरभावे हस्तर्क्षेयो... उपाकर्म द्वयोः पुरः ॥ २ ॥ द्वितीयजन्मतः पूर्वमारभेदक्षरान्सुधीः । मौंजीबंधनतः... पश्चाद्वेदारंभः प्रशस्यते ॥ ३ ॥ विद्यया सर्वसिद्धिः स्यात्संपच्च प्राप्तिरेव च । आयुर्यशश्च बोधं च बोधात्सर्वासु भावयेत् ॥ ४ ॥ भास्करीये—विद्यानाम नरस्य कीर्तिरतुल...

भाग्यक्षये चाश्रयो धेनुः कामदुघा रतिश्च विरहे नेत्रं तृतीयं च सा । सत्कारायतनं कुलस्य महिमा रत्नैर्विना भूषणं तस्मादन्यमपोह्य हेतुविषयं विद्याधिकारं कुरु ॥ ५ ॥ बृहस्पतिमतं चैव तदभावेधुनोच्यते । सौम्यायने प्रदोषादि चिंतयेद्व्रतबंधवत् ॥ ६ ॥ गर्गः—सौम्यायने सौम्यबले गुरुसूर्येंदुसद्बले । अनध्यायप्रदोषाद्यं चिंतयेद्व्रतबंधवत् ॥ ७ ॥ चन्द्रार्के सबले सौम्ययोगे सारस्वताभिधे । गणेशं गिरमभ्यर्च्य सर्वविद्यां समारभत् ॥ पूजयित्वा हरिं लक्ष्मीं देवीं चैव सरस्वतीम् । स्वविद्यां सूत्रकारांश्च स्वां च विद्यां विशेषतः ॥ ९ ॥ अंगानि वेदाश्चत्वारो मीमांसान्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥ १० ॥ आयुर्वेदो धनुर्वेदो वेदो गांधर्व एव च । अर्थशास्त्रमिति ह्येता उपविद्याः प्रकीर्तिताः ॥ ११ ॥ प्राप्ते तु पंचमे वर्षे अप्रसुप्ते जनार्दने । षष्ठीं प्रतिपदं चैव वर्जयित्वा तथाष्टमीम् ॥ १२ ॥ रिक्तां पंचदशीं चैव सौरिभौमदिनं तथा । एवं सुनिश्चिते काले विद्यारंभं तु कारयेत् ॥ १३ ॥ शुक्लपक्षे शुभा सर्वा विद्यारंभे दिनं तथा । विहायार्धं त्रिभागं च परं कृष्णेपि शस्यते ॥ १४ ॥ श्रीपतिः—विद्यारंभः सुरगुरुसितज्ञेष्वभीष्टार्थदायी कर्तुश्चायुश्चिरमपि करोत्यंशुमान्मध्यमोत्र । नीहारांशौ भवति जडता पंचता भूमिपुत्रे छायासूनावपि च मुनयः कीर्तयंत्येवमाद्याः ॥ १५ ॥ हस्ताश्वयुक्श्रवणचित्रसमीरमित्रा पुष्यादितींदु निर्ऋतिर्वसुवारुणेषु । पूर्वोत्तराकमलसंभवपौष्णभेषु विद्याश्रुतिस्मृतिमुखाः कथिता द्विजानाम् ॥ १६ ॥ चण्डेश्वरः—विद्यारंभः प्रशस्तो भवति अथ रिपौ प्राप्तबोधे सुधांशौ शस्ते तीक्ष्णद्युतौ च त्रिदशपतिगुरावुद्गते चापि शुक्रे । अप्राप्ते सिंहराशौ दशशतकिरणे चापि दैत्यारिपूज्ये स्वाध्याये भानुशुक्रत्रिदशगुरुदिने लग्नसंस्थे च जीवे॥१७॥ बृहस्पतिः—लग्नवारदशा वर्ज्या विद्यारंभेर्कभौमयोः । लग्ने द्व्यंगे च विद्याप्तिः स्थिरे जाड्यं चरे भ्रमः ॥ १८ ॥ त्रिषडायगताः पापास्त्रिकोणे कंटके शुभाः । विद्यारंभे शुभाः प्रोक्ताः पंचमे पापवर्जिते ॥१९ ॥ हस्ते बुधांशके युक्ता यदि भान्विंदुसोमजाः । सौम्यवारे रवौ लग्न योगः सारस्वताह्वयः ॥ २० ॥ हस्ते बुधांशकस्थौ चेद्बुधेंदू लग्नगौ तदा । बुधवारे मुहूर्तेषु योगः सारस्वताह्वयः ॥२१॥ अत्युच्चस्थे बुधे लग्ने पाथोनाद्यत्रिभागगे । भानौ तत्सौम्यवारे च योगो वागीश्वराह्वयः ॥ २२ ॥ इंद्वर्केज्ञदिने वारनाथे लग्ने बुधांशके । हस्तर्क्षस्य गता ह्येतें योगः सारस्वताह्वयः॥ २३ ॥ वर्गोत्तमस्थे लग्नेज्ञे जीवे चोभयराशिगे । गुरुशुक्रबुधाः केंद्रे योगः सारस्वताह्वयः ॥ २४ ॥ स्यात्युच्चलग्नगे भानौ ज्ञसितौ वृषमीनगौ । वर्गोत्तमगतौ यद्वा योगः सारस्वताह्वयः ॥ २५ ॥ बुधोत्तमे गुरोरंशे केंद्रगे ज्ञार्कभार्गवः । त्रयोदश्यायमे लग्ने योगः सारस्वताह्वयः ॥ २६ ॥ लग्ने बुधांशकस्याचेदिंदुज्ञे ना बुधोदये । बुधवारे गुरोर्वापि योगः सारस्वताह्वयः ॥ २७ ॥ कर्किण्यः पंचमे भागे गुरावुदयगे सति । गुरोर्वारे च होरायां विद्यायोगोयमुत्तमः ॥ २८ ॥ सप्तविंशतिमे भागे शशिगे लग्नगे

तथा । मीनस्य सितवारेह्नि विद्यायोगोयमुत्तमः ॥ २९ ॥ पृथक्भानि विशेषेण शास्त्राणां फलदास्त्वमी । प्रत्येकमेकतो वक्ष्ये वृत्रारेऽवहितः शृणु ॥ ३० ॥ भेरीतालादि शास्त्रेषु नाट्ये सामुद्रिकाह्वये । हस्ततिष्यस्तथादित्यः संगीतैः संगमेव च ॥ ३१ ॥ गांधर्वे नीतिशास्त्रे च प्रशस्ता एव नादिने । सार्पः शाकुनिके ज्ञाने वेदे रोहिणही-शुभौ ॥ ३२ ॥ वासवं स्याद्धनुर्वेदे सायुर्वेदे विशेषतः । हस्तो वहूनां शास्त्राणां विशेषेण प्रशस्यते ॥ ३३ ॥ कौटिल्ये क्षुरिकागेय वेदेशांतिक गंधके । मल्ले महानरोषक्के रूपे-तुरगवारणे ॥ ३४ ॥ शास्त्राभ्यासेधिरोहे च रौद्रातिष्योत्तरात्रयम् । पूषाश्रवण रोहिण्यः सौम्यवायू च शोभनौ ॥ ३५ ॥ मैत्रं कुक्कुटशास्त्रे च आयुर्वेदे गजाश्वयोः । तयोरारोहणे चैव ध्रुवभानि शुभानि च ॥ ३६ ॥ अश्विनी चाश्वविद्यायां गजविद्यासु शोभनम् । त्वाष्ट्रचित्रकविद्यासु चामी मैत्रं पुनर्वसु ॥ ३७ ॥ धर्मशास्त्रेषु वैश्वाद्य त्रितयं पौष्णमेव च । अश्विनी रोहिणी सौम्यं पुष्यं हस्तादि पंचके ॥ ३८ ॥ ज्योतिषाद्यंगशास्त्राणां स्वातीहस्तपुनर्वसू । पौष्णहस्ताश्विनीमूलवारुणाः स्युः सुपूजिताः ॥ ३९ ॥ वारुणं योगशास्त्रेषु समयेष्विंदुभं शुभम् । हस्तस्वात्याश्विसौम्याः स्युरायुर्वेदे सुपूजिताः ॥ ४० ॥ गणिते रेवतीहस्तमैत्रपुष्यार्द्रवासवाः । ज्योतिः-शास्त्रनिमित्ते च रोहिणी वारुणे शुभे ॥ ४१ ॥ आदित्यवैष्णवस्वाती तिष्यहस्ताश्वि-वारुणाः । त्रीण्युत्तराणि रोहिण्योप्यर्थशास्त्रे सुपूजिताः ॥ ४२ ॥ ब्रह्मविद्यासु पूर्वाणि नक्षत्राणि शुभान्यमी । योगाः सर्वे शुभा वज्रिन् कथयंति सुपूजिताः ॥ ४३ ॥ शैवागमे शुभान्याहुः क्षिप्राण्युग्राणि भान्यपि । ततो विष्ण्वागमे शस्तश्चरसाधारणा-दिभम् ॥ ४४ ॥ विषशास्त्रेशुभायोगा वारे नक्षत्रयोजिताः । सर्वे शंसंति मुख्यत्वे वृत्रारे ब्राह्मणा पुरा ॥ ४५ ॥ ध्रुवाणि सर्वशास्त्रेषु सर्वसाधारणान्यपि । मृदूनि सर्व-विद्यासु सर्वज्ञानेषु भान्यपि ॥ ४६ ॥ वैष्णवं सुप्रशंसंति मायाचौर्यादिकैतवैः । संशंति सर्वभान्याहुर्ज्योतिःशास्त्रे विरोधतः ॥ ४७ ॥ प्रोक्ते शुभेषु सर्वेषु शुभवारे शुभांशके । शुभग्रहदृशा युक्ते शुभयुक्ते शुभग्रहे ॥ ४८ ॥ विशेषाद्बुधवर्गेषु बुधदृष्टे बुधोदये । बुधवारे च होरायां शंसंति ज्ञेप्यनस्तगे ॥४९॥अथ विद्यारंभेप्यनध्यायाः । प्रति-पत्पौर्णिमामा च चतुर्दश्यष्टमी तथा । अनध्यायाः सोपपदा युगमन्वादयस्तथा॥५०॥ अष्टमा हंत्युपाध्यायं शिष्यं हंति चतुर्दशी । आमावस्योभयं हंति सर्वं हंति च पौर्णिमा ॥ ५१ ॥ यथा यौधिष्ठिरी सेना गांगेयशरपीडिता । प्रतिपत्पाठशी-लस्य विद्येव तनुतां गता ॥ ५२ ॥ नारदः—अयने विषुवे चैव शयने बोधने हरेः । अनध्यायस्तु कर्तव्यो मन्वादिषु युगादिषु ॥ ५३ ॥ कार्तिके शुक्लनवमी त्वादिकृत-युगस्य च । त्रेतादिर्माधवे शुक्लतृतीया पुण्यसंज्ञिता ॥ ५४ ॥ कृष्णा पंच-दशी माघे द्वापरादिरुदीरिता । कल्पादिः स्यात्कृष्णपक्षे नभस्ये च त्रयोदशी ॥ ५५॥ द्वादश्यूर्जे शुक्लपक्षे नवम्यश्वयुजे सिते । चैत्रे भाद्रपदे चैव तृतीया शुक्ला

संज्ञिता ॥ ५६ ॥ एकादशी सिता पौषेप्याषाढे दशमी सिता। माघे च सप्तमी शुक्ला नभस्येथ सिताष्टमी ॥ ५७ ॥ श्रावणे मास्यमावस्या फाल्गुने मासि पूर्णिमा। आषाढे कार्तिके मासे चैत्रे ज्येष्ठे च पूर्णिमा ॥५८॥ मन्वादयस्त्राःनदानश्राद्धेष्वत्यन्तपुण्यदाः। मार्गशीर्ष तथा पौषे माघमासे तथैव च ॥ ५९ ॥ तिस्रोष्टकाः समाख्याताः कृष्णपक्षे तु सूरिकाः। सिताज्येष्ठद्वितीया तु आश्विने दशमी सिता ॥ ६० ॥ चतुर्थी द्वादशी माघे एताः सोपपदाः स्मृताः ॥ ६१ ॥ संध्यायां गर्जिते मेघे शास्त्रचिन्तां करोति यः। चत्वारि तस्य नश्यंति आयुर्विद्या यशो बलम् ॥ ६२ ॥ नारदः- संध्यायां नियमेनैव शास्त्राभ्यासं करोति यः। नश्यंत्यायुर्यशो विद्या बलं गर्गादि संमतम् ॥ ६३ ॥ इति श्रीज्योतिर्विद्वयादत्तात्मजरामदीनकृतसंग्रहे बृहद्दैवज्ञरंजने अष्टषष्टितमं विद्यारंभप्रकरणं समाप्तम्।

---

## अथैकोनसप्ततितमं समावर्तनप्रकरणं प्रारभ्यते।

बृहस्पति--व्रतमोक्षे च गोदाने स्नाने चैव विशेषतः। कालं वच्मिं द्विजानां च सम्यगायुर्विवृद्धये ॥ १ ॥ अधीत्य वेदांश्च तदर्थशास्त्राण्यालभ्य लब्ध्वा च गुरोरनुज्ञाम्। कुर्यात्समावर्तनकर्म पश्चाद्गोदानतः पाणिनिपीडनात्प्राक् ॥ २ ॥ सौम्यायने निर्मलयोः सुरेज्यदैत्येज्ययोर्व्योम्नि वलक्षपक्षे। संत्यज्य रिक्तावममष्टमीं च वैनाशिकाख्याखिलऋक्षवृन्दम् ॥ ३ ॥ केशान्तं षोडशे वर्षे कुर्याच्चौलोक्तभादिके। गुरुशुद्ध्यादिके काले व्रतोक्ते व्रतमोक्षणम् ॥ ४॥ अथवा वस्त्रनक्षत्रे दारलग्नेषु शस्यते। गुरोर्गृहान्निवृत्तानां समावर्तनमण्डनम् ॥ ५ ॥ चण्डेश्वरः-अनुकूले निशानाथे शुभस्थानस्थिते रवौ। चूडाकरणवत्कार्या मेखलाबंधनच्युतिः ॥ ६ ॥ व्रतबंधोक्तनक्षत्रे दिने लग्ने शुभान्विते। मेखलामोक्षणं कुर्यादुपाकर्म यथाविधि ॥ ७ ॥ त्रीण्युत्तराण्यदिति पौष्णमघा धनिष्ठा पुष्याश्विशीतकरधातृकरादि पंच। सौम्यग्रहस्य दिवसे न सिते च पक्षे मौंजीविमोक्षणविधिं प्रवदंति तज्ज्ञाः ॥ ८ ॥ कालविधाने-वागीशादितिसौम्यपौष्णदिनकृन्मित्रोत्तरारोहिणी गोविंदेषु शशांकभानुगुरुविच्छुक्रांशवारादिषु। रिक्तां पर्व तथाष्टमीं प्रतिपदं मेषं च कीटं हरिं हित्वा शुद्धियुतेष्टमेह्नि विमले कुर्यात्समावर्तनम् ॥ ९ ॥ रामोपि-व्रतोक्तदिवसादौ हि समावर्तनमिष्यते ॥ १० ॥ गदाधरः-वेदं समाप्य स्नायात् स्नानशब्देन समावर्तनसंस्कार उच्यते। स्नानं च द्वितियाश्रमप्रतिपत्तिः। तदनुष्ठानयोग्यता च षडंगे वेदोधिगते भवति। इति श्रीज्योतिर्विद्वयादत्तात्मजरामदीनकृते संग्रहे बृहद्दैवज्ञरंजने एकोनसप्ततितमं समावर्तन प्रकरणं समाप्तम्।

---

# अथ सप्ततितमं छुरिकाबंधनप्रकरणं प्रारभ्यते ।



बृहस्पतिः—शूद्राणां स्नानभावेन शस्त्रसंयोग उच्यते । ब्रह्मप्रसादाच्चैतस्मादायुः-शौर्य्यविवर्द्धनः ॥ १ ॥ नारदः—छुरिकाबंधनं वक्ष्ये नृपाणां प्राक्करग्रहात् । विवाहोक्तेषु मासेषु शुक्लपक्षेप्यनस्तगे ॥ २ ॥ शूद्राणां राजपुत्राणां मौंज्यभावेऽस्त्रबंधनम् । मौंजीबंधोक्ततिथ्यादौ कार्यं भौमादिनं विना ॥ ३ ॥ रामः—विचैत्रव्रतमासादौ विभौमास्ते विभूमिजे । छुरिकाबंधनं शस्तं नृपाणां प्राग्विवाहतः ॥४ ॥ नारदः—जीवे शुक्रे च भूपुत्रे चन्द्रताराबलान्विते । मौंजीबंधर्क्षतिथिषु कुजवार्जितवासरे ॥ ५ ॥ तेषां नवांशके कर्तुरष्टमोदयवार्जिते । शुद्धेष्टमी विधौ लग्ने षडष्टान्त्यावेवर्जिते ॥ ६ ॥ धनत्रिकोणकेन्द्रस्थैः शुभैस्त्र्यायारिगैः परैः । छुरिकाबंधनं कार्यमर्चयित्वा सुरान् पितॄन् ॥ ७ ॥ अर्चयेच्छुरीकां सम्यग्देवतानां च संनिधौ । ततः सुलग्ने वध्नीयात्कटचां लक्षणसंयुताम् ॥ ८ ॥ तस्यास्तु लक्षणं वक्ष्ये यदुक्तं ब्रह्मणा पुरा । संमितं छुरिकायामविस्तारेणैव ताडयेत् ॥ ९ ॥ भाजितं गजसंख्यैश्च अंगुलान्परिकल्पयेत् । शेषं चैव फलं वक्ष्ये ध्वजाये धनवान्भवेत् ॥ १० ॥ धूमाये मरणं सिंहे जयेश्वायेति रोगताम् । धनलाभो वृषेत्यन्तं दुःखी भवति गर्दभे ॥ ११ ॥ गजायेत्यन्तसंप्राप्तिर्ध्वांक्षे वित्तविनाशनम् ॥१२॥ खड्गोद्वाहः । अन्यः—चन्द्रपंचांगसंशुद्धौ सौम्यायनविवाहभे । राज्ञो गोधूलिके लग्ने खड्गोद्वाहः प्रशस्यते ॥ १३ ॥ कक्षाबंधनम् । त्रीण्युत्तराण्यदितिपौष्णमघाधनिष्ठापुष्याश्विशीतकरधातृकरादि पंच । एतानि कक्षविधिबंधनसंमितानि सौम्यग्रहस्य दिवसे च सिते च पक्षे ॥१४॥अथाभिवादनप्रकारः तत्र याज्ञवल्क्यः—ततोभिवादयेद्वृद्धानसावहमिति ब्रुवन् । ब्रह्मपुराणे—उत्थाय मातापितरौ पूर्वमेवाभिवादयेत् । आचार्यश्च ततो नित्यमभिवाद्यो विजानता ॥ १५ ॥ मनुः—यो न वेत्त्यभिवादस्य विप्रः प्रत्याभिवादनम् । नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः ॥ १६ ॥ अभिवादेत यो विप्र आशिषं न प्रयच्छति । श्मशाने जायेत वृक्षः कंकगृध्रोपसेवितः ॥ १७ ॥ शातातपः—पाषंडं पतितं व्रात्यं महापातकिनं शठम् । सोपानत्कं कृतघ्नं च नाभिवादेत्कदाचन ॥ १८ ॥ धावंतं च प्रमत्तं च मूत्रोत्सर्गकृतं तथा । भुंजानमाचमानं च नास्तिकं नाभिवादयेत् ॥ १९ ॥ वमंतं जृंभमाणं च कुर्वंतं दंतधावनम् । अभ्यक्तशिरसं चैव स्नातं वा नाभिवादयेत् ॥ २० ॥ बृहस्पतिः—जपयज्ञगणस्थं च समित्पुष्पकुशानलान् । उदपात्रार्घभैक्षान्नहस्तं तं नाभिवादयेत् ॥ २१ ॥ उदक्यां सूतिकां नारीं भर्तृघ्नीं ब्रह्मघातिनीम् । अभिवाद्य द्विजो मोहादहोरात्रेण शुद्ध्यति ॥ २२ ॥ जन्मदग्निः—देवप्रतिमां दृष्ट्वा यतिं दृष्ट्वा त्रिदंडिनम् । नमस्कारं न कुर्याच्चेत्प्रायश्चित्ती भवेन्नरः॥ २३

मनुः-अभिवादनशीलस्य नित्यं वृद्धोपसेविनः। चत्वारि तस्य वर्धंते आयुः प्रज्ञा यशो बलम् ॥ २४ ॥ एतच्चाभिवादानमधिकवयसामेव कार्यम्। तथा च मनुः-ज्यायांसमभिवादयेत्। इति। स्मृत्यर्थसारे-गुरवो माता स्तन्यधात्री च पिता पितामहादयो मातामहश्चान्नदाता भयत्राता आचार्यश्चोपनेता च मंत्रविद्योपदेष्टा च तेषां पत्न्यश्चोपसंग्राह्याः समावृते न च। बाले समवयस्के चाध्यापके गुरुवच्चरेत्। मातुलाश्च पितृव्याश्च श्वशुराश्च यवीयांसोपि प्रत्युत्थायाभिवाद्याः। उपाध्यायः ऋत्विजो ज्येष्ठभ्रातरश्च सर्वेषां पत्न्यश्चैवं मातृष्वसा च सवर्णा भ्रातृभार्या च नित्यमभिवाद्याः। विप्रोष्य तूपसंग्राह्या ज्ञातिसंबंधियोषितः। विप्रोष्य विप्रं कुशलं पृच्छेन्नृपमनामयम्। वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च ॥ २५ ॥ न वाच्यो दीक्षितो नाम्ना यवीयानपि सर्वथा। पूज्यैस्तमभिभाषेत भोभवत्कर्मनामभिः ॥ २६ ॥ जन्मप्रभृति यत्किंचिच्चेतसा धर्ममाचरेत्। सर्वं तन्निष्फलं याति एकहस्ताभिवादनात् ॥ २७ ॥ एतदपि विद्वद्विषयम्। यतः स एवाह अजाकर्णेन विदुषो मूर्खाणामेकपाणिना। इति। अजाकर्णौ संपुटितौ यथा तथैव संपुटितं करद्वयमपीत्यजाकर्णौ। अभिवादने पादग्रहणं नास्ति। पादस्पर्शनं कार्यम्। सर्वे वापि नमस्कार्याः सर्वावस्थासु सर्वदा। अभिवादे नमस्कारे तथा प्रत्यभिवादने॥ आशीर्वाच्या नमस्कार्यैर्वयस्येतु पुनर्भवेत्। स्त्रियो नमस्या वृद्धाश्च वयसा पत्युरेव ताः ॥ २८ ॥ इति श्रीज्योतिर्विद्वर्यादत्तात्मजरामदीनज्योतिर्वित्कृते संग्रहे बृहद्दैवज्ञरंजने सप्ततितमं छुरिकाबंधनप्रकरणं समाप्तम्।

---

## अथैकसप्ततितमं विवाहप्रकरणं प्रारभ्यते।

अथ सर्वेषामाश्रमाणां गृहस्थाश्रमो मुख्यतरस्तस्य लक्षणमुक्तम्। दया लज्जा क्षमा श्रद्धा प्रज्ञा त्यागः कृतज्ञता। गुणा यस्य भवंत्येते गृहस्थो मुख्य एव च॥१॥ शंखः-वानप्रस्थो ब्रह्मचारी यतिश्चैव तथा द्विजः। गृहस्थस्य प्रसादेन जीवंत्येते यथाविधि ॥ २ ॥ गृहस्थ एव यजते गृहस्थस्तप्यते तपः। ददाति च गृहस्थश्च तस्माच्छ्रेयो गृहाश्रमी ॥ ३ ॥ व्यासः-गृहाश्रमात्परो धर्मो नास्ति नास्ति पुनः पुनः ॥ ४ ॥ यज्ञैभिर्दक्षिणावद्भिर्वह्निशुश्रूषया तथा। गृही स्वर्गमवाप्नोति तथा चातिथिपूजनात् ॥ ५ ॥ पुनर्व्यासः-यावन्न विद्यते जाया तावदर्द्धो भवेत्पुमान्। नार्द्धं प्रजायते सर्वं प्रजायेतेत्यपि श्रुतिः ॥ ६ ॥ दक्षः-पत्नीमूलं गृहं पुंसां यदि च्छंदानुवर्तिनी। गृहाश्रमात्परं नास्ति यदि भार्या वशानुगा ॥ ७ ॥ वसिष्ठः-शिष्यो भार्या शिशुर्भ्राता मित्रं दासः समाश्रिताः। यस्यैतानि विनीतानि तस्य लोकेपि गौरवम् ॥ ८ ॥ मनुः-यथा नदी नदाः सर्वे सागरे यांति संस्थितिम्। तथैवाश्रमिणः सर्वे गृहस्थे यांति संस्थितिम् ॥ ९ ॥ यथा वायुं समाश्रित्य वर्तंते सर्वजंतवः।

तथा गृहस्थमाश्रित्य वर्तंते सर्वं आश्रमाः ॥ १० ॥ यस्मात्त्रयोप्याश्रमिणो दानेनान्नेन चान्वहम् । गृहस्थेनैव धार्यंते तस्माज्ज्येष्ठाश्रमो गृही ॥ ११ ॥ वेदानधीत्य वेदौ वा वेदं वापि यथाक्रमम् । अविप्लुतब्रह्मचर्यो गृहस्थाश्रममाचेरत् ॥ १२ ॥ बृहस्पतिः—विवाहादेव सत्सृष्टिः सत्सृष्टचैव जगत्त्रयम् । चतुर्वर्गफलावाप्तिस्तस्मात्परिणयः शुभः ॥ १३ ॥ विवाहसमये काले सुखासीनं शुभं प्रियम् । दैवज्ञं भक्तितो नत्वा संपूज्यादौ यथाबलम् ॥ १४ ॥ उद्धूनि नामनी चोक्त्वा संपृच्छेत्सकृदेव तम् । ज्ञानी चास्याक्षराज्ज्ञात्वा लग्नं तत्कालसंभवम् ॥ १५ ॥ श्रीपतिः—प्राजापत्यं ब्राह्मदैवार्षिसंज्ञाः कालेषूक्तेष्वेव कार्या विवाहाः । गांधर्वाख्यश्चासुरो राक्षसश्च पैशाचो वा सर्वकाले विधेयाः ॥ १६ ॥ चत्वारो ब्राह्मणस्याद्या राज्ञां गांधर्वराक्षसौ । राक्षसश्चासुरो वैश्ये शूद्रे चान्त्यस्तु गर्हितः ॥ १७ ॥ ब्राह्मो विवाह आहूय दीयते शक्त्यलंकृता । यज्ञस्थऋत्विजे दैव आदायार्षस्तु गोद्वयम् ॥ १८ ॥ आसुरो द्रविणादानाद्गांधर्वः समयान्मिथः । राक्षसो युद्धहरणात्पैशाचः कन्यकाछलात् ॥ १९ ॥ अथाब्दशुद्धिः । नारदः—वर्षग्रहसंशुद्धिस्त्वयनविशुद्धिश्च माससंशुद्धिः । तिथिवारादिविशुद्धिर्लग्नांशविशुद्धिर्विवाहेषु ॥ २० ॥ वेदे वाक्ये जन्मतः प्रथमे वर्षे सोमो भुंक्तेथ कन्यका । गंधर्वोथ द्वितीयेब्दे तृतीयेग्निस्ततो नरः ॥ २१ ॥ पराशरस्तु—षडब्दमध्ये नोद्वाहः कन्या वर्षद्वयं ततः । सोमो भुंक्तेऽथ गंधर्वस्ततः पश्चाद्धुताशनः॥२२॥ अन्यदपि—चन्द्रगन्धर्ववह्न्यम्बुशिवसोमस्मरा इमे । पतयः कन्यकानां च बाल्यात् संति सदैव ते ॥ २३ ॥ अतः सप्तमवर्षादूर्ध्वं कन्यकाविवाह उचितः । पारिजाते यमः—स्त्रीणामुपनयनस्थानोपपन्नो विवाह इति तदुचितो वयोवस्थायां विवाहस्योचितत्वात् । यमः—सप्तसंवत्सरादूर्ध्वं विवाहः सार्ववर्णिकः । कन्यायाः शस्यते राजन्नान्यथा धर्मगर्हितः ॥२४॥बृहस्पतिः—सप्ताब्दात्पंच वर्षेषु स्वोच्चस्वर्क्षगतो गुरुः । अशुभोपि शुभं दद्याच्छुभर्क्षेषु च किंपुनः ॥ २५ ॥ व्यासः—अष्टवर्षा भवेद्गौरी नव वर्षा च रोहिणी । दशवर्षा भवेत्कन्या अतऊर्ध्वं रजस्वला ॥ २६ ॥ मरीचिः—गौरी ददन्नाकपृष्ठं वैकुंठं रोहिणी ददत् । कन्याददद्ब्रह्मलोकं रौरवं वृषली ददत् ॥ २७ ॥ वात्स्यः—गौरी विवाहिता सौख्यसंपन्ना स्यात्पतिव्रता । रोहिणी धनधान्यादि पुत्राद्या सुभगा भवेत् ॥ २८ ॥ कन्या विवाहिता संपत्समृद्धा स्वामिपूजिता ॥ २९ ॥ गौरी गुरोर्बलं देयं रोहिणीभास्करस्य च । कन्या चंद्रबलं देयमष्टदोषविवर्जिततस्पष्टा ॥ ३० ॥ अर्कगुर्वोर्बलं गौर्या रोहिण्यर्कबला स्मृता । कन्या चंद्रबला प्रोक्ता वृषली लग्नतो बलात् ॥ ३१ ॥ गुर्विंद्विनबला गौरी गुर्विंदुबलरोहिणी । रवींदुबलजा कन्या प्रौढा लग्नबला स्मृता ॥ ३२ ॥ वसिष्ठः—अब्देषु युग्मेषु च कन्यकानां स्वजन्मवर्षाच्छुभदो विवाहः । अयुग्मवर्षेषु शुभो नराणां विपर्यये दुःखगद प्रदः स्यात्॥३३॥नारदः—युग्मेब्दे जन्मतः स्त्रीणां प्रीतिदं पाणिपीडनम् । एतत्पुंसामयुग्मेब्दे

व्यत्यये नाशनं तयोः ॥ ३४ ॥ संवर्तः–युग्मेब्दे संपदो विंद्याद्धनधान्यायुषः सदा । भर्तृदुष्टा भवत्योजे वर्षे नास्त्यत्र संशयः ॥ ३५ ॥ पराशरः–युग्मेब्दे संपदः सौख्यविद्याधर्मायुषः सदा । भर्तृदुष्टा भवत्योजे निषेकान्नात्र संशयः ॥ ३६ ॥ कश्यपः–विवाहो जन्मतः स्त्रीणां युग्मेब्दे पुत्रपौत्रदः । अयुग्मे श्रीप्रदः पुंसां विपरीते तु मृत्युदः ॥ ३७ ॥ दैवज्ञो निर्दिशेद्युग्ममुद्वाहेब्दं प्रयत्नतः । सौभाग्यं धनसंपत्तिरोजे दुःखान्विता भवेत् ॥ ३८ ॥ मन्वर्थमुक्तावल्याम्–अयुग्मे दुर्भगा नारी युग्मे च विधवा भवेत् । तस्माद्गर्भान्विते युग्मे विवाहे सा पतिव्रता ॥ ३९ ॥ श्रीपतिनिबंधे–मासत्रयादूर्ध्वमयुग्मवर्षे युग्मे तु मासत्रयमेव यावत् । विवाहशुद्धिं प्रवदंति संतो वात्स्यादयो गर्गवराहमुख्याः ॥ ४० ॥ नारदः–आदौ मासत्रये नेष्टं युग्मसंवत्सरस्य तु । पुरतो वर्षशुद्धिश्च गर्भमासान्विताः शुभाः ॥ ४१ ॥ लल्लः–विवाहे जन्मतः स्त्रीणां वर्जनीयं प्रयत्नतः । नैव पुंसामिह प्राहुर्ज्योतिर्निर्णयविदो बुधाः ॥ ४२ ॥ श्रीपतिरपि–रवीज्यशशिशुद्धिश्च दशवर्षाणि कारयेत् । अत ऊर्ध्वं रजस्कन्या तस्माद्दोषो न विद्यते ॥ ४३ ॥ व्यासः–दशवर्षव्यतिक्रांता कन्या शुद्धिविवर्जिता । तस्यास्तारेंदुलग्नानां शुद्धौ पाणिग्रहो मतः ॥ ४४ ॥ नारदः–गुरुरबलो रविरशुभः प्राप्ते एकादशाब्दया कन्या । गणपतिगणकाविशुद्धः स गणको ब्रह्महा भवति ॥ ४५ ॥ राजमार्तंडे–संप्राप्तैकादशे वर्षे कन्या यो न विवाहति । मासे मासे रजस्तस्या पिता पिबति शोणितम् ॥ ४६ ॥ नारदः–संप्राप्ते द्वादशे वर्षे कन्या यो न विवाहति । मासि मासि रजस्तस्याः पिता पिबति शोणितम् ॥ ४७ ॥ यमः–कन्या द्वादशवर्षाणि याऽप्रदत्ता वसेद्गृहे । ब्रह्महत्यापितुस्तस्याः सा कन्या वरयेत्स्वयम् ॥ ४८ ॥ वसिष्ठः–रजो हि दृष्टं यदि कन्यकायाः कुलद्वयं दुर्गतिमेति तस्याः । तस्मान्नितांतं च तदुक्तकालं वध्वाश्च पाणिग्रहणं विधेयम् ॥ ४९ ॥ नारदः–यावन्तस्त्वृतवस्तस्याः समतीयुः पतिं विना । तावत्यो भ्रूणहत्यासु उभयोर्न ददाति ताम् ॥ ५० ॥ पितुर्गृहे तु या कन्या रजः पश्यत्यसंस्कृता । सा कन्या वृषली ज्ञेया तत्पतिर्वृषलीपतिः ॥ ५१ ॥ गुरुः–चाण्डाली वृषलीभूतास्त्वत्कृतोपनिया यदि । वन्ध्या स्याद्वृषलीरूपा वृषली मृतपुत्रिणी ॥५२॥ रजस्वला या कौमार्ये वृषली सावरूपिणी ॥५३॥ नारदः–पिता पितामहो भ्राता पितृव्यो मातुलस्तथा । पंचैते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् ॥ ५४ ॥ वात्स्यः–माता चैव पिता चैव ज्येष्ठभ्राता तथैव च । त्रयस्ते नरकं यांति दृष्ट्वा कन्यां रजस्वलाम् ॥ ५५ ॥ यस्तां विवाहयेत्कन्यां ब्राह्मणो मदमोहितः । असंभाष्यो ह्यपंक्तेयः स भवेद्वृषलीपतिः ॥ ५६ ॥ रजस्वलायाः कन्यायाः गुरुशुद्धिं न चिंतयेत् । अष्टमेपि प्रकर्तव्यो विवाहस्त्रिगुणार्चनात् ॥५७॥ सर्वत्रापि शुभं दद्याद्द्वादशाब्दात्परं गुरुः । पंच षष्ठाब्दयोरेव शुभगोचरता मता ॥ ५८ ॥ नारदः–अतिप्रौढा तु या कन्या कुलधर्मविरोधिनी । अविशुद्धचापि

सा देया चन्द्रलग्नबलेन तु ॥ ५९ ॥ राजग्रस्तेथवा युद्धे पितॄणां प्राणसंक्षये । अतिप्रौढा च या कन्या नानुकूल्यं प्रतीक्ष्यते ॥ ६० ॥ दैवज्ञमनोहरे–दुर्भिक्षे राष्ट्रभंगे च पित्रोर्वा प्राणसंक्षये । प्रौढायामपि कन्यायां प्रातिकूलं न दुष्यति ॥ ६१ ॥ अथ विनैव मेलापके विवाहः । दीपिकायाम्–अयोजिता संधिलब्धा क्रीता स्नेहादिनार्पिता । स्वयमेवागता कन्या नैवास्तां शुद्धिमेलकौ ॥ ६२ ॥ बहूनामेकजातीनां कन्यकानां करग्रहे । ज्येष्ठायां मेलकं वीक्ष्य लघ्वीनां नैव चिंतयेत् ॥ ६३ ॥ आसुरादिविवाहेषु राशिकूटं न चिंतयेत् । तथा द्व्यङ्गातिवृद्धानां दुर्भगानां पुनर्भवाम् ॥ ६४ ॥ मनसश्चक्षुषोर्यस्मिन्वरे यस्यां च योषिति । संतोषो जायते यत्र नान्यत्किंचिद्विचिंतयेत् ॥ ६५ ॥ जीवत्पितृकाया अपि ऋतौ वर्षत्रयानंतरं स्वयंवर कालः । अदातृकाया इत्येतत् सर्ववर्णसाधारणम् । कन्याप्रदातारः कालनिर्णयदीपिकायामुक्ताः–पिता पितामहो भ्राता मात बंधुर्यदा नहि । ऋतौ वर्षत्रयादूर्ध्वं कन्या कुर्यात्स्वयंवरम् ॥६६॥ बौधायनः–वर्षाणि त्रीण्यतुमती कांक्षेत पितृशासनम् । ततश्चतुर्थे वर्षे तु विंदेत सदृशं पतिम् ॥ ६७ ॥ मनुः–त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती । ऊर्ध्वं तु कालादेतस्माद्विंदेत सदृशं पतिम् ॥ ६८ ॥ अथ विवाहे शुद्धिक्रमः । सापिण्डं गोत्रशुद्धिं च शीलं सामुद्रिकाणि च । जातकादिममेलनं च वीक्ष्यं वाग्दानतः पुरा ॥ ६९ ॥ कुलपरीक्षा । मनुः–लेपभागश्चतुर्थाद्याः पित्राद्याः पिंडभागिनः । पिण्डदः सप्तमस्तेषां सापिंडं सप्तपौरुषम् ॥ ७० ॥ सख्यतान्भिद्यते यस्मात्पूर्वजादुभयत्रतः । तमादाय गणेद्धीमान् वरं यावच्च कन्यकाम् ॥ ७१ ॥ धर्मप्रदीपे–असपिण्डा च पितृतः सप्तमात्पुरुषात्परम् । मातृतः पंचमादूर्ध्वं योऽसमानार्षगोत्रजा ॥ ७२ ॥ स्मृतिचन्द्रिकायां निर्णयवचनम्–मूलगोत्रादन्यगोत्रामुद्वहेदष्टमाष्टमीम् । अन्यगोत्रादन्यगोत्रात्षष्ठः षष्ठीं समुद्वहेत् ॥ ७३ ॥ तृतीयां वा चतुर्थीं वा पक्षयोरुभयोरपि । उद्वहेत्सर्वथा लाभ इति कैश्चिदुदीरितम् ॥ ७४ ॥ मातुलस्य तु गोत्राच्च मातृगोत्रात्तथैव च । समानप्रवरा ह्यूढा परित्याज्या प्रपालयेत ॥ ७५ ॥ पंचमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा । उभयोर्मातृतश्चैव षष्ठः षष्ठीं समुद्वहेत् ॥ ७६ ॥ लिंगपुराणे–वाक्यबंधकृतानां तु स्नेहसंबंधभागिनाम् । विवाहोत्र न कर्तव्यो लोकगर्ही प्रसज्यते ॥ ७७ ॥ स्मृतिमहार्णवे–या तु प्रतीतिसंबंधा मातृगोत्रद्वये च या । सगोत्रा च सपिंडा च वर्ज्या सोद्वाहकर्मणि ॥ ७८ ॥ अथ गोत्रविचारः । समानप्रवरां कन्यामेकगोत्रामथापि वा । विवाहयति यो मूढस्तस्य वक्ष्यामि निष्कृतिम् ॥ ७९ ॥ उत्सृज्य तां ततो भार्यां मातृवत्परिपालयेत् । अथ समानार्षगोत्रजाविवाहे प्रायश्चित्तम् । परिणीय सगोत्रां तु समानप्रवरां तथा । त्यागं कुर्याद्द्विजस्तस्यास्ततश्चांद्रायणं चरेत् । त्यागश्चोपभोगस्यैव न तु तस्याः । प्रवरमंजर्याम्–पंचानां त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः । भृगवांगिरोगणेष्वेवं शेषेष्वेकोपि

वारयेत् ॥ ८० ॥ समानप्रवरो भिन्नो मातृगोत्रवरस्य च । विवाहो नैव कर्तव्यः सा कन्या भगिनी भवेत् ॥ ८१ ॥ अत्र विशेषमाह सूत्रकारः–एक एव ऋषिर्यावत्प्रवरेष्वनुवर्तते । तावत्समनागोत्रत्वमृते भृग्वंगिरोगणात् ॥ ८२ ॥ गोत्रप्रवर्तकाः प्राधान्येनाष्टौ मुनयः ते च अगस्त्याष्टमाः सप्तर्षयः । तथा च बोधायनः–विश्वामित्रो जामदग्निर्भरद्वाजोथ गौतमः । अत्रिर्वसिष्ठः कश्यपश्च सप्तैते ऋषयः स्मृताः ॥ ८३ ॥ सप्तऋषीणामगस्त्याष्टमानां यदपत्यं गोत्रमित्याचक्षत इति । अत्र संग्रहकारस्त्वष्टादशगणानाह–जमदग्न्यो वीतहव्यो वैन्यो गृत्समदाह्वयः । व्याघ्रः श्रीगौतमाख्यश्च भारद्वाजाह्वयः कपिः ॥ ८४ ॥ हारितो मौद्गलः कण्वो विरूपो विष्णुरुद्वयः । अत्रिर्विश्वामित्रकौंचो वसिष्ठः कश्यपाह्वयः ॥ ८५ ॥ अगस्त्यश्चेति मुनयोष्टादशगणाः स्मृताः ॥८६ ॥ स्मृत्यन्तरम्–सावित्रीं यस्य यो दद्यात्तत्कन्या न विवाहयेत् । तद्गोत्रे तत्कुले वापि विवाहो नैव दोषकृत्॥८७॥गुरुः–गुरोः सगोत्रप्रवरा नोद्वाहः क्षत्रवैश्ययोः । स्वगोत्रे ह्यनभिज्ञे च विप्रैराचार्यगोत्रजाः ॥ ८८॥ द्व्यामुष्यायणकाः सर्वे दत्तकक्रीतकादयः ॥ ८९ ॥ अथ वरपरीक्षा । कुलं शीलं वपुर्विद्या वयो वित्तं सनाथता । गुणाः सप्त वरे यस्मिन् तस्मै कन्या प्रदीयते ॥ ९० ॥ ब्राह्मणस्य कुलं ग्राह्यं न वेदाः सपदक्रमाः । कन्यादाने तथा श्राद्धे न विद्या तत्र कारणम् ॥ ९१ ॥ कवित्वमारोग्यमतीवमेधा धर्मप्रशस्ता मधुरा च वाणी । कृष्णे च भक्तिः स्वजने च पूजा स्वर्गच्युतानां खलु चिह्नमेतत् ॥ ९२ ॥ सत्यं तपो ज्ञानमहिंसता च विद्याप्रियत्वं च सुशीलता च । एतानि यो धारयते स विद्वान् न केवलं यः पठते स विद्वान् ॥९३॥ स्वाध्यायाढ्यं योनिवंतं प्रशांतं वैतानस्थं पापभीरुर्बहुत्वम् । स्त्रीषु क्षांतं धार्मिकं गोशरण्यमेतैः क्रांतं तादृशं पात्रमाहुः ॥ ९४ ॥ कारिकानिबंधे–अंधो मूकक्रियाहीनश्चापस्मारनपुंसकः । दूरस्थः पतितः कुष्ठी दीर्घरोगी वरा न सत् ॥९५॥ अत्यासन्ने नातिदूरे नात्याढ्ये नातिदुर्बले । वृत्तिहीने च मूर्खे च षड्भिः कन्या न दीयते ॥ ९६ ॥ मूर्खनिर्धनदूरस्थशूरमोक्षाभिलाषिणाम् । त्रिगुणाधिकवर्षाणां न देया जातु कन्यका ॥ ९७ ॥ ब्रह्मवैवर्ते–वृद्धाय गुणहीनायाबुद्धायाज्ञानिने तथा । दारिद्राय च मूर्खाय रोगिणे कुत्सिताय च ॥ ९८ ॥ अत्यंतकोपयुक्ताय चात्यंतदुर्मुखाय च । व्यंगुलायांगहीनाय चान्धाय बधिराय च ॥ ९९ ॥ जडाय चैव मूकाय क्लीबतुल्याय पापिने । ब्रह्महत्यां लभेत्सोपि यः स्वकन्यां ददाति च ॥ १०० ॥ अन्यत्रापि–बालं वृद्धं काणं कुब्जं वामनं बधिरं तथा । षंढं व्यंगं क्रोधरतं मूकं शीतगदं तथा ॥ १०१ ॥ परदाररतं वेश्यारतं पांडुकिनं पुनः । आलस्यं निश्चलं चैव गंडमालादिरोगिणम् ॥ २ ॥ निर्धनं दूरदेशस्थं शूरं मूर्खं तथैव च । दोषैकविंशति प्राप्तं न वृणीत कदाचन ॥ ३ ॥ दासीजातश्च कुष्ठी च अपस्मारी नपुंसकः । चत्वारश्च महादोषाः शेषा दोषाश्च मध्यमाः ॥ ४ ॥ अपरीक्ष्य वरं कन्यां

निर्गुणाय ददाति यः । कुलं तस्यैव तच्छोकसंतप्तो वा निकृंतति ॥ ५ ॥ अतः । शांताय गुणिने चैव यूने च विदुषेपि च । वैष्णवाय सुतां दत्वा दशवापी फलं भवेत् ॥ ६ ॥ दशवापिसमा कन्या यदि पात्रे प्रदीयते । अपत्यार्थं स्त्रियः सृष्टाः स्त्रीक्षेत्रं बीजिनो नराः । क्षेत्रं बीजवते देयं ना बीजी क्षेत्रमर्हति ॥ ७ ॥ अथ कन्यापरीक्षा । ज्योतिःसागरे–भुजंगविहंगमभीषणपादपनाम्नी लकाररेफांता । ऋक्षनदीनरसंज्ञा न विवाह्या कन्यका सद्भिः ॥ ८ ॥ अत्रांतशब्देन उपांतो लक्षितः । धन्या पर्वसु पुण्याख्या प्रेमनाम्नी च कन्यका । अतिदीर्घा च कपिला वर्ज्या कृष्णा-तिरोमशा ॥ ९ ॥ गतभीषणमाख्यातं नद्याख्यं वारुणं नदः । पक्षद्वीशं तरुर्मूलं यत्नतः परिवर्जयेत् ॥ ११० ॥ इति केचिन्मतं प्रोक्तं परैः प्रोक्तमथोच्यते । भुजंगादि प्रसिद्धार्थनाम्नीं कन्यां विवर्जयेत् ॥ ११ ॥ ललाटविपुला कुब्जा निर्लज्जाऽसत्यभाषिणी । व्याधिग्रस्था च हीनांगी स्थूला दीर्घा कलिप्रिया ॥ १२ ॥ अंधा च बधिरा कन्या दशदोषविवर्जयेत् । अर्चितं वचनमुन्नतं मनो निर्विशेषसुखदं दशा वपुः । अस्ति चेद्यदपराङ्मुखीमतिर्लक्षणैः किमु नरैर्नृयोषिताम् ॥ १३ ॥ मनुः– नोद्वहेत्कपिलां कन्यां नाधिकांगीं न रोगिणीम् । नालोमिका नातिलोमां न वाचालां न पिंगलाम् ॥ १४ ॥ ऋक्षवृक्षनदीनाम्नीं नास्तिपर्वतनामिकाम् । न पक्ष्यहिप्रेष्यनाम्नीं नच भीषणनामिकाम् ॥ १५ ॥ नेत्रे यस्याः केकरे पिंगले वा स्याद्दुःशीला श्यावलोलेक्षणा च । कूपो यस्या गंडयोः सस्मितायां निःसंदिग्धं बंधकीं तां वदंति ॥ १६ ॥ धृष्टा कुदंता यदि पिंगलाक्षी लोम्ना समाकीर्णपदांगयष्टिः । मध्ये च पुष्टा यदि राजकन्या कुलेपि योग्या न विवाहनीया ॥ १७ ॥ वधूं सुलक्षणोपेतां प्रसन्नास्यां कुलोद्भवाम् । कन्यकां वृणुयाद्रूपवतीमव्यंगविग्रहाम् ॥ १८ ॥ मात्स्यसूक्ते–गंगा च यमुना चैव गोमती च सरस्वती । नदीष्वासां नाम वृक्षे मालती तुलसी अपि ॥ १९ ॥ रेवती अश्विनी भेषु रोहिणी शुभदा भवेत् । अव्यंगांगीं सौम्यनाम्नीं हंसवारणगामिनीम् ॥ १२० ॥ तनुलोमकेशदशनां मृद्वंगीमुद्वहेत्स्त्रियम् ॥ २१ ॥ श्यामा सुकेशी तनुलोमराजी शुभ्रा सुशीला सुगतिः सुदंता । वेदीविमध्या यदि पंकजाक्षी कुलेन हीनापि विवाहनीया ॥ २२ ॥ ब्रह्मवैवर्ते–यः कन्यापालनं कृत्वा करोति विक्रयं यदि । विपदा धनलोभेन कुंभीपाकं स गच्छति ॥ २३ ॥ कन्यामूत्रपुरीषं च तत्र भक्षति पातकी । दंशितः कृमिकाकैश्च यावदिंद्राश्चतुर्दश ॥ २४ ॥ तदंते व्याधियोनौ च लभते जन्म निश्चितम् । विक्रीणाति मांसभारं वहत्येव दिवानिशम् ॥ २५ ॥ अथ प्रसंगेन स्वस्यारिष्टानि । पूर्वमायुः परीक्षेत पश्चाल्लक्षणमादिशेत् । आयुर्हीननराणां च लक्षणैः किं प्रयोजनम् ॥ २६ ॥ स्वप्नो निमित्तं शकुनं स्वकर्म शरीरभोगं तु किमद्भुतानि । दोषाभिचारग्रहचारकालाः काम्यानि दैवं विविधाफलानि ॥ २७ ॥ फलं यदि प्राक्तनमेवतत्किं कृष्याद्युपायेषु परं प्रयत्नः ।

श्रुतिस्मृतिश्चापि नृणां निषेधविध्यात्मके कर्मणि किं निषण्णा ॥ २८ ॥ अरुंधती ध्रुवश्चैव विष्णोस्त्रीणि पदानि च । आयुर्हीना न पश्यंति चतुर्थं मातृमण्डलम् ॥ २९॥ देहेप्यरुंधती जिह्वा ध्रुवो नासाग्रमेव च । भ्रुवोर्विष्णुपदं मध्यं तारकामातृमण्डलम् ॥ १३० ॥ नव भ्रुवोः सप्त घोषं पंच तारा त्रिनासिका । जिह्वामेकदिनं प्रोक्तं म्रियते मानवो ध्रुवम् ॥ ३१ ॥ आकीर्णश्रवणो यस्तु न घोषं श्रृणुयात्तथा । नभो मंदाकिनी- मंदो छायां नेक्षेद्गतायुषः ॥ ३२ ॥ हकारे शीतलो यस्य सकारोग्निसमप्रभः । लक्षणं त्वीदृशं दृष्ट्वा तस्यायुः स्यात्समार्द्धकम् ॥ ३३ ॥ स्थूलो वापि कृशोकस्मा- द्दरिद्रो वा धनाढ्यकः । यो भुंक्ते न धृतिं लेभे स याति यममंदिरम् ॥ ३४ ॥ पांसु- पंकादिषु न्यस्तं खंडं यस्य पदं भवेत् । पुरतः पृष्ठतो वापि सोष्टौ मासान्न जीवति ॥३५॥ संसृज्यते न सलिलैर्नलिनीदलवत्तनुः । स्नानमाचरतो यस्य षण्मासान्न स जीवति ॥ ३६ ॥ स्नानांबुलिप्तगात्रस्य यस्योरः प्राक्प्रशुष्यति । गात्रेष्वार्द्रेषु सर्वेषु सोर्द्धमासं न जीवति ॥ ३७ ॥ जलादर्शादिषु छायां विकृतां यः प्रपश्यति । स्वं स्वि- द्यते ललाटं च तस्य मृत्युरुपस्थितः ॥ ३८ ॥ न मांत्यंगुल्यस्तिस्रो मुखे यस्य स नश्यति । ऊर्ध्वतिर्यगधो दृष्टिर्यस्य स्यात्सोपि मृत्युभाक् ॥ ३९ ॥ नयनांते विनिष्पीडच यस्तु तेजो न पश्यति । मयूरचन्द्रिकाकारं स सप्ताहाद्विपद्यते ॥ १४० ॥ गंधर्वनगरं पश्येद्दिवानक्षत्रमण्डलम् । परनेत्रेषु चात्मानं न पश्येन्न स जीवति ॥ ४१ ॥ कंककाकाद्युलूकाद्या गोधाद्या यदि मध्यमाः । जीवाः शीर्षे पतंत्येव तदा जीवत्यसंशयः ॥ ४२ ॥ कपोतं प्रविशेद्यस्य गृहं घूको गृहोपरि । शब्दं कुर्यात्स नश्येच्च यः पश्येत्काकमैथुनम् ॥ ४३ ॥ स्वप्ने पश्यति आत्मानं षण्मासायुर्निरीक्षिते । कर्णनासाकरादीनां छेदनं पंकमज्जनम् ॥ ४४ ॥ पतनं दंतकेशानां पक्वमांसस्य भक्षणम् । खरोष्ट्रमहिषं यानं तैलाभ्यंगं च मृत्यवे ॥ ४५ ॥ अथ छाया- पुरुषदर्शनम् । अथातः संप्रवक्ष्यामि छायापुरुषलक्षणम् । येन विज्ञानमात्रेण त्रिकालज्ञो भवेन्नरः ॥ ४६ ॥ कालो दूरस्थितो वापि येनोपायेन लक्षयेत् । प्रवक्ष्यामि समासेन यथोद्दिष्टं शिवागमे ॥ ४७ ॥ एकांते विजने गत्वा कृत्वादित्यं तु पृष्ठतः । निरीक्षेत निजां छायां कंठदेशे समाहितः ॥ ४८ ॥ ततश्चात्मसमीक्षेत ततः पश्यति शंकरम् । ॐ ह्रीं परब्रह्मणे नमः । अष्टोत्तरशतं जप्त्वा पश्चाद्व्योम्नि स पश्यति । शुद्धस्फटिकसंकाशं नानारूपधरं हरम् । षण्मासाभ्यंतरे तस्य नास्ति किंचित्सुदुर्लभम् ॥ ४९ ॥ तद्रूपं शुभ्रवर्णं यः पश्यति व्योम्नि निर्मले । महादेवसमः साक्षाद्योचराणां पतिर्भवेत् ॥ १५० ॥ वर्षद्वयेन तेनाथ कर्ता हर्ता स्वयं प्रभुः । त्रिकालज्ञानमात्रेण कर्ता हर्ता स्वयंप्रभुः ॥ ५१ ॥ संपूर्णावयवं तं चेत्संमुखं श्वेतमीक्षते । यावदब्दं सुखं क्षेमं विजयं प्राप्नुयात्तदा ॥ ५२ ॥ तद्रूपं कृष्णवर्णं यः पश्यति व्योम्नि निर्मले । षण्मासान्मृत्युमाप्नोति स योगी नात्र संशयः ॥ ५३ ॥

पीते व्याधिर्भयं रक्ते नीले हत्यां विनिर्दिशेत् । दृष्टे तस्मिन् शिरोहीनो मासषट्कं स जीवति ॥ ५४ ॥ नानावर्णैरुपेतोस्मिन्नुद्वेगो जायते महान् । दुर्भिक्षं दारुणं देशे कर्बुरे च पराङ्मुखे ॥ ५५ ॥ विद्धं धूमिते रूक्षे भिन्ने छिन्ने विघातनम् । विकर्णे हायने चैकव्यंसे वै माससप्तकम् ॥ ५६ ॥ स रन्ध्रहृदये सप्त दश मासान् विहस्तके । विपार्श्वे त्रीण्युरस्के द्वौ व्यासे मासं हि जीवनम् ॥ ५७ ॥ द्विदेहदर्शने मृत्युः सद्य एव न संशयः । मित्रनाशो विपादे च बन्धुनाशो विबाहुके ॥ ५८ ॥ आत्मनाशो विशीर्षे स्यात्सर्वाभावे कुलक्षयः । पदांगुली च जठरं विनाशः क्रमशो भवेत् ॥ ५९ ॥ षण्मासेनाथ वर्षेण क्रमाद्वर्षद्वयेन वा । अशिरो मासि मरणं विना जंघां दिनत्रयम् ॥ १६० ॥ अष्टाभिः स्कंधनाशेन छायालुप्ते तु तत्क्षणात् । यस्य सूर्यस्वरोजस्रं षोडशाहं वहेत्तदा ॥ ६१ ॥ सद्यो मृत्युस्ततो नूनं न्यूनाहामिति मासके । एवं वामस्वरेणैव तयोर्नाशे मृतिः क्षणात् ॥ ६२ ॥ यस्य सूर्यायत चन्द्रः सूर्यश्चन्द्रायते तदा । अह्नद्वयं त्रयं तस्य षण्मासाभ्यंतरे मृतिः ॥ ६३ ॥ निष्प्रभं भास्करं पश्येन्म्रियते दशभिर्दिनैः । जाग्रत्पश्यति यः स्वप्नं सोपि वर्षं न जीवति ॥ ६४ ॥ न विंदेत्कर्णघोषं यो नासाग्रं रसनां ध्रुवम् । मेढ्रं वामं न पश्येद्यः षण्मासान्न स जीवति ॥ ६५ ॥ मणिबंधं ललाटस्थं यदि सूक्ष्मं न पश्यति । यो दुर्गंधिर्विना हेतुं निःश्रीको वाति दीप्तिमान् ॥ ६६ ॥ कृशाङ्गः स्थूलदेहः स्यात्क्षरत्केशनखोपि वा । स्ववद्वासेक्षणे वापि मासषट्कं स जीवति ॥ ६७ ॥ ध्रुवं विष्णुपदं चैवारुंधतीं मातृमंडलम् । भूगोले चंद्रगं चिह्नमपश्यन्नैव जीवति ॥ ६८ ॥ कफो मज्जति यस्याशु पंकादौ खंडितं पदम् । स्नातस्य प्राग्उरः शुष्येद्धूमालिः स्याच्च मूर्द्धनि ॥ ६९ ॥ नोसु भुंक्ते धृतिं धत्ते स्थूलदेहः कृशोथवा । विपर्यासः स्वभावस्य नोमात्यास्यंगुलत्रयम् ॥ १७० ॥ अथ कन्यादोषानाह । त्रिविक्रमः—मृत्युः पौंश्चल्यवैधव्यदारिद्र्यमनपत्यता । एतान् दोषान्परित्यज्य विवाहपटलं ब्रुवे ॥ ७१ ॥ अन्यत्रापि—पंच पाणिग्रहे दोषा वर्जनीयाः प्रयत्नतः । दारिद्र्यं मरणं व्याधिः पौंश्चल्यमनपत्यता ॥ ७२ ॥ चंद्राद्वा जन्मलग्नाद्वा बलाबलविमृश्यतः । अष्टमं पतिमृत्युः स्यात्सप्तमस्थानमेव च ॥ ७३ ॥ अथ जातकशास्त्रादर्भककुमार्योर्जन्मलग्नात् पापग्रहसामान्यतो निषेधकष्टतरशुभान्याह ताजकसागरात्—द्वितीयपुत्रांकव्यवस्थितश्च पापस्तु साधारणदोषमाह । केन्द्राष्टमस्थे खलु पापखेटे कष्टांतरं चान्यगृहे प्रशस्तम् ॥ ७४ ॥ अथ कामिनीनां योगजग्रहाद्रंडासुतहा कुलटायोगत्रयमाह—सूर्ये कुजे लग्नकलत्रसंस्थे स्वर्क्षोच्चगेप्यर्थयुताश्च रंडा । पापैः सुतस्थैः सुतवर्जिता स्याल्लग्ने कलत्रे कुलटा शनौ स्त्री ॥ ७५ ॥ अथ विधवा दुष्टा असुता दरिद्रा योगचतुष्टयमाह—लग्नास्तरंध्रगैः पापैर्विधवा व्ययगैः खला । पुत्रस्थैरसुता नारी दरिद्रा धनबंधुगैः ॥ ७६ ॥ अथ वरकन्ययोः मरणयोगमाह—षष्ठाष्टमस्थे हिमगौ च क्रूरे लग्ने मृतिः स्यात्खलु । वत्सरेष्टमे । चंद्रे । विलग्ने

क्षितिजे कलत्रे वर्षेष्टमे स्यान्मरणं वरास्त्रियोः ॥ ७७ ॥ उदयात्सप्तमसंस्थे रवितनये शशांकपुत्रे वा । वैधव्यं क्षितितनये सप्तमगे कन्यका म्रियते ॥ ७८ ॥ अथ कन्यायाः पतिद्वयादियोगं तथा पुरुषस्य भार्याद्वयादियोगमाह-चरोदये शीतकरे चरस्थिते पापग्रहैः केंद्रचरैर्बलान्वितैः । सौम्यग्रहैश्चाप्ययुतेक्षितैर्वधूःपतिद्वयं याति तथा द्विदेहगैः ॥ ७९ ॥ अथ पुंश्चलीकुलनाशिनीयोगद्वयमाह-लग्ने सितेंद्वोर्यमभौमभस्थयोः संदृष्टयोः पापखगेन पुंश्चली । लग्नेथ चंद्रे ह्यशुभग्रहान्तरे पापेक्षिते स्यात्कुलनाशिनी वधूः ॥ १८० ॥ अथ कुमारिकायोनिक्षतादियोगमाह-स्थिरोदये शीतगुलग्ननाथौ स्थिरर्क्षगावक्षतयोनिरंगना । चरोदये चंद्रविलग्ननाथौ चरस्थितौ स्याद्भ्रमिता कुमारिका ॥ ८१ ॥ चरे लग्ने चरे चंद्रे चरेंशे खलखेचराः । तेषां स्वामिचरेंशे वा नारी देशान्तरं व्रजेत् ॥ ८२ ॥ लग्ने धने जले पुत्रे मासे रन्ध्रे कुजे रवौ । पापयुक्तेक्षिते शुष्कराशौ गर्भेषु चोष्णता ॥ ८३ ॥ चरोदये शीतकरे द्विदेहे स्यात्स्वल्पदोषा सुकुमारिका सा । चंद्रेक्षितौ शुक्रकुजौ च केंद्रे कन्या सदोषां कुरुतेऽरिगौ च ॥ ८४ ॥ हित्वा स्थिरं चन्द्रकुजेत्थशाले परेण गुह्याद्भ्रमिता कुमारी । चंद्रार्कशन्योरुदयस्थयोः सा परेण कन्या प्रगटोपभुक्ता ॥ ८५ ॥ अथ सामान्यतः स्त्रीणां पौंश्चल्यादियोगं ताजिकशास्त्रादाह-लग्नाधिनाथेन हिमांशुना वा यदित्थशालं कुरुते महीसुतः । भवत्यवश्यं स्वगृहेव योषा स्वर्क्षे कुजे याति तदीयमंदिरम् ॥ ८६ ॥ सपापशीतांशुरवीत्थशाले भुक्तांगनेयं नृपसंनिभेन । यमेत्थशाले भृतकेन भुक्तां । ज्ञशुक्रयोर्लेखकविप्रवैश्यैः ॥ ८७ ॥ यामित्रनाथे बहुखेटसंयुते भवंति जारा बहवस्तु योषिताः । भावीत्थशाले स्मरपस्य भाविनः त्यक्त्वा तथा द्यूनपतीसराफ्वः ॥ ८८ ॥ लग्ने चरेंदोर्धिषणेत्थशाले साध्वी तथा केन्द्रगते सुरार्चिते । धर्मात्मजस्थे च सती सुशीला ज्ञेयांगनास्ते त्वशुभैर्विवर्जितैः ॥ ८९ ॥ शुभैः शशांकलग्नस्थैरपापैः स्थिरराशिगैः । स्वर्क्षोच्चगैश्च केन्द्रस्थैः स्त्री सुशीला पतिव्रता ॥ १९० ॥ अथ रुष्टास्त्रीयोगमाह-तुर्योपरिस्थिते भृगुजे चतुर्थादधस्थितेर्केण समेति रुष्टा । शुक्रे पुनर्वक्रगतेभ्युपैति विनिर्गतेर्कादृगुजेन चेति ॥ ९१ ॥ पूर्णे विधौ सा द्रुतमेति रुष्टा क्षीणैः प्रभूतैर्दिवसैः समेति । सूर्ये बले भर्तुरनिष्टदात्री भर्ता स्त्रियोऽनिष्टकरः सिते च ॥ ९२ ॥ अथ पुंसोः प्रीत्यादि योगमाह-लग्नेशयामित्रपतीत्थशाले स्नेहो भवेत्स्त्रीनरयोरतीव । सुस्नेहदृष्ट्या च तयोः शशांककंबूलयोगे शुभयोः शुभं स्यात् ॥ ९३ ॥ लग्नेशास्तपयोः स्नेहदृष्ट्या सौख्यं मिथो भवेत् । क्रूरदृष्ट्या कलिं दृष्टेरभावे मध्यमं भवेत् ॥ ९४ ॥ लग्नास्थिते द्यूनपतौ स्वभर्तुरादेशकर्त्री वनिता सदा स्यात् । जायास्थिते लग्नपतौ स्वनार्या आदेशकारी पुरुषः सदैव ॥ ९५ ॥ पश्यंति सप्तमं सर्वे शनिजीवकुजाः पुनः । विशेषतश्च त्रिदशत्रिकोणचतुरष्टमान् ॥ ९६ ॥ लग्नेश्वरो लग्नगतः स्मरेशो जायास्थितो द्वावथ लग्नसंस्थौ । यामित्रगौ द्वावथ भर्तृवध्वोः

प्रेमातिरेकं कुरुते प्रकर्षात् ॥ ९७ ॥ शत्रुदृष्ट्या च दंपत्योर्नित्यं झकटको भवेत् । लग्नेशास्तपयोः सप्तदृष्ट्या स्युः प्रीतिरुत्तमा ॥ ९८ ॥ अथ वंध्या-काकवंध्या-मृतवत्सा-गर्भस्रवा-पुष्पहंता-योगपंचकमाह । स्वर्क्षस्थितौ रन्ध्रगतौ यमार्कौ तदा स्त्रियं संदिशतश्च वध्या । छिद्रस्थितौ चंद्रबुधौ सदोषां वा काकवंध्या वदतोंगना वै ॥ ९९ ॥ मृतप्रजा छिद्रगयोः सितेज्ययोर्गर्भस्रवाभूमिसुतेष्टमास्थिते । छिद्रे स्वरे छिद्रगते बलान्विते पुष्पं न विंदत्यबलासु गर्भदम् ॥ २०० ॥ अपरं च सुतस्थाने द्विपापे च त्रिपापे गुरुभस्थिते । तदा स्त्रीपुरुषौ वंध्यौ विज्ञेयौ शत्रुवीक्षतौ ॥ १ ॥ भगिनी गृहिणी भ्रातृमातुल मातुलानी च । पितृव्यमातृष्वसादि-सुतवत्कारका-दपि ॥ २ ॥ लग्ने शनौ कामगते शशांके शुक्रेक्षित वा यदि वंध्ययुक्तः ॥ ३ ॥ लग्ने व्यये चतुर्थे च पंचमे सप्तमे ग्रहाः । पतिर्वंध्या भवेन्नारी नारी वंध्या भवेत्पतिः ॥ ४ ॥ अथ नारीपुरुषयोर्मरणयोगमाह-लग्नेशरन्ध्रेशपतीतिथशालकृद्रंध्रस्थ चंद्रेण युतौ मृतिप्रदः । षष्ठस्थ आत्मानमरिंजनात्मनः कुर्याद्व्ययं प्राप्तगतश्च संततः । सप्तमे क्रूरखचरः शुभदृष्टिविवर्जितः । भार्यामरणदः प्रोक्तो विनष्टो वास्तनायकः ॥ ५ ॥ अथ केवलभौमकृद्वधूवरयोर्दोषमाह-लग्ने व्यये च पाताले यामित्रे चाष्टमे कुजे । कन्या भर्तृविनाशाय भर्तुः कन्या विनश्यति ॥ ६ ॥ लग्नादिंदोर्यदा भौमः सप्ता-ष्टांत्याद्यतुर्यगः । पत्युर्भार्याविनाशाय भार्यायाः पतिनाशनम् ॥ ७ ॥ द्व्यादि-पापयुते भौमे सप्तम चाष्टमे स्थिते । बालवैधव्ययोगः स्यात्कुलनाशकरी वधूः ॥ ८ ॥ सप्तमस्थो यदा भौमो गुरुणा च निरीक्षिते । तदा तु सर्वसौख्यं स्यान्मंगली दोष नाशकृत् ॥ ९ ॥ गुरुः-पापयुक्तो यदा चंद्रात्षष्ठे चाष्टमगे यदि । विवाहसमया-न्मृत्युं दद्यादष्टाब्दतयोः ॥ २१० ॥ लग्ने पापग्रहैर्युक्ते नीचशत्रुगृहास्थितैः । अष्टमे वत्सरे चैव दंपत्योर्न शुभावहः ॥ ११ ॥ जन्मलग्ने यदा चंद्रस्तस्मात्षष्ठेऽष्टमे कुजः । वर्षाष्टमे नरो याति यमालयमपुत्रकः ॥ १२ ॥ कामार्ता विधवा कुलक्षयकरी पापद्वये चास्तगे वेश्या स्वामिवधं करोति कुलटा पापत्रयं चास्तगे । राहुः सप्तमगः करोति नियतं रिष्टं निहंति स्त्रियं चांडालीगतिचित्तमेव कुरुते पापत्रये वीक्षितः ॥ १३ ॥ वसिष्ठः-स्वनीचगः शत्रुनिरीक्षितश्च पापो विलग्नाद्यादि पंचमस्थः । विवाहिता या मृत-पुत्रिणी स्याद्वन्ध्याथ वा भर्तृविवर्जिता च ॥ १४ ॥ क्रूरव्योमचरः स्त्रीणामष्टमस्थो विलग्नतः । नीचारिपापवर्गेषु यदि मृत्युकरः पतेः ॥१५॥ आथास्या भंगयोगः । लग्नाद्विधोर्वा यदि जन्मकाले शुभग्रहो वा मदनाधिपश्च । द्यूनस्थितोहंत्यनपत्यदोषं वैधव्यदोषं च विषांगनाख्यम् ॥ १६ ॥ केंद्रे कोणे शुभाढ्यश्चेत्रिषडायेप्यसद्ग्रहाः । तदा भौमस्य दोषो न मदने मदपस्तथा ॥ १७ ॥ भौमतुल्यो यदा भौमः पापो वा तादृशो भवेत् । उद्वाहः शुभदः प्रोक्तश्चिरायुः पुत्रपौत्रदः ॥ १८ ॥ अथ कन्या-वैधव्योपशमनम् । मार्कंडेयपुराणे-बालवैधव्ययोगे तु कुंभेषु प्रतिमादिभिः ।

कृत्वा लग्नं ततः पश्चात्कन्योद्वाह्येति चापरे ॥ १९ ॥ तत्र पुनर्भूदोषाभाव उक्तो विधानखंडे-स्वर्णांबुपिप्पलानां च प्रतिमा विष्णुरूपिणी । तया सह विवाहे तु पुनर्भूत्वं न जायते ॥ २२० ॥ सूर्यारुणसंवादे-विवाहात्पूर्वकाले च चन्द्रताराबलान्विते । विवाहोक्तेन मंथन्या कुंभेन सह चोद्वहेत् ॥ २१ ॥ सूत्रेण वेष्टयेत्पश्चाद्दशतंतुविधानतः । कुंकुमालंकृतं देहं तयोरेकान्तमंदिरे ॥ २२ ॥ ततः कुभं च निःसार्य प्रभज्य सलिलाशये । ततोभिषेचनं कुर्यात्पंचपल्लववारिभिः ॥ २३ ॥ कुंभप्रार्थनापि तत्रैवोक्ता । वरुणांगस्वरूपाय जीवनानां समाश्रय । पतिं जीवय कन्यायाश्चिरं पुत्रसुखं कुरु ॥ २४ ॥ देहि विष्णो वरं देव कन्यां पालय दुःखतः । ततोलंकारवस्त्रादि वराय प्रतिपादयेत् ॥ २५ ॥ तत्रैव मूर्तिदानमप्युक्तम् । ब्राह्मणं साधुमामंत्र्य संपूज्य विविधार्हणैः । तस्मै दद्याद्विधानेन विष्णोर्मूर्तिं चतुर्भुजाम् ॥ २६ ॥ शुद्धवर्णसुवर्णेन वित्तशक्त्यांथवा पुनः । निर्मितां रुचिरां शंखगदाचक्राब्जसंयुताम् ॥ २७ ॥ दधानां वाससी पीते कुमुदोत्पलमालिनीम् । सदक्षिणां च तां दद्यान्मन्त्रमेनमुदीरयेत् ॥ २८ ॥ यन्मया प्राचि जनुषि त्यक्त्वा पतिसमागमम् । विषोपविषशस्त्राद्यैर्हतो वातिविरक्तया ॥ २९ ॥ प्राप्यमानं महाघोरं यशःसौख्यधनापहम् । वैधव्यात्पतिदुःखौघनाशाय सुखलब्धये ॥२३०॥ बहुसौभाग्यलब्धौ च महाविष्णोरिमां तनुम् । सौवर्णनिर्मितां शक्त्या तुभ्यं संप्रददे द्विज ॥ ३१ ॥ अनघाद्याहमस्मीति त्रिवारं प्रजपेदिति । एवमस्त्विति तस्योक्तिं गृहीत्वा स्वगृहं विशेत् ॥ ३२ ॥ ततो वैवाहिकं कुर्याद्विधिं दाता मृगीदृशः ॥ ३३ ॥ अन्येप्यश्वत्थवृक्षविवाहवृक्षसेचनादयस्तत्रैव ज्ञेयाः । ग्रन्थगौरवभयान्नेहोच्यते । अथ जन्मर्क्षविचारः । च्यवनः-विशाखातुलया युक्ता देवरस्य शुभावहाः । विशाखा वृश्चिकोद्भूता देवरं हंत्यसंशयम् ॥ ३४ ॥ वृद्धनारदः-निहंति देवरं कन्या तुलामिश्रद्विदैवजा । चतुर्थपादजा त्याज्या दुष्टा वृश्चिकपुच्छवत् ॥ ३५ ॥ नारदः-सुतः सुता वा नियतं श्वशुरं हंति मूलजः । तदंत्यपादजो नैव तथाश्लेषाद्यपादजः ॥ ३६ ॥ रामाचार्योपि-श्वश्रूविनाशमहिजः सुतरां विधत्तः कन्यासुतौ निर्ऋतिजौ श्वशुरं हतश्च । ज्येष्ठाभजाततनयास्वधवाग्रजं च शक्राग्निजा भवति देवरनाशकर्त्री ॥ ३७ ॥ द्विशाद्यपादत्रयजा कन्या देवर सौख्यदा । मूलांत्यपादसर्पाद्यपादजातौ तयोः शुभौ ॥ ३८ ॥ ज्योतिःसारे-मूलजा च गुणं हंति व्यालजा कुलटांगना । विशाखाजा देवरघ्नी ज्येष्ठाजा ज्येष्ठनाशिनी ॥ ३९ ॥ द्वीशसार्पेंद्रमूलेषु देवरं श्वशुराग्रजम् । श्वशुरं वैक्रमाद्धंति कन्यापुरुषयोर्द्वयाः ॥२४०॥ गर्गः-मूलजा श्वशुर हंति सार्पजा च तदंगनाम् । ज्येष्ठजा च पतिज्येष्ठं देवरं तु द्विदैवजा ॥४१॥ धवाग्रजं हंति सुरेंद्रजाता तथैव कन्या भगिनी पुमांश्च । द्विदैवजा दवरमाशु हन्याद्भार्यानुजामाशु हि हंति सूनुः ॥ ४२ ॥ पत्न्यग्रजामग्रजं वा हंति ज्यष्ठर्क्षजः पुमान् । तथा भार्या स्वसारं वा शालकं वा द्विदैवजः ॥ ४३ ॥

कश्यपपटले-मूलांत्यपादजौ श्रेष्ठौ तथाश्लेषांत्यपादजौ । द्वीशांत्यपादजौ दुष्टौ तथा ज्येष्ठांत्यपादजौ ॥ ४४ ॥ नारदः-मूलव्यालभवो दोषो विवाहे य उदाहृतः । स मौंजीबंधनादूर्ध्वं पुंसां नैवेति केचन ॥ ४५ ॥ पैत्र्यगण्डोद्भवा कन्या श्वशुरघ्नी च केचन । इत्यत्र केवलेनैकचरणाद्यः दोषकारकः ॥ ४६ ॥ अस्यापवादः । जगन्मोहने-ऋक्षदोषे समुत्पन्ने भावनाथेस्तनीचगे । षष्ठाष्टमव्यये वापि ऋक्षदोषो न संशयः ॥ ४७ ॥ जातकोत्तमे-मूलसार्पोद्भवं दौष्ट्यं न स्यात्पित्रादयो ग्रहाः । उक्तस्थानस्थिताः सौम्यदृष्टाश्च बलिनो यदि ॥ ४८ ॥ भावे भावाधिपे चैव चन्द्रे च बलशालिनि । उक्तदोषा विनश्यंति शुभग्रहयुतेक्षिते ॥ ४९ ॥ नामर्क्षाभमेलनम् । बृहस्पतिः-दंपत्योर्जन्मताराभ्यां नामर्क्षाभ्यामथापि वा । भमेलं चिन्तयेत् प्राज्ञो सुखसंतानहेतवे ॥ २५० ॥ वसिष्ठः-जन्मभं जन्मधिष्ण्येन नामधिष्ण्येन नामभम् । व्यत्ययेन यदा योज्यं दंपत्योर्निधनप्रदम् ॥ ५१ ॥ कुर्यात्षोडशकर्माणि जन्मराशौ बलान्विते । सर्वाण्यन्यानि कार्याणि नामराशौ बलान्विते ॥ ५२ ॥ ज्ञातं जन्म यदा पुंसः स्त्रियो न ज्ञायते तदा । जन्म नाम्नोर्बलं ज्ञात्वा कुर्वीतोद्वाहमंगलम् ॥ ५३ ॥ वसिष्ठः-अज्ञातजन्मनां नृणां नामभे परिकल्पना । तेनैव चिंतयेत् सर्वं राशिकूटादि जन्मवत् ॥ ५४ ॥ पटलसारे-जन्मज्ञानेपि चैकस्य द्वयोर्नाम्नोर्भमेलकः । चिन्त्यस्तत्रैव जन्मर्क्षाद्वीक्ष्यं लग्नेंदुजं बलम् ॥ ५५ ॥ अन्यः-वध्वा जन्म यदा ज्ञातं न विज्ञातं वरस्य तु । नामर्क्षाभ्यां तदा कुर्याद्दंपत्योः पाणिपीडनम् ॥५६॥ जन्मर्क्षं यदि न ज्ञातं तदा नामैव संश्रयेत् । सर्वदा लौकिकार्येषु नामर्क्षमवलोकयेत् ॥ ५७ ॥ यदा स्त्री जन्मसम्पत्तिर्वरजन्म न लभ्यते । स्त्रियः स्याज्जन्मशुद्धिर्नुर्नाम्नोर्मेलक्रिया तदा ॥ ५८ ॥ वरस्य जन्मना सार्द्धं नाम वध्वा विचिंतयेत् । नतु नाम्नाक्षरस्यात्र अंगना जन्म चिंतयेत् ॥ ५९ ॥ शारंगधरः-विवाहघटनं चैव लग्नजं ग्रहजं बलम् । नामाभिचिंतयेत्सर्वं जन्म न ज्ञायते सदा ॥ २६० ॥ दीपिकायाम्-जन्म न ज्ञायते येषां तेषां नाम्नैव गण्यते । चक्रेऽवकहडे भांशे तन्नाडी कैश्चिदग्निभात् ॥ ६१ ॥ काकिण्यां वर्गशुद्धौ च वादे द्यूते स्वरोदये । मंत्रे पुनर्भूवरणे नामराशेः प्रधानता ॥ ६२ ॥ नृसिंहः-नीचवर्णोद्भवानां च स्त्रीपुंसोर्वैरिभे गण । नामांतरे तत्कार्यं विवाहादौ विचक्षणैः ॥६३॥ पटलसारे-वर्णं च वश्यं च मिथश्च तारा योनिश्च मैत्री खगयोर्गुणश्च । भमेलको नाडिकशुद्धिरेते यथोत्तरं स्युर्बलिनोष्टभेदाः ॥ ६४ ॥ गौतमः-विप्राणां दश कूटं स्यात्क्षत्रियाणां तथाष्टकम् । वैश्यानामथ षड्भेदं शूद्राणां च चतुष्टयम् ॥ ६५ ॥ वर्णो वश्यं न दूरं च वल्लभत्वं च तारका । योनिर्मित्रगणे राशिर्नाडीकोति क्रमाद्दश ॥ ६६ ॥ तत्र दूरद्वयं हित्वा कूटं भदाष्टकं भवेत् । तारादि षट्कं षट्कं परं योनिचतुष्टयम् ॥ ६७ ॥ स्वराशिसंख्या दंपत्योर्वेदाप्तः शेषतः फलम् । उत्तमं स्याद्द्विशेषेल्पे मध्ये तुल्येधिकेधमम् ॥ ६८ ॥ अथ वर्णकूटम् । नारदः-झषालिकर्क

विप्रास्तदूर्ध्वा क्षत्रियादयः । पुंस्त्रीराशौ समे श्रेष्ठं पुंसो हीने तथा शुभम् ॥ ६९ ॥ प्रपंचसारे-स्युः कर्कटो वृश्चिकमीनविप्रा नृपाहिसिंहश्च धनुश्च मेषः । तुला च कुंभो मिथुनश्च वैश्या कन्यावृषोथो मकरश्च शूद्राः ॥ २७० ॥ अन्यः-कर्कालिमीनाविप्राः स्युः नृपाःसिंहाजधन्विनः । कन्यानक्रवृषा वैश्या शूद्रा युग्मतुलाघटाः ॥ ७१ ॥ केशवः-षट्कमणांशौ सितदेवदैत्यौ राजन्यकस्याधिपती कुजार्कौ । विट्शूद्रयो श्चन्द्रबुद्धौ शनिश्च संकीर्णपः स्त्रीनृषु वर्णमैत्री ॥ ७२ ॥ वरे वर्णाधिके प्रीतिरुत्तमा स्त्रीवरानुगाः । समवर्णे मिथः सौख्य हीने स्नेहो न जायते ॥ ७३ ॥ वर्णश्रेष्ठा तु या नारी वर्णहीनस्तु यः पुमान् । विवाह नव कुर्वीत तस्य भर्ता न जीवति ॥ ७४ ॥ यदि जीवति भर्ता च गर्भपात विदेशगः ॥ ७५ ॥ एकवर्णो भवेच्छ्रेष्ठो मध्यमौ विप्रक्षत्रियौ । अधमौ विप्रवैश्यौ च विप्र शूद्रौ विवर्जयेत् ॥ ७६ ॥ अथ गुणज्ञानम् । दैवज्ञमनोहरे-एको गुणः सदृग्वर्णे तथा वर्णोत्तमे वरे । हीनवर्णे वरे शून्यं केप्याहुः सदृशे दलम् ॥ ७७॥ मार्तंडोपि-भूवर्णैक्यवरोत्तमे इति ।

वश्यगुणाः ।

| ( | ब्रा. | क्ष. | वै | शू |
|---|---|---|---|---|
| ब्राह्मण | १ | ० | ० | ० |
| क्षत्रिय | १ | १ | ० | ० |
| वैश्य | १ | १ | १ | ० |
| शूद्र | १ | १ | १ | १ |

अथ हीनवर्णपरिहारः । विवाहपटले-हीनवर्णो यदा राशी राशीशो वर्ण उत्तमः । तदा राशीश्वरो ग्राह्यास्तद्राशिं नैव चिन्तयेत् ॥ ७८ ॥ अथ वश्यकूटम् । तत्रादौ राशिस्वरूपं वराहः-मत्स्यौ घटी नृमिथुनं सगदं सवीणं चापी नरोश्वजघनमकरो मृगास्यः । तौली ससस्य दहना प्लवगाश्च कन्या शेषाः स्वनामसदृशाः खचो राश्च सर्वे ॥ ७९ ॥ सर्वे वश्या नृजातेस्युर्भक्ष्यास्तेषां जलोद्भवाः । सिंहं हित्वाथ सिंहस्य वश्यास्ते वृश्चिकं विना ॥ २८० ॥ श्रीपतिः-सिंहं हित्वा मानुषाणां विधेया भक्ष्यास्तेषां तोयजाता हरेश्च । वश्यास्त्यक्त्वा वृश्चिकं चैवमन्यद्वश्यावश्यं विद्धि लोकप्रसिद्धम् ॥ ८१ ॥ वसिष्ठः-वश्यास्त्यक्त्वा राशयोन्ये नृभानां सिंह तस्याप्येकमन्ये विधेयाः । कीटं त्यक्त्वा लोकतोन्यत्प्रसिद्धं वश्यावश्यं नैव तोपालयंश्च ॥ ८२ ॥ बृहस्पतिः-मेषस्य वश्यो सिंहालिः कर्कि वश्यो वृषस्य तु । यमस्य कन्या वश्यं स्यात्कर्किणश्चापवृश्चिकौ ॥ ८३ ॥ तुला सिंहस्य वश्यं स्यात्पाथोनेयस्य मत्स्यभौ । मृगकन्ये तु जूकस्य कर्किस्याद्वृश्चिकस्य तु ॥ ८४ ॥ मीनौ चापस्य वश्यं स्यात्क्रियकुंभौ मृगस्य तु । मेषकुंभस्य वश्यं स्यान्मकरो मीनवश्यवत् ॥ ८५ ॥ अन्यः-चापाजौ वृषभेण कुंभमिथुनौ कर्केण मेषस्त्रिया शैलाग्री सविषेण कार्मुकहरी नक्रेण नित्यद्विषौ । तद्वत्कुंभतुले झषेण वशगाः सिंहं विनान्ये नृणां तद्भोज्यं जलचारिणो हरिवशाः सर्वे विना वृश्चिकम् ॥ ८६ ॥ दैवज्ञमनोहरे-सख्यं वैरं च भक्ष्यं च संख्यामाहुस्त्रिधा पुनः । वैरभक्ष्ये गुणाभावो द्वयोः संख्ये गुणद्वयम् ॥ ८७ ॥ वश्यवैरे गुणस्त्वेको वश्यभक्ष्ये गुणार्द्धकः ॥ ८८ ॥ मुहूर्तमार्तंडेपि-अथ

वशभक्षेद्धं द्वयोर्मित्रयोः खं वैराशनके धरारिवशक इति । विवाहवृन्दावने—स्वभाव मैत्री सखिता स्वपत्यो र्वशित्वमन्योन्यभयोनिशुद्धिः । परस्परः पूर्वगमे गवेष्यो हस्ते त्रिवर्गी युगपद्युतिश्चेत् ॥८९॥ अथ ताराकूटम् । वरभाद्गणयेद्यावत्कन्यर्क्षे कन्यकादपि । वरभं नवहृच्छेषं तारा संति परस्परम् ॥२९०॥ नारदः—स्त्रीभमारभ्य गणते नवपयायतः क्रमात् । जन्मात्रिपंच सप्तस्थं पुंभस्याद्वरनाशनम्॥९१॥पुंभमारभ्य गणने स्त्रीभं जन्मादिके स्थले । स्त्रीविनाशो भवेत्तस्माद्दिनकूटं विवर्जयेत्॥९२॥ शर्ङ्गीये—नरर्क्षाद्गणयेद्यावत्कन्यर्क्षं कन्यभादपि । नरभं नवहृच्छेषास्ताराः संति परस्परम् ॥ ९३ ॥ त्यक्त्वा त्रिपंचसप्ताख्याः शेषोद्वाहे मिथः शुभाः ॥ ९४ ॥ कश्यपः-गणयेत्कन्यका धिष्ण्याद्यावंत्यवरजन्मभम् । जन्मात्रिपंचसप्तर्क्षं हित्वान्यर्क्षं शुभप्रदः॥९५॥ केशवार्कः—भीरुभाद्चलपंचतृतीयाः शोकवैरविपदे वरतारा ॥ ९६ ॥ दैवज्ञमनोहरे-एकतो लभ्यते तारा शुभाश्चैवाशुभान्यतः । तदा सार्द्धं गुणाश्चैव तारा शुद्ध्या मिथस्त्रयः ॥ ९७ ॥ उभयोर्न शुभस्तारा तदा शून्यं समादिशेत् ॥ ९८ ॥ मार्तंडेपि-अथोसद्द्वयोरत्रयः मिश्रे तच्छकलम् इति ।

वश्यगुणाः ।

| | | | | | |
|---|---|---|---|---|---|
| चतुष्पाद | २ | ॥ | १ | ० | २ |
| मानव | ॥ | २ | ० | ० | ० |
| जलचर | १ | ० | २ | २ | २ |
| वनचर | ० | ० | २ | २ | ० |
| कीटः | १ | ० | १ | ० | २ |

तारागुणाः

| तारा | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ |
|---|---|---|---|---|---|---|---|---|---|
| १ | ३ | ३ | १॥ | ३ | १॥ | ३ | १॥ | ३ | ३ |
| २ | ३ | ३ | १॥ | ३ | १॥ | ३ | १॥ | ३ | ३ |
| ३ | १॥ | १॥ | ० | १॥ | ० | १॥ | ० | १॥ | १॥ |
| ४ | ३ | ३ | १॥ | ३ | १॥ | ३ | १॥ | ३ | ३ |
| ५ | १॥ | १॥ | ० | १॥ | ० | १॥ | ० | १॥ | १॥ |
| ६ | ३ | ३ | १॥ | ३ | १॥ | ३ | १॥ | ३ | ३ |
| ७ | १॥ | १॥ | ० | १॥ | ० | १॥ | ० | १॥ | १॥ |
| ८ | ३ | ३ | १॥ | ३ | १॥ | ३ | १॥ | ३ | १॥ |
| ९ | ३ | ३ | १॥ | ३ | १॥ | ३ | १॥ | ३ | ३ |

अथ योनिकूटम । रामाचार्यः—अश्विन्यांबुपयोर्हयोनिगदितः स्वात्यर्कयोः कासत्काल सिंहोवस्वजपाद्भयोः समुदितो याम्यंतयोः कुंजरः । मेषो देवपुरोहितानलभयोः कर्णलतः बुनोर्वानरः स्याद्वैश्वाभिजितोस्तथैव नकुलश्चंद्राब्जयोन्योरहिः ॥ ९९ ॥ ज्येष्ठामैस्तं स भयोःकुरंग उदितो मूलार्द्रयोः श्वा तथा मार्जारोदिति सार्पयोरथ मघायोन्योस्तथैवोंदुरुत्रमि व्याघ्रो द्वीशभचित्रयोरपि च गौरर्यम्णबुध्न्यर्क्षयोर्योनिः पादगयोः परस्परमहावैरं वि ११ त्यजेत् ॥ ३०० ॥

योनिगुणाः

| | अ. | ग. | मे. | स. | श्वा | मा. | मू. | गौ. | भैं. | व्या | ह. | वा. | न. | सिं. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| अश्व | ४ | २ | २ | ३ | २ | २ | २ | १ | ० | १ | ३ | ३ | २ | १ |
| गज | २ | ४ | ३ | ३ | २ | २ | २ | २ | ३ | १ | २ | ३ | २ | ० |
| मेष | २ | ३ | ४ | २ | १ | २ | १ | ३ | ३ | १ | २ | ० | ३ | १ |
| सर्प | ३ | ३ | २ | ४ | २ | १ | १ | १ | १ | २ | २ | २ | ० | २ |
| श्वान | २ | २ | १ | २ | ४ | २ | १ | २ | २ | १ | ० | २ | १ | १ |
| मार्जार | २ | २ | २ | २ | २ | ४ | ० | २ | २ | १ | ३ | ३ | २ | २ |
| मूषक | २ | २ | १ | १ | १ | ० | ४ | २ | २ | २ | २ | २ | २ | १ |
| गौ | १ | २ | ३ | २ | २ | २ | २ | ४ | ३ | ० | ३ | २ | २ | १ |
| भैंस | ० | ३ | ३ | २ | २ | २ | २ | ३ | ४ | १ | २ | २ | २ | ३ |
| व्याघ्र | १ | २ | १ | १ | १ | १ | २ | ० | १ | ४ | १ | १ | २ | २ |
| हरिण | ३ | २ | २ | २ | २ | ३ | २ | ३ | २ | १ | ४ | २ | २ | ० |
| वानर | ३ | ३ | ० | २ | २ | ३ | २ | २ | २ | १ | २ | ४ | ३ | २ |
| नकुल | २ | ३ | ३ | ० | ० | २ | १ | २ | २ | २ | २ | ३ | ४ | २ |
| सिंह | १ | ० | १ | २ | २ | १ | १ | १ | ३ | २ | २ | २ | २ | ४ |

परिहारवाक्यम् । अत्रिः–एकयोनिषु संपत्यै दंपत्योः संगमः सदा । भिन्नयोनिषु मध्यस्यादरिभावो न चैतयोः ॥ १ ॥ योनिरभावे नोद्वाहः स तु कार्यो वियोगदः । राशिवश्यं च यद्यस्ति कारयेन्न तु दोषभाक् ॥ २॥ एकयोनिषु कलहो गजयोः सिंहयोः शुनोः । महद्वैरस्य समता माहिषस्य कपेस्तथा ॥ ३ ॥ सद्भकूटे योनिवैरं मृत्युदं च परित्यजेत् । तत्र चेद्भहयोः सख्यं नातिदुष्टं विदुर्बुधाः ॥ ४ ॥ योनिवैरं सदा त्याज्यं स्त्रीपुंसोर्भिन्नलिंगयोः । एकलिंगजयोः प्रोक्तं मध्यमं नातिदोषदम् ॥ ५ ॥ सति सद्राशिकूटेपि योनिवैरं न दोषकृत् । यदि स्यादबले योनेः पुंसोर्योनिर्बलीयसी ॥ ६ ॥ अथग्रहमैत्री । गणेशः–चन्द्रेज्यक्षितिजाः रवींदुतनयोगुर्विन्दुसूर्याः क्रमात् शुक्रार्कौ रविचन्द्रभूमितनयाः ज्ञार्की सितज्ञौमतौ । अर्कादेः सुहृदः समा अथ बुधाः सर्वे च शुक्रार्कजौ भौमाचार्ययमा यमः कुजगुरू पूज्यः परे वैरिणः ॥ ७ ॥ केशवः–अपार्श्वद्वद्वयगाः प्रसूतौ तत्कालमित्राणि मिथः स्वपंथा । न्यूनामपि स्त्री नृषु भृत्यराज्ञां कार्यस्तत्कालसंख्यं विशिनष्टि मैत्रीम् ॥ ८ ॥ नारदः–नैसर्गिकाणि मित्राणि चिंतनीयानि कर्णान्ततः । न च तत्कालमित्राणि वश्यराशिमतः शृणु ॥ ९ ॥ वसिष्ठः–अन्योन्यमित्रं श्रेष्ठमैस्तं स्यात्समित्रं तु मध्यम् । उदासीनं कनिष्ठं स्यान्मृतिदं शात्रवं स्मृतम् ॥ १० ॥ खेटौ वोडुरुमित्रं च विज्ञेयं दंपत्योः कलहप्रदम् । अन्योन्यं समशत्रुत्वं दंपत्योर्निधनप्रदम् ॥ ११ ॥ दैवज्ञमनोहरे–ग्रहमैत्रं सप्तविधं गुणाः पंच प्रकीर्तिताः । तत्रैकाधिपतित्वे च

मित्रत्वे गुणपंचकम् ॥ १२ ॥ चत्वारः सममित्रत्वे द्वयोः साम्ये त्रयो गुणाः । मित्रैवैरे गुणाश्चैकः समैवैरे गुणार्द्धकम् ॥ १३ ॥ परस्परं खेटवैरे गुणं शून्यं विनिर्दिशेत् । असद्भे सममित्रादौ व्येका ग्राह्या यथोदिता ॥ १४ ॥ मार्तंडे—एकेशोभयमित्रयोः शरमिता रद्धं समारातिके चत्वारः सममित्रके रिपुहिते भूमिव्युदासे त्रयः ॥ १५ ॥

| वधूगुणाः | वरगुणाः | | | | | | |
|---|---|---|---|---|---|---|---|
| | र | चं | मं | बु | गु | शु | श |
| र | ५ | ५ | ५ | ३ | ५ | ० | ० |
| चं | ५ | ५ | ४ | १ | ४ | ॥ | ॥ |
| मं | ५ | ४ | ५ | ॥ | ५ | ३ | ॥ |
| बु | ३ | १ | ॥ | ५ | ॥ | ५ | ४ |
| बृ | ५ | ४ | ५ | ॥ | ५ | ॥ | ३ |
| शु | ५ | ॥ | ३ | ५ | ॥ | ५ | ५ |
| श | ० | ॥ | ॥ | ४ | ३ | ५ | ५ |

अस्यापवादः । वसिष्ठः—द्विर्द्वादशे वा नवपंचमे वा षट्काष्टके राक्षसयोषितौ वा । एकाधिपत्ये भवनेशमैत्रैः शुभाय पाणिग्रहणं विधेयम् ॥ १६ ॥ राजमार्तंडः—भवेत्रिकोणे बहुपुत्रवित्तो द्विर्द्वादशे चार्थमुपैति कन्या । षट्काष्टके सौख्यफलं विधत्ते स्त्रीणां विवाहो ग्रहमैत्रिभावे ॥ १७ ॥ सप्तर्षिमते—नभागारिभवं हरत्सद्भकूटं विरुद्धं भकूटं हरेत्खेटमैत्री । न वर्णशुद्धिर्नगणो न योनिर्द्विर्द्वादशे चापि षडाष्टके वा ॥ १८ ॥ वैरेपि दूरेप्यथवा त्रिकोणे मैत्री यदा स्याच्छुभदो विवाहः ॥ १९ ॥ केशवः—व्ययेन वित्तं न तपस्यपत्यं नायुर्द्विषत्वेव वधूवराणाम् । द्विर्द्वादशे पंचनवः षडष्टे जन्मर्क्षयोः सख्यविधिर्न दुष्टः ॥ २० ॥ शौनकः—वर्गवैरं योनिवैरं गणवैरं नृदूरकम् । दुष्टकूटफलं सर्वं ग्रहमैत्रेण नश्यति ॥ २१ ॥ यथेशयोर्मिथो भावो दंपत्योस्तादृशो भवेत् । दुष्टकूटं शुभं मैत्र्यात्सद्भकूटेपि शस्यते ॥ २२ ॥ ज्योतिःप्रकाशे—राशीशो सुहृदौ स्यातां जन्मकाले यदा तदा । ग्रहवैरेपि कर्तव्यं भकूटं मुनयो जगुः ॥ २३ ॥ ग्रहमैत्रे शुभे लब्धे राशिकूटं न चिंतयेत् ॥ २४ ॥ मनुरपि—राश्याधिपैके मैत्रे वा दुष्टकूटं शुभं भवेत् । इति ॥ २५ ॥ अथ गणकूटम् । केशवः—त्रियुग्मो रोहिण्यां सहशिवयमर्क्षे नरसुरे श्रुतिस्वारे हाश्विन्यनुमृगशिरः पुष्यनवकम् । परं दैत्ये मृत्युर्दनुजमनुजानामनिमिषैः सहश्चैवं वैरं निर्ऋतितनयानां परिणये ॥ २६ ॥ अन्यः—देमारामादमोदहे रारा मम दरादरा । दरा राम मदे रारा ममादेति गणत्रयम् ॥ २७ ॥ स्वगणे चोत्तमा प्रीतिः मैत्री स्यान्नरदेवयोः । असुरासुरयेर्वैरं मृत्युर्मानुषरक्षसोः ॥ २८ ॥ नारदः—दंपत्योर्जन्मभे चैकगणे प्रीतिरनेकधा । मध्यमा देवमर्त्यानां राक्षसानां तयोर्मृतिः ॥ २९ ॥ कश्यपः—स्ववगणे चोत्तमा प्रीतिर्मध्यमाऽमरमर्त्ययोः । मर्त्यराक्षसयोर्वैरं

ममरासुरयोरपि ॥ ३३० ॥ शारंगीये—रक्षोगणः पुमान् स्याच्चेत्कन्या भवति मानवी । केपीच्छंति तदोद्वाहं व्यस्तं कोपीह नेच्छति ॥ ३१ ॥ अन्यच्च—रक्षोगणो यदा नारी नरो नरगणो भवेत् । तदोद्वाहो न कर्तव्यो यस्माद्वैधव्यदो ध्रुवम् ॥ ३२ ॥ देवगणा यदा कन्या रक्षोगणसंभवो वरो भवति । दंपत्योः समता स्यात्परस्परप्रीतिरित्येके ॥ ३३ ॥ वरस्तीव्रगणो वापि कन्या च नृगणा भवेत् । दुष्टकूटे गुणाढ्येपि तत्र मृत्युर्न संशयः ॥ ३४ ॥ लल्लः—संबंधो निजयोनौ नृपमित्रकलत्र पूर्वशस्तः। वध्यां नरामराणां मध्यमो नररक्षसां किंचित् ॥ ३५ ॥

| वधूगुणाः \ वरगुणाः | देव | मनुष्य | राक्षस |
|---|---|---|---|
| देव | ६ | ५ | १ |
| मनुष्य | ६ | ६ | ० |
| राक्षस | १ | ० | ६ |

| वधूगुणाः \ वरगुणाः | आदि | मध्य | अंत्य |
|---|---|---|---|
| आदि | ० | ८ | ८ |
| मध्य | ८ | ० | ८ |
| अंत्य | ८ | ८ | ० |

अस्यापवादः । केशवः—रक्षोगणो यदि नरो नृगणा कुमारी सद्राशिकूटखगमैत्रिभयोनिशुद्धिः । यद्यस्ति तत्र शुभदं करपीडनं च वामभ्रुवां खलु यदा नहि नाडिवेधः॥३६॥ सद्भकूटं योनिशुद्धिग्रहसख्यं गुणत्रयम् । एष्वेकतमसद्भावे नारी रक्षोगणा शुभा ॥३७॥ गर्गः—ग्रहमैत्रिश्च राशिश्च विद्यते नियतं यदि । न गणाभावजनितं दूषणं स्याद्विरोधदम् ॥ ३८ ॥ अत्रिः—राशीशयोः सुहृद्भावे मित्रत्वे चांशनाथयोः । गणादिदौष्टच्येप्युद्वाहः पुत्रपौत्रप्रवर्द्धनम् ॥ ३९ ॥ शौनकः—वर्गवैरं योनिवैरं गणवैरं नृदूरकम् । दुष्टकूटफलं सर्वं ग्रहमैत्र्याद्विनश्यति ॥ ३४० ॥ मनुरपि—ग्रहमैत्री च रज्जुश्च यदि नाडी तयोः पृथक् । विवाहः शुभदः कन्या राक्षसी वा नरो नरः ॥ ४१ ॥ मुहूर्तकल्पद्रुमे—कृत्तिका रोहिणीस्वाती मघा चोत्तरफाल्गुनी । पूर्वाषाढोत्तराषाढे न क्वचिद्गणदोषदे ॥ ४२ ॥ दैवज्ञमनोहरे—षड्गुणा गणसादृश्ये पंच स्युः सुरमानुषे । नार्यां देवो नरः पुंसश्चत्वारो वा गुणास्त्रयः॥४३॥देवराक्षसयोः शून्यं तथैव नररक्षसोः । पुंसो रक्षोगणो यत्र नार्यां देवोथ वा नरः॥४४॥गुणौ द्वौ क्रमतश्चैको गुणो ग्राह्योन्यथा नहि ॥४५॥ मार्तंडेपि—ना देवो मनुजा वधूरिहरसास्तद्वैपरीत्ये शराः षट् साम्येस्प पुरुषः सुरवधूस्त्रैक कोन्यत्र खम् ॥४६॥ अथ भकूटविचारः । एकराशौ महाप्रीतिश्चतुर्थदशमे सुखम् । तृतीयैकादशे

वित्तं सुप्रजा सम सप्तके ॥४७॥ संहिताप्रदीपे—सौभाग्यपुत्रधनलाभकृदेकराशौ प्रीत्यर्थ भोगसुखदः समसप्तकेषु । त्र्याये चतुर्थदशमेपि च राशिकूटे प्रीत्यर्थसौख्यकुलवृद्धिकरो विवाहः ॥४८॥ त्र्यायं चतुर्थी वरमेकराशिं सद्राशिकूटं समसप्तकं यत् । तत्प्रीतिपुत्रार्थकरं विलोक्य न किंचिदत्रेति वदंति केचित् ॥ ४९ ॥ ज्योतिषतत्त्वे—एकराशौ च दंपत्योः शुभं स्यात्समसप्तके । चतुर्थदशमे चैव तृतीयैकादशे तथा ॥ ३५० ॥ षट्काष्टके मृतिर्ज्ञेया पंचमे त्वनपत्यता । नैस्वं द्विर्द्वादशेन्येषु दंपत्योः प्रीतिरुत्तमा ॥ ५१ ॥ श्रीपतिः—षष्ठाष्टमे मृत्युरपत्यहानिः पाणिग्रहे स्यान्नव पंचमे च । नैस्वं धने द्वादशके परे तु प्रज्ञा निरेका हिबुके वरस्य ॥ ५२ ॥ संहिताप्रदीपे—षडष्टके द्वेषवियोगकारी भवेदपुत्रस्त्वशुचिस्त्रिकोणे । द्विर्द्वादशे निर्धनता व्ययश्चनाडीसमाजे मरणाय नूनम् ॥ ५३ ॥ लल्लः—मरणं नाडियोगे कलहः षट्काष्टके विपत्तिर्वा । अनपत्यता त्रिकोणे द्विर्द्वादशके च दारिद्रम् ॥ ५४ ॥ चण्डेश्वरः—अपि त्रिकोणेल्पजना च नारी द्विर्द्वादशे वै विधवा कुमारी । षट्काष्टके मृत्युभयं प्रकारी वैगुण्यतारा मरणं करोति ॥ ५५ ॥ निधनत्वं वियोगो वा मेले द्विर्द्वादशे भवेत् । त्रिकोणे त्वनपत्यत्वमपमृत्युः षडष्टके ॥ ५६ ॥ पंचमे नवमे विधवा सधवा नव पंचमे । चतुर्थे दशमे वंध्या पुत्रिणी दश चतुर्थके ॥ ५७ ॥ तृतीयैकादशे दुःखी सुखी चैकादश त्रिके । द्विर्द्वादशे च दुःखी स्यात्सुखी च द्वादशद्विके ॥ ५८ ॥ षडष्टमे च मृत्यु स्यादीर्घायुश्चाष्टषष्ठके । कन्या राशितो वरश्रेष्ठः कन्या श्रेष्ठा वरांतके ॥५९॥ यदि कन्याष्टमे भर्ता भर्तुः षष्ठे च कन्यका । षट्काष्टकं विजानियाद्वर्जितं त्रिदशैरपि ॥३६०॥

कूटचक्रम्.

| | मे. | वृ. | मि. | क. | सिं. | क. | तु. | वृ. | ध. | म. | कुं. | मी. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| मेष | ७ | ० | ७ | ७ | ० | ० | ७ | ० | ० | ७ | ७ | ० |
| वृष. | ७ | ७ | ० | ७ | ७ | ० | ० | ७ | ० | ० | ७ | ७ |
| मि. | | ७ | ७ | ० | ७ | ७ | ० | ० | ७ | ० | ७ | ७ |
| कर्क | ७ | ० | ७ | ७ | ० | ७ | ७ | ० | ० | ७ | ० | ० |
| सिंह | ० | ७ | ० | ७ | ७ | ० | ७ | ७ | ० | ० | ७ | ० |
| कन्या | ० | ० | ७ | ० | ७ | ७ | ० | ७ | ७ | ० | ० | ७ |
| तुला | ७ | ० | ० | ७ | ० | ७ | ७ | ० | ७ | ७ | ० | ० |
| वृ. | ० | ७ | ० | ० | ७ | ० | ७ | ७ | ० | ७ | ७ | ० |
| धन | ० | ० | ७ | ० | ० | ७ | ० | ७ | ७ | ० | ७ | ७ |
| मकर | ७ | ० | ० | ७ | ० | ० | ७ | ० | ७ | ७ | ० | ७ |
| कुंभ | ७ | ७ | ० | ० | ७ | ० | ० | ७ | ० | ७ | ७ | ० |
| मीन | ० | ७ | ७ | ० | ० | ७ | ० | ० | ७ | ० | ७ | ७ |

अथ वैरषडष्टकम् । नारदः-वैरषडष्टकं मेषकन्ययोर्वटमीनयोः । चापोक्षयोर्नृयक्कीटभयोर्घटकुलीरयोः ॥ ६१ ॥ पंचास्यमृगयोर्जन्मराशेः प्रोक्तेऽशुभप्रदः ॥ ६२ ॥ राजमार्तंडे-मकरसकेशरिमेषयुवत्यातुलधरमीनकुलीरघटेषु । धनवृष वृश्चिकमन्मथगामीमरणकरास्तु षडाष्टकयोगाः ॥ ६३ ॥ अस्यापवादः । वराहः-षडाष्टकेपि भवनाधिपमित्रभावमैकाधिपत्यमवलोक्य वरस्य राशिम् । कार्यो विवाहसमयः शुभकृत्स उक्तस्तारा भवेद्यदि परस्परतो विशुद्धिः ॥ ६४ ॥ गर्गः-ग्रहमैत्रं शुभा तारा राशिवश्यं त्रिभिः शुभम् । षडष्टकं बुधाः प्राहुर्द्वाभ्यां द्व्यर्क-त्रिकोणकम् ॥ ६५ ॥ अथ मित्रषडष्टकम् । जगन्मोहने-मित्रषट्काष्टकं कीटमेषयोर्वृषजूकयोः । कार्किचापभयोर्मीनासिंहयोर्मृगयुग्मयोः ॥ ६६ ॥ कन्यकाकुंभयोरन्यत्प्रयत्नादिह वर्जयेत् ॥ ६७ ॥ राजमार्तंडे-जलचरयुग्मसकेशरिमीनाघटयुवती च सवृश्चिकमेषाः । वृषभतौलिककार्मुककीटाः सुतधनप्रीतिषडष्टकयोगाः ॥६८॥ बृहस्पतिः-वश्यभावे तथान्योन्यं ताराशुद्ध्या परस्परम् । न चेत्षष्ठाष्टमो दोषस्तदा षष्ठाष्टमः शुभः ॥ ६९ ॥ समर्क्षात्कन्यकाराशेः षष्ठं च वरभं शुभम् । विषमात्कन्यकाराशिरन्ध्रस्थं वरभं शुभम् । अथ शुभनवात्मजम् । चण्डेश्वरः-मेषे च चाप मकरे वृषे च कुंभे च युग्मे झषकर्कटे च । कुंभे तुलायां झषकीटयोश्च शत्रुत्रिकोणे बहु दुःखहानिः॥३७०॥मेषे च सिंहे वृषभे च कन्ये युग्मे घटे वृश्चिककर्कटे च । सिंहे च चापे मकरे युवत्या मित्रात्रिकोणं बहुपुत्रलाभः ॥ ७१ ॥ शारंगीये शुक्रः-मानालभ्यां युते कीटे कुंभे मिथुनसंयुते । मकरे कन्यकायुक्ते न कुर्यान्नवपंचकम् ॥ ७२ ॥ ज्योतिःप्रकाशे-पुंसो गृहात्सुतगृहे सुतहा च कन्या धर्मे स्थिता सुतवती पतिवल्लभा च ॥ ७३ ॥ अथाशुभद्विर्द्वादशम् । चण्डेश्वरः-कन्याहरौ कीटतुलाधरौ वा चापे मृगे वा झषगे च कुंभे । कुलीरयुग्मे वृषभे च मेषे द्विर्द्वादशे वै निधनं करोति ॥ ७४ ॥ चापे फणीन्द्रे घटभे मृगे च अजे जले सिंहकुलीरके च । कन्यातुलायां वृषभेषु युग्मे द्विद्वार्दशे चार्थकरोति वृद्धिम् ॥ ७५ ॥ जगन्मोहने कश्यपवसिष्ठौ-द्विर्द्वादशे शुभं प्रोक्तं मीनादौ युग्मराशिषु । मेषादौ युग्मराशौ तु निर्धनत्वं न संशयः ॥ ७६ ॥ आयुष्यसंपत्सुतभोगसंपत्पुत्रार्थसंपत्पतिसौख्यसंपत् । सौभाग्यसंपद्धनधान्यवृद्धिर्झषादियुग्मे क्रमतः फलानि ॥ ७७ ॥ अजादियुग्मे क्रमतः फलानि वैधव्यमृत्युर्वधबंधनानि । वियोगसंतापमतीवदुःखं वसिष्ठगर्गप्रमुखैः स्मृतानि ॥ ७८ ॥ सिंहः कुलीरेण मृगेण कुंभतौलिस्त्रिया चापधरेण कीटः । केशारिणोजे च वृषेण युग्मं द्विर्द्वादशे भूरिधनप्रदाः स्युः ॥ ७९ ॥ द्विर्द्वादशे धनगृहे धनहा च कन्या रिःफे स्थिता धनवती पतिवल्लभा च ॥३८०॥ मार्तंडेपि-दुःकूटे यदि योनिमैत्रमबला दूरं तदांभोधयः नो चेत्त्वं त्वनयोर्यदैकामिहभूभर्त्र्यैक्यके गुणाः । सत्कूटे वरदूरता भरियुता षड्भिन्नराश्यैकभे पंचान्यत्र सुकूटके

च गिरयोरिति (?) ॥८१॥ चतुर्थदशममम् । तुला मृगेणाथ वृषेण सिंहो मेषेण कीटो
मिथुनेन मीनः । चापेन कन्या, घटभेन चालिर्दौर्भाग्यदैन्ये दश तुर्यकेऽस्मिन् ॥ ८२ ॥
समसप्तकम् । मृगः कुलीरेण घटेन सिंहो वैरप्रदः स्यात्समसप्तकोयम् ॥ ८३ ॥
अन्यः-मकरे कर्कटे चैव कुंभे सिंहे तथैव च । यदि स्यात्सप्तमेन्योन्यं वैधव्यं
तत्र निर्दिशेत् ॥ ८४ ॥ योगके सप्तके मेषतुले युग्महयौ तथा । सिंहे घटौ सदा
वर्ज्यौ मृतिं तत्राब्रवीच्छिवः ॥ ८५ ॥ समसप्तके विवाहे भवति सावित्वं शुभं चैव ।
एकादशे तृतीये कुलवृद्धिर्भवति चाशु नियमेन ॥ ८६ ॥ समसप्तके समग्रह-
णाद्विषमसप्तके दोषः ॥ ८७ ॥ अथ परिहारः । राशिनाथे विरुद्धेपि मित्रत्वे
चांशनाथयोः । विवाहं कारयेद्धीमान् दंपत्योः सौख्यवर्द्धनम् ॥ ८८ ॥ जगन्मो-
हने-राशिनाथे विरुद्धेपि सबलावंशकाधिकौ । तत्तन्मैत्रेपि कर्तव्यं दंपत्योः सुख-
मिच्छता ॥ ८९ ॥ अन्यच्च-राशिनाथेपि नेष्टत्वे बलिष्ठे अंशकाधिपौ । विवाहस्तत्र
कर्तव्यो दंपत्योः सुखमिच्छता ॥ ३९० ॥ अत्रिः-राशीशयोः सुहृद्भावे मित्रत्वे
चांशनाथयोः । गणादिदौष्ट्येप्युद्वाहः पुत्रपौत्रप्रवर्द्धनम् ॥ ९१ ॥ राशिमैत्रे शुभे
लब्धे ग्रहमैत्रीं न चिंतयेत् ॥ ९२ ॥ अथ नाडिविचारः । गर्गः-नाडीकूटं तु
संग्राह्यं कूटानां तु शिरोमणिम् । ब्रह्मणा कन्यकाकंठसूत्रत्वेन विनिर्गते ॥ ९३ ॥
रामः-ज्येष्ठारौद्रार्यमांभःपतिभयुगयुगं दास्रभं चैकनाडी पुष्येंदुत्वाष्ट्रमित्रांतकवसुजल-
भं योनिबुध्न्ये च मध्या । वाय्वग्निव्यालविश्वोडुयुगयुगमथो पौष्णभं चापरा स्याद्दंप-
त्योरेकनाड्यां परिणयनमसन्मध्यनाड्यां हि मृत्युः ॥ ९४ ॥ नारदः-चतुस्त्रि-
द्व्यंघ्रिभोत्थायाः कन्यायाः क्रमशोऽश्विभात् । वह्निभादिंदुभान्नाडी त्रिचतुःपंचपर्वसु
॥ ९५ ॥ गर्गः-चतुष्कात्कन्यकाऋक्षं गणयेदाश्विभादिकम् । त्रिभं सव्यापसव्येन
भिन्नं पर्व शुभावहम् ॥ ९६ ॥ कन्यकर्क्षं त्रिपाच्चेत्स्याद्गणयेत्कृत्तिकादिकम् । चतु-
र्भिः पर्वभिस्तद्वदभिजित्तारकान्वितम् ॥ ९७ ॥ कन्यकर्क्षं द्विपाच्चेत्स्याद्गणयेत्सौम्यभा-
दिकम् । पंचभिस्त्ववरोहे तु पंचमंगुलिवर्जयेत् ॥ ९८ ॥ वराहः-आद्येकनाडी कुरु-
वियोगं मध्याख्यनाड्यामुभयोर्विनाशनम् । अंत्ये च वैधव्यमतीवदुःखं तस्मा-
तिस्रः परिवर्जनीयाः ॥ ९९ ॥ वासिष्ठः-सा मध्यनाडी पुरुषं निहंति तत्पार्श्वनाडी
खलु कन्यकां तु । आसन्नपर्यायसमागता चेद्वर्षेण साप्यंतरिता त्रिवर्षैः ॥ ४०० ॥
एकनाडिवियोगश्च गणैः सर्वैः समन्वितः । वर्जनीयः प्रयत्नेन दंपत्योर्निधनप्रदः
॥ ४०१ ॥ केचित्तु-त्र्यंघ्रिभोत्पन्नकन्यायाश्चतुःपंचनाडीचक्रे वेधमाहुः । वृंदमू-
वने-प्रमीयमाणोपि मतैर्मुनीनां त्रिद्व्यंघ्रिनक्षत्रभवः कुमार्याः । नाडी चतुः पञ्च-
तयस्य पक्षो नक्षोदवीथी विषयत्वमेति ॥ २ ॥ हारीतः-त्र्यंघ्रिभे द्व्यंघ्रिभं कन्या-
यातायं गणयेत्क्रमात । वह्निभादिंदुभान्नाडीं चतुःपंचसु पर्वसु ॥ ३ ॥ देशभेदा-

व्यवस्थामाह ।नारदः-चतुर्नाडी त्वहल्यायां पांचाले पंच नाडिका । त्रिनाडी सर्वदेशेषु वर्जनीया प्रयत्नतः ॥ ४ ॥ वृद्धगर्गः-जांगले तु चतुर्माला पांचाले पंच मालिका । त्रिमाला सर्वदेशेषु विवाहे मुनिसंमतम् ॥ ५ ॥ अन्योपि-अश्विनी जांगले प्रोक्ता बंगाले भरणी तथा । कृत्तिका सर्वदेशेषु नाडीचक्रं विलोकयेत् ॥ ६ ॥ मनुः-आहिल्यायां चतुर्नाडी सयोगः कालमृत्युदः । एकयोगोन्यदेशेषु दुःखदारिद्र्यदोषभाक् ॥ ७ ॥ केशवः-आर्द्रायमेंद्रवरुणद्वयमाश्विनीषु विश्वाग्निवायुफणिनां युगमंत्यभं च । शेषाणि चेति नवकत्रयमेकजाते जन्मोडुनी वरवधूनिधनाय नाडी ॥८॥ अथैकराशिकूटविचारः ।नारदः-एकर्क्षे चैकराशौ च विवाहः प्राणहानिदः ॥ ९ ॥ वसिष्ठः-दंपत्योर्जन्मभे चैकराशौ च निधनं तयोः । एकस्य च तथोद्वाहे किंचिद्भेदेपि वा नवा ॥ ४१० ॥ एकगृहसंभवानां भवति विवाहः सुतार्थसंपत्यै । यद्युभयोरेकर्क्षे भवति च यदा चांशको भिन्नम् ॥ ११ ॥ जगन्मोहने-एकर्क्षे चैकराशौ च विवाहस्त्वशुभः स्मृतः । संकोचे तु तदा कार्यो भिन्नपादे यदा तयोः ॥ १२ ॥ गर्गः-एकराशिं विना नाडीयोगमादौ विवर्जयेत् । न दोषस्त्वेकराशिस्थे भकूटेन्ये तु मृत्युदः ॥ १३ ॥ अथैकराशिभिन्नर्क्षकूटः । नारदः-एकराशौ पृथक् धिष्णे दंपत्योः पाणिपीडनम् । उत्तमं मध्यमं भिन्नराश्यैकर्क्षगयोस्तयोः ॥ १४ ॥ अत्रिः-एकराशौ पृथक् धिष्णे पृथग्राशौ तथैकभे । एकांशेपि कृतोद्वाहः श्रेष्ठोऽमध्यो धमः क्रमात् ॥१५॥ एकराशौ शुभोद्वाहः एकभांशे मृतिप्रदः । यदि स्याद्भिन्ननक्षत्रं शुभदं शौनकोब्रवीत् ॥ १६ ॥ वसिष्ठः-एकराशौ पृथक् धिष्णे तूत्तमं पाणिपीडनम् । एकधिष्णे पृथग्राशौ लवैक्येपि च मृत्युदम् ॥ १७ ॥ गर्गः-एकराशौ द्विनक्षत्रे पुंतारा प्रथमा भवेत् । अतीवशोभनः प्रोक्तः स्त्रीतारा चेद्विनश्यति ॥ १८ ॥ अन्यत्रापि-भवनद्वययुक्तर्क्षेपूर्वं पुंसां शुभावहम् । पश्चाद्भागं तथा स्त्रीणां व्यत्ययस्तु विनाशकृत् ॥ १९ ॥ अथ एकराशौ द्विनक्षत्रेपि वर्ज्यनक्षत्राण्याह । गर्गः-एकराशौ द्विनक्षत्रे कृत्तिकाजस्य तारका । धनिष्ठा शततारे च पुष्याश्लेषां च वर्जयेत् ॥ ४२० ॥ अथ पृथग्राशावेकभे प्रवृत्तिमाह । विधिरत्ने भृगुः-रोहिण्यार्द्रामघेंद्राग्नितिष्यश्रवणपौष्णभम् । उत्तरा प्रोष्ठपाच्चैव नक्षत्रैक्येपि शोभनम् ॥ २१ ॥ कालनिर्णये-विशाखिकार्द्राश्रवणप्रजेशंतिष्यांततत्पूर्वमघा प्रशस्ता । स्त्रीपुंसतारैक्यपरिग्रहे तु शेषा विवर्ज्या इति संगिरंते ॥ २२ ॥ अन्यः-अजैकपान्मित्रवसुद्विदैवप्रभंजनाश्यर्कभुजंगमानि । मुकुंदजीवांतकभानि नूनं शुभानि योषिन्नरजन्मभैक्ये ॥ २३ ॥ केशवार्कः-नक्षत्रमेकं यदि भिन्नराश्योरभिन्नराश्योर्यदि भिन्नमृक्षम् । प्रीतिस्तदानीं निबिडा नृनार्योश्चेत्कृत्तिका रोहिणिवन्न नाडी ॥ २४ ॥ चतुर्थचरणस्यायमर्थः । चेद्यदि कृत्तिका रोहिणि वत्स्यात्तदापि नाडीदोषो नस्यात् । उपलक्षणत्वाद्गणदोषोपि यथा कृत्तिकारोहिण्ययोः शततारका

पूर्वभाद्रपदयोः नाडीदोषो गणानां च राक्षसमनुष्याणां च दोषो नास्ति । लल्लः—प्रीतिवित्तसुखदः करग्रहस्त्वेकराशिषु च भिन्नभं यदि । वारुणाजपदभं भवेद्यदा नाडिदोषगणजो न विद्यते ॥ २५ ॥ नाडीगणौ नैकराशौ चिन्त्यौ भिन्नभयोर्यथा । कृत्तिकाकभयोर्द्वीशस्वात्योः पूभाजलेशयोः ॥ २६ ॥ एकभे भिन्ननक्षत्रे न नाडीगणदुष्टता । वह्निभे ब्राह्मवत्प्रीतिः शतताराजपादवत् ॥ २७ ॥ रत्नकोशे—वैश्वानरद्रुहिणयोरदितीशयोश्च तद्वत्करार्यमभयोर्द्व्यधिपानिलेंद्वोः । छागैकपाद्वरुणयोः श्रुतिवैश्वयोश्च स्याच्चेदभिन्नभवने नहि नाडिदोषः ॥ २८ ॥ उक्तंच । भृगुः—दंपत्योरेकराशिश्चेत्पृथगृक्षं यदा भवेत् । वसिष्ठोक्तो विवाहः स्याद्गणनाडीं न चिंतयेत् ॥ २९ ॥ बृहस्पतिः—एकराशौ पृथग्धिष्ण्ये पृथग्राशौ तथैकभे । गणनाडीनृदूरं च ग्रहवैरं न चिंतयेत् ॥ ४३० ॥ गणपतिः—राश्यैके भिन्नभेप्येकभेन्यराशौ तथैकभे । भिन्नांघ्रौ न द्वयोर्दोषो गणनाडीभकूटजाः ॥ ३१ ॥ मुहूर्ततत्त्वे—एकराश्यभचरणामिहैके नाडीगणश्च ॥ ३२ ॥ मार्तंडः—शेषार्था विविधा विभैकचरणे भिन्नर्क्षराश्यैककम् । भिन्नांघ्रेकभमेतयोर्गणखगौ नाडीनृदूरं न च । इति ॥ ३३ ॥ रामः—राश्यैके चेद्भिन्नमृक्षद्वयं स्यान्नक्षत्रैक्ये राशियुग्मं तथैव । नाडीदोषो नो गणानां च दोषो नक्षत्रैके पादभेदे शुभं स्यात् ॥ ३४ ॥ ज्योतिर्निबंधे—दंपत्योरेकराशिःस्याद्भिन्नमृक्षं यदा तदा । गणदोषेप्येकनाड्यां विवाहः शुभदः स्मृतः ॥ ३५ ॥ रत्नकोशे—केचिन्नेच्छंति चैकांशे केचिदिच्छंति मेलकम् । तत्राप्यंघ्रे घटीसाम्यं त्यजेन्नो भिन्ननाडिकम् ॥ ३६ ॥ केशवार्कः—पराशरः प्राहः नवांशभेदादेकर्क्षराश्योरपि सौमनस्यम् । एकांशकत्वेपि वसिष्ठशिष्यो नैकत्र पिंडे किल नाडिवेधः ॥ ३७ ॥ नाग्निर्दहत्यात्मतनुं यथा हि द्रष्टा स्वदृष्टेर्नहि दर्शनीयः ॥ ३८ ॥ अथैकर्क्षे एकपादभेदे कूटः । दंपत्योरेकनक्षत्रे भिन्नं पा शुभावहः । दंपत्योरेकपादे तु वर्षांते मरणं ध्रुवम् ॥ ३९ ॥ एकराशौ धनाप सौभाग्यं प्रीतिवर्द्धनम् । एक ऋक्षे भवेद्दुःखमेकपादे वरक्षयः ॥ ४४० ॥ एक भिन्नपादे च विवाहः पुत्रपौत्रदः । एकर्क्षे चैकपादे च विवाहः प्राणहानिदः ॥ ४१ ॥ ग्रामे वा नगरे वापि राजसेवकयोस्तथा । एकऋक्षे भवेत्प्रीतिर्विवाहे दुःखमा शेत् ॥ ४२ ॥ अथ किंचिद्विशेषः । ज्योतिषचिंतामणौ—रोहिण्यार्द्रामृगेंद्राग्नीनां पुष्य श्रवणपौष्णभम् । अहिर्बुध्न्यर्क्षमेतेषां नाडीदोषो न विद्यते ॥ ४३ ॥ विवाहकु हले—शुक्रे जीवे तथा सौम्ये एकराशीश्वरो यदि । नाडीदोषो न वक्तव्यः सर्व यत्नतो बुधैः ॥ ४४ ॥ मार्तंडः—अथोनाडिभेदेगजाः । अथ युजां प्रीतिः । श्रीपति षट्पौष्णतो द्वादशशंकराच्च पौरंदराद्धानि नव क्रमेण । पूर्वार्धमध्यापरभागयुंजि चिरंत ज्योतिषिकैः स्मृतानि ॥ ४५ ॥ पूर्वभागयुजिभे पतिप्रियो योषितामपरभागयोगि स्त्रीनृणां भवति मध्ययोगिनी प्रेमनूनमुभयोः परस्परम् ॥ ४६ ॥ रामोपि—पौष्णे शाक्राद्रससूर्यनंदा पूर्वार्द्धमध्यापरभागयुग्मम् । भर्ता प्रियः प्राग्युजिभे स्त्रि

स्यान्मध्ये द्वयोः प्रेमपरे प्रिया स्त्री ॥ ४७ ॥ अथ वर्गविचारः । वर्गेशास्तार्क्ष्यमार्जार सिंहश्च व्यालमूषकाः। मृगश्च शशकस्तत्र स्ववर्गात्पंचमो रिपुः ॥ ४८ ॥ अथ वरदूरः। स्त्रीराशेर्वरभं दूरं कन्यादूरं शुभावहम् । व्यस्तान्नृदूरमशुभं व्यस्तत्वात्तद्-पीडनम् ॥ ४९ ॥ कन्यादूरं शुभं प्रोक्तं वरदूरं न कारयेत् । मिथ्यैतद्भाषितं मूर्खैर्ग्रह-मैत्र्या यतः शुभम् ॥ ४५० ॥ अथ कन्यादूरः । कन्याया जन्मर्क्षाद्द्वादशमायनवम-रन्ध्रेषु। वरराशिस्तत्कन्यादूरं विपर्यये पुंसाम् ॥ ५१ ॥ नारदः–स्त्रीधिष्ण्याद्द्यनवके स्त्रीदूरमति निंदितम्। द्वितीये मध्यमं श्रेष्ठं तृतीयं नवमे धनम् ॥ ५२ ॥ भामिनी जन्मनक्षत्राद्द्वितीयं पतिजन्मभम्। न शुभं भर्तृनाशाय कथितं ब्रह्मयामले ॥ ५३ ॥ प्रथमं सेव्यजन्मर्क्षे द्वितीयं सेवकस्य च । न सेवा सुस्थिरा तस्य जलबुद्बुदव-त्प्रिये ॥ ५४ ॥ ऋणग्राहकजन्मर्क्षं प्रथममृणदस्य भम्। द्वितीयमृणसंबन्धो न कर्तव्यः कदाचन ॥ ५५ ॥ ग्रामभं प्रथमं यस्य द्वितीयं जन्मभं भवेत् । न ग्राह्यः सर्वथा ग्रामो यतः सर्वार्थनाशनः ॥ ५६ ॥ अस्यापवादः । एकराशौ पृथग्धिष्ण्ये अंत्यांत्यौ चरणौ यदा। अतीव शोभनः प्रोक्तो द्वितीयस्थो न दोषकृत् ॥ ५७ ॥ एकराशौ पृथगृक्षे एकर्क्षे भिन्नराशिगः । एकाधिपत्यमैत्रे वा द्वितीयं स्वामिभं शुभम् ॥५८॥ गुणैः षोडशभिर्निन्द्यं मध्यमं विंशतिस्तथा। श्रेष्ठं त्रिंशद्गुणं यावत्परत-स्तूत्तमोत्तमम् ॥ ५९ ॥ सद्भकूट इति ज्ञेयं दुष्टकूटेथ कथ्यते। निंद्यं गुणैर्विंशतिभि-र्मध्यमं पंचविंशतिः ॥ ४६० ॥ तत्परैः पंचभिः श्रेष्ठं ततः श्रेष्ठतरं गुणैः ॥ ६१ ॥ अथ दुष्टभकूटे शांतिः । मुहूर्तमार्तंडे–द्व्यर्के ताम्रसुवर्णमष्टरिपुके गोयुग्ममर्थीकके रौप्यं कांस्यमथैकनाडियुजिगो स्वर्णादि दत्वोद्वहेत् ॥ ६२ ॥ उद्वाहतत्त्वे–ताम्रं हेम-धनव्यये रजतयुक्कांस्यं शरांके वृषं गां दद्याच्च षडष्टके द्विजभुजि स्वर्णं च नाडी-युता ॥ ६३ ॥ गुरुः–दोषापनुत्तये नाड्या मृत्युंजयजपादिकम् । विधाय ब्राह्मणांश्चैव तर्पयेत्कांचनादिना ॥ ६४ ॥ हिरण्मयीं दक्षिणां च दद्याद्वर्णादिकूटके । गावोन्नं वसनं हेम सर्वदोषापहारकम् ॥ ६५ ॥ राजमार्तंडे–षडष्टके गोमिथुनं प्रदद्यात्कांस्यं सरौप्यं नव पंचमे च । देयं च वस्त्रं कनकाश्वयुक्तं द्विर्द्वादशे ब्राह्मणभोजनं च ॥ ६६ ॥ ज्योतिःप्रकाशे–निषिद्धमेलके शांतिं कृत्वा दानं यथोदितम् । दत्वोद्वाहं प्रकुर्वीत प्रशस्तं शौनकादिभिः ॥ ६७ ॥ सदलादिविचारः । चण्डेश्वरः–यदि ब्रह्मा स्वयं विष्णुः पवनोथ पुरंदरः। स्ववर्गं द्विगुणं कृत्वा परवर्गेण योजयेत् ॥ ६८ ॥ चतुर्भिश्च हरेद्भागं शेषं चरणमुच्यते । एकेन सदलं प्रोक्तं द्वाभ्यां तु रुक्ममेव च ॥ ६९ ॥ त्रिभिः स्वर्णं विजानीयाच्चतुर्भिस्ताम्र उच्यते । सदले पुत्रसौभाग्यं रुक्मे लक्ष्मीः प्रकीर्तिता ॥ ४७० ॥ स्वर्णे दौर्भाग्य वै पुत्रं ताम्रे क्लेशं सदैव हि ॥ ७१ ॥ अथ निश्चयदानम्। आदौ तातं वरं पश्येत्पश्चाद्धनकुलं तथा। यदि तातं वरं दोषं न त्रिवित्तेन कुलेन किम् ॥ ७२ ॥ पुण्याहे च विवाहर्क्षे चित्रावस्वग्निविष्णुभे । लब्ध्वा

चन्द्रबलं दद्यान्निश्चयं सत्यया गिरा ॥ ७३ ॥ शुभे लग्नेग्निसांनिध्ये स्नातां पुण्यामरोगिणीम् । तत्कालोपस्थिते कन्यां प्रदास्यामि सुलक्षणे ॥ ७४ ॥ उत्तमे तु कुले जाता दशदोषविवर्जिता । इमां कन्यां प्रदास्यामि द्विजदेवाग्निसंनिधौ ॥ ७५ ॥ यदि त्वं पतितो न स्याद्दशदोषविवर्जितः । तुभ्यं कन्यां प्रदास्यामि द्विजदेवाग्निसंनिधौ ॥ ७६ ॥ देवाश्च ऋषयो विप्राः पितरः कुलदेवताः । मदीयाः साक्षिणो वाचा निश्चयोस्मिन्महाजनाः ॥ ७७ ॥ तुभ्यं कन्यार्थिने वाचा कन्यादानप्रतिश्रुताम् । तन्निश्चयार्थं मद्दत्तान् स्वीकुरुष्व फलाक्षतान् ॥ ७८ ॥ वाचा दत्ता मया कन्या पुत्रार्थं स्वीकृता त्वया । कन्यावलोकनविधौ निश्चितस्त्वं सुखी भव ॥ ७९ ॥ ततः वरपितावचनम् । वाचा दत्ता त्वया कन्या पुत्रार्थं स्वीकृता मया । वरावलोकनविधौ निश्चितस्त्वं सुखीभव ॥ ४८० ॥ पितृतश्चैकविंशश्च मातृतश्चैकविंशतिः । उभौ तौ द्वे च चत्वारिंशद्वाक्प्रमाणं ददामि ते ॥ ८१ ॥ वरं विचार्य वृणुयान्नारदोक्तिमतः शृणु । एतत्सर्वं पुराणोक्तं तदेवात्र नियोजयेत् ॥ ८२ ॥ अथ वरवरणम् । व्यवहारचण्डेश्वरः—पूर्वात्रितयमाग्नेय उत्तरात्रितयं तथा । रोहिणी तत्र वरणे कन्याभ्राता द्विजेन वा ॥ ८३ ॥ वरस्य वरणं कुर्यात्सौम्यवारे विधोर्बले । शुभयोगे सुलग्ने च विवाहर्क्षे न रिक्तके ॥ ८४ ॥ रामोपि—धरणिदेवोथवा कन्यकासोदरः शुभदिने गीतवाद्यादिभिः संयुतः । वरवृत्तिं वस्त्रयज्ञोपवीतादिना ध्रुवयुतैर्वह्निपूर्वात्रयैराचरेत् । अन्योपि—वरवृत्तिं शुभे काले गीतवाद्यादिभिर्युतः । ध्रुवभे कृत्तिका पूर्वा कुर्याद्वापि विवाहभे ॥ ८५ ॥ उपवीतं फलं पुष्पं वासांसि विविधानि च । देयं वराय वरणे कन्याभ्रात्रा द्विजेन वा ॥ ८६ ॥ अथ कन्यावरणम् । पूर्वात्रयं श्रवणमित्रभवैश्वदेवहोतासवासवसमीरणदैवतेषु । द्राक्षाफलेषु कुसुमाक्षतपूर्णपाणिरश्रांतशांतहृदयो वरयेत्कुमारीम् ॥ ८७ ॥ सुखप्रबोधे सुदेवः—वह्निर्धनिष्ठा श्रवणात्रिपूर्वा स्वात्युत्तराषाढचनुराधिकाभे । विवाहभे वापि शुभे दिनेषु कुर्याद्विवृत्तिं मदनातुरीयाम् ॥ ८८ ॥ कश्यपः—पंचांगशुद्धदिवसे चन्द्रतारावलान्विते । विवाहोक्तेषु ऋक्षेषु कुजवर्जितवासरे ॥ ८९ ॥ माघाद्यदिवसं रिक्तामष्टमीं नवमीतिथिम् । त्यक्त्वान्यादिवसे गंधस्रक्तांबूलफलान्वितैः ॥ ४९० ॥ सह वृद्धैर्द्विजगणैर्वरयेत्कन्यकां सतीम् ॥ ९१ ॥ रामः—वैश्वस्वातीवैष्णवपूर्वात्रयमैत्रे वस्वाग्नेयैवाकरपीडोचितऋक्षैः । वस्त्रालंकारादिसमेतैः फलपुष्पैः संतोष्यादौ स्यादनु कन्यावरणं हि । अथ वाग्दानोत्तरं वरमरणे विशेषः । अद्भिर्वाचा च दत्तायां म्रियेतोर्ध्वं वरो यदि । न च मंत्रोपनीता स्यात्कुमारी पितुरेव सा ॥ ९२ ॥ देशांतरगमने तु कात्यायनः—वरयित्वा तु यः कश्चित्प्रवसेत्पुरुषो यदा । ऋत्वागमांस्त्रीनतीत्य कन्यान्यं वरयेत्पतिम् ॥ ९३ ॥ याज्ञवल्क्यः—दत्तामपि हरेत्पूर्वाच्छ्रेयांश्च वर आव्रजेत् ॥ ९४ ॥ वसिष्ठः—कुलशीलविहीनस्य षंढादिपतितस्य च । अपस्मारी विधर्मस्य रोगिणां वेषधारिणाम् ॥ ९५ ॥

दत्तामपि हरेत्कन्यां सगोत्रोढां तथैव च ॥ ९६ ॥ अथ विवाहे वाग्दानानंतरं कुलमध्ये कस्याचिन्मरणप्राप्ते विचारः । स्मृतिचन्द्रिकायाम्–कृतेवा निश्चये पश्चान्मृत्युर्भवति गोत्रिणः । तदा न मंगलं कार्यं नारीवैधव्यदं ध्रुवम् ॥ ९७ ॥ मेधातिथिः–वधूवरार्थं घटिते सुनिश्चिते वरस्य गेहेप्यथ कन्यकायाः । मृत्युर्यदि स्यान्मनुजस्य कस्यचित्तदा न कार्यं खलु मंगलं बुधैः ॥ ९८ ॥ गर्गः–कृते तु निश्चये पश्चान्मृत्युर्भवति कस्यचित् । तदा न मंगलं कुर्यात्कृते वैधव्यमाप्नुयात् ॥ ९९ ॥ पुरुषत्रयपर्यंतं प्रतिकूलं सगोत्रिणाम् । प्रवेशानिर्गमौ तद्वत्तथामुंडनमंडने ॥ ५०० ॥ मांडव्यः–अन्येषां तु सपिंडानामाशौचं माससंमितम् । तदंते शांतिकं कृत्वा ततो लग्नं विधीयते ॥ १ ॥ शौनकः–वरवध्वोः पिता माता पितृव्यश्च सहोदरः । एतेषां प्रतिकूलं चेन्महाविघ्नप्रदं भवेत् ॥२॥ पिता पितामहश्चैव माता वापि पितामही । पितृव्यस्त्री सुतो भ्राता भगिनी वा विवाहिता ॥ ३ ॥ एभिरेव विपन्नैश्च प्रतिकूलं बुधैः स्मृतम् । अन्यैरपि विपन्नैश्च केचिदूचुर्न तद्भवेत् ॥ ४ ॥ मांडव्यः–वाग्दानानंतरं यत्र कुलयोः कस्यचिन्मृतिः । तदा संवत्सरादूर्ध्वं विवाहः शुभदो भवेत् ॥ ५ ॥ पितुराशौचमब्दं स्यात्तदूर्ध्वं मातुरेव च । मासत्रयं च भार्या स्यात्तदूर्ध्वं भ्रातृपुत्रयोः ॥६॥ दैवज्ञमनोहरे–प्रतिकूले सपिंडस्य मासमेकं विवर्जयेत् । विवाहस्तु ततः पश्चात्तयोरेव विधीयते ॥ ७ ॥ दुर्भिक्षे राष्ट्रभंगे च पित्रोर्वा प्राणसंशये । प्रौढायामपि कन्यायां प्रतिकूलं न दुष्यति ॥ ८ ॥ मेधातिथिः–दीर्घरोगाभिभूतस्य दूरदेशस्थितस्य च । उदासवर्तिनश्चैव प्रतिकूलं न विद्यते ॥ ९ ॥ संकटे समनुप्राप्ते याज्ञवल्क्येन योगिना । शांतिरुक्ता गणेशस्य कृत्वा तां शुभमाचरेत् ॥ ५१० ॥ अकृत्वा शांतिकं यस्तु निषेधे सति दारुणः । यः करोति शुभं तावद्विघ्नं तस्य पदे पदे ॥ ११ ॥ ज्योतिःप्रकाशे–प्रतिकूलेपि कर्तव्यो विवाहो मासमंतरा । शांतिं विधाय गां दद्याद्वाग्दानादि चरेद्बुधः ॥ १२ ॥ याज्ञवल्क्यः–दाने विवाहे यज्ञे च संग्रामे देशविप्लवे । आपद्यपि च कष्टायां सद्यः शौचं विधीयते ॥ १३ ॥ बृहस्पतिः–विवाहोत्सवयज्ञेषु त्वंतरामृतसूतके । पूर्वं संकल्पितेर्थेषु न दोषः परिकीर्तितः ॥ १४ ॥ षट्त्रिंशन्मते–विवाहोत्सवयज्ञेषु त्वंतरामृतसूतके । परैरन्नं प्रदातव्यं भोक्तव्यं च द्विजोत्तमैः ॥ १५ ॥ व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे । प्रारब्धं सूतकं न स्यादनारब्धे तु सूतकम् ॥ १६ ॥ प्रारंभश्च तेनैवोक्तः । प्रारंभो वरणं यज्ञे संकल्पो व्रतसत्रयोः । नांदीमुखं विवाहादौ श्राद्धे पाकपरिक्रिया ॥ १७ ॥ रामांडारभाष्ये शुद्धिविवेकेप्येवमेव । नांदीमुखविधिश्चावश्यकत्वे अधिक उक्तः । एकविंशत्यहर्यज्ञे विवाहे दशवासराः । त्रिषट्चौलोपनयने नांदीश्राद्धं विधीयते ॥ १८ ॥ विष्णुः–अनारभ्य विशुद्ध्यर्थं कुष्मांडैर्जुहुयाद्घृतम् । गां दद्यात्पंचगव्याशी ततः शुद्ध्यति सूतकी ॥ १९ ॥ अथ रवीज्यचन्द्रबलम् । नारदः–विवाहे बलमावश्यं दंपत्योर्गुरु-

सूर्ययोः । तत्पूजा यत्नतः कार्या दुर्बलप्रदयोस्तयोः ॥ ५२० ॥ गर्गः—स्त्रीणां गुरुबलं श्रेष्ठं पुरुषाणां रवबलम् । तयोश्चंद्रबलं श्रेष्ठमिति गर्गेण निश्चितम् ॥ २१ ॥ दंपत्योर्बलमावश्यं विवाहे चिंतयेद्बुधः । रविश्चन्द्रसुरेज्यानामित्युक्तं त्रिबलं शुभम् ॥ २२ ॥ वसिष्ठः—यत्रार्कगुर्वोरपि नैधनांत्यजन्मादिदुःस्थानगयोर्द्वयो वा । एतस्य पूजामपि तत्र कृत्वा पाणिग्रहं कार्यमतः सुसम्यक् ॥२३॥ वराहः—गोचरशुद्ध्या ( ? ) विंदु कन्या या यत्नतः शुभं वीक्ष्य तिग्मकिरणं च पुंसः शेषैरबलेरपि विवाहः । सुरगुरुबलमबलानां पुरुषाणां तीक्ष्णरश्मिबलमेव । चन्द्रबलं दंपत्योरवलोक्य विशोधयेल्लग्नम्॥२४॥ अथ रविबलम् । राजमार्तंडे—जन्मनि भानौ विधवा पतिसुतयुक्ता भवत्युपचयर्क्षे । शेषगृहर्क्षे कन्यानाशो शोकातुरा नूनम् ॥ २५ ॥ मुहूर्तगणपतौ—चतुर्थे चाष्टमे चैव द्वादशस्थे दिवाकरः । वरः पंचत्वमाप्नोति कृते पाणिग्रहोत्सवे ॥ २६ ॥ जन्मस्थिते द्वितीये च पंचमे सप्तमेपि वा । नवमे भास्करे पूजां कुर्यात्पाणिग्रहोत्सवे ॥ २७ ॥ तृतीयः षष्ठमश्चैव दशमैकादशस्थितः । रविः शुभो निगदितो वरस्यैव करग्रहे ॥ २८ ॥ अन्यः । गर्गः—सूर्यस्त्रिदशमारिस्थस्तथैकादशगः शुभः । चतुरष्टांत्यगोऽनिष्टः शेषस्थानेषु मध्यमः ॥ २९ ॥ चण्डेश्वरः—वंध्या वित्तविवर्जिता प्रमुदिता दौर्भाग्यदुःखातुरा स्वल्पापत्यवती पतिप्रियतमा बंध्युच्युता बंधकी । निःस्वा सौख्यसमन्विता सुतधनप्रीत्यान्विता निःसुखा व्यूढा च क्रमशः सहस्रकिरणे जन्मादि राशिस्थिते ॥ ५३० ॥ द्वितीयपुत्रांकगतः प्रभाकरस्त्रयोदशाहात्परतः शुभप्रदः । न सप्तजन्मव्ययबन्धुरन्ध्रगः करोति पुंसामपि तादृशं फलम् ॥ ३१ ॥ गर्गः—अनिष्टस्थानगे सूर्ये शुभराशिः पुरो भवेत् । त्रयोदशदिनं त्यक्त्वा शेषस्थं शुभमादिशेत् ॥ ३२ ॥ अशुभस्थानगे सूर्ये दद्याद्धेनुं सदक्षिणाम् ॥ ३३ ॥ अथादित्यशांतिः । ब्राह्मणस्योपनयने नानूकुलो भवेद्रविः । तस्य शांतिं प्रवक्ष्यामि मंत्रौषधिविधानतः ॥ ३४ ॥ अत्रोपनयनग्रहणेन विवाहादीनामप्युपलक्षणम् । उपनयनात्पूर्वेद्युः कृत्वा पुण्याहवाचनम् ॥ ३५ ॥ गृहस्येशानादिग्भागे गोमयेनोपलेपयेत् । कुंकुमेनोल्लिखेत्पद्ममष्टपत्रं सकेसरम् ॥ ३६ ॥ सुवर्णेन रविं कृत्वा द्विभुजं पद्मधारणम् । कृत्वाज्यभागपर्यंतं तंत्रं कृत्वानुपूर्ववत् ॥ ३७ ॥ स्वशाखोक्तविधानेन आचार्यो होममाचरेत् । आकृष्णेनेति मंत्रेण समिदाज्यचरूञ्जुहेत् ॥ ३८ ॥ अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा । तिलव्रीहींश्च हुत्वाथ होमशेषं समापयेत् ॥ ३९ ॥ दारपुत्रसमेतस्य अभिषेकं समाचरेत् । कुंभाभिमंत्रणोक्तश्च समुद्रज्येष्ठमंत्रकैः ॥५४०॥ ऋत्विग्भ्यो दक्षिणां दद्यादन्येभ्यश्च स्वशक्तितः । प्रतिमां वस्त्रकुंभं च आचार्याय प्रदापयेत् ॥ ४१ ॥ एवं यः कुरुते सूर्यः सर्वदोषं विनश्यति ॥ ४२ ॥ अथ चन्द्रबलम् । फलप्रदीपे—स्त्रीणां चन्द्रबलं ग्राह्यं ताराबलसमन्वितम् । नाधिकारो नराणां च विवाहे गर्भशोधने ॥ ४३ ॥ केशवार्कः—चन्द्रमस्युपचयात्परिमुच्यते चारुगोचर

चरैः परैरपि । कर्तुरायाति शुभं सभंगुरं निर्दिशंत्यसितशौनकादयः ॥ ४४ ॥ चण्डेश्वरः-इष्टर्क्षगः सुरगुरुः शुभदो यथैव प्रायेण गोचरवशाच्छुभकृत्तथेंदुः । पक्षे सिते भवति जीवनिरीक्षितो वा प्राहुर्वसिष्ठभृगुगौतमगर्गपूर्वाः ॥ ४५ ॥ विवाहपटले-द्यूनजन्मरिपुलाभखत्रिगैश्चंद्रमाः शुभफलप्रदस्तथा । स्वात्मजांत्यमृतिबंधुधर्मगैर्विद्धतेन विविधैर्ग्रहैर्यदि ॥ ४६ ॥ अत्रिः-चंद्रो द्विपंचनवमेषु शुभः प्रदिष्टः शुक्लेऽथ कष्टफलदः खलु कृष्णपक्षे । तुर्यष्टमे व्ययगतोपि नरस्य नाशं कुर्यात्सचेच्छुभमिहोच्चनिजर्क्षपूर्णः ॥ ४७ ॥ स्वर्क्षे स्वोच्चेऽथ मित्रर्क्षे पूर्णे वा रजनीपतिः । गोचरे शुभमादत्ते निंद्योप्यावश्यके विधौ ॥ ४८ ॥ अथ चन्द्रशांतिः । गर्गः-घृतं कलशोपरि वस्त्रैः युक्तां प्रतिमां रजतघटितां च नैवेद्यादि च होमं च कार्यं तत्राभिषेचनम् । अथ घातचंद्रविचारः । श्रीपतिः-एकपंचनवयुग्म षट् दश त्रीणि सप्त चतुरष्टलाभगः । द्वादशाजसहितो हि राशितो घातचन्द्र इति कीर्तितो बुधैः ॥ ४९ ॥ नारदोपि-भूबाणनवहस्ताश्च रसो दिग्वह्निशैलजाः । वेदावसुशिवादित्या घातचंद्रो यथा क्रमात् ॥ ५५० ॥ यात्रायां शुभकार्येषु घातचन्द्रं विवर्जयेत् । विवाहे सर्वमांगल्ये चौलादौ व्रतबंधने ॥ ५१ ॥ घातचन्द्रो नैव चिंत्य इति पाराशरोऽब्रवीत् ॥ ५२ ॥ ज्योतिर्निबंधेपि-विवाहचौलव्रतबंधयज्ञे महाभिषेके च तथैव राज्ञाम् । सीमंतयात्रासु तथैव जाते नो चिन्तनीयः खलु घातचन्द्रः ॥ ५३ ॥ उद्वाहकाले व्रतबंधने च सीमंतयात्रा च तथा निषेके । वास्तुप्रवेशे च जलाशये च नो चिंतनीयः खलु घातचन्द्रः ॥ ५४ ॥ अथ गुरुबलम् । दुश्चिक्यजन्मांबरशत्रुसंस्थः पूजामभीष्टचत्यमरेशपूज्यः । पातालरंध्रव्ययराशिसंस्थः शुभप्रदः स्यान्न स पूजितोपि ॥ ५५ ॥ बंधौ तृतीये रिपुसंस्थिते च इच्छन्ति पूजा दशमे गुरौ च । न पूज्यमिच्छंति चतुर्थगे च न द्वादशे चाष्टमगे च जीवे ॥ ५६ ॥ गर्गः-द्विपंच सप्तनंदेशस्थितो जीवः शुभप्रदः । द्विजानां मेखलाबंधे कन्यकायाः करग्रहे ॥ ५७ ॥ जन्मत्रिदशमादिस्थः पूजया शुभदो गुरुः । विवाहेऽथ चतुर्थाष्टद्वादशेऽथ मृतिप्रदः ॥ ५८ ॥ वसिष्ठः-द्वादशदशमचतुर्थे जन्मनि षष्ठाष्टमे तृतीये च । प्राप्ते पाणिग्रहणे जीवे वैधव्यमाप्नोति ॥ ५९ ॥ विपाहपटले-द्वादशे निधने तुर्ये देवाचार्यगतो यदा । पूजया तत्र कर्तव्यो विवाहे प्राणनाशनम् ॥ ५६० ॥ एकादशस्थे नव पंचमे वा यामित्रसंस्थे च गुरौ हि सिद्धे । आद्ये तृतीये दशमे च षष्ठे गुरौ हि वाच्छंति शुभाय पूजा ॥ ६१ ॥ माहेश्वरः-अशुभैस्त्रिषडायसंस्थितैः शुभखेटैः सुतधर्मकेंद्रगैः । यदि चोपचये गुरौ सिते हरिजस्थे वरयेत्कुमारिकाम् ॥ ६२ ॥ देवलः-नष्टात्मजा धनवती विधवा कुशीला पुत्रान्विता हतधना सुभगा विपुत्रा । स्वामिप्रिया विगतपुत्रधना धनाढ्या वंध्या भवेत्सुरगुरौ क्रमतो विवाहे ॥ ६३ ॥ फलप्रदीपे-विपुत्रा धनैः संयुता दुर्भगा च पतिद्वेषभावार्थपुत्रादियुक्ता ।

संपत्तियुक्ताभाग्ययुक्तेशहीना सदा धर्मिणी निर्धनाढ्याथ वंध्या ॥ ६४ ॥ हाटकं वसनं पीतं दद्याद्दृष्टे बृहस्पतौ ॥ ६५ ॥ अथापवादः । चण्डेश्वरः–स्वोच्चे गुरुः स्वभवने भवनेथ' मित्रे मित्रांशकः स्वभवनोच्चगतांशके वा । कर्मात्यजन्मनिधनारिचतुस्त्रिके वा पुत्रार्थसौख्यपतिवृद्धिकरो विवाहे ॥ ६६ ॥ उच्चस्थः स्वगृही सुहृद्भवनगो वाचस्पतिर्नित्यशः पूर्णायुर्विविधार्थसौख्यजनको जन्माष्टगो वा भवेत् । नीचस्थोऽरिगृही दिवाकरकरच्छायानुगामी सदा इष्टेनिष्टफलं ददाति नियतं वैधव्यपुत्रापदम् ॥ ६७ ॥ बृहस्पतिः–झषचापकुलीरस्थो जीवोप्यशुभगोचरः । अतिशोभनतां दद्याद्विवाहोपनयादिषु ॥ ६८ ॥ अन्योपि–निधनद्वादशतुर्यगते गुरौ तदपि नैव शुभोहितपूजने । धनुरजावलिसिंहकुमारिकागुरुवपूज्य शुभो झषकर्कटे ॥ ६९ ॥ गर्गः–चरेतिचारे वक्रे वा तस्मिन्भे संस्थिते गुरुः । शुद्धिं दद्यात्स्वतंत्रेण योषितां पाणिपीडने ॥ ५७० ॥ त्रिकोणजायाधनलाभराशौ वक्रातिचारेण गुरुः प्रयातः । यदा तदा प्राह शुभं विलग्ने हिताय पाणिग्रहणं वसिष्ठः ॥ ७१ ॥ वसिष्ठमाण्डव्यपराशरात्रिगर्गौगिराव्यासकुलस्य वाक्यम् । वक्रातिचोर सुरराजमंत्री यत्रागतस्तत्र फलं ददाति ॥ ७२ ॥ अथ गुरुशान्तिः । शौनकः–कन्यकोद्वाहकाले तु आनुकूल्यं न विद्यते । ब्राह्मणस्योपनयने गुरुर्विधिरुदाहृतः ॥ ७३ ॥ सौवर्णेन गुरुं कृत्वा पीतवस्त्रेण वेष्टयेत् । ईशाने धवलं कुंभं धान्योपरि विधाय च ॥ ७४ ॥ दमनं मधुपुष्पं च तथा' पालाशसर्षपान् । मांजिष्ठगुडूच्यपामार्गा विडंबी शंखिनी वचा ॥ ७५ ॥ सहदेवी हरिक्रांता सर्वौषधिशतावरी। कृत्वाज्यभागपर्यंतं स्वशाखोक्तविधानतः ॥ ७६ ॥ यथोक्तमंडलेभ्यर्च्य पीतपुष्पाक्षतादिभिः । देवपूजोत्तरे काले ततः कुंभानुमंत्रणम् ॥ ७७ ॥ अश्वत्थसमिधश्चाज्यं पायसं सर्पिषान्वितम् । यवव्रीहितिलाः साज्या मंत्रेणैव बृहस्पतेः ॥ ७८ ॥ अष्टोत्तरशतं सर्वहोमशेषं समापयेत् । दारपुत्रसमेतस्य अभिषेकं समाचरेत् ॥ ७९ ॥ कुंभाभिमंत्रणोक्तैश्च समुद्रज्येष्ठमंत्रतः । प्रतिमां कुंभवस्त्रं च आचार्याय प्रदापयेत् ॥ ५८० ॥ ब्राह्मणान्भोजयेत्पश्चाच्छुभदः स्यान्न संशयः ॥ ८१ ॥ अथाष्टवर्गशोधनम् । विवाहवृन्दावने–योषितां गुरुपतंगगोचरैः शोभनो निगदितः करग्रहे । अष्टवर्गविधिना तदत्यये सूर्यशुद्धिरपरे नृणां जगुः ॥ ८२ ॥ यथोदये चंद्रमसः प्रकाशो' दिगंगनानां मुखकैरवस्य । तथाष्टवर्गग्रहलग्नशुद्धौ कार्यस्य पुंसां भवतीह शुद्धिः ॥ ८३ ॥ अभावतो गोचरशोभनानां शुद्धिं वदेद्वागुरिरष्टवर्गात् । वैधव्यकन्याक्षयहेतुयोगो जीवोष्ट व गस्य वदेन्न शुद्धिम् ॥ ८४ ॥ संहितासारे–अष्टवर्गः शुभैः श्रीमान्कर्म कुर्यान्नभश्चरैः । गोचरस्थैस्तदप्राप्तौ तदप्राप्तौ च वेधगौ ॥ ८५ ॥ मरीचिः–आदावष्टकवर्गः शोध्यो विज्ञैस्तदप्राप्तौ । गोचरबलं विचिन्त्यं तदभावे वामवेधजं वीर्यम् ॥ ८६ ॥ अथ विवाहे मासशुद्धिः । मासाब्दशुद्धिं ग्रहतारकाणां सर्वेषु देशेषु वदंति

तज्ज्ञाः ॥ ८७ ॥ नारदः–अप्रबुद्धे हृषीकेशे यावत्तावन्न मंगलम् । उत्सवे वासुदेवस्य मंगले नान्यमंगलम् ॥ ८८ ॥ वराहः–हरौ प्रसुप्ते न च दक्षिणायने न चैत्रमासे न च तिष्यसंज्ञिके । तिथावरिक्ते शशिनि क्षयं गते रवींदुभौमार्कदिनेषु चाशुभम् ॥ ॥ ८९ ॥ कश्यपः–उत्तरायणगे सूर्ये मीनं चैत्रं च वर्जयेत् । अजद्वंद्वकुंभालीमृगराशिगते रवौ ॥ ९९० ॥ श्रीधरीये–शरद्वसंतश्च शुभोग्रजानां ग्रीष्मश्च राजन्यविशोः प्रशस्तः । शूद्रस्य वर्षा शिशिरोऽखिलस्य लोकस्य पाणिग्रहणे प्रदिष्टः ॥ ९१ ॥ केशवः–प्रावट् वसंतोर्जसहःकरग्रहे परैरुदारैर्नतु हारि तन्मतम् । खरेवैसारिण मुत्तरायणं पुरंध्रिपाणिग्रहणे परायणम् ॥ ९२ ॥ कश्यपः–आरभ्यार्द्रोदयाद्वानो दशर्क्षेषु न कारयेत् । सुरस्थापनमुद्वाहं यज्ञोपनयनं क्वचित् ॥ ९३ ॥ अन्यच्च–आर्द्रोदयादूर्ध्वमिनस्य कार्यं नक्षत्रवृन्दे दशके कदाचित् । मासोक्तकर्मेतरमंगलाद्यं कुर्यान्न सुप्तेपि तथा मुरारौ ॥ ९४ ॥ वसिष्ठः–आद्रादर्के स्वातिविरामकाले नक्षत्रवृन्दे दशके तथैव । विवाहचौलव्रतबंधनाद्यं सुरप्रतिष्ठां च न कार्यमेतत् ॥ ९५ ॥ न कदाचिद्दशर्क्षेषु भानोरार्द्रप्रवेशनात् । विवाहं देवतानां च प्रतिष्ठां चोपनायनम् ॥ ९६॥ श्रीपतिः–नाषाढप्रभृतिचतुष्टये विवाहो नो पौषे नच मधुसंज्ञके विधेयः । नैवास्तं गतवति भार्गवे न जीवे वृद्धत्वे न खलु तयोर्न बालभावे ॥ ९७ ॥ वसिष्ठः–दिनाधिपे मेषवृषालिकुंभनृयुग्मनक्राख्यघटर्क्षसंस्थे । माघद्वये माधवशुक्रयोश्च मुख्योथवा कार्तिकमार्गयोश्च ॥ ९८ ॥ नारदः–माघफाल्गुनवैशाखज्येष्ठमासाः शुभप्रदाः । मध्यमः कार्तिको मार्गशीर्षो वै निंदिताः परे ॥ ९९ ॥ अद्भुतसागरे–पौषचैत्रापरार्द्धे स्याच्छुभं सूर्ये मृगाजगे । आद्यात्र्यंशः शुचेः श्रेष्ठो मिथुनस्थे मृगीदृशाम् ॥ ६०० ॥ पौषोत्तरार्द्धमुदितं तपने मृगस्थे चैत्रोत्तरार्द्धमजगे तरणौ तथैव । आद्यं शुचेर्दशदिनं मिथुनस्थितेर्के पाणिग्रहं निगदितं मुनिभिः शिवाय ॥ १ ॥ भारद्वाजः–माघफाल्गुनवैशाखज्येष्ठाषाढामृगाह्वयाः । षडेते पूजिता मासाश्चतुर्वर्णस्य सर्वदा ॥ २॥ श्रीपतिः–मेषोक्षवैणिकमृगाननकुंभसंस्थे प्रद्योतने करतलग्रहणं प्रशस्तम् । गीर्वाणमंत्रिणि मृगेन्द्रमधिष्ठितेन मासाधिकेन त्रिंदिनस्पृशिनावमेन ॥ ३ ॥ गार्ग्यः–मीने धनुषि सिंहे च स्थिते सप्ततुरंगमे । क्षौरमन्नं न कुर्वीत विवाहं गृहकर्म च ॥ ४ ॥ दैवज्ञवल्लभे–फाल्गुने तपसि मासि माधवे शुक्रनाम्नि धनपुत्रतो भवेत् । सोंपरैः सुखसुतार्थमानदः कार्तिके सहसि च प्रकीर्तितः ॥ ५ ॥ राजमार्तंडः–आषाढे धनधान्यभोगरहिता नष्टप्रजा श्रावणे वेश्या भाद्रपदेश्विने च मरणं रोगार्तिदा कार्तिके । पौषे प्रेतवती वियोगबलहा चैत्रे मदोन्मानिनी अन्येष्वेव विवाहिता सुतवती नारी समृद्धा भवेत् ॥ ६ ॥ अन्यः–माघे मासि भवात्यूढा कन्या सौभाग्यसंयुता । फाल्गुनौढा भवेत्साध्वी वैशाखे पुत्रिणी भवेत् ॥ ७ ॥ ज्येष्ठेति धनिनी प्रोक्ता आषाढे सुखभाजना । मार्गशीर्षे भवेच्छुद्धा पुत्रपौत्रधनान्विता ॥ ८ ॥

श्रीधरीये—पौषे च कुर्यान्मकरास्थितेर्के चैत्रे भवन्मेषगते यदि स्यात् । प्रशस्तमाषाढगते विवाहं वदंति गर्गा मिथुनास्थितेर्के ॥ ९ ॥ ज्योतिर्विदाभरणे-उदन्वतो रोधसि कापिलाख्यं भूमंडलं योजनषट्कमानम् । रेवामहीमध्यगमार्यराशेर्के विवाहो विहितोतिभद्रः ॥ ६१० ॥ अथ कार्तिकमासे विवाहशुद्धिः । अग्रतः पृष्ठतो वापि कार्तिक्यां दिनपंचके । पाणिग्रहणकर्तव्यो न दोषो दक्षिणायने ॥ ११ ॥ दिवसाः पंच पूर्व हि निर्गमे पंचवासराः । कारयेल्लग्नमेतेषु धनधान्ययुतो भवेत् ॥ १२ ॥ शौनकादिमुनयस्त्रिपुष्करे कार्तिकीकृतकरग्रहं शुभम् । कीर्तयंति धनपुत्रसौख्यदं दीर्घमायुरमतेतिताध्रुवम् ॥ १३ ॥ पद्मयोनिरपि कार्त्तिकमासाद्यत्रतत्र कृतदारसंग्रहः । सृष्टिकर्तुरपि वांच्छितं फलं नात्र विष्टिकुलकादि चिंतयेत् ॥ १४ ॥ ब्रह्मविष्णुशिववासवादिभिर्दत्तशोभनवराहकार्तिकी । तत्र पाणितलपाणिने कृते पुत्रपौत्रमिति भार्गवोब्रवीत् ॥ १५ ॥ भार्गवामरगुरोरदर्शने पुष्टदोषपरिपीडिते दिने । कार्तिकी सकलदोषनाशिनी कारयेत्करतलंग्रहं बुधैः ॥ १६ ॥ ज्योतिर्विदाभरणे—परिपंथितनूलयस्थमिंदुंपरिहायांगविवाहकामभद्रम् । उपरागमुखेन्यदोषजलो कुरुपाणिग्रहणं च कार्तिकीनम् ॥ १७ ॥ इति ऋषिगणैर्विशेषनीतिर्गदिता वा परिणत्यनेहसीर्ष्टो । उदितान्प्रतिदेशकालभेदानखिलोव्योमुदितानुकार्तिकीनम् ॥ १८ ॥ नैव गोचरविधिं न चाष्टकं शोधयेन्न बलशुक्रजीवयोः । तारकाशशभृतोर्बलं नभं नैव लग्नविधिमत्र चिन्तयेत् ॥ १९ ॥ नष्टे शुक्रे तथा जीवे परागे चंद्रसूर्ययोः । केशवोत्थितदेवानां विवाहः पुष्करे स्मृतः ॥ ६२० ॥ कार्तिक्यां घटिकालग्नं कुर्योदज्ञानतोपि यः । कर्ता कारयिता चोभौ स शापः सकलैः सुरैः ॥ २१ ॥ कुर्याद्गोधूलिकं लग्नं कार्तिक्यां दिनपंच च । सर्वदोषापहं प्रोक्तमृषिभिस्तत्त्वदार्शिभिः ॥ २२ ॥ दिनानि भुंक्ते निशि चागमे च यत्रार्द्धदृश्यं रविबिंबभागम् । तत्रैव पुण्यं शुभदं च नित्यं गोधूलिवेलां मुनयो वदंति ॥ २३ ॥ इक्षुसान्निध्य आरामे प्रसिद्धे देवकीर्तिते । नदीतडागे गोष्ठे वा विवाहः पुष्करे स्मृतः ॥ २४ ॥ ज्योतिःप्रकाशे—भृगोत्सुकच्छे च तथा विवाहेवलक्षपक्षे नभसौ दशम्याम् । पद्मे यथा कार्तिकपौर्णिमास्यं देशस्थितिः स्याच्छुभदः तथैव ॥ २५ ॥ अथ पक्षशुद्धिः । बृहस्पतिः—पूर्वपक्षः शुभः प्रोक्तः कृष्णश्चांत्यत्रिकं विना । विष्टिरिक्ता विवर्ज्याः स्युः शोभनास्तिथयः शुभाः ॥ २६ ॥ विवाहे शुभता कृष्णे चतुर्थी न कदाचन ॥ २७ ॥ नारदः—शुक्ले तु सुभगा मान्या कृष्णपक्षे मृतप्रजा ॥ २८ ॥ चण्डेश्वरः—श्रेष्ठं पक्षमुशंति शुक्लमसितं स्याद्यत्रिभागं तथा रिक्तां प्राप्ततिथिं तथात्वयनयोः संधिं च शेषाः शुभाः । आग्नेयग्रहवासरेषु कलहः प्रीतिश्च सत्सूत्तमा केचित्स्थैर्यमुशंति सौरिदिवसे चन्द्रे च सापत्न्यकम् ॥ २९ ॥ अथ तिथिशुद्धिः । वसिष्ठः-शुक्लद्वितीया दिन एव कृष्णे पक्षे दशम्यंशगताः प्रशस्ताः । तास्वष्टमी स्कंदगणेशदुर्गा चतुर्दशी चापि तिथिर्विवर्ज्याः॥६३०॥

चतुर्दशीं चतुर्थीं च नवमीं च विवर्जयेत् । एतासु विधवा कन्या भवत्यासु विवाहिता ॥ ३१ ॥ भारद्वाजः—प्रतिपद्दुःखजननी द्वितीया प्रीतवर्द्धिनी । सौभाग्यदात्री तृतीया च चतुर्थी धननाशिनी ॥ ३२ ॥ पंचम्यां सुखवित्तानि षष्ठी विघ्नप्रदायिनी । विद्याशीलसुखाप्तिः स्यात्सप्तम्यामफलाष्टमी ॥३३॥ नवमी शोकफलदा आनंदो दशमीदिने । सुखमेकादशी ज्ञेया सफला द्वादशी स्मृता ॥ ३४ ॥ मानपुत्रा त्रयोदश्यौ चतुर्दश्यां तु दोषदे । फलं बहुविधं नित्यं पंचदश्यां विशेषतः ॥ ३५ ॥ अमायां चैव रिक्तायां करणे विष्टिसंज्ञके । यः करोति विवाहं च शीघ्रं याति यमालयम् ॥ ३६ ॥ अत्रापि कृष्णपक्षस्य दशम्याद्ये विवाहिता ॥ ३७ ॥ नारदः—मासांते पंचदिवसा त्यजेद्रिक्तावमाष्टमी । विष्टिं च परिघस्यार्द्धं व्यतीपातं सवैधृतम् ॥ ३८ ॥ पंचदश्यष्टमी रिक्ता वर्ज्याश्चान्याः शुभावहाः । केचित्कृष्णाष्टमीं प्राहुर्विवाहेषु वयोत्यये ॥ ३९ ॥ चण्डेश्वरः—दुष्टस्य पूर्वमपहाय तिथेर्द्धभागं विष्टिप्रदुष्टमपनष्टविधुं तिथिं च । शेषाः शुभा निगदिता अशुभास्तथान्ये पूर्वोक्तमंत्रसकलं हि विचिन्तनयिम् ॥ ६४० ॥ अथ वारशुद्धिः । गुरुशुक्रबुधेंदूनां दिनेषु सुभगा भवेत् । सूर्यार्किभूमिवाराणा दिनेषु कुलटा भवेत् ॥ ४१ ॥ वसिष्ठः—वाराः प्रशस्ताः शुभखेचराणां सूर्यार्किवारौ खलु मध्यमौ तौ । त्याज्यः सदा भूमिसुतस्य वारः कामार्कतिथ्योरपि तौ प्रदोषौ ॥ ४२ ॥ गुरुशुक्रेंदुपुत्राणां दिनेषु परिणीयते । यः कन्या सा भवेन्नित्यं भर्तुश्चित्तानुवर्तिनी ॥ ४३ ॥ अर्कार्किभौमवाराणा दिनेषु कलहप्रिया । सापत्न्यं समवाप्नोति तुषारकरवासरे ॥ ४४ ॥ सूर्यदिने कृतविधवां विधवां वा वदंत्यन्ये । मासात्परं च शशिनः संयुक्ता सौख्यसंपर्कात् ॥ ४५ ॥ बांधवविभवविहीना दुष्टचरित्रा च वासरे कौजे । सौभाग्या शीलयुक्ता बोधे दिवसे च षोडशभिः ॥ ४६ ॥ धनसौख्यपुत्रपौत्रवर्द्धते वत्सरद्वये जीवे । शुक्रदिने पतिदयितां सुखधनयुक्ता तु वत्सरद्वितीये ॥ ४७ ॥ पंचाभिरब्दैर्विगतैर्धनरहिता दुर्भगा सौरिः । मासैः पंचभिरथवा तेषां कालेन फलपाकः ॥ ४८ ॥ रिक्ता शनिदिने चेत्स्यात्स्थिरा पतिगृहे तदा । चन्द्रस्य च दिनेप्येवं किंतु सापत्न्यमाप्नुयात् ॥ ४९ ॥ विधिरत्ने व्यासः—शनैश्चरदिने प्राप्ते यदा रिक्ता तिथिर्भवेत् । तस्मिन्विवाहिता कन्या पतिसंपत्तिवर्द्धिनी ॥ ६५० ॥ अथ नक्षत्रशुद्धिः । बृहस्पतिः—सौम्यपित्र्यर्क्षहस्तां च मैत्रं नैर्ऋतिवायवः । त्रीण्युत्तराणि पौष्णं च रोहिणी शोभनप्रदा ॥ ५१ ॥ अन्याः सर्वा विवर्ज्याः स्युस्ताराः परिणये सदा ॥ ५२ ॥ वसिष्ठः—स्वातौ मघायां निर्ऋतौ ध्रुवान्त्यमित्रेंदुहस्तेषु च कन्यकायाम् । पाणिग्रहस्त्विष्टफलप्रदः स्यादासिद्धभेष्वेव गुणान्वितानाम् ॥ ५३ ॥ नारदः—पौष्णधात्युत्तरामैत्रमरुच्चंद्रार्कपित्र्यभैः । समूलभैरप्रसिद्धस्तैः स्त्रीकरग्रह इष्यते ॥ ५४ ॥ राजमार्तंडे—हस्तोत्तरास्वातिमघानुराधा प्राजेशपौष्णेंदवनैर्ऋतेषु । पुत्रार्थसौभाग्यसुखानि कन्या प्राप्नोति शेषेषु च

भर्तृशोकम् ॥ ५५ ॥ श्रीपतिः—मूलमैत्रमृगरोहिणीकरैः पौष्णमारुतमघोत्तरान्वितैः । निर्विधानि उडुभिर्मृगीदृशां पाणिपीडनविधिर्विधीयते ॥ ५६ ॥ चण्डेश्वरः— मृगशिरसि मघायां हस्तमैत्रोत्तरासु स्वशनिर्ऋतिपूषाब्रह्मदेवेषु चोढा । बहुतर सुखदात्रीर्वित्तसौभाग्ययुक्ता जनयति परितोषं कन्यका बांधवानाम् ॥ ५७ ॥ माहेश्वरः—या स्यात्पक्षभुजंगभीषणनदीवृक्षर्क्ष संज्ञोज्झिता कांता रोगविवर्जिता कपिलदृक् कांता च तामुद्वहेत् । माघे फाल्गुनसंयुते सहसि च ज्येष्ठे च वैशाखिके मूलब्राह्म्यमघांत्यमैत्ररविभस्वात्युत्तरा सैंदवे ॥ ५८ गर्गः—मघायाः प्रथमे पादे मूलस्य प्रथमे तथा । रेवत्याश्च चतुर्थांशे विवाहः प्राणनाशनः ॥ ५९ ॥ पूर्वात्रये विशाखाया आर्द्रायै भचतुष्टये । ऊढा चाशु भवेद्वंध्या विधवा वित्तवर्जिता ॥ ६६० ॥ गुरुः— आर्द्रापुनर्वसौ पुष्ये सार्पे वोढा भवेद्वधूः । विधवा स्वल्पकालेन विवाहसमयात्प- रम् ॥ ६१ ॥ भगर्क्षं सर्वसौभाग्यकरं स्त्रीणां विशेषतः । कुतस्तर्हि वराहाद्यैग- र्हितं पाणिपीडने ॥ ६२ ॥ ज्योतिःप्रकाशे—कात तो मुनिभिः सर्वैः पुष्यः सर्वार्थ- साधकः । इति सत्यपि चोद्वाहे निंदितः केन हेतुना ॥ ६३ ॥ कालिदासोपि—सम- स्तकर्मोचितकालपुष्यो दुष्यो विवाहे मदमूर्च्छितत्वात् । सहस्रपत्रप्रसवेन तस्मादिहापि मुक्तो भुवि लोकसंघैः ॥ ६४ ॥ अनयोरुत्तरं वृन्दावने—प्राचेतसः प्राह शुभं भगर्क्षं सीता तदूढा न सुखं सिषेवे । पुष्यस्तु पुष्यत्यतिकाममेव प्रजापतेराप स शापम- स्मात् ॥ ६५ ॥ चिंतामणौ—आश्लेषा च मघापूर्वा चित्राश्रवणरेवती । एतानि षट्- ऋक्षाणि पंगुत्वं च विनिर्दिशेत् ॥ ६६ ॥ अथ योगशुद्धिः । व्यतीपाते ध्रुवं मृत्युर्गण्डांते वहुरोगिणी । विद्युदग्निर्भवेद्वज्रे शूले प्राप्य तनुग्रही ॥ ६७ ॥ वैधव्ये मरणं दास्यं विष्कंभे कामचारिणी । वीर्यहीनोतिगण्डे स्याद्व्याघाते हन्यते सुतः ॥६८॥ परिघस्य भवेद्दासा मद्यमांसरतस्सदा । एतानि नवयोगानि देवता परिवर्ज- येत ॥ ६९ ॥ श्रीपतिः—कुलच्छेदो व्यतीपाते परिघे स्वामिघातिनी । वैधृते विधवा नारी विषदाहोतिगंडके ॥ ६७० ॥ व्याघाते व्याधिसंघातः शोकार्ता हर्षण तथा । शूले च व्रणशूलं स्याद्दण्डे रोगभयं तथा ॥ ७१ ॥ विष्कंभेप्याहिदंशः स्याद्वज्रके मरणं भवेत् । एते वै दारुणाः सर्वे दश योगाः प्रकीर्तिताः ॥ ७२ ॥ अथ करणशुद्धिः । विष्ट्यां च मरणं नित्यं सुभगा षट्स्वपि चरे करणे । ध्रुवकरणैः शकुनाद्यैः पाणिग्रहणे ध्रुवं मृत्युः ॥ ७३ ॥ बृहस्पतिः—विवाहे करणाः सर्वे शोभना विष्टिवर्जिताः ॥ ७४ ॥ अथ विवाहलग्नशुद्धिः । बृहस्पतिः—जारसक्ता क्रिये लग्ने वृत्तिभ्रष्टा वृषोदये । कुलद्वये शुभा प्रोक्ता तथा च जितुमोदये ॥ ७५ ॥ नृशंसा कुलटा कर्के सिंहे वंध्या सकृत्प्रसूः । पतिश्वशूरयोः प्रीता कन्यायां सुरत- प्रिया ॥ ७६ ॥ तुलोदये धनाढ्या स्याद्वृश्चिके नित्यमास्थिता । कुलटा चापपूर्वार्द्धे प्रोढा चाति सती परे ॥ ७७ ॥ परशक्त्या मृगे कुंभे मीने दुश्चारिणी द्वयोः ।

बलिनो राशयः सर्वे यथा प्रोक्तफला सदा ॥ ७८ ॥ गौतमोपि—कृपे ऽकुमारिष्वनुरक्त चित्ता विहीनवित्ता गवि गोव्रता च । कुलक्षयानंदकरी न युग्मे कुलीरलग्ने कुलटा नृशंसा ॥ ७९ ॥ हरौ प्रसूता सकृताः श्रियायुः,पतिप्रिया च श्वशुरस्य षष्ठे । रूपाभिमानार्थवती तुलाधरे तथालिनी क्रंदति नित्यमस्थिरा ॥ ६८० ॥ धनुषि कुलटा तत्पूर्वार्द्धे सतीत्यपरे जगुः । मृगझषघटेष्वन्यासक्ता जरामुपगच्छति ॥८१॥ बृहस्पतिः—तिथ्यास्तु बलवान्करणः करणाद्बलवान्दिनः । दिनाद्दक्षो बलाढ्यः स्यात्सवथानुदयोबली ॥ ८२ ॥ एवं बलोत्क्रमो ज्ञेयो गुणदोषविमिश्रिते । एवं सर्वत्र विज्ञेयो विवाहे तु विशिष्यते ॥ ८३ ॥ सर्वेषां बलमुक्तं तु पूर्वं विषयतः क्रमात् । तथा बलंसमादेश्यो लग्नस्थगुणदोषयोः ॥ ८४ ॥ अथांशशुद्धिः । भुंक्ते पुरुषतृतीय पाणिग्रहणे क्रियांशके कन्या । कामयते वृषभे गौरपि कामातुराभर्त्यनुजान् ॥ ८५ ॥ स्वकुलक्षयकरी विवाहिता सा तृतीयांशे । श्वद्धेन त्यक्त्वा पतिं विचरति कुलीरगे अन्यदेशस्तु ॥ ८६ ॥ पैतृककुलानुरक्ता सिंहांशोद्वाहिता कन्या । धनसौभाग्यसमृद्धा भर्तृरताथ कन्यायाम् ॥ ८७ ॥ अत्यर्थपुत्रवती सुभगा साध्वी तुलांशके साध्वी । रोदनशीलातीववृश्चिकभागे' प्रिया भर्तुः ॥ ८८ ॥ धनुरंशके सुवृद्धिं भर्तारं भृत्यवद्भजति नारी । मृगभागे पुरुषाणां न याति तृप्तिं सुप्रसिद्धापि ॥८९॥ व्यभिचरति कुंभभागे वितते यज्ञेपि दीक्षिता नारी । सौभाग्यवती चपला प्रहसितवदनापि मीनांशे ॥ ६९० ॥ वसिष्ठोपि--द्विभर्तृका मेषनवांशके स्याद्वृषांशके सा पशुशीलयुक्ता । धनान्विता पुत्रवती तृतीये कुलीरकांशे कुलटाप्यजस्रम् ॥ ९१ ॥ सिंहांशके सा पितृमंदिरस्था कन्यांशके वित्तयुता सुशीला । तुलांशके सर्वगुणास्पदा सा कीटांशके वित्ततरा विशीला ॥ ९२ ॥ चापांशकाद्ये धनिनि 'द्वितीये भागेन्यसक्ता मलिना गदाढ्या । निस्वा मृगांशे विगुणा घटांशे विभर्तृका योगरता विशीर्णा ॥९३ ॥ तस्मात्सदा चोक्तनवांशकेषु कुर्याद्विवाहं गुणसंप्रवृद्ध्यै । नवांशदोषः सकलं गुणौघं लग्नोत्थसौम्यग्रहसंभवं च ॥ ९४ ॥ ध्रुवं निहंतीव वृकाजसंघषड्वर्गजं सौम्यवियचराणाम् ॥ ९५ ॥ नारदः—तुलामिथुनकन्यांशधनुराद्यर्द्धसंयुता । एते नवांशाः शुभदाः याद नान्त्यंशका खलु ॥ ९६ ॥ शौनकः—सुंदरी सौभाग्यवती प्रहसितवदना च मीनांशे ॥ ९७ ॥ कश्यपः—अंत्यांशका अपि श्रेष्ठा यदि वर्गोत्तमाह्वया । अनुक्तांशास्तु न ग्राह्या यतस्ते कुनवांशकाः ॥ ९८ ॥ श्रीपतिः—कोदंडतौलिमिथुनप्रमदानवांशे प्राप्नोति सौख्यमतुलं दयिता च भर्तुः । शेषेषु सत्स्वपि तथा च्यवनोज्झिता च चापेधिके भवति कृच्छ्रवदंति केचित् ॥ ९९ ॥ तथाच—कन्यानृयुग्मं च ववणिग्विलग्न स्थिते विवाहे शुभमादधाति । लब्धग्रहाणां बलमन्यभेपि देयस्तु तज्ज्ञैर्द्विपदांशः एव ॥ ७०० ॥ वसिष्ठः—वर्गोत्तमविनात्यांशो विवाहे न शुभप्रदः । वर्गोत्तमश्चेदंत्यांश पुत्रपौत्रादिवृद्धिदः ॥ १ ॥ केशवार्कः—चरलवं चरवेशमगमुत्सृजेन्मृगतुलाधरगे

मृगलक्ष्माणि । युवतिरत्रभवेत्कृतकौतुकामदनवत्यनवत्यजनोन्मुखी ॥ २ ॥ अशुभकृत्तव लग्नः खलु योंशको जनुरनेहसिनेहसितास्तगे । तनुगतेपि शिवं युवयोषितो वल्भवतो ल्वतो न भयं क्वचित् ॥ ३ ॥ अनुजनुर्मृतिगो मृतिपश्च यः सतनुगस्तनुगे न शिवं क्वचित् । इति विविक्तिरियं फलदा सदा स इह सिद्धयति चेत्समयः स्फुटः ॥ ४ ॥ अथ विवाहे दशदोषाः । वेधं च लत्ता च तथा च पातः खार्जूरवेधो दशयोगचक्रम् । युतिश्च यामित्र उपग्रहाश्च बाणाख्यवज्रे च दशैव दोषाः ॥ ५ ॥ अथाष्टादशदोषाः । यद्वेधः पातलत्तागृहममिनमुडुक्रूरवारो ग्रहाणां जन्मर्क्षं विष्टिरर्द्धं प्रहरककुलिको मृत्युगेंदौ रिपुस्थौ । कर्को घंटो यमस्य प्रगतशशिबलं दुष्टयोगो गलाख्यो दग्धा चाहश्च गर्गप्रमुखमुनिवरैस्त्यज्यतेष्टादशोयम् ॥ ६ ॥ अथ एकविंशतिदोषाः । नारदः—एकविंशतिदोषाणां नामरूपफलानि च । पितामहोक्तं संवीक्ष्य तानि वक्ष्ये समासतः ॥ ७ ॥ पंचांगशुद्धिरहितो दोषस्त्वाद्यः प्रकीर्तितः । उदयास्तशुद्धिहीनो द्वितीयः सूर्यसंक्रमः ॥ ८ ॥ तृतीयः पापषड्वर्गो भृगुः षष्ठः कुजोष्टमः । गंडांतकर्तरीरिःफषडष्टेन्दुश्च संग्रहः ॥ ९ ॥ दंपत्योरष्टमं लग्नं राशिर्विषघटी तथा । दुर्मुहूर्तो वारदोषो खार्जूरिकसमांघ्रिभम् ॥ ७१० ॥ ग्रहणोत्पातभं क्रूरविद्धर्क्षं क्रूरसंयुतम् । कुनवांशो महापातो वैधृतिश्चैकविंशतिः ॥ ११ ॥ वसिष्ठः—एकविंशन्महादोषास्त्वेते ब्रह्ममुखोदिताः । कदाचिन्नैव सीदंति गुणानां कोटिकोटिभिः ॥ १२ ॥ तस्मादेतेषु दोषेषु कदाचिन्नाचरेच्छुभम् । विवाहे विधवा नारी मरणं व्रतबन्धने ॥ १३ ॥ ग्रामनाशः प्रतिष्ठायां सीमन्ते गर्भनाशनम् । नवान्नभोजने मृत्युः कृषौ तत्फलनाशनम् ॥ १४ ॥ कर्तुर्नाशो गृहारंभे प्रवेशे पतिनाशनम् । यात्रायां कर्तृनाशः स्याद्युद्धे याने विशेषतः ॥ १५ ॥ लभ्यते सुमहापुण्यमेषु श्राद्धादिकर्मभिः ॥ १६ ॥ पंचांगदोषो रविसंक्रमश्च ससंग्रहः कर्तरिकांशदोषाः । चन्द्रारिरिष्फाष्टमपापवर्गःकुजाष्टमस्थो भृगुः षट्कसंस्थः ॥ १७ ॥ गण्डांतखर्जूरिकवारदोषो विषाख्यानाडयोष्टमलग्नराशिः । अकालवृष्टिः कुमुहूर्तदोषो महाव्यतीपातकवैधृतोंत्यः ॥ १८ ॥ लग्नास्तशुद्धिर्ग्रहणर्क्षजातः पापर्क्षविद्धर्क्षसमुद्भवा ये । उत्पाताख्या महदाख्यदोषाः सर्वेषु देशेषु सदा विवर्ज्याः ॥ १९ ॥ बृहन्नारदीये—महादोषा इमे त्याज्याः सर्वदेशेषु सर्वदा । न निवारयितुं शक्या गुणोत्तरशतैरपि ॥ ७२० ॥ अथ चतुरशीतिदोषाः । आदौ सुरगुरोरस्तं बालवृद्धस्य सूतकम् । देवानां शयनं चैव शुक्रास्तं शुक्रसूतकम् ॥ २१ ॥ चन्द्रास्तसूतके चैव क्षयमासाधिमासकौ । सिंहेज्यो मकरेज्यश्च वक्रातीचारयोर्गुरुः ॥ २२ ॥ लुप्तसंवत्सरश्चैव गुर्वादित्यस्तथैव च । सूर्यचन्द्रेज्यताराणां दुष्टस्थानस्य दूषणम् ॥ २३ ॥ वर्षमासादिदोषश्च ऋक्षं दग्धादि दूषितम् । संक्रांतिक्रूरहोराश्च क्रूरवारोथ वैधृतिः॥२४॥परिघार्द्धं व्यतीपातो गण्डांतस्त्रिविधस्तथा । उत्पातर्क्षं च पर्वर्क्षं दग्धा विष्टिश्च कर्तरी ॥ २५ ॥ लत्तापातं

तथा वेधं यामित्रं युतिदूषणम् । एकार्गलं दशायोगं वज्रं च वाणपंचकम् ॥ २५ ॥ उपग्रहं क्रान्तिसाम्यं कुलिकं कालकंटकौ । उत्पातमृत्युकाणाश्च क्रकचग्रहजन्मभम् ॥ २६ ॥ यमघंटोर्द्धयामं च संवर्तः कुलिकस्तथा । क्रूरवर्गःषडष्टेन्दुर्लग्नेशा रिपुमृत्युगः ॥ २७ ॥ मासतिथ्याधिसंधिश्च नक्षत्रविषनाडिकाः । लग्नेशास्तादिदोषश्च तथा भंगदकुंडली ॥ २८ ॥ अंधकुब्जादिदोषश्च रिक्तावृद्धिक्षयातिथिः । जन्ममासादिदोषश्च जन्मर्क्षाद्दष्टमं च भम् ॥ २९ ॥ एकोदरभवोद्वाहं तथा पर्वस्य सूतकम् । क्रूरग्रहयुतं लग्नं घातचन्द्रस्तथै व च ॥७३०॥ दंपत्योर्जन्मलग्नेशेऽस्तंगते सति दूषणम् । एतान्दोषान्परित्यज्य विवाहं प्रकरोति यः ॥ ३१ ॥ सुखसौभाग्यमाप्नोति आयुर्वृद्धियशो ध्रुवम् ॥ ३२ ॥ अथ पंचशलाका । श्रीपतिः–ऊर्ध्वा रेखाः पंच तिर्यक्स्थिताश्च द्वे द्वे रेखे कोणयोरत्र चक्रे । अग्रे धिष्ण्यं शंभुकोणे द्वितीये नाड्यां न्यस्येद्वान्यतः साभिजिच्च ॥ ३३ ॥ अंत्यः पादो वैश्वदेवाह्वयस्य विष्णोर्धिष्ण्यस्याद्यनाडचश्चतस्रः । प्रोक्ता भुक्तिः साभिजित्संज्ञकस्य तत्स्थे खेटे रोहिणीनां च वेधः ॥३४॥ विवाहवृन्दावने–याम्योत्तराप्रागपराश्च पंच द्वे द्वे च रेखे रचयेद्विदिक्षु । विदिग्द्वितीयार्गलिताग्नितारः सहाभिजित्तत्रभवेद्भवर्गः ॥३५॥ मूलादित्योः श्रवणमघयोः सौम्यविश्वाह्वयोश्च पौष्णार्यम्णोर्वरुणमरुतामैत्रयाम्यर्क्षयोश्च । अहिर्बुध्न्याभिधरविभयो रोहिणी साभिजिच्च वेधोयं वै मुनिभिरुदितः पाणिसंबन्धकाले ॥ ३६ ॥ चिन्तामणौ रामः– वेधोन्योन्यमसौविरिंच्यभिजितोर्याम्यानुराधर्क्षयोर्विश्वेंदोर्हरिपित्र्ययोर्ग्रहकृतो हस्तोत्तराभाद्रयोः । स्वातीवारुणयोर्भवेन्निर्ऋतिभादित्योस्तथा फांत्ययोः खेटे तत्र गते तुरीयचरणाद्योर्वा तृतीयद्वयोः ॥ ३७ ॥ अथ सप्तशलाका । राजमार्तंडे–पूर्वे कुबेरवरुणे च याम्ये दिङ्मण्डले सप्त भवंति रेखाः । ताभिर्मुनींद्रा विदितार्थसिद्धा वदंति ते सप्तशलाकचक्रम् ॥ ३८ ॥ वृन्दावने–वैश्वदेवतचतुर्लवः श्रवः पंचभूलव इहाभिजिन्मितिः । अन्यतः परिणयाद्यंव्यधः सप्तरेखवलये विलोक्यते ॥ ३९ ॥ रामः–शाक्रेज्ये शतभानिले जलशिवे पौष्णार्यमर्क्षेवसुद्वीशे वैश्वसुधांशुभे हयभगे सार्पानुराधे मिथः । हस्तोपांतिमभे विधातृविधिभे मूलादितित्वाष्ट्रभाजांघ्रीयारयमघे कृशानुहरिभे विद्धेद्रिरेखे मिथः ॥ ७४० ॥ चक्रे सप्तशलाकाख्ये स वेधः सर्वकर्मसु । चिंतनीयो विवाहे तु पंचरेखासमुद्भवे ॥ ४१ ॥ लांगले कमठे चक्रे फणिचक्रे त्रिनाडिके । अभिजिद्गणना नास्ति चक्रे खार्जुरिके तथा ॥ ४२ ॥ तारायां ग्रहचक्रे च संघाते लोहपातके । अभिजिद्गणना नास्ति लाते पाते च वंटके ॥ ४३ ॥ लल्लः–कुमारीवरणे दाने विवाहे स्त्रीप्रवेशने । वेधोयं पंचरेखास्थोऽन्यत्र सप्तशलाकके ॥ ४४ ॥ वसिष्ठः–पंचशलाकाचक्रे पाणिग्रहणो भवधविधिरुक्तः । शरतः शुभमित्रकृतः सप्तशलाकाज इतरत्र ॥ ४५ ॥ श्रीपतिः–वधूप्रवेशने दाने वरणे पाणिपीडने । वेधः पंचशलाकाख्येऽन्यत्र सप्तशलाकके ॥ ४६ ॥ वेध–

फलं फलप्रदीपे—अर्कवेधे च वैधव्यं चन्द्रवेधे वियोगिनी । पुत्रशोकातुरा भौमे बुधे शोकाकुला भवेत् ॥ ४७ ॥ गुरौ वंध्या विजानीयात् शुक्रे स्याद्व्यभिचारिणी । मृतवत्सा शनौ ज्ञेया राहौ च कुलटा भवेत् ॥ ४८ ॥ केतुवेधे सर्वनाशो एवं वेधस्य लक्षणम् ॥ ४९ ॥ गर्गः—यस्मिन् शशी पंचशलाकभिन्नः पापैरपापैरथवा विवाहे । तेनैव वस्त्रेण विरोदमाना श्मशानभूमिं प्रमदा प्रयाति ॥ ७५० ॥ भोजः—विद्धे सप्तशलाकाख्ये विधवा लग्नवाससा । पुनर्यात्यचिरान्नारीमुखाग्नौ मुखचंद्रिकाम् ॥ ५१ ॥ अथ नक्षत्रवेधः । विवाहवृंदावने—तस्मिन्नाभिन्नाग्रगतं भिनत्ति ग्रहो विवाहर्क्षमशेषमेव । स्त्रीपुंसयोरायुरसौम्यवेधः सौम्यव्यधो हंति सुखानि शश्वत् ॥ ५२ ॥ नारदः—पादएव शुभैर्विद्धमशुभे नैव कृच्छ्रभम् । क्रूरविद्धे युतं धिष्णं निषिद्धं नैव पादतः ॥ ५३ ॥ लल्लः—हैमेन लोहदंडेन तुल्यं दुःखं हि ताडनात् । तथैव सदसद्विद्धोऽशुभो शेषस्तयोः समः ॥ ५४ ॥ संहिताप्रदीपे—तत्रैकरेखास्थितखेचरं यद्विद्धं तदाहुर्द्युचरेण धिष्णम् । केचिद्विचिन्वंति हि पादवेधं समस्तमेवाशुभमाहुरन्ये ॥ ५५ ॥ यथा शरेणावयवैकदेशे विद्धो नरो न क्षमतामुपैति । तथैव धिष्णं द्युचरेण विद्धं न शोभनं शोभनकर्मणि स्यात् ॥ ५६ ॥ पटस्य देशे द्युचरोपि दग्धः पटो हि यद्वदिति तत्प्रसिद्धिः । तथैव पादोपि नभश्चरेण विद्धे भवेद्विद्धमशेषमेव ॥ ५७ ॥ नक्षत्रवेधे यदि पादवेधस्तदांघ्रिवेधे घटिकासु वेधः । नाडीव्यधे स्याद्विघटीषु वेधं भानां तदा क्वापि न चास्ति वेधः ॥ ५८ ॥ वसिष्ठः—तक्षकाग्निविषाग्निदग्धो न नरो म्रियते किमेकदेशेपि । तं मृतधिष्णं निखिलं मृतभे चकृतमृत्युरेव ॥ ५९ ॥ निहतं त्रिविधोत्पातैः क्रूराक्रान्तं च विद्धभं त्वखिलम् । त्याज्यं तच्छुभकर्मणि न पादतः पादधिष्णं च ॥ ७६० ॥ पादे विद्धे चेदनिष्टं भोद्वं तत्सं योगाद्राशिरेखा शुभा स्यात् । तेनाप्येवं योगतो राशिचक्रं मांगल्यं तत्कर्म कार्यं कथं स्यात् ॥ ६१ ॥ नक्षत्रे यो दोषं निहंति राशिं न संवरते हेतुम् । यत्पुत्रोयगरलं पित्रादीनां हन्यत तद्वत् ॥ ६२ ॥ कश्यपः—क्रूरविद्धं च यद्धिष्णं क्रूराक्रांतं च कृत्स्नभम् । मणिहेममयं हर्म्यं भूताक्रांतमिव त्यजेत् ॥ ६३ ॥ अत्रैवमृक्षं सदसद्ग्रहेण विद्धं न शस्तं सकलं तु यावत् । प्रागुक्तसंख्यार्द्धहिमांशुभोगात्ततो विचिंत्यः खलु पादवेधः ॥ ६४ ॥ लल्लः—पुरुषश्च दृष्टिपादा यद्वल्लक्षं भिनत्ति धानुष्कः । समपादगतश्चैवं वेधो नांघ्रिं प्रदूषयति ॥ ६५ ॥ वसिष्ठः—पादएव न शुभः शुभग्रहैर्विद्ध इत्यखिलशास्त्रसंमतम् । क्रूरविद्धयुतभं न शोभनं शोभनेषु सकलं न पादतः ॥ ६६ ॥ अथ पादवेधः । नारदः—अखिलर्क्षं पंचगव्यं सुराबिंदुयुतं यथा । पादएव शुभैर्विद्धमशुभे नैव कृच्छ्रभम् ॥ ६७ ॥ केशवार्कः—क्षतार्दितं दिग्धशरार्दितस्य शस्तं मृगस्यामिषमेव मन्ये । क्रूरांघ्रिवेधाय पदं वदंति तेनैव तषां निजपक्षहानिः ॥ ६८ ॥ विश्लेषमायाति यथांशुभिः स्वै रणे शरेणैकदिशि क्षतोपि । तथांघ्रिवेधादपि तारकाणा

क्रूरस्य नश्येद्बलरूपसंपत् ॥ ६९ ॥ कश्यपः-क्रूरविद्धं युतं धिष्ण्यं निखिलं नैव पादतः । अन्यैरपि गुणैर्युक्तं सर्वदोषविवर्जितम् ॥ ७७० ॥ त्यजेदनर्घमाणिक्यं कलङ्कोपहतं यथा ॥ ७१ ॥ दीपिकायाम्-आद्यपादस्थिते खेटे चतुर्थं संप्रदुष्यति । द्वितीयस्थे तृतीयं तु विपरीतमतोन्यथा ॥ ७२ ॥ वृन्दावनेपि-स किलवेधविधिर्द्वितृतीययोश्चरणयोर्मिथ आदि चतुर्थयोः । अशुभविद्धमशेषमुडुयजेच्चरणगं शुभवेधमसंपदि ॥ ७३ ॥ छिद्येत शाखा यदि काचिदृश्येर्भवेत्तदानीं किमशेषनाशनम् । एवं स एवाशुभदो ग्रहेण यो विध्यतेन्ये चरणाः शुभाः स्युः ॥ ७४ ॥ वैद्यनाथः-वेधमाद्यंतयोरंत्योरन्योन्यं द्वितृतीययोः । क्रूरैरपि त्यजेत्पादं केचिदूचुर्महर्षयः ॥ ७५ ॥ वसिष्ठः-विषप्रदग्धेन हतस्य पत्रिणा मृगस्य मांसं शुभदं क्षताद्दते । तथैव पादो न शुभो वसिष्ठः पादाः शुभाश्चेति पितामहेन ॥ ७६ ॥ रत्नकोशे-विषप्रदग्धेन हतस्य पत्रिणा मृगस्य मांसं शुभदं क्षताद्दते । यथा तथात्राप्युडुपादएव त्याज्या तदन्यत्रितयं शुभावहम् ॥ ७७ ॥ राजमार्तंडे-यस्मिन्पादे ग्रहस्तिष्ठेत् शुभो वा यदि वा शुभः । तेनांघ्रिणा भपोदो यो विद्धो नेष्टोऽपरे शुभाः ॥ ७८ ॥ यथा शरेणावयवैकभिन्नो नरः क्षमः स्यात्पटुरौषधैः स्यात् । हित्वा तमेवावयवं तथैंडुभोगाच्छुभं भं चरणस्तु दुष्टः ॥ ७९ ॥ धिष्ण्ये शुभेन द्युचरेण विद्धे विद्धस्तु पादः परिवर्जनीयः । शेषं शुभं विद्धमतेंदुभोगं समस्तमेवाशुभखेटविद्धम् ॥ ८० ॥ क्रूरैरपि त्यजेत्पादं केचिदूचुर्मनीषिणः ॥ ८१ ॥ वसिष्ठः-धिष्ण्यं शुभग्रहैर्विद्धं पादमात्रं परित्यजेत् । क्रूरैस्तु सकलं त्याज्यमिति वेधविनिर्णयः ॥ ८२ ॥ अथ वेधे परिहारवाक्यम् । बृहस्पतिः-संग्रहे प्रोक्तनक्षत्रे विवाहो नैव शोभनः । राशिभेदेन दोषः स्याद्दे क्रूरतारास्त्वपि ग्रहाः ॥ ८३ ॥ मार्तंडे-लग्नेशे भवगेऽथवा शशिनि सदृष्टे शुभे वांगगे होरायां च शुभस्य वा व्यधभयं नास्तीति पूर्वे जगुः ॥ ८४ ॥ वसिष्ठः-लग्ने शुभे नसौम्ययुते क्षितो वा लग्नाधिनाथो भवगस्तथा वा । कालाख्यहोरा च तथा शुभस्य भवेद्धि दोषस्य तथा विभंगः ॥ ८५ ॥ उद्वाहतत्त्वे-सद्युहृदृक्तनुगे शुभे व्यधभयं नोचायगे लग्नपे होरायां च शुभस्य वा शशिनि सदृष्टेपि चार्यैरुडोः ॥ ८६ ॥ अथ लत्ताविचारः । श्रीपतिः-ऋक्षं द्वादशमुष्णरश्मिरवनीसूनुस्तृतीयं गुरुः षष्ठं चाष्टममर्कजस्य परतो हंति स्फुटं लत्तया । पश्चात्सप्तममिंदुजश्च नवमं राहुः सितः पंचमं द्वाविंशं परिपूर्णमूर्तिरुडुपः संताडयेन्नेतरः ॥ ८७ ॥ विवाहवृन्दावने-रविनखैर्मितमर्कविधुंतुदौ मुनिभिरिंदुरखंडलमंडलः । हुतवहाकृतिषड्जिनसंततिभिःक्षितिसुतादिभिलत्तयतिग्रहः ॥ ८८ ॥ वसिष्ठः-रविलत्ता वित्तहरी नित्यं कौजी विनिर्दिशन्मरणम् । सांद्री नाशं कुर्याद्बुधो नाशं वदत्येव ॥ ८९ ॥ सौरी मरणं कथयति बंधुविनाशं बृहस्पतेर्लत्ता । मरणं लत्ता राहोः कार्यविनाशं भृगोर्वदति ॥ ७९० ॥ केशवार्कः-इति द्युचरद्गामभिलत्तनयदनुलत्तमनुमुक्तमृषिव्रजैः । तदुडु पश्चिमपूर्वविभागयोरनाधिका-

धिकदोषविवक्षया ॥ ९१ ॥ उडुनि निर्दलिते शुभलत्तया न फलमस्तु बलस्य गल-त्तया । अशुभलत्तितलत्तितदूढयोर्धनसुता नसुतापकरं परम् ॥ ९२ ॥ केचित्तु पाप-लत्तां वर्जयंति । त्रिविक्रमः—नक्षत्रं द्वादशांभानुस्तृतीयं क्षितिनंदनः ॥ नखसंख्यं तमो हंति लत्तया शनिरष्टमम् ॥ ९३ ॥ अथ लत्ताया अपवादः । सौराष्ट्रशाल्व-देशेषु लातितं च विवर्जयेत् ॥ ९४ ॥ लत्तामालवके देशे पातं कौशलके तथा । एका-र्गलं तु काश्मीरे वेधं सर्वत्र वर्जयेत् ॥ ९५ ॥ अथ पातविचारः । श्रीपतिः—सूर्याद्धिष्टितभाद्भुजंगपितृभस्त्वाष्ट्रेषु मैत्रश्रुतौ पौष्णे च क्रमशोऽश्विभाद्गणनयाशीतां-शुना संयुते । धिष्णे तावतिथौ पतत्यवितथं चण्डीशचण्डायुधं तस्मिन्नात्महते-च्छुभिर्निजहितेति कार्यं न कार्यं बुधैः ॥ ९६ ॥ नारदः—सूर्यभात्सार्पपित्र्यांतात्त्वाष्ट्र-मित्रोडुविष्णुभे । संख्यायादिनभे तावदश्विभात्पातदुष्टभम् ॥ ९७ ॥ वसिष्ठः—रवि-भादहिपित्रमित्रत्वाष्ट्रभहरिपौष्णभेषु गणितेषु । अश्विभभादींदुयुते तावति वैपरीति गणनया पातः ॥ ९८ ॥ त्रिविक्रमः—साध्यहर्षणशूलानां वैधृतिव्यतिपातयोः । यद्गंडस्य चान्ते स्यात्तत्पातेन निपातितम् ॥ ९९ ॥ केशवः—यदंतगंहर्षणसाध्य-शूलगण्डव्यतीपातकवैधृतीनाम् । तथैव चन्द्रोडुनि चंडमैशमस्त्रं पतेन्मंगलभंगलक्ष्म ॥ ८०० ॥ नक्षत्रेषु यदि एतद्योगस्य समाप्तिर्भवति तदा पातदोष इत्यर्थः । अय-मपि पातदोषश्चण्डीशचण्डायुधाह्वयो ज्ञेयः । अखिले मंगलेष्वपि वर्ज्यौ यस्माद्विना-शदः कर्तुम् ॥ १ ॥ पावकः पवनाश्चैव विकारी कलहप्रियः । मृत्युकारी क्षयंकारी षडेते पातदूषणम् ॥ २ ॥ पातेन पतितो ब्रह्मा पातेन पतितो हरिः । पातेन पतितो रुद्रस्तस्मात्पातं विवर्जयेत् ॥ ३ ॥ चित्रांगते पातविचित्रदेशे मैत्रे मघा मालवके निषिद्धः । पौष्णश्रुती चोत्तरदेशजातः सर्वत्र वर्ज्यश्च भुजंगपातः ॥ ४ ॥ अथ क्रांतिसाम्यम् । ऊर्ध्वा त्रीणि अधो त्रीणि मध्ये मीनं प्रदापयेत् । सूर्यचन्द्रमसो र्योगे क्रांतिसाम्यमुदाहृतम् ॥ ५ ॥ रामः—पंचास्याजौ गोमृगौ तौलिकुंभौ कन्या-मीनौ कर्क्यली चापयुग्मे । तत्रान्योन्यं चन्द्रभान्वोर्निरुक्तं क्रांत्योः साम्यं नो शुभं मंगलेषु ॥ ६ ॥ ऐंद्रस्यांते ध्रुवं मध्ये व्यतीपातस्य संभवः । क्रांतिसाम्यकृतोद्वाहो न जीवति कदाचन ॥७॥ दिनकरहिमरश्म्योर्दृष्टिसंपातजन्मा भवति विकलमूर्तिः कोपि रौद्रो मनुष्यः । पतति भवनमध्ये मङ्गलानां विनष्टचैर्ज्वलनकपिलदृष्टया निर्दहंति जगंति ॥ ८ ॥ विवाहपटले—शस्त्राहतोग्निदग्धोवा नागदष्टोपि जीवति । क्रांतिसाम्यकृतो-द्वाहो न जीवति कदाचन ॥ ९ ॥ वैधृतिव्यतिपातौ यौ क्रांतिसाम्येर्केचन्द्रयोः । सत्कर्मारंभणं तत्र व्यसनं मरणं विदुः ॥ ८१० ॥ मार्तंडे—एष्यो धनं क्षपयति व्य-तिपातयोगो मृत्युं ददाति न चिरादथ वर्तमानः । संतापशोकगदविघ्नभयान्यतीतै-स्तस्माद्दिनत्रयमपि प्रजहीत विद्वान् ॥ ११ ॥ सूर्यसिद्धांते—तुल्यांशुजालसंपर्कात्तयो-स्तु प्रवहाहतः । तादृक् क्रोधोद्भवो वह्निर्लोकाभावाय जायते ॥ १२ ॥ वसिष्ठः-

शास्त्रात्समानीतमहातिपातः स वैधृतो हंति वधूवरं च । त्रिसप्तवारानिव जामदग्न्य क्रोधोचिरात् क्षात्रकुलं समस्तम् ॥ १३ ॥ हिमकरतुहिनांशोर्दृष्टिसंपातजन्मास्त्वनलमयशरीरः सुगिरनग्निसंघात् । भुवि पतति जनानां मंगले ध्वंसनाय गुणगणशतसंघैरप्यवार्योग्निकोपः ॥ १४ ॥ दिनकरतनुमार्गे यावदन्वेति चन्द्रो मुनिभिरभिहितोसौ पातकालस्तु तावत् । उपनयनविवाहादौ न शस्तोति पुण्यो यमनियमविधाने सूर्यतुल्योपमः स्यात् ॥ १५ ॥ अथ एकार्गलखार्जूरियोगः । संहिताप्रदीपे—त्यजंति केचित्तिथिमृक्षमेके वारं तथा पातविदुष्टमन्ये । मांगल्यकार्येषु न शोभनं स्याद्दिनत्रयं केचिदपि ब्रुवंति ॥ १६ ॥ विषप्रदग्धेन हतस्य पत्रिणा मृगस्य मांसं शुभदं क्षताहते । यथा तथैव व्यतिपातयोगे क्षणोत्र दुष्टो न तिथिर्न वासरः ॥ १७ ॥ केशवः—त्रिभागशेषे ध्रुवनाम्नि चन्द्रे त्र्यंशे गते संप्रति संभवोस्य । मानार्द्धयोगाधिकमिंदुभान्वोः क्रांत्यंतरं चेन्न तदैष दोषः ॥ १८ ॥ अथैकार्गलखार्जूरः । श्रीपतिः—एका मूर्ध्नि गता त्रयोदश तथा तिर्यग्गता स्थापयेद्रेखा चक्रमिदं बुधैरभिवहितं खार्जूरिकं तत्रतु । व्याघातादिषु मूर्ध्निभं तु कथितं तत्रैकरेखास्थयोः सूर्याचन्द्रमसोर्मिथो निगदितो दृक्पात एकार्गलः ॥ १९ ॥ वसिष्ठः—रेखामेकामूर्ध्वगां वद् च सप्ततिर्यक्कृत्वाप्यत्र खार्जूरचक्रे । तिर्यग्रेखासंस्थयोश्चन्द्रभान्वोर्दृक्संपातो दोष एकार्गलाख्यः ॥ २० ॥ अन्त्यातिगण्डपरिघव्यतिपातपूर्वव्याघातगण्डवरशूलमहाशनीषु । चित्रानुराधपितृपन्नगदस्रभेषु सादित्यमूलशशिसूरिषु मूर्ध्नि भेषु ॥ २१ ॥ त्रिविक्रमः—विरुद्धनामयोगेषु साभिजिद्धिषमर्क्षगः । अर्केन्दुस्तदा योगो निंद्य एकार्गलाभिधः ॥ २२ ॥ नारदस्त्वभिजिद्वर्जितं चक्रमाह । लिखेदूर्ध्वगतामेकां तिर्यग्रेखां त्रयोदश । तत्र खार्जूरिके चक्रे कथितं मूर्ध्नि भान्यसेत् ॥ २३ ॥ व्याघातशूलपरिघपातपूर्वेषु सत्स्वपि । गण्डातिगण्डकुलिशवैधृत्यासहितेषु च ॥ २४ ॥ अदितीन्दुमघाह्याद्यमूलमैत्र्येत्यभानि च । ज्ञेयानि सहचित्राणि मूर्ध्नि भानि यथा क्रमम् ॥ २५ ॥ भान्येकरेखास्थितयोः सूर्याचन्द्रमसोर्मिथः । एकार्गलो दृष्टिपाताचाभिजिद्वर्जितानि वै ॥ २६ ॥ कश्यपेनापि—एकार्गलो दृष्टिपातश्चाभिजिद्रहितानि वै ॥ २७ ॥ केशवार्कः—शीर्षभं भवति रूपसंयुतं दुष्टयोगमितिरर्द्धिता सती । शेषिणी यदि च सार्द्धविश्वयुक् मंगलं गलति सार्गले विधौ ॥ २८ ॥ त्यक्त्वागतैष्यस्य परेस्य हेतुमुद्यांति नक्षत्रमशेषमेव । एकार्गलस्यैव हि सा च भंगी संध्यागतं यद्गलहस्तयंति ॥ २९ ॥ विवाहे प्रथमे क्षौरे सीमंते कर्णवेधने । व्रतेऽन्नप्राशने चैव खार्जूरं परिवर्जयेत् ॥ ३० ॥ अथ दशयोगविचारः । अश्विन्यादि रविर्यत्र अश्विन्यादि शशी तथा । द्वयोर्योगो हते ऋक्षे शेषे स्यादपि तद्दश ॥ ३१ ॥ शून्यं रूपोथ वेदर्तुदश रुद्रातिथिर्धृतिः । एकोनविंशविंशश्च दश योगाः प्रकीर्तिताः ॥ ३२ ॥ वायुमेघाग्निभूपालवह्निमृत्युक्रमात्फलम् । रोगं वज्रं तथा कष्टं हानिश्च

दशयोगके ॥ ( ३३ ) ॥ फलप्रदीपे—अश्विन्यादित एव यत्र सविता यच्चेष्टमृक्षं
तयोर्योगात्खैककृतैर्युदिग्भवतिथिर्धृत्योनविंशोन्नखाः । उद्वाहे दशयोगके प्रकथितं वायु-
र्जलाद्वह्नितो राज्ञश्चौरमृतेर्गदाश्च कलहात्कष्टार्थहानेर्भयम् ॥ ३३ ॥ विवाहादौ
प्रतिष्ठायां व्रते पुंसवने तथा । कर्णवेधे तु चूडायां दशयोगं विवर्जयेत् ॥ ३४ ॥
**अस्यापवादमाह** । भरद्वाजः—गुरौ लग्नाधिपे शुक्रे सवीर्ये लग्नकेंद्रगे । दशयोगा
विनश्यंति यथाग्नौ तूलराशयः ॥ ३५ ॥ व्यासोपि—शुक्रेण गुरुणा वापि संयुतं दृष्ट-
मेव च । दशयोगसमायुक्तमपि लग्नं शुभावहम् ॥ ३६ ॥ अथ युतिदोषः । नारदः-
शशांके ग्रहसंयुक्ते दोषः संग्रहकारकः । तस्मिन्संग्रहदोषे तु विवाहं नैव कारयेत् ॥ ३७ ॥
विवाहपटले—यस्मिन्भवने चन्द्रस्तस्मिन्यदि जायते ग्रहः कश्चित् । युतिरिति दोषस्तु
तदा शुभयुक्तः केचिदिच्छंति ॥ ३८ ॥ स्वक्षेत्रगः स्वोच्चगो वा मित्रक्षेत्रगतोपि
वा । पापग्रहयुतश्चंद्रः करोति मरणं तयोः ॥ ३९ ॥ वसिष्ठः—दारिद्र्यं रविणा कुजेन
मरणं सौम्येन नष्टप्रजा दौर्भाग्यं गुरुणा सितेन सहिते चन्द्रेण सापत्न्यकम् । प्रव्र-
ज्यार्कसुतेन सेंदुजगुरौ वाच्छंति केचिच्छुभं व्याधेर्मृत्युरसद्ग्रहैः शशियुते दीर्घप्रवासः
शुभैः ॥ ८४० ॥ भूपाढ्यं रिपुभयं व्यसनं प्रवासं वित्तक्षयं विदरणं च शुभक्रियासु ।
कर्तुः करोति शशभृत्क्रमशोर्कपूर्वैरेकग्रहैः सह विशन्नुडुमेकराशौ ॥ ४१ ॥ यस्मि-
न्नृक्षः स्थितः खेटस्तदृक्षं युतिसंज्ञकम् । तस्मिन्विवाहिता कन्या पुंश्चली जायते
ध्रुवम् ॥ ४२ ॥ श्रीपतिः—स्वर्भानुमित्रासितभौमशुक्रैस्तुषारराश्मिः सहितोङ्गनानाम् ।
दौर्भाग्यवैधव्यभयानि धत्ते शुभं यदंभोलिभृदीज्यविद्भ्याम् ॥ ४३ ॥ चण्डेश्वरः-
युतियामित्रगो नित्यं राहुकेतू फलप्रदौ । व्यासशौनकयोर्वाक्यमस्मिन्नर्थे च लिख्यते
॥ ४४ ॥ भास्करयुते चन्द्रे भवति धनैर्वर्जिता दुराचारा । भौमे साहसयुक्ता गात्रच्छे-
समाप्नोति । स्वसुतयुते रजनीकरे सत्यवती धर्मशीला स्यात् । सुरगुरुणा पतिद-
यिता सधना नियता च पुत्रिणी साध्वी ॥ ४५ ॥ शुक्रे विपन्नशीला नित्यं वशगाः
सापत्न्याः । सौरेण युतो विधवा प्रव्रज्यां वा करोति विगतभया ॥ ४६ ॥ राहुसमे
चन्द्रे प्राप्ते पाणिग्रहणं तु या । परपुरुषसक्तहृदया नीचैरपि याति संसर्गम् ॥ ४७ ॥
केतुयुते हिमरश्मौ कन्यापाणिग्रहणं तु या गच्छेत् । धारयंति सा सुतीव्रं नृकपा
सोमसिद्धांतवित् ॥ ४८ ॥ ज्योतिर्निबन्धे—एकस्मिन्नपि धिष्ण्ये भिन्ने राशौ खला
शशिनि । तच्चंद्रर्क्षे कुर्याद्विवाहयात्रादिकं सर्वम् ॥ ४९ ॥ गुरुरपि—सग्रहे प्रोक्तनक्षत्रे
विवाहो नैव शोभनः । राशिभेदे न दोषः स्यादेकतारास्वपि ग्रहः ॥ ८५० ॥ नारदः
स्वक्षेत्रगः स्वोच्चगो वा मित्रक्षेत्रगतो विधुः । युतिदोषाय न भवेद्दंपत्योः श्रेय-
स्तदा ॥ ५१ ॥ कश्यपोपि—तुंगमित्रस्वराशिस्थशुभयुक्तः शुभप्रदः । एवंविधः शु-
युतः संपूर्णफलदः शशी ॥ ५२ ॥ वर्गोत्तमगतश्चंद्रः स्वोच्चे वा मित्रराशिगो
युतिदोषश्च न भवेद्दंपत्योः श्रेयसी सदा ॥ ५३ ॥ **अथ यामित्रदोषः** । नारदः

लग्नाद्वा शशिनाद्वापि यामित्रं सप्तमं स्मृतम्। क्रूरग्रहयुतं तत्र यत्नतः परिवर्जयेत् ॥ ५४ ॥ क्रूरो वा यदि वा सौम्यो लग्नाच्चन्द्राच्च खेचराः। एकोपि यदि यामित्रे समांशे शोकदो भवेत् ॥ ५५ ॥ राजमार्तंडे—सौरारजीवबुधराहुरविश्च शुक्रे केतुश्च सप्तमगृहं शशिनश्च लग्नात्। वैधव्यबंधनवधक्षयपुत्रनाशव्याधिप्रवासमरणानि यथाक्रमेण ॥५६ ॥ भूपालवल्लभे—चन्द्रात्सप्तमराशिगे दिनकरे त्यक्ता धनैः कन्यका भौमेन प्रमदा प्रयाति मरणं सौरेण वंध्या सरुक् । जीवः शुक्रशशांकजाः शुभकराः केचिद्वदन्ति क्रमात् भर्तुः प्रोज्झितदीक्षितास्तभवने नित्यं प्रवासान्विता ॥ ५७ ॥ चण्डेश्वरः—पापात्सप्तमगः शशी यदि भवेत्पापेन वा संयुतो यत्नेनापि विवर्जयेन्मातिमता दोषोपि संकथ्यते। यात्रायां विपदा ग्रहेषु मरणं क्षौरे च रोगो महानुद्वाहे विधवा व्रते च मरणं शूलं च पुंस्कर्माणि ॥ ५८ ॥ पापग्रहेण संयुक्तः पापयामित्रसंभवः । पापद्वयस्य मध्यस्थः शुभोप्यशुभदः शशी ॥ ५९ ॥ केशवः—खलकृता तनुरोहिणि मित्रयोर्द्धुरधुरा विधवां कुरुते वधूम्। श्रुतिशरांशमिते स्मरभे तयोर्गृहमपुण्यमपुण्यमिव त्यजेत् ॥ ८६० ॥ क्रूरस्य भार्द्धांतरमृक्षमेवमनिष्टमित्येव विशेषवादः । पापाच्चतुःपंचलवेषु चान्द्रं यामित्रमस्मात्खलु पर्यणंसीत् ॥ ६१ ॥ पतिं त्यक्त्वा सूर्ये शशिनि करणात्सप्तमगते महीजेऽन्यासक्ता हिमकरसुते भर्तृनिरता। गुरौ नारी साध्वी भवति च सपत्न्या भृगुसुते सुतैर्हीना दीना दिनकरसुतेऽजाद्युनगते ॥ ६२ ॥ लग्नात् कलत्रे रजनीकराद्वा ऋक्षात्तऋक्षे यदि सप्तमेपि । ग्रहो विवाहे ह्यशुभः शुभो वा तदा सुवैधव्यमुशन्त्यवश्यम् ॥ ६३ ॥ चण्डेश्वरः—शशिनः सप्तमसंस्थे दिवसकरे शीलवर्जिता कन्या। भौमे पतिघातकरी शशितनये वल्लभा भर्तुः ॥ ६४ ॥ सुरमंत्रिणि सुतसहिता दैत्यगुरौ शोभना साध्वी । रवितनये भर्तृहा कुलटा सा वंधकी यास्यात् ॥ ६५ ॥ राहौ भर्तृरनिष्टा केतौ वंशक्षयाय निर्दिष्टा । लग्नात्सप्तमगा पापश्चन्द्रात् सप्तमगोपि वा। लग्नस्थाचंद्रसंस्थाद्वा व्याधिवैधव्यकारकाः ॥ ६६ ॥ विवाहपटले—यामित्रं न प्रशंसंति गर्गगालवकश्यपाः । यामित्रे चांगिराश्रेष्ठश्चन्द्रशुक्रबुधास्तथा ॥ ६७ ॥ तस्माच्चन्द्राच्च लग्नाच्च यामित्रं परिवर्जयेत्। सौराररवयो वर्ज्याः सप्तमस्थाः प्रयत्नतः ॥ ६८ ॥ दीपिकायाम्—रविमंदकुजाक्रांतमृगांकात्सप्तमं त्यजेत्। विवाहयात्राचूडासु गृहकर्मप्रवेशने ॥ ६९ ॥ अथ यामित्रापवादः । अत्रिः—यामित्रगो यदि भवेदुशना बुधो वा गीर्वाणनाथसचिवः सितपक्षचन्द्रः । कन्याविवाहसमये शुभमामनंति मन्वात्रिनारदवसिष्ठपराशराद्याः ॥ ८७० ॥ मनुशांडिल्यमांडव्यभारद्वाजात्रिगौतमाः। यामित्रे तु प्रशंसंति बुधजीवोशनाः शुभाः ॥ ७१ ॥ वसिष्ठः—लग्नात्त्रिकोणसहजायगतश्च चान्द्रं यामित्रदोषमशुभं भृगुराशु हन्यात् । धीधर्मे कटकगतस्फुरदंशुजालो जीवोतिदुष्टफलहानिकरः सशोतिः ॥ ७२ ॥ मित्रीक्षितोथ भवने शुभवीक्षितो वा मित्राश्रितोथ भवने सुहृदंशके वा। यामित्रदोषमपहृत्य सुखं

करोति चन्द्रः समीहितफलं च ददाति पुंसाम् ॥ ७३ ॥ ज्योतिःसागरे-मित्रालये मित्रसमीक्षितो वा मित्रांशके मित्रसमाश्रितो वा । क्रूरग्रहादस्तगतोपि सोमः समीहितार्थं वितरेन्नराणाम् ॥ ७४ ॥ राजमार्तंडः-तुंगत्रिकोणभवने भवने निजे वा सौम्याधिमित्रगृहगोपि तदीक्षितो वा । यामित्रवेधजनितावनपत्यदोषान्दोषाकरः सुखमनेकविधं विधत्ते ॥ ७५ ॥ व्यवहारोच्चये-स्वोच्चेथवा स्वभवने स्फुरदंशुजालः सौम्यालये हितगृहे शुभवर्गगो वा । यामित्रकादि परिसंचितदोषराशिं हित्वा ददाति बहुशः सुखमेव चन्द्रः ॥ ७६ ॥ कालखण्डे वात्स्यायनः-गुरुश्चन्द्रश्च यामित्रे तिष्ठेद्यदि बलान्वितः । धनसौभाग्यपुत्रांश्च लभते नात्र संशयः ॥ ७७ ॥ मणिमुक्ताप्रवालैश्च सुवर्णाभरणैः शुभैः । शोभिता तु सदा तिष्ठेद्गुरुणापि निरीक्षिते ॥७८ ॥ सा तु भर्तुः प्रिया नित्यं बुधे चन्द्रस्य सप्तमे ॥ ७९ ॥ भुजबलः-स्त्रीणां विवाहं तु बलैरुपेता पत्युः प्रणाशं विहगा विदध्युः । त्यक्त्वा बुधं दैत्यगुरुं गुरुं च निशाकरादस्तगृहं प्रपन्ना ॥ ८० ॥ देशविशेषेण परिहारः । विवाहपटले-लत्ता मालवे देशे पातः कोसलके तथा । एकार्गलं तु काश्मीरे वेधं सर्वत्र वर्जयेत् ॥ ८१ ॥ वराहः-युतिर्दोषो भवेद्गौडे यामित्रस्य च यामुने । वेधदोषस्तु विंध्याख्या देशे नान्येषु केचन ॥ ८२ ॥ अथोपग्रहः । श्रीपतिः-भूकंपः सप्तमर्क्षे भवति सवितृभात्पंचमे विद्युदुक्ता शूलं चैवाष्टसंख्ये शनिरिति दशमे केतुरष्टादशे तु । दंडस्त्रिपंचसंख्ये स नव दशमिते नूनमुल्काप्रदिष्टा धिष्ण्ये द्विःसप्तसंख्ये मुनिभिरभिहिताश्चात्र निर्घातपातः ॥ ८३ ॥ भादेकविंशतिमिताः कथितास्तु मोहानिर्घातकंपकुलिशाः परिवेषयुक्ताः । एष्विन्दुगेषु न शुभं खलु कर्म कार्यं सिद्धिं प्रयांति दहनानि विषातिशाठ्यम् ॥ ८४ ॥ भूकंपः सूर्यभात्सप्तमर्क्षं विधुं तु पंचमे । शूलोष्टमे च नवमे शनिरष्टादशे ततः ॥ ८५ ॥ केतुः पंचदशे दण्डं चोल्का एकोनविंशतिः । निर्घातः पातसंज्ञं च ज्ञेयः स नवपंचमे ॥ ८६ ॥ मोहनिर्घातकंपाश्च कुलिशं परिवेषकम् । विज्ञेयाश्चैकविंशाख्यादारभ्य च यथाक्रमम् ॥ ८७ ॥ चन्द्रयुक्ते शुभेष्वेषु शुभ कर्म कारयेत् ॥ ८८ ॥ विवाहपटले-सूर्यभात्पंचमे ऋक्षं ज्ञेयं विद्युन्मुखाभिधम् । शूलं चाष्टमगं प्रोक्तं सन्निपातं चतुर्दशम् ॥ ८९ ॥ केतुरष्टादशं प्रोक्तमुल्का चैकोनविंशतिः । द्वाविंशतिर्भूमिकंपस्त्रयोविंशति वज्रकम् ॥ ९० ॥ निर्घातस्तु चतुर्विंशे उल्का चाष्ट उपग्रहाः । विद्युत्पुत्रविनाशं च शूलं निर्दहते पतिम् ॥ ९१ ॥ सप्तमे दृश्यदिने शनिपातं पत्युर्विनाशं सदेवरे केतुः । द्रव्यविनाशं चोल्का परपुरुषरतं करोति वज्राख्या ॥ ९२ ॥ कंपस्थानविनाशं न कुलसंहारा च निर्घाते ॥ ९३ ॥ फलप्रदीपे-विद्युत्पुत्रविनाशिनी विधवता शूलेशनिर्बंधुहा निर्घातेपि च कंपते च नितरां कंपे च केतौ क्षतिः । वज्रे वा परिवेषकेन्यनिरता निर्घातपाते मृतिर्दंडोक्ता विभवोद्धिधननी चैवं फलं संस्मृतम् ॥ ९४ ॥ उपग्रहहतं धिष्ण्यं दंपत्योरेकनाशनम् ॥ ९५

चण्डेश्वरः—लाते दरिद्री बहुदुःखपाते वेधे च वंध्यायुति पुंश्चली च । यामित्रदोषे अनपत्यता च पाणिग्रहे पंच महांतदोषः ॥ ९६ ॥ अथास्य परिहारः । गर्गः— पूर्वाह्णे ग्रहदोषः स्यादपराह्णे तु मोहजः । उल्कायामर्धरात्रे तु कंपोहोरात्रदूषकः॥ ९७ ॥ कंपोल्का दंडमोहानां स्वरमासदशर्तवः । आदितो घटिकास्तेषु वर्जनीयाः परे शुभाः ॥ ९८ ॥ कश्यपः—बाह्लिके कुरुदेशे च वर्जयेद्भमुपग्रहम् ॥ ९९ ॥ अथ बाणविचारः । मार्तंडः—रविभुक्तांशकान्नन्दैर्भजेच्छेषं तु पंचकम् । वसुनेत्राषड्ढ चन्द्रैर्विवाहे पंचकं त्यजेत् ॥ १०० ॥ रोगाग्निनृपचौरं च मृत्युदं लग्नपंचकम् ॥ १ ॥ फलप्रदीपे—गततिथियुतलग्नं पंचधा कर्मभूमौ तिथि रविदशनागांभोधिभिर्युक्क्रमेण । नवहृत इषुशेषे शोभने वर्जनीयः रुगनलनृपचौरं मृत्युदं पंचकं स्यात् ॥ २ ॥ विवाहप्रदीपे—धार्या तिथिः सूर्यदशोष्टवेदाः संक्रांतितो भुक्तदिनैश्च युक्ताः । ग्रहैर्विभक्ता यदि पंचकं स्याद्रोगादिवह्निर्नृपचौरमृत्युः ॥ ३ ॥ रवौ रोगं कुजे वह्निः शनौ च नृपपंचगम् । वर्ज्यं पुनः कुजे चौरं बुधवारे च मृत्युदम् ॥ ४ ॥ रोगं चौरं त्यजेद्रात्रौ दिवा राजाग्निपंचकम् । उभयोः संध्ययोर्मृत्युरल्पकालेन निंदितम् ॥ ५ ॥ रोगं मृत्युं सदा त्याज्यं संध्ययोर्वह्निकं जनैः । तत्रापि यत्र लब्धं चेद्बलाढ्यं तत्र निष्फलम् ॥ ६ ॥ नृपाख्यं नृपसेवायां गृहगोपाग्निपंचकम् । याने चौरं व्रते रोगं त्यजेन्मृत्युं करग्रहे ॥ ७ ॥ गृहगोपेग्निकं त्याज्यं विवाहे मृत्युपंचकम् । नृपसेवा व्रते याने नृपचौरहरं क्रमात् ॥ ८ ॥ वास्तुराजवल्लभे—व्रतोद्वाहे गमे सेव्यां गृहस्याच्छादनेपि च । रोगं मृत्युहरं राज्यमग्निबाणं यथाक्रमम् ॥ ९ ॥ यात्रायां चौरबाणं तु व्रते रोगं त्यजेद्बुधः । विवाहे मृत्युबाणं च नृपाख्यं नृपसेवया ॥ १० ॥ गृहस्याच्छादने वह्निं वर्जयेत्सर्वदा बुधः ॥ ११ ॥ निबंधसारे—ये गत्वा दिनसंक्रांतौ लग्नमात्रेण संयुतम् । नवभिश्च हरेद्भागं शेष पंचक उच्यते ॥ १२ ॥ एके मृत्युर्द्वये वह्निश्चतुर्थे नृपपंचकम् । षष्ठे चौराष्टमे रोगं पंचाद्रिनवमे शुभम् ॥ १३ ॥ नार्कीवारे यदि रोगपंचकं सोमेषु राज्यं क्षितिजे च वह्निः । बुधेषु मृत्युः सुरमंत्रिचौरे नाशोभनं अन्यदिने शुभश्च ॥ १४ ॥ लत्तां हंति रविस्तथार्कतनयः पातं कुजो वेधजं यामित्रं च सुखोदितं भृगुसुतो युक्तस्तथोपग्रहान् । राहुश्चार्गलकं निहंति च बुधो दग्धं तथा पचकं सोमं पापभवं च कालकुलिका रेखाप्रदः सर्वदा ॥ १५ ॥ अपवादः । सौराष्ट्रशाल्वदेशेषु लातितं च विवर्जयेत् । कलिंगवङ्गदेशेषु पातितं भमुपग्रहम् । वाह्लिके कुरुदेशे वा अन्यदेशे न दूषणम् ॥१६॥ लत्ता मागधमंडले प्रियतमे पातं तथा कोशले गौरी सुन्दरि पाणिपीडनविधौ चैकार्गलं वर्जितम् । सर्वत्रापि विनाशनं प्रकुरुते धीराश्च वेधो बली यामित्रं किल मध्यदेशविषये कुब्जे युतिर्दोषकः ॥ १७ ॥ अथ विवाहे वज्रपंचकम् । तिथिवारं च नक्षत्रं नवभिश्च समन्वितम् । सप्तभिस्तु हरेद्भागं शेषांके फलमादिशेत् ॥ १८ ॥ त्रिशेषे तु जलं विंद्यात्

पंचशेषे प्रभंजनः । सप्तशेषे वज्रपातो ज्ञेय वज्रस्य लक्षणम् ॥ १९ ॥ अन्यः– सूर्यात्पंचदशं ऋक्षं अष्टादशं च राहुणा । त्रयोविंशति केतुश्च चतुर्विंशति भूसुतः ॥९२०॥ पंचविंशतिमंदश्च विवाहे वज्रपंचकम् ॥ २१ ॥ अस्य फलम् । व्याधिः सूर्ये ग्निराहौ च केतौ नृपभयं तथा । भौमे चौरभयं विंद्यान्मरणं च शनैश्चरे ॥ २२ ॥ निबंधे–यद्दिने पाणिग्रहणीया तिथिवारसमन्वितः । गृहं च योजयेत्प्राप्ते मुनिभि- र्भोगमाहरेत् ॥ २३ ॥ जले त्रीणि पंचमे वायु शून्ये मृत्युसमाचरेत् । शेषाश्च शुभदाः प्रोक्ता उक्ताश्च पूर्वसूरिभिः ॥ २४ ॥ अथ दंपत्योः पृथक् पंचकभावः । निबंधे–दंपत्योर्नामनक्षत्रं तत्रादौ गुणितं क्रमात् । नक्षत्रैक विवाहैकं दिनयुक्तं प्रक- ल्पयत् ॥ २५ ॥ गुणितं पंच बाणादौ कन्या कन्यावरं वरम् ॥ २६ ॥ स्वनामऋक्षं दिनऋक्षकं च संक्रांतिमादौ दिनयोजिता च । शरैर्विमिश्रं नवभिश्च भागं वरं वा पश्यति कन्यका च ॥ २७ ॥ अथोदयास्तशुद्धिः । वसिष्ठः–इष्टोदयांशे निजपत्य- दृष्टवरस्य मृत्युस्तदसंयुते च । अस्तांशकेप्येवमदृष्टयुक्ते स्वस्वामिना नाशमुपैति कन्या ॥ २८ ॥ नारदः–लग्नलग्नांशकौ स्वस्वपतिना वीक्षितौ युतौ । न चेद्वान्यो- न्यपतिना शुभमित्रेण वा तथा ॥ २९ ॥ वरस्य मृत्युः स्यात्ताभ्यां सप्तसप्तोदयां- शकौ । एवं तौ वीक्षितयुतौ मृत्युर्वध्वाः करग्रहे ॥ ९३० ॥ वराहः–शुद्धिस्त्विह स्यान्न यदोदयांशो लग्ने नवांशांशमुपैति शुद्धिः । तया सुहृत्सौम्यनिरीक्षितो यः शुभाय स स्यात्प्रवदंति संतः ॥ ३१ ॥ कश्यपः–राश्यंशौ मित्रसौम्येन वीक्षितौ वाप्यसं- युतौ । उदयास्तांशयोः शुद्धिस्त्रिविधा मंगलप्रदा ॥ ३२ ॥ श्रीपतिः–उदयगत- नवांशः स्वेशदृष्टो युतो वा न भवति यदि मृत्युः स्यात्तदानीं वरस्य । परिणयस- मये चैवमस्तोदयांशः स्वपतिसहितदृष्टा मृत्युकारी च वध्वा ॥ ३३ ॥ लल्लः–लग्ना- धिमित्रलग्नं पश्यति चेत्तदा तदंशको दृष्टः । तस्यांशकस्य पत्या यत्र क्वचित्त स्थितेनापि ॥ ३४ ॥ अथ सूर्यसंक्रमणाख्यदोषः । शौनकः–अयनद्वये समूढा भर्तारं नाभिनंदते नारी । विषुवद्द्वयेपि विधवा षडशीतिमुखे च सा म्रियते ॥ ३५ ॥ विष्णुपदेषु जीविता कन्या विकलेंद्रिया व्यतीपाते । वैधृतिविष्टयोर्भ्रष्टा सुभगा शेषेषु करणेषु ॥ ३६ ॥ सर्वग्रहाणां संक्रांतिघटीवर्ज्यम् । उक्तं च रामदैवज्ञे- न–देवद्वंकर्तवोष्टाष्टौ नाड्योंका खनृपाः क्रमात् । वर्ज्याः संक्रमणेर्कादेः प्रायोर्कस्याति निंदिता ॥ ३७ ॥ अथपंग्वन्धादिलग्नम् । वसिष्ठः–मेषादे रन्ध्रकं षट्कं चत्वारो बधिराः स्मृताः । द्वौ पंगू चेति विज्ञेयावित्येतद्राशिलक्षणम् ॥ ३८ ॥ मेषो वृषो मृगेंद्रश्च दिवसेंधाः प्रकीर्तिताः । नृयुक्कर्कटकन्याश्च रात्रावंधाः प्रकीर्तिताः ॥ ३९ ॥ तुला च वृश्चिकश्चैव दिवसे बधिरौ तथा । धनुश्च मकरश्चैव बधिरौ निशि कीर्ति- तौ ॥ ९४० ॥ कुंभमीनौ च पंगू द्वौ दिवारात्रौ यथाक्रमम् ॥ ४१ ॥ अथास्य परि- हारः । वसिष्ठः–मासशून्याह्वयास्तारा राशयो बधिरादयः । स्वामिजीवबुधैर्दृष्टा

युक्ता वा नैव दोषदाः ॥ ४२ ॥ कश्यपः—काणपंग्वंधबधिरा मासशून्याश्च राशयः । काणांधा बधिरोद्भूता दग्धलग्नतिथेर्भव ॥ ४३ ॥ ते दोषा नाशमायांति केंद्रसंस्थे शुभग्रहे ॥ ४४ ॥ रामः—अब्दायनर्तुतिथिमासभपक्षदग्धाः तिथ्यंधकाणबधिरांगमुखाश्च दोषाः । नश्यंति विद्गुरुसितेष्विह केंद्रकोणे तद्वच्च पापविधुयुक्तनवांश दोषाः ॥ ४५ ॥ बृहस्पतिः—केंद्रत्रिकोणयोः सौम्यः बलदांश्च स्ववर्गगः । मासशून्यकृतं दोषं राशिशून्यांश्च नाशयेत् ॥ ४६ ॥ अथाष्टमलग्नराशिदोषः । नारदः—दंपत्योरष्टमं लग्नं त्वष्टमो राशिरेव च । यदि लग्नगतः सोपि दंपत्योर्निधनप्रदः ॥ ४७ ॥ स राशिः शुभयुक्तोपि लग्नं वा शुभसंयुतम् । लग्नं विवर्जयेद्यत्नात्तदंशाश्च तदीश्वराः ॥४८॥ पराशरः-संत्यजेन्नैधनं लग्नं दंपत्योर्जन्मलग्नतः । निधनेशश्च यत्रास्ति तं राशिं वर्जयेत्सुधीः ॥ ४९ ॥ जन्मराश्यंशतो वापि जन्मलग्नांशतोपि वा । अष्टमो राशिलग्नांशौ त्याज्यौ शुभफलेप्सुभिः ॥ ९५० ॥ गर्गः—लग्नादि नैधने त्वाज्यं बलयुक्तं यदा भवेत् । बलहीनं च न त्याज्यमुक्तदोषसमर्थतः ॥ ५१ ॥ कश्यपः—दंपत्योरष्टमे लग्ने राशौ वापि तदंशके । तदीशे वा लग्नगते तयोर्मृत्युर्न संशयः ॥ ५२ ॥ केशवः—जननलग्नभयोर्मृतिशाशितुर्मृतिगतस्य च राशिनवांशकाः । तनुगता यदि तत्तनुसेवधूरतिलका तिलकाय जलांजलिः ॥ ५३ ॥ सगुणं चाष्टमं लग्नं त्याज्यमंशं तथाष्टमम् । जन्मभाजन्मलग्नाच्च मृत्युदं लग्नमष्टमम् ॥ ५४ ॥ लग्नाधिनाथश्च नवांशनाथः षष्ठाष्टमश्चाथ विवाहकाले । स्वप्नेपि नो पश्यति चात्मनः सुखं विचर्चितं कज्जलकुंकुमेन ॥ ५५ ॥ फलप्रदीपे—त्यजंति वै नैधनभं तथान्ये तदंशकं चोभयमेव चान्ये । तस्मात्स्वजन्मर्क्षविलग्नयोश्च लग्नांशगौ नैधनगौ विवर्ज्यौ ॥ ५६ ॥ यस्याष्टलग्ने तदधीश्वरे वा राशौ तदीशेथ विलग्नगे वा । स मृत्युमाप्नोति तदा मनोजस्त्रिनेत्रभालांककवह्निनेव ॥ ५७ ॥ केशवः—जन्मोदयर्क्षान्निधनं विलग्नं तदीश्वरेणोपगतोथ वा स्यात् । कृते विवाहोभयमृत्युकारी त्रातुं विधातापि न तं समर्थः ॥५८॥ अनुजनुर्मृतिगो मृतिपश्च यः स तनुगस्तनुते न शिवं क्वचित् । इति विविक्तिरियं फलदा सदा स इह सिद्ध्यति चेत्समयः स्फुटः ॥ ५९ ॥ अथास्य परिहारमाह । कश्यपः—जन्मेशाष्टमलग्नेशौ मिथो मित्रे व्यवस्थितौ । जन्मराश्योष्टमर्क्षोत्थदोषो नश्यति भावतः ॥ ९६० ॥ केशवः—व्यलिवृषं जननर्क्षविलग्नयोर्भवनमष्टममभ्युदितं त्यजेत् । स हि पुलस्त्यमतेन तदीशता तनुसमेति समेति न दूषणम् ॥ ६१ ॥ झषकुलीरवृषालिमृगांगना जननराशिविलग्नगृहाष्टमः । शुभफला भृगुणा कथितास्तयोरधिपतिः सुहृदो हि परस्परम् ॥ ६२ ॥ गुरुः—लग्नादष्टमराशीशः केंद्रगः शुभवीक्षितः । यद्यष्टमगतस्योक्तदोषमाशु व्यपोहति ॥ ६३ ॥ जन्मेशाष्टमराशीशे मिथो मित्रे यदा तदा । अष्टमर्क्षोत्थ संभूतो दोषो नश्यति भावतः ॥ ६४ ॥ जन्मेशमृत्युराशीशौ मिथो मित्रे यदा तदा । जन्माष्टमर्क्षे चन्द्रस्य दोषो भंगत्व-

माव्रजेत् ॥ ६५ ॥ रंध्रेशः स्वशुभांशस्थः तुंगस्वक्षेत्रमित्रगः । अष्टमस्थानदोषो हि
विनश्यति न संशयः ॥ ६६ ॥ अयं निषेधो जन्मेश रंध्रेशो वैरिणो यदा । परस्प
तौ मित्रे चेत्तदा दुष्टफलं न हि ॥ ६७ ॥ रामः—जन्मलग्नभयोर्मृत्युः राशौ नेष्ट
करग्रहः । एकाधिपत्ये राशीशे मैत्रे वा नैव दोषकृत् ॥ ६८ ॥ वसिष्ठः—न दोषोऽष्ट
लग्नस्य यदि जन्मेशरन्ध्रगौ । सुहृदौ चेत्तदा कार्यं मंगलं मुनयो विदुः ॥ ६९ ॥
मुहूर्तदर्पणे—स्वकीयजन्माष्टमराशिमैत्र्यां न चापि जन्माष्टमराशिदोषः । जन्मेश
कर्मेश्वरमित्रभावः क्षिणोति वैनाशिकदोषमुत्थम् ॥ ९७० ॥ अथ चतुर्थद्वादशरा
शिदोषः । कश्यपः—तथैव द्वादशे लग्ने तदंशे वा तदीश्वरे । विवाहलग्नगे नैव
नित्यं स्यात्कलहंद्वयोः ॥ ७१ ॥ नारदेनापि—दंपत्योर्द्वादशं लग्नं राशिर्वा यदि लग्नगः
अर्थहानिर्भवेत्तस्मात्तदंशस्वामिनं त्यजेत् ॥ ७२ ॥ लल्लः—दंपत्योर्द्वादशभे लग्नं ने
तथाष्टमे च गृहे । लग्नेंद्वोः स्थानाभ्यां धनापहं जीवितं क्षयकृत् ॥ ७३ ॥ केशवः
सुखग्रहं सुखहृत्तनुजन्मनोरबलता सबलैः सुखकर्तृभिः । अपि तयोर्व्ययभं व्ययभं भ
द्विगत बाधनकां धनकारिणः ॥ ७४ ॥ सुखघ्नं तुर्यमुद्वाहे द्वादशं वित्तनाशकृत् । चतु
सगुणं देयं द्वादशं च गुणाधिकम् ॥ ७५ ॥ गुरुः—चतुर्थं द्वादशं लग्नं शस्तं या
गुणान्वितम् । अष्टमं तु न कर्तव्यं यदि सर्वगुणान्वितम् ॥ ७६ ॥ ॥ अथ ग्रहाण
भावफलम् । शौनकः—लग्नस्थेऽर्के विधवा संवत्सरेऽष्टमे भवति । विपुलकनका
युक्ता षष्ठेऽब्दे निर्धना धनगे ॥ ७७ ॥ बंधुजनेभ्यः पूजां त्रिंशद्वर्षाणि सहजे त्वर्के
बंधुवियुक्ता कन्या यावज्जीवं हिबुकसंस्थे ॥ ७८ ॥ पंचमसंस्थे च रवौ त्रयोदशेऽब्
त्वपत्यसंयोगः । प्राप्नोति धन षष्ठे अब्दादूर्ध्वं सुताश्चैव ॥ ७९ ॥ संवत्सरेण विध
सप्तमराशौ दिवाकरः कुरुते । दंपत्योः सहमरणं निधनेऽर्केऽब्दसप्तत्यात् ॥ ९८० ॥
नवमे त्वधर्मयुक्ता त्रयोदशाब्दानि कन्यका भवति । यावज्जीववि कन्या दशमस्थे
विकर्मकरी ॥ ८१ ॥ आवृत्योर्धनयुक्ता त्र्यब्दादूर्ध्वं तथायगः सविता । संवत
व्यतीते वामांगरुजा व्ययस्थेऽर्के ॥ ८२ ॥ लग्नस्थो हिमरश्मिर्मृत्युं कुर्यात्त्रयोद
मासे । अब्दाद्धनसौभाग्यं करोति चन्द्रो धने नार्याः ॥ ८३ ॥ चन्द्रस्तृतीयरा
सौभाग्यकरस्तु यावदायुष्यम् । बंधुश्वशुरवियुक्तां चतुर्थसंस्थः शशी त्वब्दात् ॥ ८४
अब्दादेकं तनयं ततः परं न प्रसूयते सुतगे । अब्दचतुष्कान्मृत्युर्दंपत्योः पा
चन्द्रे ॥ ८५ ॥ कन्यास्तिस्रो जनयति सापत्न्यं चैव सप्तमे शशिनि । मासत्रये
विधवां निधनस्थश्चन्द्रमां कुरुतेः ॥ ८६ ॥ जनयति षट् पुत्रान्नवमस्थे शशी
सप्तमं पुत्रम् । भुक्त्वा द्वादश चाब्दान् दशमसंस्थे त्यजति कन्याम् ॥ ८७
लग्नादेकादशगः कन्यामिंदुर्धनागमं कुरुते । उद्धृत्य खादति धनं चन्द्रे व्य
संस्थितेत वर्षात् ॥ ८८ ॥ भौमे सद्यो विधवां लग्नस्थोऽब्देन सौम्यदृग्योगात् । दश
म्रादग्निभय द्वितीयमब्दान्नृपभयं च ॥ ८९ ॥ सहजस्थो भूमिसुतः सौभाग्यकर

यावदायुष्यम्। बंधुजनवियोगं हिबुकस्थेंगारकोब्देन ॥ ९९० ॥ भौमः पंचमराशौ व्ययस्थितं पुत्रवर्जितां कुरुते। संवत्सरेण विपुलं धनागमं शत्रुसंस्थश्च ॥ ९१ ॥ यामित्रगतः कन्यामुपजातकभगिनीं कुजेब्देन। भौमस्त्रयोदशाब्दान् निधनस्थः पुत्रवर्जितां कुरुते ॥ ९२ ॥ अब्दात्प्रतिविभ्रष्टां नवमस्थोंगारकः पराभिरताम्। सा कन्या मतियुक्ता दशमस्थः पंचमे वर्षे ॥ ९३ ॥ मणिकांचनरत्नाढ्यामेकादशगः कुजेब्दषट्केन। हंति मासत्रितयात्करोति महतो व्यये भौमः ॥ ९४ ॥ लग्नस्थः शशितनयः सौभाग्यसुखप्रदात्यचिरात्। पश्यति सुतानाति सुतान् द्वितीयसंस्थितेन चान्द्रेण ॥ ९५ ॥ पत्युः सहोदराणां सहजस्थोपि प्रियां बुधः कुरुते। तुर्यस्थे शुभदो ददाति बोधो पंचमे शुभदोपि सदा ॥ ९६ ॥ षष्ठः षाड्भिर्मासैरसपत्नीं कन्यका कुरुते ॥ ९७ ॥ सप्तमगः सप्ताब्दान्भर्तापरी भजति यथा कन्याम्। मासत्रयेण कन्यां निधनस्थो याति पंचत्वम् ॥ ९८ ॥ एकादशभिर्वर्षैर्नवमस्थस्तपासि संस्थिता कुरुते। कन्या समुद्धतकुहकां दशमस्थो वर्षे विंशत्या ॥ ९९ ॥ साध्वी सौभाग्यवती बहुप्रजामायगः करोति बुधः। व्ययगृहगतः स एव कन्या प्रवर्ज्यतां द्वादशे वर्षे ॥ १००० ॥ लग्नस्थे देवगुरौ मनोरमां सुप्रजां प्रियां पत्युः। धनगे गुरौ धनाढ्यां मृतेप्यनुयाति भर्तारम् ॥ १ ॥ बंधुश्वशुरकुलाभ्यां धनहानिकरस्तृतीयगो मासात्। बंधुजनस्य पुंसां कन्यामब्देन हिबुकस्थः ॥ २ ॥ जनयत्यष्टौ पुत्रान्पंचमराशौ व्ययस्थिते जीवे। उभयकुलानंदकरी करोति न चिराद्गुरुः षष्ठः ॥ ३ ॥ शीलचरित्रोपेतां करोति पत्युः कलत्रगो द्वेष्यम्। दंपत्योर्निधनस्थः सप्ताब्दाद्वियोगकरः ॥ ४ ॥ पितृदेवार्चनरतामत्यन्त पतिप्रियां गुरुर्नवमे। दशमे गुरौ कलाज्ञां योगैः संपन्मंगलानां च ॥ ५ ॥ श्वशुरपतिसहोदराणामतिप्रियामायगो गुरुः कुरुते। शौचाचारभ्रष्टमधर्मयुक्तां गुरुर्व्ययगः ॥ ६ ॥ लग्नस्थेनोशनसा दुर्लभमाप्नोति चैव पत्नीत्वम्। मान्या धनगे शुक्रे कृपणत्वं प्राप्नुयान्नारी ॥ ७ ॥ दुश्चिक्यगते कन्यां त्र्यब्दाद्भर्तुः कनीयसा भजते। हिबुकस्थेब्दचतुष्काद्बांधवगोत्रार्थलाभकारी ॥ ८ ॥ बहुपुत्रा नाल्पधनां पचमगो भार्गवः करोत्यलसाम्। दंपत्योर्वैरकरः षष्ठस्तु भवेत्त्रिभिर्वर्षैः ॥ ९ ॥ यामित्रगतो वेश्यां त्र्यब्दादतिदुर्भगां करोति भृगुपुत्रः। पंचत्वं नयति भृगुर्निधनस्थः सप्तभिर्वर्षैः ॥ १० ॥ नवमस्थः षण्मासात्सौभाग्यसुखप्रदो भवत्युशनसा। वर्षद्वयेन दशमगः कुलसुतधनभोगवृद्धिकरः ॥ ११ ॥ आयगतो दशरात्रात्सौभाग्यसुखप्रदो विनिर्दिष्टः। व्ययगः स एव दृष्टः सौभाग्यसुतार्थधनहरः ॥ १२ ॥ कामयति नीचवर्णां लग्नस्थे रविसुते बहून्पुरुषान्। धनगे धनैर्वियुक्तां पंचभिरब्दैर्विवर्णतनुः ॥ १३ ॥ धनधान्यापत्यपशून्पंचमसंवत्सरात्तृतीयस्थः। अल्पपयस्वी कन्यप्रसवान्म्रियेत हिबुकसंस्थः ॥ १४ ॥ एकादशभिरब्दैस्त्रिकोणगोर्किः करोति हृद्रोगम्। षष्ठः षाड्भिर्मासैरसपत्नीकन्यकां कुरुते ॥ १५ ॥

सप्तमग कन्यायां पतंति गर्भात्वमेकशोर्केसुते । निधनगतोर्किः कुयादामरणादामय-
वियुक्ता ॥ १६ ॥ उपवासव्रतनियमैर्विवर्जितानां नवगः करोति शनिः । पापां
कर्मणि दशमे षष्ठेब्दे कन्यकां धनैर्युक्ताम् ॥ १७ ॥ आयगतोर्किः कन्यां त्रिवर्गयोग्यां
करोति षण्मासात् । सोमकुलेपि हि जातां द्वादशे मद्यपां कुरुते ॥ १८ ॥ शनिवद्वि-
धुंतुदस्य ज्ञेयं सदसदतिफलम् । पश्योद्वाहविलग्नाच्छुभाशुभं कन्यकासु निर्देश्यम् ॥
॥ १९ ॥ अधिरिपुनीचर्क्षगताभावफलं घ्नंति शत्रुसंदृष्टाः । कालादि बलसंमृद्धास्तदेव
संवर्धयंत्याशु ॥ २० ॥ पंचभिरिष्टैरिष्टं पुष्टमनिष्टैरनिष्टमादेश्यम् । स्थानादिबलसमृद्धि-
श्चतुर्भिरथवोच्यते यवनैः ॥ २१ ॥ अथांशशुद्धिः । भुंक्ते पुरुषत्रितयं पाणि-
ग्रहणे क्रियांशके कन्या । कामयते वृषभे गौरिव कामातुरा भर्त्रनुजान् ॥ २२ ॥ स्वकु-
लद्वयवृद्धिकरी विवाहिता स्यात्तृतीयांशे । अब्देन त्यक्त्वा पतिं विचरति कुलीरगेऽन्य-
देशस्तु ॥ २३ ॥ अथ नंदादियोगाः । विवाहपटले वराहः—नन्दो जीवो जीमूतः
स्थावरो जयो विजयः । व्यालो रसातलमुखः क्षयस्तथोंत्यो विवाहगणः ॥ २४ ॥
सौम्ये लग्ने नन्दः शुक्रे भद्रास्तथा गुरौ जीवः । आद्यंतौ जीमूतस्थावर इति मध्यमां-
त्याभ्याम् ॥ २५ ॥ बुधशुक्राभ्यां तु जयः सर्वैर्विजयो भवत्युदयसंस्थैः । दिनकर-
योगाद्यालो भौमेन रसातलः क्षयः शनिना ॥ २६ ॥ तमसा तमीभिर्युक्तो भवति हि
केतौ कृतांतश्च ॥ २७ ॥ चकारादन्यसंज्ञोपि । अथैषां फलानि । त्रिषु नंदात्रिषु
राज्ञो चतुर्षु वा ततः परम् । महादेवी व्यालयेषु पंचसु विधवा शोच्या दरिद्रा च ॥
॥२८॥ अथ रेखादातृग्रहाः । रामः—त्र्यायाष्टषट्सु यारविकेतुतमोर्कपुत्रान्या रिगः
क्षितिसुतो द्विगुणायगोब्जः । सप्तव्ययाष्टरहितौ ज्ञगुरू सितोष्ट त्रिद्यूनषट्व्ययगृहान्परि-
हृत्य शस्तः ॥ २९ ॥ अन्यच्च—विधानारित्रिलाभस्था अर्कार्किशिखिराहवः । लाभात्रि-
शत्रुगो भौमो द्वित्रिलाभगतः शशी ॥ ३० ॥ द्यूनाष्टांत्यं विना सौम्यो सप्ताष्टांत्यं
विना गुरुः । अस्ताष्टारिव्ययं हित्वा शुक्रो रेखाप्रदः शुभः ॥ ३१ ॥ अथ लग्नविं-
शोपकाः । वराहः—रवौ सार्द्धत्रयो भागाश्चन्द्रे पंचगुणैस्त्रयः । द्वौ शुक्रे द्वौ बुधे चै
प्रोक्ता ह्येते विंशोपकाः ॥ ३२ ॥ मंदे भौमे तथा राहौ सार्द्धं प्रत्येकमुच्यते । बलार्कैः
बलवशादेवं विज्ञातव्या विंशोपकाः ॥ ३३ ॥ अथ कर्तरियोगलक्षणम् । वसिष्ठः—
लग्नस्य पृष्ठाग्रगयोरसाध्वी सा कर्तरी स्यादृजुवक्रगत्योः । तावेव शीघ्रौ यदि वक्रचारौ
न कर्तरी चेति पितामहोक्तिः ॥ ३४ ॥ ज्योतिःसागरे—पापमध्यगते चन्द्रे पापसंसर्ग-
गेपि वा । शुभकर्म न कर्तव्यं तथा लग्ने कदाचन ॥ ३९ ॥ व्यये मार्गगतिः क्रूरो
वक्री क्रूरो धने यदि । तौ च लग्नांशतुल्यौ चेत्तदा घोराख्यकर्तरी ॥ ३६ ॥ महाविघ्नप्रदा
ज्ञेया विवर्ज्याः शुभकर्मसु । क्रूरयोः कर्तरी नेष्टा महाविघ्नप्रदा ध्रुवम् ॥ ३७ ॥ सौम्ययो-
शुभदा ज्ञेया मध्यमा पापसौम्ययोः ॥ ३८ ॥ वसिष्ठः—कर्तरीदूषिते लग्ने चन्द्रे वा
षडष्टग । यातुर्भंगप्रदा यात्रा लग्ने बहुगुणान्विते ॥ १०३९ ॥ रामदैवज्ञः—लग्नात्पापा-

वृजुनृजुव्ययार्थस्थौ यदा तदा । कर्तरी नाम सा ज्ञेया दुःखदारिद्र्यशोकदा ॥ ४० ॥ गुरुः–वक्रो चारो यदा पापो द्वितीये द्वादशे स्थितः । तदा कर्तरियोगः स्यान्महादोषो विलग्नतः ॥ ४१ ॥ क्रूरमध्यगतं लग्नं चन्द्रं च वर्जयेन्मतिमान् । परिणयने वनितानां शतगुणामपि मृत्यवे पुंसाम् ॥ ४२ ॥ नारदः–कर्तरीदोषपुष्टं यल्लग्नं तत्परिवर्जयेत् । अपि सौम्यग्रहैर्युक्तं गुणैः सर्वैः समन्वितम् ॥ ४३ ॥ अथास्यभंगः । कश्यपः–पापयोः कर्तरीकर्त्रोः शत्रुनीचग्रहस्थयोः । यदा चास्तगयोर्वापि कर्तरी नैव दोषदा ॥ ४४ ॥ गर्गः–क्रूरकर्तरिसंयुक्तं लग्नं चन्द्रं च न त्यजेत् । केंद्रत्रिकोणसंस्थश्चेद्गुरु भार्गववित्सु च ॥ ४५ ॥ अन्यच्च–त्रिकोणकेंद्रगे गुरौ त्रिलाभगे रविर्यदा । तदा न कर्तरी भवेद्गस्त्यबादरायणाः ॥ ४६ ॥ कश्यपः–चन्द्रस्य कर्तरी तत्स्याच्छुभदृष्ट्या न दोषदा ॥ ४७ ॥ क्रूरद्वयस्यांतरगो विलग्ने मृतिप्रदं चन्द्रमसं च रोगदम् । शुभैर्धनस्थैरथवांत्यगे गुरौ न कर्तरी स्यादिति भार्गवोब्रवीत् ॥ ४८ ॥ नहि कर्तरि यो दोषो सौम्ययोर्यदि जायते । शुभग्रहयुतं लग्नं क्रूरयोर्नास्ति कर्तरी ॥ ४९ ॥

अथ ग्रहाणां जन्मर्क्षदोषः । विवाहपटले–ग्रहाणां जन्मऋक्षेषु विवाहं नैव कारयेत् । विवाहेषु च वैधव्यं प्रस्थाने मरणं ध्रुवम् ॥ ५० ॥ विद्यारंभे च मूर्खत्वं कृषिवाणिज्यनिष्फलम् । भरणी भानुना चैव सोमे चित्रा तथैव च ॥ ५१ ॥ कुजे च उत्तराषाढा धनिष्ठा चन्द्रजा शुभा । गुरौ चोत्तरफल्गुन्योः शुक्रे ज्येष्ठा प्रकीर्तिताः ॥ ५२ ॥ रेवती सूर्यपुत्रेण जन्म ऋक्षाणि वर्जयेत् ॥ ५३ ॥ अकालजाश्च नीहारविद्युत्पाताभ्रसंभवाः । परिवेषः प्रतिसूर्यशक्रचापध्वजादयः ॥ ५४ ॥ दोषप्रदा मंगलेषु कालजाश्चेन्न दोषदाः ॥ ५५ ॥ अथ मर्मादिवेधः । विवाहपटले–मर्मकंटकवेधं च शल्यं छिद्रं यो न जानाति । नार्हति विवाहदीक्षालग्नं दातुं स दैवज्ञः ॥ ५६ ॥ क्रूरैस्तनुगैर्मर्म पंचमनवमैश्च कंटकौ भवति । दशम चतुर्थे शल्यं यामित्रं भवति ते छिद्रम् ॥ ५७ ॥ मर्मणि वेधे मरणं कंटकवेधे कुलक्षयं भवति । शल्यं नृपतेः शत्रुयामित्रं पुत्रनाशयति ॥ ५८ ॥ अथ ग्रहवशाच्छ्वशुरादि विचारः । शौनकः–श्वशुरोर्कः सितः श्वश्रूः स्त्रीणामस्तपतिः पतिः । एभिरुच्चोपगैरेषां शुभं नीचादिगैरसत् ॥ ५९ ॥ विवाहपटले–शिरः सूर्यः शशिगात्रः गुरुर्जीवो त्वचा भृगुः । भौमेस्थीनि समं प्रोक्तं लग्नात्पंच प्रशस्यते ॥ ६० ॥ शिरो विहीना पतिना निहंति गात्रैर्विहीना भय रोगपीडा । तेजोविहीना मरणं उभौ च त्वचा विहीना मरणं प्रजासु ॥ ६१ ॥ अस्थ्ना विहीना भवतीह वंध्या तं लग्नमेव परिवर्जनीया ॥ ६२ ॥ शार्ङ्गीये–सूर्यो पतिः स्त्री च विधोस्तथाराद्वित्तं सुतो ज्ञाच्च सुखं गुरोस्तु । धर्मः सितादर्कसुताच्च वेश्म ब्रूयात्समुद्वाहविधौ स्वयुक्त्या ॥ ६३ ॥ एतैर्नीचास्थितैः शत्रुगतैर्वैवाहिकं न सत् । स्वगृहोच्च त्रिकोणस्थैः शुभमेषां यथोदितम् ॥ ६४ ॥ अथ लग्नभंगदग्रहाः । रामः–व्यये शनिः खेवनिजस्तृतीये भृगुस्तनौ चन्द्रखला न शस्ताः । लग्नेद्क्रवि-

ग्लैश्च रिपौ मृतोग्लालेन्द्रेऽशुभाराश्च मदे च सर्वे ॥ ६५ ॥ नारदः—कुजाष्टमो महान्‌-
दोषो लग्नादष्टमगे कुजे । शुभत्रययुतं लग्नं त्यजेत तुंगगे यदि ॥ ६६ ॥ त्रिविक्रमः—
त्याज्या लग्नेऽब्धयो मंदा षष्ठे शुक्रेंदुलग्नपाः । रन्ध्रे चन्द्रादयः पंच सर्वस्तेऽजगुरुः
समौ ॥ ६७ ॥ अथ भंगदग्रहाणामपवादमाह । नीचराशिगते शुक्रे शत्रुक्षेत्र-
गतोपि वा । भृगुषट्कस्थितो दोषो नास्ति तत्र न संशयः ॥ ६८ ॥ अस्तगे नीचगे
भौमे शत्रुक्षेत्रगतोपि वा । कुजाष्टमोद्भवो दोषो न किंचिदपि विद्यते ॥ ६९ ॥ नीचरा-
शिगते चन्द्रे नीचांशकगतेपि वा । चन्द्रेषष्ठाष्टरिःफस्थे दोषो नास्ति न संशयः ॥७०॥
कश्यपः—नीचगे तु तुरीये वा शत्रुक्षेत्रगतेपि वा । भृगुषष्ठोद्भवो दोषो नास्तीत्यत्र न
संशयः ॥ ७१ ॥ गुरुः स्वकीयवर्गस्थो बलवान्कंटकाश्रितः । पश्यन्‌ सग्रहशी-
तांशुं तद्दोषं विलयं नयेत्‌ ॥ ७२ ॥ शत्रुनीचर्क्षगो शुक्रो न दोषोऽर्यरिसंस्थितः ।
नाशुभश्चाष्टमो भौमः शत्रुनीचास्तगः यदि ॥ ७३ ॥ नीचो नीचांशगश्चन्द्रो नाशुभो-
ष्टारिरिःफगः । लग्नं बली गुरुः शुक्रश्चंद्रो वा शुभवर्गगः ॥ ७४ ॥ शुभदृष्टे निहंत्येव
दोषं रिःफारिचन्द्रजः ॥ ७५ ॥ अथ विवाहे अब्दाद्यनेकदोषाणामपवा-
दमाह । कश्यपः—अब्दायनर्तुमासोत्थाः पक्षातिथ्यर्क्षसंभवाः । ते सर्वे नाशमा-
यांति केंद्रसंस्थे शुभग्रहे ॥ ७६ ॥ गुरुः—त्रिकोणकंटके वापि शुभस्तिष्ठेद्बलान्वितः ।
यमकंटकदोषोपि नात्र स्याच्चन्द्रलग्नयोः ॥ ७७ ॥ शुभकर्मरते चन्द्रे शुभांशे शुभ-
वीक्षिते । यमकंटकसंभूते दोषो नैवात्र विद्यते ॥ ७८ ॥ अन्यः—गुरुरेकोपि केंद्रस्थः
शुक्रो वा यदि वा बुधः । हरेः स्मृतिर्यथा हंति तद्वद्दोषा न कालजाः ॥ ७९ ॥ लत्तो-
पग्रहचण्डीशचन्द्रयामित्रसंभवाः । तत्केंद्रगो गुरुर्हंति सुपर्णः पन्नगानिव ॥ ८० ॥
संहिताप्रदीपे—सचन्द्रराशेरशुभो नवांशः प्रोक्तः सपापोपि विलग्नसंस्थः । त्रिकोणकें-
द्रेषु गुरुः सितोपि यदा तदासावशुभोपि शस्तः ॥ ८१ ॥ नारदः—उक्तानुक्ताश्च ये
दोषास्तान्निहंति बली गुरुः । केंद्रसंस्थस्थितो वापि पन्नगान्‌ गरुडो यथा ॥ ८२ ॥
कश्यपः—काव्ये गुरौ वा सौम्यो वा यदा केंद्रात्रिकोणगे । नाशं यंत्यखिला दोषाः
पापानिव हरिस्मृतिः ॥ ८३ ॥ वसिष्ठः—ये लग्नदोषाः कुनवांशदोषाः पापैः कृता दृष्टि-
निपातदोषाः । लग्ने गुरुस्तान्विमलीकरोति फलं यथांभः कतकद्रुमस्य ॥ ८४ ॥
पापोपि लग्नाधिपतित्रिषष्ठलाभस्थितः स्थानबलाधिकश्च । लग्नोत्थदोषान्निखिलान्निहं-
ति पापानि यद्वत्परमाक्षरज्ञः ॥ ८५ ॥ तथाच—यत्रैकादशगे सूर्ये दोषा नाशं ययुस्त-
दा । स्मरणादेव रुद्रस्य पापं जन्मशतोद्भवम्‌ ॥ ८६ ॥ कश्यपः—वर्गोत्तमगते लग्ने वर्गे
दोषालयं ययुः । चन्द्रे चोपचये वापि ग्रीष्मे कुसरितो यथा ॥ ८७ ॥ मुहूर्तलग्नषड्वर्ग-
कुनवांशग्रहोद्भवाः । ये दोषास्तान्निहंत्येव यत्रैकादशगः शशी ॥ ८८ ॥ लग्नाद्दुःस्था-
नगे व्योमचरोत्थं दोषसंचयम्‌ । शुभः केंद्रगतो हंति दावाग्निर्विपिनं यथा ॥ ८९ ॥
नारदः—दोषाणां च शतं हंति बलवान्केंद्रगो बुधः । अपहाय द्युनं शुक्रो द्विगुणं लक्ष-

मंगिराः ॥ ९० ॥ लग्नेट् लग्नांशनाथो वा आयगः केन्द्रगोपि वा । राशिं निहंति दोषाणामिंधनानीव पावकः ॥ ९१ ॥ एकोपि केंद्रगः सौम्यः सकलं दोषसंचयम् । विनाशयति घर्मांशुरुदितं तिमिरं यथा ॥ ९२ ॥ शुभग्रहस्वोच्चसंस्थे लग्नं पश्यति चेद्यदा । तदा दोषाँ लयं यांति ग्रीष्मे कुसरितो यथा ॥ ९३ ॥ एकोपि सौम्यः खचरः त्वाधिमित्र ग्रहस्थितिम् । अलोकयंति ये लग्नं सर्वदोषविनाशकृत् ॥ ९४ ॥ आत्रिः–यस्मिन्विवाहे गुरुशुक्रसौम्याः केन्द्रस्थिताः पुत्रधनास्थिता वा । समस्तदोषान्विनिहंति चन्द्रः शुभं च तस्मिन्धनसंस्थितो वा ॥ ९५ ॥ स्ववर्गेकेंद्रेषु गतेऽमरेज्ये बलेन युक्ते शुभवीक्षिते च । सितेथवा शीतमयूखपुत्रे नश्यंति दोषाः सकला विवाहे ॥ ९६ ॥ रत्नमालायाम्–दोषाणां शतमपि हंति सोमपुत्रः केंद्रस्थो द्युनमपहाय दृश्यमूर्तिः । दैत्येज्ये द्विगुणमिदं पुनर्बलीयानाचार्यः शमयति लक्षमप्यवश्यम् ॥ ९७ ॥ रात्रौ चन्द्रे दिवा सूर्य लग्नमेकादशस्तथा । शतकोटिदुरितं हंति यथा चक्रेण माधवः ॥ ९८ ॥ अर्द्धेप्रहरपूर्वार्द्ध मध्ये तु यमघंटके । कुलिकात्यंघटी त्याज्या शेषेषु शुभमाचरेत् ॥ ९९ ॥ अथ गोधूलिप्रशंसा । भागुरिः–गोपैर्यष्ट्या हतानां खुरपुटदलिता याति धूली दिनाते सोद्वाहे सुंदरीणां विविधधनसुतारोग्यसौभाग्यदात्री । तस्मिन्काले न ऋक्षं न च तिथिकरणं नैव लग्नं न योगाः ख्याताः पुंसां सुखार्थं शमयति दुरितान्युत्थितं गौरजः स्युः ॥ ११०० ॥ लल्लः–लग्नं यदा नास्ति विशुद्धमन्यद्गोधूलिकं साधु तदा वदंति । लग्ने विशुद्धे सति वीर्ययुक्ते गोधूलिकं नैव फलं वदंति ॥ १ ॥ शुभाशुभयुतं सर्वराशेर्दोषं च निंदितम् । विवाहलग्नवच्छेषं गोधूलिं प्राह भागुरिः ॥ २ ॥ किंच–कुलिकं क्रांतिसाम्यं च मूर्तौ षष्ठाष्टमः शशी । पंचगोधूलिके त्याज्या अन्यदोषाः शुभावहाः ॥ ३ ॥ नारदः–प्राच्यानां तु कलिंगानां मुख्यं गोधूलिकं स्मृतम् । गांधर्वादिविवाहेषु वैश्योद्वाहेषु योजयेत् ॥ ४ ॥ घटी लग्नं यदा नास्ति तदा गाधूलिकं शुभम् । शूद्रादीनां शुभं प्राहुर्न द्विजानां कदाचन ॥ ५ ॥ महादोषान्परित्यज्य प्रोक्तधिष्ण्यादिकेषु च । कारयेद्गोरजो यावत्तावल्लग्नं शुभावहम् ॥ ६ ॥ लग्नशुद्धिर्यदा नास्ति कन्या यौवनशालिनी । तदा वै सर्ववर्णानां लग्नं गोधूलिकं शुभम् ॥ ७ ॥ भूपालवल्लभे–विप्रेषु घटिकालाभे दातव्यं गोरजो बुधैः । संकीर्णे गोरजः शस्तं परेषु द्वितयं शुभम् ॥ ८ ॥ केचित्त–यावद्दिनांते दिशि पश्चिमायां पश्येत्तृतीयं रविबिंबभागम् । तस्मात्परं नाडिकयुग्ममेके गोधूलिकालं मुनयः वदंति ॥ ९ ॥ ज्योतिःसंहितासारे–षष्ठाष्टमे मूर्तिगते शशांके गोधूलिके मृत्युमुपैति कन्या । कुजेऽष्टमे मूर्तिगतेथवास्ते वरस्य नाशं प्रवदंति संतः ॥ १० ॥ अन्योपि–षष्ठाष्टमे चंद्रजजीवक्षोणीसुतेऽस्तगे वा भृगुनंदने वा । मूर्तौ च चन्द्रे नियमेन मृत्युर्गोधूलिकं स्यादिह वर्जनीयम् ॥ ११ ॥ अन्यच्च–धिष्णं क्रूरयुतं त्याज्यं मूर्तौ षष्ठाष्टमः शशी ॥ गोरजस्तत्प्रशंसंति संतः शनिदिनं विना ॥ १२ ॥ केशवार्कः–गोधू-

लिकेपि विधुमष्टमषष्ठमूर्तिं यन्मोचयंति तदयं स्वरुचिप्रपंचः । पंचांगशुद्धिमयमेव विवाहधिष्ण्ये यस्मादिदं सततमस्तगते पतंगे ॥ १३ ॥ संहितासारे—यत्रैकादशगश्चन्द्रो द्वितीये वा तृतीयगः । गोधूलिका सविज्ञेया शेषा धूलिरितिः स्मृता ॥ १४ ॥ अन्यच्च—तिथिवारेंदुनक्षत्रं लग्नं तारादयो ग्रहाः । नानिष्टदाः परिणये गोधूलिसमये सति ॥ १५ ॥ राजमार्तंडः—ऋक्षे शुभेपि शशिनि प्रतिकूलभेपि पापेष्वपि क्षितिसुतोपि विलग्नगोपि । गोधूलियोगमपरे परिकीर्तयंति स्त्रीणामपत्यंपतिसौख्यवहं विवाहे ॥ १६॥ अन्योपि—यामित्रं न विचिंतयेद्ग्रहयुतं लग्नं नवांशं तथा नो वेधो न कुवारकं न हिमगो लग्नं च भौमान्वितः । होरायां च नवांशकं न च खगा मूर्त्यादिभावस्थिताः हित्वा वर्जतनूषडाष्टमगते गोधूलिकं शस्यते ॥ १७ ॥ नांशो न लग्नमिह दृष्टयुतं स्वभर्त्रो नार्कारसौरतमसापिच संगभंगः । किंचंद्रचारभयमेकमिहास्तु किंचिन्नात्र प्रमाणवचनं किमपि श्रुतं नः ॥ १८ ॥ सार्के शनौ विरविचित्रचिखंडिसूनौ तत्कवेलं कुलिकयामदलोपलंभात् । प्रायेण शंकरभुवामशुभर्क्षपक्षक्रूरक्षणेषु शुभकृत्करपीडनं स्यात् ॥ १९ ॥ मंदवारे न कर्तव्यं बुधैर्लग्नं निशामुखे । गुरोर्वारे न कर्तव्यं सार्के संध्यासु लग्नकम् ॥२०॥ शनिवारे लग्नं सार्के ग्राह्यं गुरुवारे अस्तमिते रवौ ग्राह्यम् ॥ २१ ॥ उक्तं च—क्षीणं चन्द्रं देवपूज्यार्किवारौ विष्टं क्रूरोपेतभानिष्टयोगात् । संक्रांतिं च प्रोक्तशेषेषु शस्तं सूर्ये चास्ते याति गोधूलिकाख्याम् ॥ २२ ॥ अत्रोभयत्र घटिका दलमिष्टमाहुर्ग्राह्यस्तदंबरमणेरपि सार्द्धबिंबम् । एकार्गलानियतये तपनार्द्धबिंबवेलाव्यवस्थितिरियं रचयांबभूव ॥ २३ ॥ शौनकः—दिनांते सूर्यबिंबार्द्धात्पूर्वमेत्र घटीदलम् । एकार्गला च वेलेयं विवाहे पुत्रपौत्रदम् ॥ २४ ॥ गोधूली त्रिविधा वदंति मुनयो नारीविवाहादिषु हेमंते शिशिरे प्रयाति मृदुतां पिंडीकृते भास्करे । ग्रीष्मे चार्द्धमिते वसंसमये भानौ गते दृश्यतां सूर्ये चास्तमुपागते भगवति प्रावृट् शरत्कालयोः॥ २५ ॥ नास्मिन्ग्रहा न तिथयो न च विष्टिवारा ऋक्षाणि नैव जनयंति कदापि दोषम् अव्याहतः सततमेव विवाहकाले यात्रासु चायमुदितो भृगुजेन दोषः ॥ २६ ॥ यामित्रं न विंचितयेद्ग्रहकृतं लब्धाच्छशांकात्तथा नो वेधं न कुवासरं नहि गतं नेगामिभं पापभैः । नो होरा न नवांशकं नहि खगान्मूर्त्यादिभावास्थितान् हित्वा चन्द्रमसं षडष्टमगतं गोधूलिकं शस्यते ॥ २७ ॥ यावत्कुंकुमरक्तचन्दननिभो नास्तं गते भास्करे यावच्चोडुगणो नभस्तलगतो नो दृश्यते रश्मिभिः । यावद्गोखुरघातचूर्णितरजो विस्तीर्यते चांबरे तावत्सर्वजनस्य मंगलविधौ गोधूलिकं शस्यते ॥ २८ ॥ अस्तक्ष्माधरमुष्णधाम्नि गतवत्यस्पष्टतारागणे संध्यारागविवर्जिता ऽपरदिशा श्रीविष्णुनोद्वाहिता । तावन्नैव तिथिर्न योगमशुभं लग्नेंदुतारावलं कालोयं कथितः पुराणमुनिभिर्गोधूलिकाख्यः शुभः ॥ २९ ॥ मार्गे गोधूलियोगे प्रभवति विधवा पाघमासे तथैव पुत्रायुर्धनयौवनेन सहिता कुंभस्थिते भास्करे । वैशाखे सुख

प्रजाधनवती ज्येष्ठे पतेर्मानदा आषाढे धनधान्यपुत्रवहुला पाणिग्रहे कन्यका ॥ ३० ॥ अथ संकीर्णजातीनां विवाहे नियतं कालविशेषम् । शार्ङ्गीये–कृष्णे पक्षे भानुभौमार्कजानां वारे योगे चापि धिष्णे निषिद्धे । संकीर्णानां दारकर्मप्रशस्तं प्रीत्यर्थायुःप्राप्तये शौनकाद्याः ॥ ३१ ॥ केशवार्कः–प्रायेण शंकरभवामशुभर्क्षपक्ष-क्रूरक्षणेषु शुभकृत्करपीडनं स्यात् ॥ ३२ ॥ अथ द्वितीयविवाहकालः । संग्रहे–प्रमदामृतिवासरादितः पुनरुद्वाहवरस्य ( ? ) विषमे युगवत्सरे शुभो युगुले वापि मृतिप्रदो भवेत् । अथ तृतीयविवाहकालः । मात्स्ये निषेधः–उद्वाह इति सिद्धचर्थं तृतीयां न कदाचन । मोहादज्ञानतो वापि यदि गच्छेत्तु मानुषीम् ॥ ३३ ॥ न पश्यत्येव संदेहो गर्गस्य वचनं तथा ॥ ३४ ॥ संग्रहे–तृतीया यदि चोद्वाहे तर्हि सा विधवा भवेत् । चतुर्थ्यादि विवाहार्थं तृतीयेऽर्कं समुद्वहेत् ॥ ३५ ॥ अथ पुनर्भू-विवाहकालः । ज्योतिर्निबंधे–न शुक्रास्तादिकं चिंत्यं शुद्धिवेधादिकं तथा । पुनर्भे-वासंवरणे न मासं तिथिशोधनम् ॥ ३६ ॥ मुहूर्तमुक्तावल्याम्–हस्तादिपंचकतुरंगनिभं धनिष्ठा मार्तंडमंगलगुरौ भृगुवासरेषु । नंदा च भद्रजयपूर्णवृषालिकुंभे सिंहे सुखं भवति पुत्रपुनर्ग्रहं च ॥३७॥ अथ यवनविवाहकालः । अस्तंगते वा गुरुभार्गवानां सिंह-स्थिते वा ह्यधिमासकेपि । शुक्रेन्दुसूर्येज्यबलावरिष्टं विवाहलग्नं यवना वदंति ॥३८॥ शुक्रे दैत्यगुरुस्तस्मान्म्लेच्छा दैत्य इव स्मृताः । भूभृद्भ्रमविवाहादौ शुक्रदोषो न विद्यते ॥ ३९ ॥ ये पूर्वदेवाः कथिताः पृथिव्यां तेषां गुरोः शुक्र इहोपदिष्टम् । म्लेच्छस्य लोके यवनादिवर्यैः शुक्रस्य दोषस्तत एव नोक्तम् ॥ ४० ॥ अथ विवाहतः प्राक्तर्तव्य-कर्मणां दिनशुद्धिः । शार्ङ्गीये–दलनकंडनमंडनवेदिका गृहसुमार्जनवारकमंडपाः । करतलग्रहमध्यगता गतं तदखिलं विदधीत विवाहभे ॥ ४१ ॥ विवाहकृत्यं निखिलं विवाहभे विलोकयेन्नात्र बलं हिमद्युतेः । नवत्रिषष्ठेह्नि विवाहपूर्वतो न वर्णको मंडपतैलमंग-लम् ॥ ४२ ॥ दैवज्ञमनोहरे–चित्रा विशाखा शततारकाश्विनी ज्येष्ठाभरण्यौ शिवभाच-तुष्टयम् । हित्वा प्रशस्तं फलतैलवेदिका प्रदाननं कंडनमंडपादिकम् ॥ ४३ ॥ हेमाद्रौ व्यासः–कंडनदलनयवारकमंडपमृद्वेदिवर्णकाद्यखिलम् । तत्सवंधिगतागतमृक्षे वैवाहिके कुर्यात् ॥ ४४ ॥ निबंधे–दलनं कंडनं चैव व्यंजनं मोदकानि च । यवार-मंडपौ वेदी कुंकुमं वर्णकं तथा ॥ ४५ ॥ कार्यं विवाहांगमिदं विवाहभैर्युजंति नात्रेंदुबलाबलं बुधाः । षष्ठे तृतीये नवमेह्नि लग्नतः पूर्वं न वर्णो न यवारमंडपौ ॥४६॥ कन्यादानं गणेशार्चा कर्मारंभं कुसुंभकम् । मंडपं वर्णकाद्यं च सर्वं कुर्याद्विवाहभे ॥ ४७ ॥ अथ विवाहे तिलतैलादि लापनम् । रामः–मेषादिराशिजवधूवर-योर्वटोश्च तैलादिलापनविधौ कथिता हि संख्या । शैला दिशा शरदिगक्षनगाद्रि-बाणबाणाक्षबाणगिरयो मुनिभिस्तु कैश्चित् ॥ ४८ ॥ गणपतिः–मेषादिराशि-

जातानां कुर्यात्तैलादिलापनम् । शैलदिग्बाणसप्तांग इषुपंचेषवः शराः ॥ ४९ ॥ बाणशैलास्त्रयश्चैव क्रमात्कश्चिदितीरितम् ॥ ५० ॥ **अथ कांजिकाधारणम्** । शार्ङ्गीये—मूलेंद्ररुद्रश्रवणार्कपौष्णविश्वेशचित्रानलरेवती च । संस्थापनं कांजिक कंटिकाया वारे रविर्भूमिसुतस्य शस्तम् ॥ ५१ ॥ **अथ वेदिनिर्माणम्** । केशवार्कः— वेदिकां विरचयेद्यथातथं स्यादियं प्रविशतस्य दक्षिणे । स्युर्जनाश्रययवोप्तिवर्णिकाः षड्भवत्रिदिवसेषु नाग्रतः ॥ ५२ ॥ **अथ वेदिकालक्षणम्** । नारदः—हस्तो च्छ्रितां चतुर्हस्तैश्चतुरस्रां समंततः । स्तंभैश्चतुर्भिः सुश्लक्ष्णैर्वामभागे स्वसद्मनः । समंडपां चतुर्दिक्षु सोपानैरुपशोभिताम् । प्रागुदक्प्रवणां रंभास्तंभहंस शुकादिभिः ॥ ५३ ॥ विचित्रितां चित्रकुंभैश्चित्रितैस्तोरणांकुरैः । एवंविध समारोहेन्मिथुनं साग्निवेदिकम् ॥ ५४ ॥ वसिष्ठः—षडंशारत्निकां कुर्याच्चतुर्द्वारोपशो भिताम् । मंडपं तोरणैर्युक्तं तत्र वेदीं प्रकल्पयेत् ॥ ५५ ॥ अष्टहस्तं तु रत्ने न्मडपं वा द्विषट्करम् । सप्तर्षिमते विवाहपटले—मंगलेषु च सर्वेषु मण्डपं गृहमानतः । कार्यः षोडशहस्तो वा द्विषड्हस्तो दशावधिः ॥ ५६ ॥ स्तंभै श्चतुर्भिरेवात्र वेदी मध्ये प्रतिष्ठिता । शोभिता चित्रिता कुंभैरासमन्ताच्चतुर्दिशम् ॥ ५७ ॥ द्वारविद्धा वलीविद्धा कूपवृक्षव्यधा तथा । न कार्या वेदिका तज्ज्ञैः शुभमंगलकर्माणि ॥ ५८ ॥ नारदः—समे तु दिवसे कुर्यादेवकोत्थापनं विधिः । षष्ठं च विषमं नेष्टं मुक्त्वा पंचमसप्तमौ ॥ ५९ ॥ रामः—युग्मे घस्ते षष्ठहीने च पंच सप्ताहे स्यान्मंडपोद्वासनं सत् ॥ ६० ॥ **अथ मंडपादौ स्तंभ निवेशनम्** । विश्वकर्मप्रकाशे—सिंहे कन्यातुलायां भुजगपति मुखं शंभुकोणे खातं वायव्ये स्यात्तदास्यं त्वलिधनुमकरे ईशखातं वदंति । कुंभे मीने च मे निर्ऋतिदिशि मुखं वायुकोणे हि खातं वह्नेः कोणे मुखं वै वृषमिथुनगते कर्कटे र खातम् ॥ ६१ ॥ वेद्यां वृषाद्गृहे सिंहात्त्रिकं मीनात्सुरालये । ईशानतो व्यस्तगत पृष्ठस्तस्य शुभावहम् ॥ ६२ ॥ रामाचार्यस्तु—सूर्यैगनासिंहघटेषु शैवे स्तंभो कोदण्डमृगेषु नार्यौ । मीनाजकुंभे निर्ऋतौ विवाहे स्थाप्योऽग्निकोणे वृषयुग्मकर्के ॥ ६३ ॥ गणपतिस्तु—ईशान्यां स्थापयेत्कुंभं सिंहादि त्रिभगे रवौ । वृश्चिकादि त्रिभे वायं नैर्ऋत्यां कुंभतस्त्रिभे । वर्षात्रये तथाग्नेय्यां स्तंभखातं तथैव हि ॥ ६४ ॥ तथा च विवाहमारभ्य चतुर्थिमध्ये श्राद्धं दिनं दर्शदिनं यदि स्यात् । वैधव्यमाप्नोति सुकन्या जीवेत्पतिश्चेदनपत्यता स्यात् ॥ ६५ ॥ विवाहमध्ये यदि चेत्क्षयाहस्त स्वमुख्याः पितरो न यांति । व्रते विवाहे परतस्तु कुर्याच्छ्राद्धं स्वधाभिर्न तु दूषयेत ॥ ६६ ॥ **अथ नांदीश्राद्धम्** । सायणीये—नांदीश्राद्धं पिता कुर्यादाद्ये पाणि पुनः । अत उर्ध्वं प्रकुर्वीत स्वयमेव तु नांदिकम् ॥ ६७ ॥ नांदीश्राद्धे कृते पश्चा वन्मातृविसर्जनम् । दर्शश्राद्धं क्षयश्राद्धं स्नानं शीतोदकेन च ॥ ६८ ॥ अपस

स्वधाकारं नित्यश्राद्धं तथैव च । ब्रह्मयज्ञं चाध्ययनं नदीसीमादिलंघनम् ॥ ६९ ॥ उपवासव्रतं चैव श्राद्धे भोजनमेव च । नैव कुर्युः सपिंडाश्च मण्डपोद्वासनावधि ॥ ७० ॥ सूतकं न विशेत्तत्र मातरो यत्र पूजिताः । भूकंपादेर्न दोषोस्ति वृद्धिश्राद्धे कृते सति ॥ ७१ ॥ हेमाद्रिः–वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति । येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः ॥ ७२ ॥ अथ विवाहकाले ऋतुप्राप्तायाः कन्यायाः किं कुर्वंतीत्याह । याज्ञपार्श्वः–विवाहे वितते यज्ञे होमकाले उपस्थिते । कन्यामृतुमतीं दृष्ट्वा कथं कुर्वंति याज्ञिकाः ॥ ७३ ॥ स्नापयित्वा तु तां कन्यामर्चयित्वा यथाविधि । युंजानामाहुतिं हुत्वा ततस्तंत्रं प्रवर्तयेत् ॥ ७४ ॥ निर्णयसिंधौ–अलाभे सुमुहूर्तस्य रजोदोषे ह्युपस्थिते । श्रियं संपूज्य विधिवत्ततो मंगलमाचरेत् ॥ ७५ ॥ मातृरजस्वलाविषये । माधवीये–प्रारंभात्प्राक्विवाहस्य माता यदि रजस्वला । निवृत्तिस्तस्य कर्तव्या संहृत्य श्रुतिचोदनात् ॥ ७६ ॥ मेधातिथिः–चौले च व्रतबंधे च विवाहे यज्ञकर्मणि । भार्या रजस्वला यस्य प्रायस्तस्य न शोभनम् ॥ ७७ ॥ वरवध्वान्यतमयोर्जननी चेद्रजस्वला । तस्याः शुद्धेः परं कार्यं मांगल्यं मनुरब्रवीत् ॥ ७८ ॥ वृद्धमनुः–विवाहव्रतचूडासु माता यदि रजस्वला । तदा न मंगलं कार्यं शुद्धौ कार्यं शुभेप्सुभिः ॥ ७९ ॥ गर्गः–यस्योद्वाहादि मांगल्ये माता यदि रजस्वला । तदा न तत्प्रकर्तव्यमायुःक्षयकरं यतः ॥ ८० ॥ बृहस्पतिः–वैधव्यं च विवाहे स्याजडत्वं व्रतबंधने । चूडायां च शिशोर्मृत्युर्विघ्नं यात्राप्रवेशयोः ॥ ८१ ॥ विवाहोत्सवयज्ञेषु माता यदि रजस्वला । तदा स'मृत्युमाप्नोति पंचत्वं दिवसं विना ॥ ८२ ॥ प्राप्तमभ्युदयं श्राद्धं पुत्रसंस्कारकर्माणि । पत्नी रजस्वला चैत्स्यान्न कुर्यात्तत्पिता तदा ॥ ८३ ॥ रजोदोषे समुत्पन्ने सूतके मृतकेपि वा । नित्यं नैमित्तिकं कुर्यात्काम्यं कर्म न किंचन ॥ ८४ ॥ अथ जीर्णभांडादि । मासषट्कं विवाहादौ व्रतप्रारंभणे न च । जीर्णभांडानि न त्याज्यं गृहसंमार्जनं तथा ॥ ८५ ॥ हेमाद्रौ–विवाहव्रतचूडासु वर्षमर्द्धं तदर्द्धकम् । पिंडदानं मृदा स्नानं न कुर्यात्तिलतर्पणम् ॥ ८६ ॥ स्मृतिः–महालये गयाश्राद्धे मातापित्रोः क्षयेहनि । कृतोद्वाहोपि कुर्वीत पिण्डनिर्वपणं ततः ॥ ८७ ॥ अथ परिवेत्ता । उद्वाहं चाग्निसं योगं कुरुते योग्रजे स्थिते । परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ॥ ८८ ॥ परिवित्तिः परीवेत्ता नरकं गच्छतो ध्रुवम् ॥ ८९ ॥ अथ स्त्रीउपसंवेशनम् । विवाहसमयात्पश्चाच्चतुर्थे दिवसे स्त्रियाम् । उपसंवेशनं कुर्यात् कृत्वा होमावशेषितम् ॥ ९० ॥ निश्येव संमुहूर्तेस्मिन् निषेककथिते वले । असंभवे तथा सर्वं विवाहवदुदीरितम् ॥ ९१ ॥ सर्वेष्वत्र मुहूर्तेषु लक्षणान्यत्र मे शृणु । मुहूर्तो नित्ययोगस्य संख्यां कृत्वा यथाविधाम् ॥ ९२ ॥ संयोज्याधोर्ध्वतः स्थानचतुष्केषु क्रमादिमान् । अयोदिशाकलीपंक्तिनवकांश्च पृथक् पृथक् ॥ ९३ ॥ सप्तभक्ते

क्रमात्सर्वा अधोर्ध्वं न विशिष्यते । मुष्टियुद्धं कुजश्चैव दशतोद्भिर्नृपाद्वयम् ॥ ९४ ॥ सावासिष्ठेन चैते स्युः यत्रैवं तत्फलं भवेत् । मुहूर्तफलमेते स्युः वृत्रहन्सर्वशोभनम् ॥ ९५ ॥ अथ दानविषये । रात्रौ दानं न शंसंति विना चाभयदक्षिणाम् । विद्यां कन्यां द्विजश्रेष्ठ दीपमन्नं प्रतिश्रयम् ॥ ९६ ॥ विवाहे तु दिवाभागे कन्या स्यात्पुत्रवर्जिता । विवाहानलदग्धा सा नियतं स्वामिघातिनी ॥ ९७ ॥ ज्योतिर्निबंधे- उद्वाहात्प्रथमे शुचौ यदि वसेद्भर्तुर्गृहे कन्यका हन्यात्तज्जननी क्षये निजतनुं ज्येष्ठे पतिज्येष्ठकम् । पौषे च श्वशुरं पतिं च मलिने चैत्रे स्वपित्रालये तिष्ठंती पितरं निहंतिमभयं तेषामभावे भवेत् ॥ ९८ ॥ विवाहात्प्रथमे पौषे आषाढे चाधिमासके । न सा भर्तृगृहे तिष्ठेच्चैत्रे पितृगृहे तथा ॥ ९९ ॥ अथ कन्यागृहे भोजननिषेधः । आदित्यपुराणे—अप्रजायां तु कन्यायां नाश्नीयात्तस्य वै गृहे । यदि भुंजीत मोहाद्वा पूयाशी नरकं व्रजेत् ॥ १२०० ॥ इति श्रीज्योतिर्विद्रयादत्तात्मजरामदीनकृते संग्रहे बृहद्दैवज्ञरंजने एकसप्ततितमं विवाहप्रकरणं समाप्तम् ।

## अथ द्विसप्ततितमं वधूप्रवेशप्रकरणं प्रारभ्यते ।

वसिष्ठः—शुभकाले गृहप्राप्तौ वर्द्धंते सर्वसंपदः । असत्काले गृहप्राप्तौ सर्वं नाशं गृहं व्रजेत् ॥ १ ॥ जयतुंगे—मार्गशीर्षे तथा माघे माधवे ज्येष्ठसंज्ञके । सुप्रशस्ते भवेद्वेश्मप्रवेशो नवयोषिताम् ॥ २ ॥ नारदः—आरभ्योद्वाहदिवसात्षष्ठे वाप्यष्टमे दिने । वधूप्रवेशः संपत्त्यै दशमेथ समे दिने ॥ ३ ॥ संग्रहे—विवाहमारभ्य वधूप्रवेशो युग्मे तिथौ षोडशवत्सरांतः । ऊर्ध्वं ततोब्दे युजि पंचमांतं पुनः परस्तान्नियमो न चास्ति ॥ ४ ॥ वृद्धनारदः—समे वर्षे समे मासे यदि नारी गृहं व्रजेत् । आयुष्यं हरते भर्तुः सा नारी मरणं व्रजेत् ॥ ५ ॥ प्रयोगरत्ने—वधूप्रवेशः प्रथमे तृतीये शुभप्रदः पंचमकेथवाह्नि । द्वितीयके वाथ चतुर्थके वा षष्ठे वियोगामयदुःखदः स्यात् ॥ ६ ॥ वृद्धवसिष्ठोपि—षष्ठाष्टमे वा दशमे दिने वा विवाहमारभ्य वधूप्रवेशः । पंचांगसंशुद्धिदिनं विनापि विधावसद्गोचरगेपि कार्यः ॥ ७ ॥ लल्लः—स्वभवनपुरप्रवेशे देशानां विप्लवे तथोद्वाहे । नववध्वा गृहगमने प्रतिशुक्रविचारणा नास्ति ॥ ८ ॥ एकग्रामे पुरे वापि दुर्भिक्षे राष्ट्रविप्लवे । विवाहे तीर्थयात्रायां प्रतिशुक्रं न दुष्यति ॥ ९ ॥ चैत्रे पौषे हरौ सुप्ते नष्टे च गुरुभार्गवे । पितुःस्थानस्थिता नारी न गच्छेद्भर्तृमंदिरम् ॥ १० ॥ ज्योतिःप्रकाशे—नवोढायास्तु वैधव्य यदुक्तं संमुखे भृगौ । तदेवं विबुधैर्ज्ञेयं केवलं द्विरागमे ॥ ११ ॥ कालविवेके—न शुक्रदोषो न सुरेज्यदोषस्ताराबलं चन्द्रबलं न योज्यम् । उद्वाहिताया नवकन्यकाया दीपोत्सवो मंगलशोभनानि ॥ १२ ॥ मांडव्यः—नित्ययाने गृहे जीर्णे प्राशने परिधानके । वधूप्रवेशे मांगल्ये न मौढ्यं गुरुशुक्रयोः ॥ १३

ज्योतिर्निबंधे-वधूप्रवेशनं कार्यं पंचमे सप्तमे दिने । नवमे च शुभे वारे सुलग्ने शशिनोर्बले ॥ १४ ॥ विवाहपटले-वधूप्रवेशः प्रथमेत्र वर्षे तथा तृतीयेप्यथ पंचमे वा । सूर्येंदुदेवेज्यबलेन कुर्यात्पुंसो मुनिर्गौतम आह सत्यम् ॥ १५ ॥ भास्करव्यवहारे-रात्रौ विवाहभे शस्तः सन्मुहूर्ते स्थिरोदये । वधूप्रवेशो नैवात्र प्रतिशुक्राद्भयं विदुः ॥ १६ ॥ ऋक्षैर्वैवाहिकैः शुद्धैर्दंपत्योश्च शुभप्रदम् । वधूप्रवेशो नो कार्यः पंचमे ह्यकृतं यदि ॥ १७ ॥ अत्र षोडश दिनातिक्रमे मासपर्यंतं विषमदिने वधूप्रवेशः कार्यः । प्रथममासातिक्रमे वर्षपर्यंतं विषमे मासि कर्तव्यः । तदा विषमदिननियमो नास्ति । एवं प्रथमे वर्षे अतिक्रान्ते पंचमवर्षपर्यंतं विषमे वर्षे कर्तव्यः । तदा विषममासनियमो नास्ति । मार्तंडेपि-लग्नादष्टदिनन्तातः सममुनीष्वंकेद्युषूर्ध्वं त्वयुग्घस्रे मास्यपि हायने शरमिताद्वर्षात्परं स्वेच्छया । वैफामार्गसितेजगुः श्रुतियुगोद्वाहर्क्षचित्राश्विनीज्यर्क्षैश्चानवमंदिरे निशि वधूसंवेशभंगे स्थिरे ॥ १८ ॥ अथ नक्षत्रादिशुद्धिः । व्यवहारतत्त्वे-पौष्णात्कभाच्च श्रवणाच्च युग्मे हस्तत्रये मूलमघोत्तरासु । पुष्यं च मैत्रे च वधूप्रवेशो रिक्तेतरे व्यर्ककुजे च शस्तः ॥ १९ ॥ रामः-ध्रुवक्षिप्रमृदुश्रोत्र वसुमूलमघानिले । वधूप्रवेशः सन्नेष्टो रिक्तारार्के बुधे परैः ॥ २० ॥ अथ चतुर्थिका । विवाहपटले-स्वयामित्रोदये लग्ने शुभैः कार्या चतुर्थिका । स्ववर्णसदृशा सौम्यैस्त्रयाद्येरेकर्क्षसंस्थितैः ॥ २१ ॥ वैवाहिके भे दिवसे शुभस्याथ तिथौ शुभे । यामित्रराशौ कन्यायां लग्ने शुभसमन्विते ॥ २२ ॥ चतुर्थिकां प्रकुर्वीत विधिदृष्टेन कर्मणा । सज्जारोपणकाले तु कुमार्यास्ताद्विचारयेत् ॥ २३ ॥ याज्ञवल्क्यः-लोकानंत्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः । यस्मात्तस्मात्स्त्रियः सेव्याः कर्तव्याश्च सुरक्षिताः ॥ २४ ॥ अथ पुंस्त्रीसमागममुहूर्तः । उत्तरात्रयरोहिण्यां पुष्ये मैत्रकरे मृगे । चित्रास्वाती धनिष्ठासु पुंनार्योः संगमः शुभः ॥ २५ ॥ कन्यावैणिकमीनगोलिभवने केंद्रस्थिते सग्रहे पापे विक्रमलाभवैरिसहिते द्यूने शुभे वीक्षिते । वारे सौम्यदिनस्य योगकरणे शस्ते च रिक्ताष्टमी राकामारहिते तिथौ शुभविधौ दारोपभोगः शुभः ॥ २६ ॥ ओजराशिगते चन्द्रे लग्ने पुंग्रहवीक्षिते । उपवीते युग्मतिथौ सुलग्ने कामयेत् स्त्रियम् ॥२७॥ गण्डान्तं त्रिविधं त्यजेन्निधनजन्मर्क्षे च मूलांतकं दास्रं पौष्णमथोपरागदिवसान्पातं तथा वैधृतिम् । पित्रोः श्राद्धदिनं दिवा च परिघाद्यर्द्धं स्वपत्नीगमे भान्युत्पातहतानि मृत्युभवनं जन्मर्क्षतः पापभम् ॥ २८ ॥ अथ केशबंधनम् । वातोत्तराश्रवणशंकरवाजिमूलपुष्यादितीन्दुकरपौष्णपुरंदरेषु । पक्षेसिते रविनिशाकरसौम्यवारे धम्मिल्लबंधनविधिः शुभदो मृगाक्ष्याः ॥ २९ ॥ अथ चूडीधारणम् । यावद्भास्करभुक्तिभानि दिवसे धिष्ण्यानि संख्या तथा वह्नि भूतगुणाब्धिसप्तनयनं पृथ्वीकरेंदुक्रमात् । सूर्यारौ कविसौम्यराहुरविजा जीवः शशी केतवः क्रूरे हानिशुभे शुभं च कथितं चक्रे करे भूषणम् ॥ ३० ॥ अथोद्वाहानंतरं मंडपोद्वासनम् । रामः-युग्मे

घस्त्रे षष्ठहीने च पंच सप्ताहे स्यान्मंडपोद्वासनं सत् ॥ ३१ ॥ अथ नूतनवध्वा पाक-
कर्ममुहुर्तः । मृगोत्तरातिष्यकृशानुशाके श्रुतित्रये ब्रह्मद्विदैवपौष्णे । शुभे तिथौ
व्यारवौ प्रकुर्यान्नवा वधूर्नूतनपाककर्म ॥ ३२ ॥ स्थिरे लग्ने सुखे शुद्धे सप्तमे च
बलान्विते । रन्ध्रे खे रविहीने च नवोढा पाकमाचरेत् ॥ ३३ ॥ अथालंकृतिधार-
णम् । बादरायणः–हस्तानुराधगुरुपूषधनिष्ठयुक्ता चित्रोतरात्रयपुनर्वसुरोहिणीषु । लग्ने
स्थिरे रविसितेन्दुजजीववारे हेमादिधारणविधिः कथितो नराणाम् ॥ ३४ ॥ करा-
दिपंचकेऽश्विभे सपौष्णवासवे स्मृता । धृतिश्च शंखकांचनप्रवालरक्तवाससाम् ॥ ३५॥
पौष्णाश्विनी वसुकरादिषु पंचकेषु कौसुंभहेममणिविद्रुमरौप्य शंखाः । नार्या धृता
सुतसुखार्थकरा भवति ब्राह्मोत्तरादितिगुरुष्वशुभाय भर्तुः ॥ ३६ ॥ रोहिणी गुरु
पुनर्वसुतारे या बिभर्ति नवभूषणांवरम् । सा न योषिदवलंबते पतिं स्नानमाचरति
वारुणेपि या ॥ ३७ ॥ पुष्ये पुनर्वसौ चैव रोहिण्यामुत्तरात्रये । पतिजीवतमिच्छंती नैव
हेमादिकं स्पृशेत् ॥ ३८ ॥ चित्रा विशाखा पवनानुराधावस्वश्विनीभास्कररेवतीषु ।
आदित्यशुक्रेंदुजजीववारे लग्ने स्थिरे स्त्री कनकादि दध्यात् ॥ ३९ ॥ क्षिप्रमृदुध्रुवचरभे
शशिसितयोर्वासरेषु तल्लग्ने । मुक्ताफलरजताद्यं भूषणमखिलं सवज्रकं धार्यम् ॥ ४०॥
लब्धं राजप्रसादेन विप्रादेशात्करग्रहे । प्रीत्याप्तं चोत्सवे धार्यं भूषणं निद्यभादिके॥४१॥
इति श्रीज्योतिर्विद्वर्यदत्तात्मजरामदीनकृते संग्रहे बृहद्दैवज्ञरंजने द्विसप्ततितमं वधू-
प्रवेशप्रकरणं समाप्तम् ।

---

## अथ त्रिसप्ततितमं द्विरागमनप्रकरणं प्रारभ्यते ।

उद्वाहसमये बाला व्रजेद्भर्तृगृहं प्रति । पुनस्तातगृहाद्यात्रा तद्विरागमनं स्मृतम्
॥ १ ॥ धनं हानिः सुखं नाशो भोगो वैरं ततः सुखम् । प्रथमाब्दात्फलं ज्ञेयं क्रमा-
द्वध्वा द्विरागमे ॥ २ ॥ श्वश्रूं हंत्यष्टमे वर्षे श्वशुरं च दशाब्दके । संप्राप्ते द्वादशे व-
पतिं हंति द्विरागमे ॥ ३ ॥ सरस्वत्यार्णवे–कृते ग्रंथिबंधे समाब्दे प्रकुर्याद्भवेन्नै
दोषो विचालेहि वध्वा । तदाहुः परे विंध्यकूटादुदक्स्थास्ततो दक्षिणे वर्षयुग्म-
न शस्तम् ॥ समाब्ददोषो नहि विद्यते तदा ग्रंथेर्निबंधं हि भवेन्नृणां यदा । विन्ध्योत्त-
एव वदन्ति आर्यास्तद्दक्षिण चाब्दसमं विवर्ज्यम् ॥ ४ ॥ ग्रंथिनिबंधनादू-
मब्ददोषा नविद्यते । विन्ध्यस्योत्तरभागेषु दक्षिणे परिवर्जयेत् ॥ ५ ॥ चण्डेश्वरः–
वैशाखे सुभगा प्रभूतधनिनी माग च पुत्रान्विता फाल्गुन्यें पतिवल्लभा प्रियजने नित्य
प्रिया पुत्रिणी । वंध्या दुर्भगनिर्धना विरहिणी सोद्वेगिता नित्यशो नूनं देवसुता-
दुःखमतुलं प्राप्नोति मासांतरे ॥ ६ ॥ अन्यः–आषाढे मुखरा स्वभावमुखरा वंध्या
प्रतिद्वेषिणी माघे पत्युर्विरोधिनी सुचपला शुश्रूषया वर्जिता । ज्येष्ठे निर्धनता विपत्

जननी वैशाखमार्गान्विते मासे फाल्गुनके क्रमेण कथिताः पुत्रार्थसौख्यान्विताः ॥ ७ ॥ व्यवहारचण्डेश्वरे-गुरुभास्करयोर्वीर्ये केवलस्यैव वा रवेः । द्विरागमनमिच्छंति पत्युः शुद्धौ तु नान्यथा ॥ ८ ॥ अन्यः-जन्मराशौ यदा चन्द्रः द्वादशे च यदा भवेत् । द्विरागमे तु नारीणां वामनेत्रविनाशनम् ॥ ९ ॥ राजमार्तंडे-भर्तुः शोभनगोचरे दिनपतौ नास्तं गते भार्गवे सूर्ये कीटघटाजगे शुभदिने पक्षे च कृष्णेतरे । हित्वा दिक्प्रतिलोमगौ बुधसितौ लालाटिकं दिक्पतिं चानीता गुणशालिनी नववधूर्नित्योत्सवैर्मोदते ॥ १० ॥ बादरायणः-चैत्रे पौषे हरौ सुप्ते गुरोरस्ते मलिम्लुचे । नवोढागमनं नैव कृते पंचत्वमाप्नुयात् ॥ ११ ॥ अन्योपि-मलिम्लुचे तथा पौषे शुक्रे सन्मुखदक्षिणे । पितुः स्थानास्थिता नारी न गच्छेत्पतिमंदिरम् ॥ १२ ॥ रामः-उदेति यस्यां दिशि यत्र याति गोलभ्रमाद्वाथ ककुद्दसंस्थे । त्रिधोच्यते सन्मुख एव शुक्रो यत्रोदितस्तां तु दिशं न यायात् ॥ १३ ॥ ज्योतिःप्रकाशे-अत्युत्सुकेषु यावत्प्राक्पाले तु भृगुर्भवेत् । तावत्पाशिदिशं गच्छेत्प्राचीं प्रत्यक्स्थिते तथा ॥ १४ ॥ पूर्वमभ्युदिते शुक्रे यायाद्दक्षिणपश्चिमे । पश्चादभ्युदिते शुक्रे यायात्पूर्वोत्तरे दिशौ ॥ १५ ॥ अन्यदपि-पूर्वस्थिते भृगौ यायान्नवोढा राक्षसेनले । पश्चिमस्थे भृगौ यायात्तद्वदीशानवातयोः ॥ १६ ॥ बादरायणः-गुर्विण्या बालकेनापि नववध्वा द्विरागमे । पदमेकं न गंतव्यं शुक्रे सन्मुखदक्षिणे ॥ १७ ॥ गर्भिणी स्रवते गर्भं बालस्य मरणं भवेत् । नवा वधूर्भवेद्वंध्या शुक्रे सन्मुखदक्षिणे ॥ १८ ॥ अन्यः-पृष्ठे भृगौ पुत्रवती प्रयाणे कांतां कुलीनां सुभगां करोति । अग्रेषु दुःखं विदधाति शुक्रो वैधव्यशोकौ खलु नास्ति चित्रम् ॥ १९ ॥ ऋक्षोच्चये-तिष्यादित्यसमीरणाक्षितिवसुत्रीण्युत्तरायाश्विनीरोहिण्यः शुभदाश्च वर्षमसमं मेषालिकुंभे रविः । कन्यामन्मथयुग्मभे नववधूयानं वृषे तौलिके देवाचार्यसितेंदुसौम्यदिवसे शुद्धे गुरौ भास्करे ॥ २० ॥ राजमार्तंडे-नीहारांशुधनोत्तरादितिगुरुब्राह्म्यानुराधाश्विनमूलाहस्करवारुणानिलहरित्वाष्ट्रेषु शस्ते तिथौ । कुंभाजालिगते रवौ शुभकरे प्रास्तोदये भार्गवे जीवज्ञास्फुजितां दिने नववधूसद्मप्रवेशः शुभः ॥ २१ ॥ दीपिकायाम्-स्त्रीशुद्धचाजघटालिसंयुतरवौ काले विशुद्धे भृगुः संत्यज्यः प्रतिलोमगं शुभदिने यात्राप्रवेशोचिते । त्यक्त्वा हस्तनिरंशकं प्रथमतो वध्वाः प्रवेशागमौ कुर्यादेकपुरादिषु प्रातिभृगुर्नेच्छंति दोषं बुधाः ॥ २२ ॥ व्यवहारचण्डेश्वरे-कुंभाजालिगते भानो निर्गमः सौम्यवासरे । यायात्सौम्यदिने नारी नवोढा पतिमंदिरम् ॥ २३ ॥ लग्नशुद्धिः । बादरायणः-उपचयस्थानगे जीवे भृगौ केंद्रमुपागते । शुद्धे लग्ने शुभाक्रांते गंतव्यं भर्तृमंदिरम् ॥ २४ ॥ चतुष्टये ग्रहाः सौम्याः त्रिषडाये गताः परे । अष्टमे शुभसंदृष्टे शुभदा च द्विरागमे ॥ २५ ॥ अथ प्रतिशुक्रापवादः । तत्रैव-अस्तंगते गुरौ शुक्रे सिंहस्थे वा बृहस्पतौ । दीपोत्सवबलेनैव कन्या भर्तृगृहं नयेत् ॥ २६ ॥ न शुक्रदोषो न

सुरेज्यदोषो ताराबलं चन्द्रबलं न योज्यम् । उद्वाहिताया नवकन्यकाया दीपोत्सवे मंगलकृत्प्रवेशः ॥ २७ ॥ शुक्रेतिचारे गुरुनष्टदृष्टे सिंहे गुरौ चैव तथाधिमासे । याम्यायने भास्करपूर्वसंस्थे दीपोत्सवे शुद्धिकरः प्रवेशः ॥ २८ ॥ व्यवहारोच्चये—गुर्वादित्यविशुद्धौ स्यात्पत्युःपत्नी द्विरागमे । व्यतीपाते च संक्रांतौ ग्रहणे वैधृतावपि ॥ २९ ॥ श्राद्धं विना शुभं नैव प्राप्तकालेपि मानवः । अमासंक्रांतिविष्ट्यादौ प्राप्तकालेपि नाचरेत् ॥ ३० ॥ चण्डेश्वरः—पित्र्यागारे कुचकुसुमयोः संभवो वा यदि स्यात्पत्युः शुद्धिर्न भवति रवेः सन्मुखो वाथ शुक्रः । शस्ते लग्ने गुणवति तिथौ चन्द्रताराविशुद्धे स्त्रीणां यात्रा भवति सफला सेवितुं स्वामिसद्म ॥ ३१ ॥ पतिना नीयमानायाः पुरः शुक्रे न दोषभाक् ॥ ३२ ॥ बादरायणः—कश्यपेषु वासिष्ठेषु भृग्वत्र्यंगिरसेषु च । भारद्वाजेषु वात्स्येषु प्रतिशुक्रं न दुष्यति ॥ ३३ ॥ माहेश्वरः— नैतेषां प्रतिशुक्रयानमशुभं वत्सभृग्वंगिरौ भारद्वाजवसिष्ठकश्यपकुलोत्पन्नस्तथात्रेः कुले । दुर्भिक्षे विषये प्लवे प्रतिसिते न स्याद्विवाहे तथा तीर्थानां गमने तथैकनगरे ग्रामेपि सौम्यस्तथा ॥ ३४ ॥ पराशरः—पौष्णादिवह्निभाद्यांघ्रिं यावत्तिष्ठति चन्द्रमाः । तावच्छुक्रो भवेदंधः संमुखे दक्षिणे हितम् ॥ ३५ ॥ रामदैवज्ञोपि—यावच्चन्द्रः पूषभात्कृत्तिकाद्ये पादे शुक्रोंधो न दुष्टः प्रदक्षे ॥ ३६ ॥ इति श्रीज्योतिर्विद्दयादत्तात्मजरामदीनकृते संग्रहे बृहद्दैवज्ञरंजने त्रिसप्ततितमं द्विरागमनप्रकरणं समाप्तम् ।

## अथ चतुःसप्ततितमं द्व्यंगप्रकरणं प्रारभ्यते ।

जाते द्विरागमे पत्न्याः पुनः पतिगृहे गमः । पितृगेहस्थितायाश्च स द्व्यंग इति कीर्तितः ॥ १॥ अन्यत्रापि—वधूप्रवेशाद्गमनं तृतीयं ग्राह्यं सदा मासिकराहुरेव । अजादौ संभ्रमात्सूर्यं तत्र राहुः प्रतिष्ठितः । सन्मुखं दक्षिणे त्याज्यस्तृतीयगमने स्त्रियः ॥ २॥ यद्राशिगोर्कः खलु तद्दिशायां राहुः सदा तिष्ठति मासि मासि । वधूप्रवेशस्तु यत्र तृतीये ग्राह्यः सदा मासिकएव राहुः ॥ ३ ॥ यथा भृगोर्दक्षिणसन्मुखस्थः मृगीदृशीनामशुभो गमः सदा । तथैव राहुः परिकल्पनीयाद्व्यंगेन कार्या भृगुजादिकमम् ॥ ४ ॥ अग्रतो राहुर्वैधव्यं दक्षिणे सुतहा भवेत् । वामे पृष्ठे शुभो नित्यं तृतीयगमने स्त्रियः ॥ ५ ॥ त्रैमासिकं ग्रहादौ च युद्धे यामार्द्धसंभवः । राहुं विचार्य दैवज्ञो मासिकं द्व्यंगकर्माणि ॥ ६ ॥ मेषोक्षयुग्मकर्केषु सत्रिकोणेषु तिष्ठति । राहुः पूर्वादिकाष्ठासु नेष्टः सन्मुखदक्षिणे ॥ ७ ॥ सुतिथौ गुणवल्लग्ने राहौ वामे च पृष्ठगे यात्रोक्तमासदिवसे यायात्पतिनिकेतनम् ॥ ८ ॥ अन्योपि—दित्येंदुमूलार्कहरीज्य वासवे मैत्राश्विनीपौष्णशुभाकराः स्युः । द्व्यंगे त्यजेन्मासिकराहुसन्मुखे दक्षे वा मंदमहीजवासरौ ॥ ९ ॥ आदित्यमृगहस्तेज्यपौष्णमैत्र्याश्विनीषु च । गोविन्द

वसुमूलेषु द्व्यंगः संपत्प्रदायकः ॥ १० ॥ धनुःकर्कटमीनेर्के सिंहे कन्यासु संस्थिते । भौमार्किवर्जिते वारे शुभदा द्व्यंगकर्मणि ॥ ११ ॥ देवासुराणां समरे राहुविष्णू द्विधाकृता । तेनाख्यास्तस्य तमसोः द्व्यंगमित्युच्यते बुधैः ॥ १२ ॥ इति श्रीज्योतिर्विद्वयादत्तात्मजरामदीनकृते संग्रहे बृहद्दैवज्ञरंजने चतुःसप्ततितमं द्व्यंगप्रकरणं समाप्तम् ।

## अथ पंचसप्ततितमं स्वामिदर्शनप्रकरणं प्रारभ्यते ।

बृहस्पतिः-स्वस्वामिनोनुकूलस्य दासस्यायुःश्रियौ सदा । वर्द्धेते वंशजस्यात्र तस्य दर्शनकालता ॥ १ ॥ शुभाशुभौ भवेतां तत्कालं वक्ष्ये शुभार्थिनाम् । प्रथमं तत्प्रवेशे च निर्गतानुप्रवेशने ॥ २ ॥ पुनः पुनर्दिदृक्षायां स्वामिनो भृतकस्य च । दर्शने शुभकाले च द्वयोः शोभनमेधते ॥ ३ ॥ भृत्यस्य शुभदे काले पूर्वकर्मणि शोभनः । इह कर्म मुहूर्तस्य शुभश्चेदन्यथान्यथा ॥ ४ ॥ आर्द्राश्लेषा तथा ज्येष्ठा कृत्तिका भरणी तथा । त्रिपूर्वाश्च विनाशे वा दर्शनं स्वामिनः शुभाः ॥ ५ ॥ भृत्यानुकूलनक्षत्रे शुभांशे शशिनि स्थिते । विष्टिरिक्ताविवर्ज्येषु तिथिषु प्रेक्षणं शुभम् ॥ ६ ॥ शुभवारे शुभे योगे स्थिरराशौ शुभेक्षिते । शुभग्रहाणां लग्ने वा शुभे केंद्रत्रिकोणगे ॥ ७ ॥ वर्गोत्तमोदये जीवबुधक्षेत्रे विशेषतः । स्वस्वामिदर्शनं श्रेष्ठं वश्योसौ मरणांतिकम् ॥ ८ ॥ बुधांशके स्थिते सौम्ये नीचारिभवनं विना । राज्ञस्तु वदनं दृष्ट्वा स्त्रीधनैस्तु वशी नृपः ॥ ९ ॥ गुरौ केंद्रे स्वतुंगे वा स्वक्षे वा शीतगौ तथा स्वामिदर्शनयोगोयं भृत्यस्वाम्यनुकूलतः ॥ १० ॥ शुक्रवर्जितयामित्रे गुलिचंद्रौ त्रिकोणगौ । पश्यतः स्वामिनो मृत्योः यद्वा मरणांति मात्रजेत् ॥ ११ ॥ सूर्यवारः शुभः प्रोक्तो ब्राह्मणानां च दर्शनम् । भौमवारे नृपाणां तु दर्शनं जीवशोभनम् ॥ १२ ॥ मंदवारे शुभं गच्छेद्विट्शूद्राणां तु दर्शने । अन्यथा चेद्भवेदन्यसुभाभ्यां हि फल नृणाम् ॥ १३ ॥ अथ सेवाचक्रम् । तत्रैव-सेवाचक्रे शिरः सप्त सप्त पृष्ठोदरे तथा । पादयोः सप्तऋक्षाणि साभिजित्तु क्रमान्न्यसेत् ॥ १४ ॥ स्वामिभाद्भृत्यभं गण्यं भृत्यभात्स्वामिभं तथा । निष्फलं पृष्ठपादस्थे फलदस्तु शिरोदरे ॥ १५ ॥ इति श्रीज्योतिर्विद्वयादत्तात्मजरामदीनकृते संग्रहे बृहद्दैवज्ञरंजने पंचसप्ततितमं स्वामिदर्शनप्रकरणं समाप्तम् ।

## अथ षट्सप्ततितमं वाटिकाप्रकरणं प्रारभ्यते ।

वाटिका वा तडागो वा कूपो वा यदि निर्मितः । गृहात्पूर्वे कुबेर्यां च वारुणे शंभुकोणके ॥ १ ॥ सदा सावित्री स भवति सदा दानं प्रयच्छति । सदा यज्ञं स पूजयते यो रोपयतीह पादपान् ॥ २ ॥ वरं भूमिरुहाः पंच न तु कोष्ठरुहा दश ।

पत्रैः पुष्पैः फलैर्मूलैः कुर्वंति पितृतर्पणम् ॥ ३ ॥ सर्वदा सिद्धिमाप्नोति कर्ता चेष्टफलं लभेत् । आग्नेय्यां दक्षिणे वापि नैर्ऋत्ये वायुकोणके ॥ ४ ॥ धनपुत्रादिहानिश्च परलोकेऽपकीर्तिषु । हठान्मोहात्प्रमादाद्वा यदि कुर्याद्विशेषतः ॥ ५ ॥ तदा मृत्युमवाप्नोति नात्र संदेहकारणात् । जातिभ्रष्टो दुराचारो विविधा पुण्यकर्मणः ॥ ६ ॥ बहिःकृतो मनुष्योपि वाटिकारोपणात्सुखी । वसंते कदलीं चैव पुष्पजातिश्च पादपान् ॥७॥ तथा ग्रीष्मे वनस्थानां वर्षायां कंटकद्रुमान् । शरदृतौ तथाम्रादीन् हेमंते शिशिरेपि च ॥ ८ ॥ वराहः—उत्तमं विंशतिर्हस्ता मध्यमं षोडशान्तरम् । स्थानात्स्थानान्तरं कार्यं वृक्षाणां द्वादशावरम् ॥ ९ ॥ शशिविद्धं गृहं कुर्याद्रविविद्धं जलाशयम् । हट्टा वा वाटिका वापि द्वयोर्विद्धा प्रशस्यते ॥ १० ॥ सायं प्रातश्च घर्मार्तौ शीतकाले दिनान्तरे । वर्षायां च भुवः शोषे कर्तव्यारोपितद्रुमाः ॥ ११ ॥ अश्वत्थमेकं पिचुमंदमेकं न्यग्रोधमेकं दशचिंचिनीकम् । कपित्थबिल्वामलकत्रयं च पंचाम्रवापी नरकं न पश्येत् ॥ १२ ॥ ईशाने रोपयेद्धात्रीं नैर्ऋत्ये चिंचिनीद्रुमान् । आग्नेय्यां दाडिमं चैव वायव्ये विल्ववृक्षकम् ॥ १३ ॥ प्लक्षोत्तरं पूर्ववटं प्रशस्तं ह्युदुंबरं दक्षिणभागके च । अश्वत्थवृक्षं दिशि वारुणे च मध्ये तथाम्रान्विविधप्रकारान् ॥ १४ ॥ प्लक्षोत्तरे प्रशस्तश्च वटः पूर्वे च शोभनः । उदुंबरस्तथा याम्ये पिप्पलो वारुणे तथा ॥ १५ ॥ याम्यनैर्ऋत्ययोर्मध्ये तथा जम्बूकदम्बकौ । पनसश्च तथाम्रश्च प्रशस्तौ शंभुपूर्वयोः ॥ १६ ॥ वाटिकाया बहिः पूर्वे रोपयेदंशवृक्षकम् । उत्तरे च शमी बाह्ये पश्चिमे खदिरो बहिः ॥ १७ ॥ दक्षिणे बकुलो बाह्येरिष्टनाशाय केवलम् । आम्राणां वाटिका चैव द्वितीयाश्वत्थवाटिका ॥ १८ ॥ तृतीया वटवृक्षाणां चतुर्थी प्लक्षवाटिका । पंचमो निंबवृक्षाणां षष्ठी जम्बुकवाटिका । चिंचिनीवृक्षसंभूता सप्तमी परिकीर्तिता ॥ १९ ॥ एतासां वाटिकानां च प्रशस्ता चाम्रवाटिका । फलदा पुण्यदा चैव पापं सहरते ध्रुवम् ॥ २० ॥ न तत्करोत्यग्निहोत्रो न पुत्रो योषितोद्भवा । यत्करोति घनच्छाया पादपाः पथि रोपिताः ॥ २१ ॥ वाराहः—यो वाटिकां राजपथःसमीपे सुष्ठां तथा कूपसमन्वितां च । स्वर्गे च वासं लभते मनुष्यश्चतुर्युगं सर्वसुखैरुपेतः ॥ २२ ॥ वराहः—अजातशाखान् शिशिरे जातशाखान् हिमागमे । वर्षागमे चतुष्कंधान्यथा दिक्प्रतिरोपयेत् ॥ २३ ॥ वास्तुराजवल्लभे—वामे भागे दक्षिणे वा नृपाणां त्रेधा कार्या वाटिका क्रीडनार्थम् । एका द्वित्रिर्दंडसंख्या शतं स्यान्मध्ये धारामण्डपं तोययंत्रैः ॥ २४ ॥ क्षेत्रं सप्तविभागभाजितमतो भद्रं च भागत्रयं तन्मध्ये जलवापिकाजिनपदैरेकांशतो वेष्टिका । स्तंभैर्द्वादशभिश्च मध्यरचितः कोणेषु कूपान्वितः कर्तव्यो जलयंत्र एष विधिवद्धामाय भूमीभुजाम् ॥ २५ ॥ तस्यां चंपककुंदजातिसुमनो वेलाश्च निर्वालिका जाती हेमसमानकेतकिरपि श्वेता तथा पाटला । नारिंगः करणी वसतलतिका चारकं

पुष्पादिकं जंवीरो वदरीं च पूगमधुपा जम्बूश्च चूतद्रुमाः ॥ २६ ॥ मालूरः कदलीं च चंदनवटश्चाश्वत्थपथ्या शिवा चिंचाशोककदंवनिंवतरवः खार्जूरिका दाडिमी । कर्पूरागरुकिंशुका हयरिपुः पुंनाग संनिवुकी प्रोक्ता नागलता च बीजनिभृता स्यात्तिंदुकी लांगली ॥ २७ ॥ द्राक्षैला शतपत्रिका च वकुला धत्तूरकंकोलको मालस्तालतमालकौ मुनिवरौ मंदारपारिद्रुमौ । अन्ये भोग्यविचित्रखाद्यसकलास्ते रोपणीया बुधैर्यो प्राप्नोति च भूतले शुभतरून् तं चंपकान्वापयेत् ॥ २८ ॥ आस्थानं प्रतिसेचनाय च घटीयंत्रः सुसारो भवेद्दोलाक्रीतनखेलनाय रुचिरे वर्षावसंतोत्सवे । बालाप्रौढवधूसुमध्यवनितागानैर्मनोहारिभिर्ग्रीष्मे शारदकेथ शीतलजलक्रीडा शुभे मण्डपे ॥ २९ ॥ लतागुल्मवृक्षरोपो हस्तपुष्याश्विनी ध्रुवैः । विशाखा मृदुमूलाह वरुणश्च प्रशस्यते ॥ ३० ॥ गुरौ केंद्रे विपाके खे विधौ वारि विधूदये । शुभयुक्तेक्षित वंधौ सद्वारे वा शुभोदये ॥ ३१ ॥ लतागुल्मवृक्षादि रोपणे मंत्रः । ॐ वसुधेति चं सीतेति पुण्यदेति धरेति च । नमस्ते सुभगे देवि द्रुमोयं वर्द्धतामिति ॥ ३२ ॥ बृहस्पतिः–सोमवारयुते मूले चापलग्ने महाद्रुमान् । स्थापयेजीवलग्ने च रेवत्यां गुरुवारगे ॥ ३३ ॥ पुनर्वस्वोश्चतुर्थांशे जीवचन्द्रौ यदोदितौ । तदावमोचनं कार्यं कदलीक्रमुका तथा ॥ ३४ ॥ चित्रा तृतीयपादस्थे बुधलग्ने निवापयेत् । पूगाः पुनश्च तल्लग्ने स्थापिताः स्युर्महाफलम् ॥ ३५ ॥ वृश्चिकांत्यांशगे चन्द्रे विलग्ने क्रमुकान् क्षिपेत् । महाधनैर्महाभोगैरेधते शेपकः श्रिया ॥ ३६ ॥ घटस्थे पंचमे षष्ठे सिते लग्ने नियोजयेत् । बीजानि नालिकेराणां बहुसंख्याफलाय च ॥ ३७ ॥ शुक्रे मीनांत्यगे लग्ने चिरकालफलाय च । क्रमुकान्नारिकेलांश्च तालवृक्षान् विनिक्षिपेत् ॥ ३८ ॥ अश्विन्यां लग्नगे चन्द्रे कृत्वा खातं कृषिः क्रमात् । नालिकेरांस्तथेक्षूंश्चानिदध्यात्पतिवृद्धये ॥ ३९ ॥ वाराहः–ध्रुवमृदुमूलविशाखागुरुभं श्रवणस्तथाश्विनीहस्तम् । उक्तानि दिव्यदृग्भिः पादपसंरोपणे भानि ॥ ४० ॥ शक्तियामले वाटिकाचक्रम् । सूर्यभाद्दिनभं यावद्वृक्षचक्रं विधीयते । त्रयं मूले भवेद्रोगं त्वचे त्रीणि धनागमः ॥ ४१ ॥ शाखायां वेदनाशः स्यात्पत्रे युग्मं दरिद्रता । शीर्षे त्रीणि शुभं प्रोक्तं पूर्वे एकं तु मृत्युदा ॥ ४२ ॥ याम्ये पंच सुतं नाशं पश्चिमे द्वे धनप्रदा । उत्तरे वेदलाभः स्यादित्युक्तं शक्तियामले ॥ ४३ ॥ कार्तिके मार्गपौषे स्यान्माघफाल्गुनश्रेष्ठयोः । रिक्ता अमा द्वादशी च कुजसूर्यश्च मध्यमा ॥ ४४ ॥ मंदयोगेपि नेष्टः स्यान्निर्वलश्चन्द्रतारका । यमाग्निशिवसार्पस्याद्दिदैवपितृपूर्वया ॥ ४५ ॥ एकराशिगौ जीवे सिंहस्थे च गुरुस्तथा । अस्ते च भार्गवे जीवे वर्जयित्वा सदा बुधैः ॥ ४६ ॥ तिथिवारसमायुक्तं सूर्यभादिदुभं युतम् । नवभिस्तु हरेद्भागं शेषांके रोपणं फलम् ॥ ४७ ॥ एके शरे त्रिफलितं निष्फलं वेदपक्षयोः । वसौ षष्ठे भवेल्लाभो सप्तमे नवमे मृतिः ॥ ४८ ॥ वाराहः–शीतवातातपै रोगो जायते पांडुपत्रता । अवृ-

द्धिश्च प्रवालानां शाखाशोषो रसस्रुतिः ॥ ४९ ॥ चिकित्सितमथैतेषां शस्त्रेणादौ विशो-
धनम् । विडंगघृतपंकाक्तान् सेचयेत्क्षीरवारिणा ॥५० ॥ फलनाशे कुलत्थैश्च माषैर्मुद्गै-
स्तिलैर्यवैः । शृतशीतपयःसेकः फलपुष्पाभिवृद्धये ॥ ५१ ॥ इति श्रीज्योतिर्विद्वर्य-
दत्तात्मजरामदीनकृते संग्रहे बृहद्दैवज्ञरंजने षट्सप्ततितमं वाटिकाप्रकरणं समाप्तम् ।

## अथ सप्तसप्ततितमं कृषिप्रकरणं प्रारभ्यते !

बृहस्पतिः–अथातः संप्रवक्ष्यामि संपूर्त्यां कृषये नृणाम् । क्रियाणामपि सत्काल-
मुहूर्ते च विशेषतः ॥ १ ॥ गृहस्थाचारधर्मस्य मूलं कृषिरुदाहृता । अन्येषा-
माश्रमाणां तु गृहस्थाश्रमतः फलम् ॥ २ ॥ तस्मात्कृषिविधानेन बीजनिर्वापणे
च । पुरुषार्थप्रसिद्धिः स्यादतस्तत्काल उच्यते ॥ ३ ॥ प्रथमं संप्रवक्ष्यामि समं
कृषिकर्मणः । शुभो वह्निर्नृणां चैव देवानां च विशेषतः ॥ ४ ॥ प्रकीर्णके कृषीमूले
सर्वत्र प्राणिनां समा । कृष्यभावे न संपत्स्यात्तस्मात्संप्रारभेत्कृषिम् ॥ ५ ॥ पूर्व
सुभूप्रवेशः स्यान्निमित्तं चावलोकयेत् । मैत्राश्विवस्विरोहिण्यां साहिर्बुध्न्यं कुजाद्दिभुक्
॥ ६ ॥ स्वात्युत्तरे च पुष्ये च रौद्रे याम्ये च पैत्रभे । कुर्यात्प्रवेशनं भूमेः प्रथमस्मि-
कृतासु च ॥ ७ ॥ एतेषु कौजः श्रेष्ठोत्र मध्यमौ बुधजीवयोः । शेषा वारा विवर्ज्याः
स्युः सोमवारे कदाचन ॥ ८ ॥ शुक्रज्ञजीवलग्ने वा राशौ चेष्टा शुभावहाः । प्रवेशो
गोनराणां च गवां संपदमिच्छताम् ॥ ९ ॥ एवं प्रवेशनं कृत्वा वनच्छेदनमेव च ।
दहनादिकमप्येवं कृत्वा कृषिमथारभेत् ॥ १० ॥ रोहिण्यादित्यमूलाश्विपौष्णहस्तो-
त्तरात्रयम् । मृगवस्वानुराधाश्च कृषिकर्मणि पूजिताः ॥ ११ ॥ अथ वह्निन्प्रवक्ष्यामि
बीजनिर्वापणाय च । कालः सर्वामराणां च नराणां च हितेभयोः ॥ १२ ॥ यदा
स्यादार्तवो भूमेस्तदा बीजानि वापयेत् । बीजानां तु विशेषेण धरार्तवविशेषतः
॥ १३ ॥ यस्य बीजस्य यः कालो भूमेरार्तवसंभवः । तस्मिन्काले तु तद्बीजं शु-
निर्वापयेद्बुधः ॥ १४ ॥ ज्येष्ठाख्ये मासि मूलाख्ये आषाढे च विशेषतः । सर्व-
बीजजातीनां धरायामार्तवो भवेत् ॥ १५ ॥ वारुणं वैष्णवं स्वाती पुष्ये सार्पोत्तरा-
त्रयः । रोहिणीमूलमैत्राश्च हस्तपूषाभगास्तथा ॥ १६ ॥ चतुर्दशैताः तारास्युर्बी-
जनिर्वापने तथा । वासवादित्यसौम्याश्विताराः स्युर्मध्यमावहाः ॥ १७ ॥ अन्याश्च
नव ताराः स्युर्वर्ज्या बीजनिवापने । वर्ज्येष्वपि च योगेषु शुभं स्याद्बीजवाप-
॥ १८ ॥ ओजाश्च तिथयः श्रेष्ठाः पक्षयोरुभयोरपि । प्रथमां नवमीं युग्माममावास्यां
च वर्जयेत् ॥ १९ ॥ द्वितीया दशमी षष्ठी मध्यमास्तिथयः परे । वर्ज्यास्युस्तिथयो
युग्मा बीजनिर्वापणे बुधैः ॥ २० ॥ चन्द्रज्ञजीवशुक्राणां वारा वर्गोदयः शुभाः
उदयांशदृशश्चैषां वर्ज्यकेष्वपि शोभनाः ॥ २१ ॥ अर्कारार्कजयातॄणां वारा वर्गास्त-

कादयः। उदयाश्च दशाश्चैव प्रोक्तर्क्षेष्वपि वर्जिता ॥ २२ ॥ मृगगोकर्किसिंहाःस्युर्मीनश्च शुभदा सदा। तुलामिथुनकुंभास्युर्मध्यमा वर्जिता परे ॥ २३ ॥ सहजारिभवे क्रूरा शुभा सौम्या न शोभना। विभवे वानवे सौम्या स्ववर्गो बहुपादते ॥ २४ ॥ चन्द्रो भातृसुतायस्त्रीवंधुधर्मार्थगः शुभः। अष्टमस्था ग्रहाः सर्वे नेष्टा शुक्रश्चः कामगः ॥ २५ ॥ अर्किवारश्च मध्यार्के वीजान् कृष्णान्प्रवापयेत्। शततारासु तल्लग्ने कृष्णधान्यानि वापयेत् ॥ २६ ॥ पर्यदाये गुरौ लग्ने रक्तवीजान्प्रवापयेत्। इंदुभे शालिजातीनां जीवलग्ने शुभावहम् ॥ २७ ॥ भौमवारे कुजे लग्ने निर्वपेत्कोद्रवान्बुधः। कोद्रवान्निर्वपेद्वृद्ध्यै कुजवारे यमोदये ॥ २८ ॥ माहेयवारे सौम्यर्क्षे क्रियलग्ने प्रियंगवः। निर्वाप्यो वृष्टिरिक्ताभिर्वर्जितैस्तिथिभिर्युतैः ॥ २९ ॥ त्वाष्ट्रभं मुद्गसंज्ञानां जीवलग्नं शुभावहम्। मंत्रिवारेंदुगे लग्ने बीजान्युक्तानि वापयेत् ॥ ३० ॥ हस्तपौष्णाश्विसौम्याश्च पुष्यमैत्रानिलानलाः। रोहिणी च प्रशस्ताः स्युः सर्वबीजानिवापने ॥ ३१ ॥ मूले तुतुकजातीनां जीवलग्ने शुभावहम्। तुलांत्यपादगे चन्द्रे विलग्नस्थेऽतिशोभनः ॥ ३२ ॥ निष्पापबीजं निर्वाप्यो महाधान्यविवृद्धिदः। सितवारे युते सौम्ये शुक्रलग्ने शुभे तिथौ ॥ ३३ ॥ अरण्यांश्च कृषिं कुर्यान्नवच्छेदनपूर्वकान्। इक्षुशालियवमुद्गमाषैर्भग्नशैलातिलबिल्वगव्यकैः। पद्मपत्रनिहितं ग्रहेक्षणान्नागयोगविहितं श्रियावहम् ॥ ३४ ॥ सार्पे मुहूर्ते सार्पर्क्षे करणे सार्पसंज्ञके। संयोगो नागयोगोयमथवा करणक्षये ॥ ३५ ॥ कन्याकन्यांशके जीवे लग्नस्थे विनियोजयेत्। भुवि नागतले स्थातुं चिरकालं यदिच्छसि ॥ ३६ ॥ तं केतुपंचमांशस्थे जीवलग्ने विनिक्षिपेत्। इक्षुखंडा महावृद्ध्यै शुभयोगेथवा समम् ॥ ३७ ॥ अथ हलप्रवाहमुहूर्तः। ज्योतिःसारे–मृदुध्रुवक्षिप्रचरेषु मूलभे मघाविशाखासहितेषु भेषु। हलप्रवाहं प्रथमं विदध्यान्नीरोगमुष्कान्वितसौरभेयैः ॥ ३८ ॥ हंत्यष्टमी बलीवर्दान्नवमी सस्यघातिनी। चतुर्थी कीटजननी पशून्हंति चतुर्दशी ॥ ३९ ॥ मेषलग्ने पशून्हंति कर्कटे च जलाद्भयम्। सिंहेशस्य भयं प्रोक्तं तुलायां हलसंशयः ॥ ४० ॥ मकरे सस्यनाशाय कुंभे चौरभयं भवेत्। शेषाणि शुभलग्नानि कृषिकर्मसु। उदाहृतम् ॥ ४१ ॥ बीजवापने राहुचक्र श्रीपतिः–मूर्ध्नि त्रीणि गले त्रयं च जठरे धिष्ण्यानि च द्वादश स्यात्पुच्छे भचतुष्टयं बहिरतो भानां स्थितं पंचकम्। कीटं कज्जलमत्तवृद्धिरधिकानिस्तंदुलत्वं क्रमात्स्यादीतिप्रभवं भयं च फणिभाद्बीजोप्तिकाले स्फुटम् ॥ ४२ ॥ रामः–द्वीशाजपान्निर्ऋतिधातृशतार्यमर्क्षे सस्यस्य रोपणमिहार्किकुजौ विना सत् ॥ ४३ ॥ शस्यरक्षार्थं बृहस्पतिः–विश्वाभेरक्षांशगे चन्द्रे शशिवारे विधूदये। रक्षार्थं सर्वसस्यानामुटजा कार्यविचक्षणैः ॥ ४४ ॥ मघाविष्णोश्चतुर्थांशे चाहिर्बुध्न्यस्य मध्यमे। रौद्रस्य प्रथमे कुर्यात्सिंहचापोदये मतम् ॥ ४५ ॥ सिंहचापोदये स्थाणुस्थातव्यो मृगभीतिदः। सस्यमध्येथवारामे रौद्रर्क्षे मध्यमांशयोः ॥ ४६ ॥ अदिते तु चतुर्थांशे चन्द्रजीवासिता

यदि । उद्यंति चेत्तदा कुर्याद्धान्यकामी सुरक्षणः ॥ ४७ ॥ खली वाली च संस्थाप्य सौम्यर्क्षे शीतगूदये । सोमवारयुते स्वातौ रोहिण्यां वापि पूर्वकृत् ॥ ४८ ॥ प्राजा पत्यमघाज्येष्ठाश्लेषाया हस्तयुक्तयोः । अर्कीदुतनये लग्ने धान्यप्रच्छेदनं शुभम् ॥ ४९ ॥ याम्यवैष्णववैशाखा लग्ने कर्कटवृश्चिके । प्रथमं लंबनं कुर्याच्छत्रुबुद्धि विनाशने ॥ ५० ॥ रामः—तीक्ष्णाजपादकरवाह्निवसुश्रुतींदुस्वातीमघोत्तरजलांतकतक्ष पुष्ये । मंदाररिक्तरहिते दिवसेतिशस्ता धान्याच्छिदा निगदिता स्थिरभे विलग्ने ॥ ५१ ॥ भाग्यार्यमश्रुतिमघेंद्रविधातृमूलमैत्रांत्यभेषु गदित कणमर्दनं सत् ॥ ५२ ॥ मिश्रोग्ररौद्रभुजगेंद्रविभिन्नधिष्णे कर्काजतौलिरहिते च तनौ शुभाहे । धान्यस्थिति शुभकरी गदिता ध्रुवेज्यद्वीशेंद्रदास्रचरभेषु च धान्यवृद्धिः ॥ ५३ ॥ अथनवा ज्ञान्नभक्षणविधिः । नवयज्ञाधिकारस्याच्छामाका व्रीहयो यवाः । नाश्नीया त्वानहुत्वैवमन्येष्वानियमः स्मृतः ॥ ५४ ॥ ऐक्षवः सर्वशूगाश्च नीवाराश्चणका स्तिलाः । अकृताग्रयणोऽश्नीयात्तेषां नोक्ता हविर्गुणाः ॥ ५५ ॥ रामः—नवान्नं स्या च्चराक्षिप्रमृदुभे सत्तनौ शुभम् । विनानन्दा विषघटी मधुपौषार्किभूमिजान् ॥ ५६ ॥ अथ कोल्हुचक्रम् । सूर्यर्क्षाद्गिरिपुत्रकस्य तलतो भूरिक्षुकण्ठे नगा ऊर्ध्वभ्रांतौ मिन्मये च नवकं गोस्कंधकाष्ठे त्रयम् । तिर्यग्भ्रान्तसुदारुके च गिरयो नष्टार्थवृद्ध्या ग्निभसौख्यं गोहतिरिज्यकानिलकरां स्यादित्यमैत्रश्रुतौ ॥ ५७ ॥ अथ प्रकारा न्तरम् । अन्यत्रापि—वेदद्विनेत्रभूभूतबाणहस्तरसाः क्रमात् । प्रथमे च भवेल्लक्ष्मी द्विती हानिमेव च ॥ ५८ ॥ तृतीये सर्वलाभं च चतुर्थे तु क्षयं तथा । पंचमे च भवेन्मृत्यु षष्ठस्थाने शुभं स्मृतम् ॥ ५९ ॥ सप्तमे चैव पीडा स्यादष्टमे धनधान्यदम् । सूर्यभा द्गणयेचान्द्रमिक्षुयंत्रे नियोजयेत ॥ ६० ॥

| तल | कंठ | ढेंका | जुआ | कातार |
|---|---|---|---|---|
| १ | ७ | ९ | ३ | ७ |
| नेष्ट | वृद्धि | अग्नि | सौख्य | गोनाश |

अथ कूपचक्रम् । अथाहं संप्रवक्ष्यामि कूपचक्रं समासतः । रोहिण्यादि गणयेद्यत्र तिष्ठति चन्द्रमाः ॥ ६१ ॥ अथवा सूर्यनक्षत्राद्गणयेच्च त्रिकं त्रिकम् । म शीघ्रजलं स्वादु पूर्वे भूमिश्च खण्डकम् ॥ ६२ ॥ आग्नेय्यां सजलं प्रोक्तं याम्ये नि लता तथा । नैर्ऋते चामृतं वारि वारुण्यां शीतलं जलम् ॥ ६३ ॥ वायव्ये परि हंति उत्तरे चोत्तमं जलम् । ईशाने कटुकं क्षारं भूमिरेव न संशयः ॥ ६४ ॥ अ कूपारंभे नक्षत्रग्रहणम् । ज्योतिषसारे—हस्तात्तिस्रो वासवं वारुणं च शैवं पि त्रीणि चैवोत्तराणि । प्राजापत्यं चापि नक्षत्रमाहुः कूपारंभे श्रेष्ठमाद्या मुनींद्राः ॥ ६५ अथ तडागचक्रम् । तडागचक्रं वक्ष्यामि यदुक्तं ब्रह्मयामले । सूर्यर्क्षाच्च

यावद्गणयेत्सततं बुधैः ॥ ६६ ॥ दिक्षु ऋक्षद्वयं न्यस्य मध्ये पंच नियोजयेत् । ऋक्षाणि वारिवाहे षट्ट फलं तत्र विचारयेत् ॥ ६७ ॥ पूर्वस्थाने भवेच्छोको आग्नेय्यां सलिलं बहु । दक्षिणे वारिनाशं च नैर्ऋते चामृतं जलम् ॥ ६८ ॥ पश्चिमे बहुभवारि वायव्ये निर्जलं तथा । उत्तरे चोत्तमं वारि ईशाने कुत्सितं तथा ॥ ६९ ॥ मध्ये शीघ्रजलं प्रोक्तं वारिवाहेंबुनाशम् ॥ ७० ॥ इति श्रीज्योतिर्विद्दयादत्तात्मजरामदीनकृते संग्रहे बृहद्दैवज्ञरंजने सप्तसप्ततितमं कृषिप्रकरणं समाप्तम् ।

---

## अथाष्टसप्ततितमं रोगप्रकरणं प्रारभ्यते ।

अथ रोगोत्पत्तेर्दिनावधिकथनम् । बृहस्पतिसंहितायाम्-द्विदैवत्यमघाश्लेषारोहिण्यार्द्रासु नैऋते । बहुलायां विषैर्दष्टो न प्राणीति कुमारतः ॥ १ ॥ मघायां विंशतिर्यावद्दिनान् जीवेच्छुभे दिने । ज्येष्ठे विशाखभे हस्ते रोगी मासार्द्धतः सुखी ॥ २ ॥ चित्रायां वैष्णवे याम्ये वारुणे सौम्यवारगे । रोगी एकादशाहेन सुखी स्याद्यमसादपि ॥ ३ ॥ मूलाश्विकृत्तिकापुष्यपुनर्वसुसुखारगाः । यदि रोगी नवाहाद्वा सप्ताहाद्वा सुखी भवेत् ॥ ४ ॥ रोहिण्युत्तरफाल्गुन्योरहिर्बुध्न्ये तथामयी । सप्ताहाद्वा नवाहाद्वा सुखी भवति वृत्रहन् ॥ ५ ॥ उरगवरुणरुद्रा वासवेंद्रत्रिपूर्वा यमबहुलयुता सा पापवारेण युक्ताः । तिथिषु गतवतीष्टाद्वादशीभिश्चतुर्थीसहितमरणयोगे रोगिणो मृत्युरेव ॥ ६ ॥ इति निगदितरोगे चास्य रोगस्य शान्त्यै कथयति चतुरास्यः कालमिचौषधीनाम् । मरणदलनक्षारक्रोधलेपादिपानप्रवहदहनकर्मण्यत्र तस्योदितेषु ॥ ७ ॥ विशल्यकरणादीनामपि कालाद्विनाफलम् ॥ ८ ॥ रौद्रेषु सार्पज्वलनेषु सौम्ये स्वातित्रिपूर्वावसुरोहिणीषु । स्वात्याश्विहस्तादिसपौष्णमैत्रेषूक्तं चरांशे शुभमौषधीनाम् ॥ ९ ॥ वारोतिशीघ्रे ग्रहसंयुतस्य रिक्तासु नंदासु जयासु योगे । लग्ने चरे चन्द्रनिरीक्षिते च क्रियां विदध्यादपि चौषधीनाम् ॥ १० ॥ दर्शे वापि शुभं विंद्यादूगुह्यरोगप्रशांतये ॥ ११ ॥ क्षिप्रोग्रचरनक्षत्रे मेषकर्कटकोदये । पापग्रहदिने स्वांशा चित्रास्वात्योर्हरेस्तिथौ ॥ १२ ॥ नंदायां स्थिरलग्ने वा कंटके शुभसंगदि । सर्वव्याधिविनाशाय विदध्यादौषधं बुधः ॥ १३ ॥ शुभवारे तिथींद्रेषु शुभांशे कर्कटेगते । स्वातिमैत्रयमाश्विन्यां रौद्रेपि चित्रपुष्ययोः ॥ १४ ॥ औषधं व्याधिनाशाय कुर्यात्कृपकुलीरयोः ॥ १५ ॥ क्षिप्रोग्रचरभे वारे सौम्यरिक्ता शुभे दिने ॥ १६ ॥ अथ प्रमेहरोगः । अष्टादशप्रमेहे तु कर्तव्या चौषधिक्रिया । पापवारेंदुतिथ्यन्तेपापकान्युदये नृणाम् । पापदृष्टे क्रियां कुर्यादौषधं च कुरोगिणाम् ॥ १७ ॥ मंदांशे दलग्ने च मंददृष्टियुतोदये । मंदराशौ क्रियां कुर्यादौषधं च कुरोगिणाम् ॥ १८ ॥ अथ राजयक्ष्मा । साधारणाख्यनक्षत्रे वक्रग्रहनिरीक्षिते । विष्टिवर्ज्ये तिथौ

कुर्यात्सत्क्रियां राजयक्ष्मणाम् ॥ १९ ॥ अपस्मारादि रोगाणामेवं शोभनदा क्रिया ।
कर्तव्या प्रोक्तकालेषु मंत्रौषधविशारदैः ॥ २० ॥ विपरीताख्यविप्रांस्तु कर्तव्
शुभमिच्छता । औषधं नाडिकां वापि अमृताख्ये विषापरि ॥ २१ ॥ त्र्युत्तरेषु च
रोहिण्यां वायुभे चाश्विनीषु च । चन्द्रशुक्रगुरोर्वारे स्नातो नीरोगतामियात् ॥ २२ ॥
शिवशक्राहियाम्याग्निमघापूर्वात्रयस्तथा । पापवारयुता योगाः पौनःपुन्यश्रमे
ह्वया ॥ २३ ॥ एषु भैषज्यमारोग्यं स्नातो नीरोगतामियात् । याम्याग्नेयाख्यरौद्रे
पापवारिचरोदये ॥ २४ ॥ नंदायां पित्तशांत्यर्थं भिषजेनातिना भिषक् । प्राजापत्ये
च पौष्णे च भेषजं पित्तशांतये ॥ २५ ॥ अथापस्मारः । श्रवणे चाहिर्दैवत्ये
तुरगे गुरुवारुणे । जयायां वातशांत्यर्थं भेषजे स्नापयेच्च तम् ॥ २६ ॥ उग्रयोगे
कर्तव्यं भैषज्यं दीर्घरोगिणाम् । विषक्षये च गुल्मे च अपस्मारे क्षयेषु च ॥ २७ ॥
सिन्नेपिल्ले चरे लग्ने भैषज्यं चरमिच्छता । चरभे स्वाशके चन्द्रे चरराश्यंशकोदये ।
भैषज्यं रोगनाशाय स्नानं कुर्याद्विचक्षणः ॥ २८ ॥ उभयेति समं प्रोक्तं चन्द्रे चन्द्र
दिवाकरौ । यदि युक्तैः स्थिरेणैव कर्तव्या व्याधिशांतिदम् ॥ २९ ॥ मंदे जीवांशे
वारे रिक्तायां मंदवारयोः । लग्ने रोगविनाशाय भेषजे स्नापयेच्च तम् ॥ ३० ॥ ये
योगाश्चोदिता रोगास्ते योगा रोगशांतये । रुगादिशांतये चैव चोदिता मुनिस
त्तमैः ॥ ३१ ॥ व्यतीपाते क्षयं दानं व्यतीपाते च रोगिणाम् । स्नानभैषज्ययोर्योग
शत्रूणां च प्रतिक्रिया ॥ ३२ ॥ वरुणार्द्राश्रविष्ठाः स्युः क्रियकर्क्योदये यदि
आरार्कशनिराहूणां भेषजं दर्शनं शुभम् ॥ ३३ ॥ यदैकांशविलग्नस्थौ मंदकेतू कवि
चदा । रोगिणो रोगनाशाय कुर्याद्रोगप्रतिक्रियाम् ॥ ३४ ॥ औषधकर्म । दैवज्ञ
मनोरंजने—पौष्णद्वये चादितिभद्वये च हस्तत्रये च श्रवणत्रये च । मैत्रे च मूले
च मृगे च शस्तं भैषज्यकर्म प्रवदंति संतः ॥ ३५ ॥ औषधभक्षणमुहूर्तः ।
मूलानुराधावसुसौम्यभेषु चित्राश्विनीपुष्यमृगानिलेषु । शनीशनारायणरेवती
शुभप्रदं भेषजभक्षणादि ॥ ३६ ॥ हस्तादितिश्रवणसोमसमीरणेषु मूलानलेंद्रवसुति
ष्ययुतेषु भेषु । भैषज्यपानमचिरादपहृत्य रोगं कंदर्पतुल्यवपुषं पुरुषं करोति ॥ ३७ ॥
भैषज्यकर्माणि च भक्षणे च रोगक्षयं वपुषि सुंदरतां च पुष्टिम् । कुर्वंति सौख्यम
धिकं च दिनाधिनाथचन्द्रात्मजावनिसुतामरपूज्यवाराः ॥ ३८ ॥ अन्यत्रापि—
हस्तत्रये मृगे मूले दितियुग्मे हरित्रये । मैत्रपौष्णद्वये कर्म भैषज्यस्य शुभं
भवेत् ॥३९॥ मूलाश्विन्यां मृगे मैत्रे स्वात्यामिंदुगुरौ हरौ । चित्रांत्ये वासवे वह्नौ भक्षये
दौषधं बुधः ॥ ४० ॥ हस्तादित्यां मृगे विष्णुः स्वात्यां वासवपुष्यभे । पिबेच्चित्रा
नले मूले यत्नात्तत्रौषधं बुधः ॥ ४१ ॥ वारा निगदिताः शस्ता भैषज्यस्य
कर्मणि । सुरेज्यभार्गवादित्यचन्द्रा नित्यं बुधैः सदा ॥ ४२ ॥ शस्ते योगे शुभे
चन्द्रे कुर्यादौषधभक्षणम् । निरोगार्थी नरः शस्ते करणे न तिथिक्षये ॥ ४३

चतुर्थ्यां च चतुर्दश्यां नवम्यामौषधं शुभम् । वारे भौमे शनौ सौम्ये भक्षयेन्नैव निश्चितम् ॥ ४४ ॥ पूर्णिमायां च पंचम्यां सप्तम्यामौषधं सदा । भक्षयेच्च त्रयोदश्यां द्वितीयादि द्वये बुधः ॥ ४५ ॥ एकादश्यां दशम्यां च वारे जीवेंदुभार्गवे । सादित्ये मिथुने लग्ने कन्या चापे झषे तथा ॥ ४६ ॥ शुभे युक्ते शुभैर्दृष्टे पापग्रहविवर्जिते । सर्वेषामौषधानां च शस्तं भवति भक्षणम् ॥ ४७ ॥ त्रिषडेकादशे पापाः सौम्याः सर्वेषु शोभनाः । भक्षणेप्यौषधीनां च पुष्टिदा वृद्धिदाः सदा ॥ ४८ ॥ खेर्को जीवो भृगुर्वापि लग्नेप्यौषधभक्षणे । तेषां रोगा विनश्यंति सूर्येणैव तमो यथा ॥ ४९ ॥ अथ प्रश्नाद्बाधाज्ञानमाह । तिथिवारं च नक्षत्रं लग्नं यामं च संयुतम् । वसुभिश्च हरेद्भागं शेषं बाधा नियोजयेत् ॥ ५० ॥ हयाग्निदेवबाधा च पितरौ नेत्रदंतिनः । षट्चतुर्थे भूतबाधा ग्रहाणामेकपंचके ॥ ५१ ॥ भक्ता द्वादशशेषेण जीवनं मरणं फलम् । रामबाणरसाष्टौ च नन्दरुद्राश्च जीवति । एकपक्षयुगः सप्तदशभानुर्न जीवति ॥ ५२ ॥ अन्यच्च राजमार्तंडे॥ वारर्क्षे च तिथिर्दिशा-परिमितं संहृत्य नागैर्भजेल्लब्धांकेन फलं च नागनयने दोषं पितुर्नान्यथा । सप्ते राममिते सुरस्य विदितं तर्के च वेदे तथा प्रेतस्यापि च खेचरस्य विदितं चन्द्रेथ वाणेधिके ॥ ५३ ॥ लब्धांकं त्रिगुणं तथा वसुयुतं वेदेन गुण्यं ततः सप्तांत्येप्यधिकं यथा विधुमितं कौल्यं च दोषं वदेत् । ग्राम्यं वन्यभवं च राजकुलजं स्याच्छत्रुजं पंक्तिजं शून्ये व्योमभवं तथाहि विविधोपायैश्च शान्तिं लभेत् ॥ ५४ ॥ कौल्ये होमद्विजार्चनं शुभकरं ग्राम्ये चतुष्कोणके होमं वन्यभवेत्तिथिं वरभवैर्भोज्यैश्च वस्त्रेण वा । राज्ये तीर्थपदं तथाप्यरिकृते शक्तिक्रियादानतो गायत्रीजपतो हि पंक्तिविषये चाकाशजो दीपितः ॥ ५५ ॥ अथ रोगमुक्तस्नानम् । रामः-व्यन्त्यादितिध्रुवमघानिलसार्पधिष्णे रिक्ते तिथौ चरतनौ विकवींदुवारे । स्नानं रुजा विरहितस्य जनस्य शस्तं हीने विधौ खलखगैर्भवकेन्द्रकोणे ॥ ५६ ॥ अन्यदपि-इंदोर्वारे भार्गवेषु ध्रुवेषु सार्पादित्यस्वातियुक्तेषु भेषु । पित्र्यं चांत्ये चैव कुर्यात्कदाचिन्नैव स्नानं रोगनिर्मुक्तजंतोः ॥ ५७ ॥ आर्द्रातिष्यविशाखशक्रदहने मूलानुराधाश्विनी पूर्वाषाढहरित्रये निगदितं चन्द्रो विहीनः शुभः । सूर्यारार्किदिने गुरौ शुभकरे केन्द्रे च पापान्विते रिक्तायां च तिथौ सविष्टिकरणे स्नानं हितं रोगिणाम् ॥ ५८ ॥ चरे लग्ने रविभौमवारे रिक्तातिथौ चन्द्रबले विहीने । केंद्रत्रिकोणायगताश्च पापाः स्नानं नराणां निरुजत्वकारि ॥ ५९ ॥ वैधृतिव्यतिपाते च भद्रायां सूर्यसंक्रमे । रोगमुक्तो नरः स्नायात्कुवारर्क्षतिथिष्वपि ॥ ६० ॥ सोमशेखरे-चन्द्रशुद्धौ व्यतीपाते भौमार्केशनिवासरे । व्रणमुक्तो व्याधिमुक्तः नरः स्नानं समाचरेत् ॥ ६१ ॥ अथ रुधिरमोक्षणम् । चण्डेश्वरः-ज्येष्ठादित्यभवासवाशिवकरौ ब्राह्मोत्तरारेवती आग्नेयाततारकापित्र्यमेपूर्वात्रयं चोत्तमम् । विज्ञेयाशुभतारकाशुभविधौ शंसंति गर्गादयः

दुंबीश्रीहतश्रृंगिणीजलजुकाभिः शोणितं मोक्षणम् ॥ ६२ ॥ रामः—त्वष्ट्राग्निमित्रकभ द्र्येंबुपलघुश्रोत्रे शिरामोक्षणं भौमार्केज्यदिने विरेकवमनाद्यं स्याद्बुधार्कि विना ॥ ६३ ॥ ज्योतिःसागरे—चित्रायुगे विधियुगे लघुषु वारुणे विष्णौ । बस्तिविरेचनवेधा शुभदिन तिथिचन्द्रलग्नेषु ॥ इति ॥ ६४ ॥

रोगोत्पत्तौ वारफलम् ।

| वार | दिन | |
|---|---|---|
| रविवार | ८ | फलवृक्षे बलिः कन्यकां पूजयेत् । |
| चंद्रवार | ९ | आकाशमांत्रिणा बलिः गुग्गुलचंदनधूपः । |
| भौमवार | १२ | सप्तान्नाश्येनकन्यकां पूजयेत् पानीयपथ्यं दद्यात् । |
| बुधवार | १७ | ब्राह्मणभोजनं शांतिः कार्या । |
| गुरुवार | ११ | कुष्टगुग्गुलनायवतिलसिद्धार्थमिश्रधूपः छागक्षीरेणछागमांसेनपथ्यं दद्यात् |
| शुक्रवार | ७ | कुमारीपूजनं क्षीरशर्करापिप्पली छागमांसं कंटकारीपथ्यं दद्यात् । |
| शनिवार | २३ | सर्षपगुग्गुलतिलधूपः शांतिः कार्या कुमारीभोजनम् । |

अथ सर्पविद्या—ब्राह्मणाः श्वेतवर्णास्तु क्षत्रिया रक्तवर्णकाः । वैश्यास्तु पीत वर्णाः स्युः कृष्णवर्णास्तु शूद्रकाः ॥ ६५ ॥ अनंतः कुलिकश्चैव वासुकिः शंखपालकः तक्षकश्च महापद्मः कर्कोटः पद्मएव च ॥ ६६ ॥ कुलनागाष्टकं ह्येतत्तेषां चिह्नं शिवो दितम् ॥ ६७ ॥ श्वेतपद्ममनंतस्य मूर्ध्नि पृष्ठे च दृश्यते । शंखं शेषस्य शिरसि वासुके पृष्ठ उत्पलम् ॥ ६८ ॥ त्रिनेत्रांकस्तु कर्कोटस्तक्षकः शशकांकितः । ज्वर त्रिशूलं चन्द्रार्धं शंखपालस्य मूर्द्धनि ॥ ६९ ॥ राजवत्तु समो विंदुर्महापद्मस्य पृष्ठतः । सप्तपृष्ठे च दृश्यंते सुरक्ताः पंच विंदवः ॥ ७० ॥ एवं यो वेत्ति जात्यादी नामचिह्नं शिवोदितम् । तस्य मंत्रौषधान्येव सिद्ध्यंते नान्यथा पुनः ॥ ७१ ॥ दू स्तस्य सर्पाद्याः पतंति गरुडे यथा । कालाख्या नाम तच्चिह्नं शिवेनोक्तं यथा पु ॥ ७२ ॥ ज्ञेयो दशविधो दंशो भुजंगानां भिषग्वरैः । भीतोन्मत्तः क्षुधार्तश्च, आक्रां विषदर्पितः ॥ ७३ ॥ आहारेच्छुः सरोषश्च स्वस्थानपरिरक्षणे । नवमो वैरिसंध दशमः कालसंज्ञकः ॥ ७४ ॥ उद्याने जीर्णकूपे च वटश्रृंगाटचत्वरे । शुष्क श्मशानेथ प्लक्षश्लेष्मातशिग्रुके ॥ ७५ ॥ देवतायतनागारे तथा च शाकवृक्षके । स्थानेषु ये दष्टास्ते न जीवंति मानवाः ॥ ७६ ॥ भ्रूमध्ये चाधरे मूर्ध्नि जंघे नेत्रे श्र स्तथा । ग्रीवाचिबुककंटेषु करमध्ये च तालुके ॥ ७७ ॥ स्तनयोः स्कंधयोः कु लिंगवृषणनाभिषु । मर्मसंधिषु सर्वत्र सर्पदष्टो न जीवति ॥ रविभौमे शनिवारे सर्प न जीवति ॥ ७८ ॥ अथ सर्पदष्टः । द्विदैवत्यमघाश्लेषारोहिण्यार्द्रासु नैर्ऋ बहालायां विषैर्दष्टो न प्राणिति कुमारतः ॥ ७९ ॥ अष्टमी पंचमी पूर्णा अमावा चतुर्दशी ॥ ८० ॥ अशुभास्तिथयः प्रोक्ताः सर्पदष्टविनाशकाः । कृत्तिका श्रवणा विशाखा भरणी तथा ॥ ८१ ॥ पूर्वास्तिस्रस्तथा चित्राश्लेषादष्टो न जीव

मध्याह्ने संध्ययोश्चैव अर्द्धरात्रे निशात्यये ॥ ८२ ॥ कालवेला वारवेला सर्पदष्टो न जीवति ॥ ८३ ॥ सर्पस्य तालुका मध्ये दंतो योंकुशसन्निभः । विमुंचति विषं घोरं तेनाख्यं कालसंज्ञकः ॥ ८४ ॥ श्रीपतिः–यः कृत्तिकामूलमघाविशाखा सार्पांतकाद्रौसु भुजंगदष्टम् । स वैनतेयेन सुरक्षितोपि प्राप्नोति मृत्योः सदनं मनुष्यः ॥ ८५ ॥ चक्राकृतिश्च वा दंशः पक्वजंबूफलाकृतिः । सुनीलः श्वेतरक्तो वा त्रिदशोपि न जीवति ॥ ८६ ॥ वेदना दंशमूले वा नष्टदंशोथ वा भवेत् । तत्क्षणात्तीव्रदाहश्च सोपि कालेन भक्षितः ॥ ८७ ॥ सेचनादुदकेनाथ शीतलं न मुहुर्मुहुः । रोमांचो न भवेद्यस्य तं विद्यात्कालभक्षितम् ॥ ८८ ॥ स्रवेन्मूत्रपुरीषं वा हृच्छूलं छर्दिदाहकृत् । सानुनासिकया वाक्यं संधिभेदमथापि वा ॥ ८९ ॥ ताम्राभं नेत्रयुगलमथवा कृकनीलकम् । वियोगो देवदष्टाख्यस्तं विद्यात्कालपार्श्वगम् ॥ ९० ॥ सोमं सूर्यं तथा दीप्तिं न पश्यति च तारकान् । दर्पणे सलिले वाथ घृततैलेथ वा मुखम् ॥ ९१ ॥ न पश्येद्वीक्षमाणोपि कालदष्टो न संशयः । ज्ञात्वा कालमकालश्च पश्चाद्भेषजमाचरेत् ॥ ९२ ॥ सर्पदंशे विषं नास्ति कालदष्टो न जीवति । तस्य तत्रापि कर्तव्या चिकित्सा जीवनावधि ॥ ९३ ॥ रसदिव्यौषधीनां च प्रभावात्कालजिद्भवेत् ॥ ९४ ॥ अथ सर्पविषौषधिकथनम् । श्वेतापराजितामूलं देवदालीयमूलकम् । वारिणा पेषितं नस्यं कालदष्टेपि जीवति ॥ ९५ ॥ दधिमधुनवनीतं पिप्पलीशृंगबेरं मरिचमपि च कुष्ठं चाष्टमं सैन्धवं च । यदि दशति सरोषस्तक्षको वासुकिर्वा यमसदनगत स्यादानयेत्तत्क्षणेन ॥ ९६ ॥ कटुकी मूषलीमूलं पीत्वा तोयैर्विषापहः । वृश्चिकावीरलामूलं लेपात् सर्पविषापहम् ॥ ९७ ॥ सोमराजीबीजचूर्णं सकृद्गोमूत्रभावितम् । चराचरविषघ्नं तं मृतसंजीवनं पिबेत् ॥ ९८ ॥ गोमूत्रैर्नरमूत्रैर्वा पुराणेन घृतेन वा । हरिद्रापानमात्रेण विषं हंति चराचरम् ॥ ९९ ॥ दशवर्षात्परं सर्पिः पुराणमिति कथ्यते । यदि सर्पविषार्तानां सर्वस्थानगतं विषम् । गोक्षीरे रजनीक्वाथं पिबेत्सर्पविषापहम् ॥ १०० ॥ गोक्षीरे रजनी कुष्ठं क्वाथमानं विषापहम् । हरिद्रा कुष्ठमध्वाज्यं भुक्तं सर्वविषापहम् ॥ १ ॥ कटुकी जंबुमूलं वा तक्राम्लैर्वा पिबेज्जलैः । तत्क्षणाद्वमयेच्छीघ्रं विषयोगाद्विमुच्यते ॥ २ ॥ कुंकुमालक्तकं लोध्रं शिला चैवाथ रोचना । गुटिकालेपनाद्धंति विषं स्थावरजंगमम् ॥ ३ ॥ पिप्पलीमरिचं कुष्ठं गृहधूममनःशिलाम् । तालकं सर्षपाः श्वेता गवां क्षीरेण लेपयेत् ॥ ४ ॥ गुटिकांजननस्येह पानाभ्यंजनलेपनात् । तक्षकेणापि दष्टस्य निर्विषीकुरुते क्षणात् ॥ ५ ॥ अपराजितमूलं तु घृतेन त्वग्गतं विषम् । पयसा रक्तगं हंति मांसगं कुष्ठचूर्णतः ॥ ६ ॥ अस्थिगं रजनीयुक्तं मेदगं काकुलीयुतम् । मज्जागं पिप्पलीयुक्तं चांडालीकंदसंयुतम् ॥ ७ ॥ शुक्रगं हंति लौहित्यं तस्माद्देयापराजिता । अत्यंतविषरोगार्तान् जलमध्ये विनिक्षिपेत् ॥ ८ ॥ मसूरं निंबपत्राभ्यां खादेन्मेषगते रवौ । अब्दमेकं न भीतिः स्याद्विषात्तस्य न संशयः ॥ ९ ॥

मसूरं निंबपत्राभ्यां योत्ति मेषगते रवौ । अतिरोषान्वितस्तस्य तक्षकः किं करि-
ष्यति ॥ ११० ॥ इति श्रीज्योतिर्विद्रयादत्तात्मजरामदीनकृते संग्रहे बृहद्दैवज्ञरंजने
अष्टसप्ततितमं रोगप्रकरणं समाप्तम् ।

## अथ एकोनाशीतितमं दीक्षाप्रकरणं प्रारभ्यते ।



दिव्यज्ञानं. यतो दद्यात्कुर्यात्पापस्य संक्षयम् । तस्माद्दीक्षेति सा प्रोक्ता मुनिभि-
स्तंत्रवेदिभिः ॥ १ ॥ जपपूजादिकं सर्वं कार्यं दीक्षान्वितं नरैः । अदीक्षितायें कुर्वंति
जपपूजादिकाः क्रियाः ॥ २ ॥ फलं नैव भवेत्तेषां शिलायामुप्तबीजवत् ॥ ३ ॥ वसन्ते
विप्रगृह्णीयाद्ग्रीष्मे क्षत्रियगृह्यते । शरत्काले च वैश्यस्य शूद्रस्य शिशिरागमे ॥ ४ ॥
प्रातःकाले वसंते च ग्रीष्मे मध्ये गते रवौ । संध्यायां च शरत्काले शिशिरे चार्द्ध-
रात्रिके ॥ ५ ॥ अथवा सर्वऋतु प्राप्य मध्याह्ने चैव शुभं भवेत् । शुभां शान्ति प्रव-
र्तंते पुत्रपौत्रादिकादयः ॥ ६ ॥ चैत्रेनिष्टफलं ज्ञेयं नात्र कार्या विचारणा । वैशाखे
क्षेत्रलाभाय ज्येष्ठे च मरणं ध्रुवम् ॥ ७ ॥ आषाढे बंधुनाशाय श्रावणे सुखमेव च ।
दैन्यं भाद्रपदे मासि आश्विने रत्नसंपदः ॥ ८ ॥ कार्तिके च महालक्ष्मीर्मार्गशीर्षे
न संपदः । पौषे च प्राप्यते मुक्तिः माघे संपत्तिरुत्तमा ॥ ९ ॥ फाल्गुने सर्वकार्याणां
सिद्धिर्भवति निश्चितम् । शुक्लपक्षे शुभादीनां कृष्णायां पंचमीदिनात् ॥ १० ॥ प्रति-
पद्दीक्षा द्वितीयायां न प्राप्तिः परिकीर्तिता । तृतीयायां च सिद्धिः स्याच्चतुर्थी
सस्यसंपदः ॥ ११ ॥ पंचमी धनवृद्धिश्च षष्ठी चैव दरिद्रता । सर्वसिद्धिकरा सप्त-
चाष्टमी धनदायका ॥ १२ ॥ नवमी वर्द्धते आयुः दशमी सुखकारिणी । एकादश्यां
ज्ञानसिद्धिः द्वादशी मुक्तिदायिका ॥ १३ ॥ शुक्ला त्रयोदशी पुण्या धनधान्यसमाकु-
लां । चतुर्दशी शुभा ज्ञेया पौर्णमासी च सिद्धिदा ॥ १४ ॥ आमावास्यां भवेत्क्लेशः
सर्वदा परिवर्जयेत् । द्वितीयायां तृतीयायां पंचमी सप्तमी तिथिः ॥ १५ ॥ दश-
म्यादित्रये चैव पूर्णिमायां तथैव च । मंत्रारंभः शुभः प्रोक्तो नान्यत्र शुभवाञ्छितः
॥ १६ ॥ शनौ दीक्षा सुखं प्रोक्तं गुरौ सर्वार्थसंपदः । शुक्रे सोमे तथा सौख्य-
मन्ये चैव विवर्जयेत् ॥ १७ ॥ अन्यः—रवौ सोमे बुधे शुक्रे गुरुवारे तथैव च ।
मंत्रारंभः शुभः प्रोक्तो नान्यवारे कदाचन ॥ १८ ॥ अश्वेधातामृगश्चैव दितिपुष्य-
मघात्रयम् । हस्तादि पंचभं चैव मूलादित्रितयं तथा ॥ १९ ॥ शतभिषाद्यानि
चत्वारि मंत्रारंभे शुभानि वै । प्रीतिसौभाग्ययोश्चैव ध्रुवयोगस्तथैव च ॥ २० ॥
आयुष्मान् शुभसिद्धो वा वृद्धियोगस्ततः परः । हर्षणश्च तथा योगो मंत्रारंभे
प्रशस्यते ॥ २१ ॥ बवश्च बालवश्चैव तैतिलं कौलवं तथा । दीक्षायां शुभदानि स्युरिमानि
करणानि च ॥ २२ ॥ वृषसिंहधनुःकन्यामीनलग्ने शुभे विधौ । ताराशुद्धौ प्रशु-

र्वीत दीक्षाकर्म विचक्षणैः ॥ २३ ॥ वृषे सिंहे च कन्यायां धनुर्मीने च लग्नके । चन्द्रतारानुकूलेपि कुर्याद्दीक्षां सुसाधकः ॥ २४ ॥ स्थिरं लग्नं विष्णुमंत्रे शिवमंत्रे चरं शुभम् । द्विस्वभावगतं लग्नं शक्तिमंत्रे प्रशस्यते ॥ २५ ॥ मुहूर्तमुक्तावल्याम्-मासेस्याश्विनतो हि षट्सु पुरतो सुश्रावणे माधवे भद्रा पूर्णत्रयोदशी शुभतिथौ शुक्रेंदुजेंदौ गुरौ । रोहिण्युत्तरशाक्रशंकरमरुत्पुष्यद्विदैवाश्विनीविष्णुश्चन्द्रवले सुलग्नसमये प्रारंभमंत्रस्य च ॥ २६ ॥ चैत्रे रामनवम्यां च ज्येष्ठे च निर्जलादिने । ग्रहणे सर्वकाले च दीक्षादानं विधीयते ॥ २७ ॥ निषिद्धसमयेपि विशेषः-कार्तिके नवमी शुक्ला मार्गशीर्षे तृतीयकाः । पौषे च नवमी शुक्ला चैत्रे कामचतुर्दशी ॥ २८ ॥ वैशाखे त्वक्षया शस्ता ज्येष्ठे दशहरा तिथिः । आषाढे पंचमी शुक्ला श्रावणे कृष्ण-पचमी ॥ २९॥ अन्यः-चैत्रे त्रयोदशी शुक्ला वैशाखैकादशी सिता । ज्येष्ठे चतुर्दशी शुक्ला आषाढे नागपंचमी ॥ ३० ॥ श्रावणैकादशी भाद्रे रोहिणी संयुताष्टमी । आश्विने च महाष्टम्यां कार्तिके नवमी शुभा ॥ ३१ ॥ मार्गशीर्षे तृतीयां च फाल्गुनस्य सिताष्टमी । एतानि देवपर्वाणि तीर्थकोटिसमानि वै ॥ ३२ ॥ क्षत्रियो ब्राह्मणे दद्यात्कुष्ठव्याधिः प्रवर्तते । वैश्यस्तु क्षत्रियो दद्यात्क्रियाहानिः प्रजायते ॥ ३३ ॥ शूद्रो वैश्याय यो दद्यात्सर्वहानिर्भवेद् ध्रुवम् । यती दीक्षा गृही प्राप्य पुत्रपौत्रादिनाशनम् ॥ ३४ ॥ पुत्रारोग्यं तथैश्वर्यं गृही दीक्षां च ब्राह्मणः । अत्र वारादिकं किंचिन्न विचार्यं विचक्षणैः ॥ ३५ ॥ मन्वंतरासु तिथिषु युगाद्यासु तथैव च । रविसंक्रमणे चैव दीक्षाकर्म प्रशस्यते ॥ ३६ ॥ अयने विषुवे चैव ग्रहणे चन्द्र-सूर्ययोः । तत्र लग्नादिकं किंचिन्न विचार्यं मनीषिभिः ॥ ३७ ॥ न कुर्याच्छाक्तिकीं दी-क्षामुपरक्ते विभावसौ । न कुर्याद्वैष्णवीं दीक्षां यदि चन्द्रमसो ग्रहः ॥ ३८ ॥ श्री-विद्यामंत्रदीक्षा तु शस्ता सूर्यग्रहेपि च । दीक्षा गोपालमंत्राणां चन्द्रस्य ग्रहणेपि च ॥ ३९ ॥ ग्रहणे च महातीर्थे न कालं च परिक्षयेत् । अमावास्या सोमवारे भौमवारे चतुर्दशी ॥ ४० ॥ सप्तमी रविवारे च सूर्यग्रहशतैः समाः । शिष्यानाहूय गुरुणा कृपया दीयते यदि । तदा लग्नादिकं किंचिन्न विचार्यं कदाचन ॥ ४१ ॥ सर्वे वारा ग्रहाः सर्वे नक्षत्राणि च राशयः । यस्मिन्नहनि संतुष्टो गुरुः सर्वे शुभावहाः ॥ ४२ ॥ स्वरोदये-एकनाडी स्थिता यत्र गुरुमंत्राश्च देवताः । तत्र द्वयं रुजं मृत्युं क्रमेण फलमादिशेत् ॥ ४३ ॥ विश्वसारतंत्रे-कलामुपदेशमात्रमुक्तम् । महादीक्षा तथा दीक्षा उपदेशस्तदंतरम् । युगे युगे च कर्तव्या उपदेशाः कलौ युगे ॥ ४४ ॥ चन्द्रसूर्यग्रहे तीर्थे सिद्धिक्षेत्रे शिवालये । मंत्रमात्रं तु कथनमुपदेशः स उच्यते ॥ ४५ ॥ इति श्रीज्योतिर्विद्वयादत्तात्मजरामदीनकृते संग्रहे बृहद्दैवज्ञरंजने एकोनाशीतितमं दीक्षा-प्रकरणं समाप्तम् ।

---

## अथाशीतितमं अग्न्याधानप्रकरणं प्रारभ्यते ।

पारस्करगृह्यसूत्रे–आवसथ्याधानं दारकाले दायाद्यकाल एकेषाम् । अग्न्याधानं दारकाले विधेयं केचित्प्रोक्तं तच्च दायादकाले । शक्रोग्नेभे शक्रभे कृत्तिकायां सौम्ये ब्राह्मे पुष्यपौष्णोत्तरासु ॥ १ ॥ प्राजापत्ये पूषभे सद्विदैवे पुष्ये ज्येष्ठास्वेंदवे कृत्तिकासु । अग्न्याधानं उत्तराणां वये च श्रेष्ठं प्रोक्तं प्राक्तनैर्गर्गमुख्यैः ॥ २ ॥ अन्यः-रेवत्युत्तररोहिणीगुरुविधुज्येष्ठाविशाखाग्निभे जीवे शीतकरे कुजेथ तरणे केंद्रत्रिकोणेथ वा । पापे चोपचयस्थिते शुभतिथौ लग्ने विधौ शोभने कुर्यादग्निपरिग्रहं सुरगुरौ पुष्टे शुभे रात्रिपे ॥ ३ ॥ वृद्धगर्गः–पुष्याग्नेयत्र्युत्तरादित्यपौष्णज्येष्ठाचित्रार्कद्विदैवेंदुभेषु । कुर्युर्वह्न्याधानमाद्यं वसंतग्रीष्मांतेष्वेव विप्रादि वर्णाः ॥ ४ ॥ कश्यपः-यस्यैवाधानलग्नस्थे चन्द्रे वा भृगुनंदने । उपैति तस्य जातोग्निर्निर्वाणसततं जलम् ॥ ५ ॥ पंचांगशुद्धिदिवसे चन्द्रताराबलान्विते । चन्द्रे शुद्धियुते लग्ने चाष्टमोदयवर्जिते ॥ ६ ॥ श्रीपतिः–राशौ विलग्नेंबुचरे घटे वा तदंशके वाप्यथ वा शशांके । आधानकाले द्विजपुंगवानां जातोग्निनिर्वाणमुपैति वह्निः ॥ ७ ॥ त्रिकोणकेंद्रोपचयेषु सूर्ये बृहस्पतौ शीतकरे कुजे च । शेषग्रहेषूपचयस्थितेषु धूमध्वजोत्पादनमामनंति ॥८॥ चन्द्रे पत्नी मृत्युगे मृत्युमेति क्षिप्रं वह्न्याध्यापकः क्ष्मासुते च । भानोः सूनौ देवपूज्ये रवौ वा रोगैर्युक्तो दुश्चिकित्स्यो द्विजेंद्रः ॥ ९ ॥ कुजेंदुजीवारिपुराशिसंस्थैः पराजितैर्नीचगृहोपगैर्वा । अस्तंगतैर्वाग्निपरिग्रहं यः करोति हास्यं विदुषां स याति ॥ १० ॥ लल्लः–आधानपुनराधाने न कुर्यात्सिंहगे गुरौ ॥ ११ ॥कारिकायाम्–माघादिपंचमासेषु श्रावणे चाश्विनेथवा । कुर्यान्मार्गोत्तमांगेवा आधानं शुक्लपक्षतः ॥ १२ ॥ हस्तद्वये विशाखासु कृत्तिकादित्रये तथा । पुनर्वसुद्वये तद्वद्रेवतीषूत्तरासु च ॥ १३ ॥ भौमार्कवर्जिते वारे नाधिमासे क्षये तथा । चन्द्रेनुकूले पूर्वाह्णे रिक्ताविष्टिविवर्जिते॥१४॥ केतुनिर्घातभूकंपविद्युत्स्तनितदर्शने । आधानं नहि कर्तव्यं सुधिया शुभमिच्छता ॥ १५ ॥ अर्वाक् पूर्णप्रदानाच्चेदाधाने स्त्री रजस्वला । तच्छुद्धौ पुनराधानं मातृपूजापूर्वकम् ॥ १६ ॥ इति श्रीज्योतिर्विद्वर्यादत्तात्मजरामदीनकृते संग्रहे बृहद्दैवज्ञरंजने अशीतितमं अग्न्याधानप्रकरणं समाप्तम् ।

## अथैकाशीतितमं अग्न्याहुतिप्रकरणं प्रारभ्यते ।

अथाहुतिज्ञानम् । ज्योतिःप्रकाशे–सूर्ययुक्तात्तु नक्षत्राद्द्याद्भित्रयं त्रयम् । आदित्यश्च बुधः शुक्रः शनिश्चंद्रः कुजस्तथा ॥ १ ॥ जीवो राहुश्च केतुश्च होमे क्रमान्न शोभनः । आदित्ये च भवेच्छोको बुधे चैव धनागमः ॥ २ ॥ शुक्रे सर्वार्थलाभ

स्याच्छनौ पीडा न संशयः । चन्द्रे लाभं विजानीयान्भौमे तु वधबंधनम् ॥ ३ ॥ गुरौ तु कार्यसिद्धिः स्याद्राहौ हानिर्मृतिः शिखी ॥ ४ ॥ निबंधसारे-सूर्यज्ञभृगुमंदाब्जभौमेज्यागुशिखी क्रमात् । त्रित्रिभादर्कतो होमो दुष्टे दुष्टं शुभे शुभम् ॥ ५ ॥ लल्लः-सूर्याधिष्ठितभात्त्रयं त्रयमथो दत्वा रविज्ञोशनः शौरींदुक्षितिनंदनामरगुरुस्वर्भानुकेतुष्वपि । शोकः श्रीजननं च कार्यसुखदं रोगं धनं बंधनं भोगं मृत्युभयं क्रमेण कथितं ज्ञात्वाग्निचक्रं बुधैः ॥ ६ ॥ सैका तिथिर्वारयुता कृता च शेषे गुणेऽभ्रे भुवि वह्निवासः । सौख्याय होमे शशियुग्मशेषे प्राणार्थनाशो दिवि भूतले च ॥ ७ ॥ एके स्वर्गे धनं राज्यं शून्ये भुवि सुखास्पदम् । द्विशेषे दोषकृद्वह्निः पाताले वसितिः फलम् ॥ ८ ॥ मनुः-शुक्लादि तिथ्यो विधुवारयुक्ता वेदाप्तशेषे न शुभौ द्विचन्द्रौ । सौख्याय वेदत्रितयं सदैवं होमेग्निचक्रं मुनिभिः प्रदिष्टम् ॥ ९ ॥ रत्नावल्याम्-तिथिवारयुक्तिसैका वेदभक्ते च शेषकम् । वह्निवासो विजानीयाद्दिवि पातालभूमिषु ॥ १० ॥ स्वर्गे नैधनमाप्नोति पाताले धननाशनम् । यदा भूम्यानलो वासस्तपा कर्तुकः सुखम् ॥ ११ ॥ चिन्तामणौ-तिथिवारसमा युक्ता पंचविंशतिमिश्रिता । त्रिभिश्च ह्रियते भागो शेषांकेन विचारणा ॥ १२ ॥ एकेन वसते स्वर्गे द्वाभ्यां पातालमेव च । पूर्णे मनुष्यलोके च वह्निर्वसति सर्वदा ॥ १३ ॥ पाताले च भवेद्विघ्नं मर्त्यलोके सदा सुखम् । सदा वसति स्वर्गे च तदा हानिरुपद्रवम् ॥ १४ ॥ मुहूर्तदर्पणे-वस्विंदुः सप्तयुक्तस्तिथिदिनपयुतो वेदहृच्छेषतः स्यादेकात् स्वोयुग्मतोधो दहनजलधितो भूमितोग्नेर्निवासः । वित्तासूनां विनाशो वसुचयनिहतिः सौख्यवृद्धिः क्रमात्स्युरेवं ज्ञेयं स्वबुद्ध्या नियतमिहमुत अग्निना चक्रकारे ॥१५॥ ग्रहणोद्वाहगण्डाते तथा दुर्गोत्सवेपि च । तदाग्निचक्रं नालोक्यं ग्रहशान्तौ विचारयेत् ॥ १६ ॥ रत्नावल्यामपि-व्रतबंधे विवाहे च नवरात्रे च नित्यके ॥ कुलदेवार्चने धीमान्नो कुर्यादग्निचिंतनम् ॥ १७ ॥ मुहूर्तदर्पणेपि-विवाहचूडाव्रतबंधगोचरे उत्पातशान्तिग्रहणे युगादौ । दुर्गाविधाने सततं प्रसूतौ नैवाग्निचक्रं परिशोधनीयम् ॥ १८ ॥ विवाहे व्रतबंधे च यजने मधुसूदने । दुर्गायां पुत्रजन्मादौ अग्निचक्रं न दृश्यते ॥ १९ ॥ दुर्गभंगे गृहे वापि विवादे शत्रुविग्रहे । शांतिकर्म नृपक्रोधं चक्रं तत्र निरीक्षयेत् ॥ २० ॥ दिग्दाहेप्यथवा घोरे ग्रस्तास्ते भूमिकंपने । केतूनामुदये शान्तिचक्रं यत्नेन चिंतयेत् ॥ २१ ॥ 'अथाग्नेरंगज्ञानम् । यतः काष्ठं ततः श्रोत्रं यतो धूमोत्र नासिका । यत्राल्पज्वलनं नेत्रं यतोंगारस्ततः शिरः ॥ २२ ॥ यत्र प्रज्वलिता ज्वाला जिह्वासौ जातवेदसः । कर्णे होमे भवेद्व्याधिर्नेत्रेऽन्धत्वं समीरितम् ॥ २३ ॥ नासिकायां मनःपीडा मस्तके धनसंक्षयम् ॥ जिह्वायां सर्वसंपत्तिर्वह्निहोमे विचारयेत् ॥ २४ ॥ पूर्णायां पूर्णभवनं जयायां सुखवर्द्धनम् । नंदा च कुरुते सौख्यं रिक्ता संतापकारिणी ॥२५॥ इति श्रीज्योतिर्विद्वयादत्तात्मजरामदत्तकृते संग्रहे बृहद्दैवज्ञरंजने एकाशीतितमं अग्न्याहुतिप्रकरणं समाप्तम् ।

---

## अथ त्र्यशीतितमं राज्याभिषेकप्रकरणं प्रारभ्यते ।

कश्यपः-अथातः संप्रवक्ष्यामि भूपानामभिषेचनम् । सौम्यायने सीते जीवे नास्तगे नच वृद्धगे ॥ १ ॥ व्यवहारचण्डेश्वरः-भूपालस्याभिषेकार्थं कालं वक्ष्यामि तत्त्वतः । चंद्रतारानुकूले तु कुर्याद्भूपालसेचनम् ॥ २ ॥ दशाधिपे जन्मनि लग्नपेच बलान्विते तिग्मकरे महीसुते । सितेंदुजीवैः सुविशालमंडलैर्नृपाभिषेके शुभदः कृतो भवेत् ॥ ३ ॥ वसिष्ठः-मूलत्रिकोणस्वगृहोच्चमित्रगृहास्थितैर्वापि तदंशसंस्थैः । शुभे विलग्ने सततं ग्रहेंद्रा दिशंति लक्ष्मीं विपुलां च कीर्तिम् ॥ ४ ॥ स्वनीचगैः शत्रुगृहोपगैर्वा तदंशगैर्वास्तगृहोपगैर्वा । पापोदये शोकभयं त्वकीर्तिं दिशंति राज्ञां भृशमंबराय ॥ ५ ॥ आधानजन्मेशदशाधिनाथरवींदुभौमेज्यसितैर्बलस्थैः उत्पातदोषादिविवर्जितेषु धराधिपानामभिषेकं इष्टः ॥ ६ ॥ श्रीपतिः-विलग्नजन्मेशदशाधिनाथमार्तंडधात्रीतनयैर्बलिष्ठैः । गुर्वींदुशुक्रैः स्फुरदंशुजालैर्महीपतीनामभिषेक इष्टः ॥ ७ ॥ चण्डेश्वरः-नाभिषेच्यो नृपश्चैत्रे नाधिमासे न भूसुते । न प्रसुप्ते तथाधिष्ण्ये न रिक्तायां न रात्रिषु ॥ ८ ॥ रामः-राज्याभिषेकः शुभ उत्तरायणे गुर्विन्दुशुक्रैरुदितैर्बलान्वितैः । भौमार्कलग्नेशदशेशजन्मपैर्नो चैत्ररिक्तारनिशामलिम्लुचे ॥ ९॥ वसिष्ठः-रिक्तास्वमायां बुधभौमवारे वर्ज्येषु वारेण दिनेषु चैव । बले दिने ऋक्षनिशेशयोश्च न नैधने भे त्वभिषेक इष्टः ॥ १० ॥ भीमपराक्रमः-राज्याभिषेकाहवदुष्टदंतिसेतुच्छिदानां कृषिकर्मणां च ॥ वादं चरक्ष्मातनयस्य वारे प्रारंभसिद्धिं मुनयो वदंति ॥ ११ ॥ दैवज्ञमनोहरे-मृते राजनि कालस्य नियमोत्र विधीयते । नृपाभिषेकः कर्तव्यो दैवज्ञेन पुरोधसा ॥ १२ ॥ नक्षत्राणि । कश्यपः-उत्तरात्रयमैत्रेंद्रधातृचंद्रकरोडुषु । सश्रुत्यश्वीज्यपौष्णेषु कुर्याद्राज्याभिषेचनम् ॥ १३ ॥ चण्डेश्वरोपि-मैत्रं शाक्रं श्रवणः पुष्यस्त्रीण्युत्तराणि चाश्विकरैः । पौष्णं प्राजापत्यं मृगशिर इति शोभने भगणः ॥ १४ ॥ वसिष्ठः-शीर्षोदये चोपचये गृहे वा स्वजन्मलग्नादथ लग्नगेपि । शुभग्रहैर्युक्तनिरीक्षिते च स्थिरं पदं स्यात्सततं हि राज्ञाम् ॥ १५ ॥ त्रिकोणकेंद्रे त्रिधनेषु सौम्यैस्त्रिषष्ठलाभक्षगतैश्च पापैः । षष्ठाष्टलग्नव्ययवर्जितेन चंद्रेण राज्ञां शुभदोभिषेकः ॥ १६ ॥ यस्याभिषेके पुरुहूतमंत्री लग्ने त्रिकोणे यदि वा भवेत्सः । षष्ठः कुजः कर्मगतस्तु शुक्रः स मोदते विक्रमराजलक्ष्म्या ॥ १७ ॥ कश्यपः-त्रिलाभस्थौ सौरिसूर्यौ चतुर्थे चांबरे गुरौ । यस्याभिषेकः क्रियते तत्र तस्य मही स्थिरा ॥ १८ ॥ श्रीपतिः-त्रिलाभसंस्थौ शशितिग्मरश्मी मेषूरणे बंधुगृहे गुरुश्च । यस्यात्र योगे क्रियतेऽभिषेकः संपत्स्थिरा तस्य चिरायुषः स्यात् ॥ १९ ॥ वसिष्ठः-दुश्चिक्यलाभारिगताविनार्कखस्थोमरेज्यो यदि बंधुगेहे । यस्यात्र योगे क्रियतेऽभिषेकः संपत्स्थिरा तस्य चिरायुषः स्यात् ॥२०॥अथ ज्योति

विंदाभरणे सिंहासनचक्रम् । विरोचनाधिष्ठितभाद्रमंडलं सिंहासनाधस्तलमध्यतो न्यसेत् । सव्यापसव्योभयपार्श्वकोदितं तावत्तलस्थं भयुगं बलार्थहृत ॥ २१ ॥ अधोंऽशयुग्मे भचतुष्टयं वरं पश्चाद्विदिक्के तु युगे प्रमापणम् । ताराचतुष्के भचतुष्कमिंद्रदिक्ध्वजाश्रितं मंडलकीर्तिवर्द्धनम् ॥ २२ ॥ ततोभवेदासनपीठमध्यगं ताराद्वयं भीतिकरं प्रकीर्णयोः । ज्योतिश्चतुष्कं जनयेद्धितं विमोश्चात्र श्रवोंशर्क्षचतुष्टयं लयम् ॥ २३ ॥ तारात्रये च्छात्रविमालिसंस्थे पट्टाभिषेकान्तरदेवतः स्यात् सम्राडतश्चेदिह चक्रवर्ती स्वराडपायैननुछत्रयुक्स्थैः ॥ २४ ॥ अथ युवराजाभिषेकः । गणपतिः–युवराजाभिषेकः स्यादभिषेकोक्तभादिषु ॥ २५ ॥ राजधर्मः–दुष्टस्य दंडः सुजनस्य सेवा न्यायेन कोशस्य च संप्रवृद्धिः । अपक्षपातोर्थिषु राष्ट्ररक्षा पंचैव यज्ञाः कथिता नृपाणाम् ॥ २६ ॥ अथ गजकृत्यम् । बृहस्पतिः–गजतुरगसमृद्ध्यै यच्च पुण्यं नराणां तिथिकरजमुहूर्ते कर्म नक्षत्रवारे । ग्रहगतियुतयोगैः सर्वमेवात्र सम्यक्समयमथ च वक्ष्ये रोगनाशाय शांत्यै ॥ २७ ॥ मृगशिरसि गजानां जन्मपूर्वापरार्द्धे भवति द्विरदनारीवर्गयोरुक्रमेण । द्विरदवरकरीणां संग्रहार्थं धनार्थं वचनगमनपूर्वो भानि वक्ष्यामि वज्रिन् ॥ २८ ॥ श्रवणसवितृपुष्या स्वातिपौष्णोत्तरापि पितृवसुशक्रयोन्यामैत्रवैश्वांशकानि । सितगुरुशशिवारे सोमवारे च तिथ्यां यदि दशमतृतीया सप्तमी पंचमी च । भवति शुभमुदारं दर्शनं संग्रहं वा द्विरदवरकरीणां तैतथानां नराणाम् ॥ २९ ॥ स्नानारंभे द्विपानामादितिहरिवसुस्वातिमैत्रोत्तराणि त्वाष्ट्रं पौष्णं च तिष्यं पितृश्रवणतया पुष्टिभाद्शुभांशे । रिक्तावर्जेषु सर्वेष्वपि तिथिषुतथा विष्टिवर्जेषु वारे शुक्रेज्ञेनदुजाव स्थिरगृह उदये सौम्यलग्ने शुभं स्यात् ॥ ३० ॥ गुरौ शुभग्रहे लग्ने स्वर्गे वा स्वोचगे सिते । चंद्रे केंद्रत्रिकोणे वा द्विरदागारमारभेत् ॥ ३१ ॥ स्वोच्चे स्वर्क्षेथवा जीवे शुक्रे वा लग्नगे विधौ । शुभेतरांशुगे भूयो द्विरदागारमारभेत् ॥ ३२ ॥ आर्द्राज्येष्ठोरगर्क्षेयमदहनयुतैः सत्रिपूर्वे द्विवर्ज्ये नक्षत्रे शोभनांशे शुभकरिणितया विष्टिरिक्ता विवर्ज्या । वारे सौम्यग्रहाणां शुभसहितगृहे सन्मुहूर्ते त्रिकोणे केंद्रे सौम्यग्रहे वा सहजरिपुभवांत्यायसंज्ञा यदि स्युः ॥ ३३ ॥ कालेस्मिन्नेव वज्रिन् बुधवरसदनप्रोक्तमंश प्रतिष्ठा युक्तं सम्यक्प्रवेशं वरकरिणवरैः सम्यगभ्यर्च्य विप्रैः । कृत्वाशीः स्वस्तिवाग्भिर्युतकरिसदनं संविशद्यो नरेंद्रः तस्य श्र्यश्वर्यमग्र्यं भवति गजगणं वर्धते चारिनाशम् ॥ ३४ ॥ राहौ मंदांशके लग्ने गजाश्वागारमारभेत् । आलानां च प्रवेशं च कुर्यात्तेषां विवृद्धये ॥ ३५ ॥ केतौः मंदांशके लग्ने मुखपुच्छविवर्जिते । गोगजाश्वगृहे मध्ये पंचगव्यं विनिक्षिपेत् ॥ ३६ ॥ शुभः केंद्रे त्रिकोणे वा शुभर्क्षेषु शुभांशके । त्रिषडेकादशे पापे गजागारं प्रवेशयेत् ॥ ३७ ॥ तिथिनक्षत्रवारेषु शुभेषु शुभगोदये । त्रिधा केंद्रशुभैर्दृष्टे द्विपागारप्रवेशनम् ॥ ३८ ॥

श्रवणशशिविशाखारोहिणीपौष्णमैत्रे गुरुनिहितशुभांशे जीवलग्ने भवेर्कः । यदि गुरुसितवारे शोभनाख्ये तिथौ च द्विपसदननिवेशः शोभने चैव वज्रिन् ॥ ३९ ॥ ज्योतिर्विदाभरणे-लघूडुचित्रादितिमातरिश्वभैरशेषकर्माणि गदंति कुंभिनः । चराचरर्क्षेशयुतोडुभिश्च ध्वजक्रियावारणधिष्ण्यकर्म ॥ ४० ॥ सोमोद्भवस्य इनयुतोडु लिखेद्वान्यंतरे त्रीण्यनुमूर्द्धपिंडयोः । तत्संधिनी दंडगतं च भत्रयं भानां द्वयं तुंडगतं हृदि त्रयम् ॥ ४१ ॥ ताराचतुष्कं च ततोग्रपादयोः सदापराध्योर्भचतुष्टयं लिखेत् ॥ चतुष्टयं लूनलतागतं करे चतुष्टयं पृष्ठगमिंदुयोषिताम् ॥ ४२ ॥ शुंडादण्डे कुंभयोराविलोक्यं वक्रे तास्याच्छं हृदि व्याधिरंघ्र्योः ॥ पश्चादंघ्र्योर्भीतिरस्तातिलूने पृष्ठे व्याधिः कुंभिनो शेषकृत्ये ॥ ४३ ॥ तिर्यग्वक्रैर्भैरिनैर्नैज्यिविद्भिः कुंभिज्योतिः शुद्धिगैर्वेह शस्तः । धीरे लग्ने शुद्धकेंद्रत्रिकोणे सन्नाह्यव्यालैपवाह्यादि बंधः ॥ ४४ ॥ अथ गजस्यांकुशः । शुभवारे शुभे लग्ने शुभांशे शोभने तिथौ । अंकुशाः करिणां योज्याः शनेर्लग्ने शनेर्दिने ॥ ४५ ॥ अथाश्वकृत्यम् । बृहस्पतिः-गजतुरगसमृद्ध्यै यत्पुराणां नराणाम् । इति ॥४६॥ तुरगजननमेवं पुंस्त्रियोरश्विनापि शतभिषजशुभांशे स्वेषु भेषु क्रमेण ॥ ४७ ॥ अथ हयवरकर्माथ प्रवक्ष्यामि वज्रिन्सकलगुणनिधिः स्याद्ये नवोचैर्नृपाच्च । अखिलनृपहतायाग्वायुषे संपदे च समरभुवि विजयायैतमेनुग्रहाय ॥ ४८ ॥ तिथिनक्षत्रवारेषु शुभेषु कथितेषु च । हयसंग्रहणं कुर्याद्धयारोहणमेव च ॥ ४९ ॥ चरयोगेषु सर्वेषु तुरगागारमारभेत् । तेषां स्थानप्रवेशौ च स्थिरराशौ शुभेक्षिते ॥ ५० ॥ पापनक्षत्रसर्वेषु नक्षत्रेष्वखिलेषु च । शुभवारतिथिष्वेव शुभलग्ने शुभ भवेत् ॥ ५१ ॥ हयानां संग्रहं कुर्याद्वान्यामां चैव संग्रहम् । दर्शनारोहणं कुर्याद्गृहारंभप्रवेशनम् ॥ ५२ ॥ मूर्द्धोदयं शुभसुहृद्युतवीक्षितं वा श्रोणाश्विनीशतभिषाशकटानिलेषु । सौमे तिथौ गुरुसितेंदुजवारयोगे कुर्याद्धयो भिषग् औषधकर्म सर्वम् ॥ ५३ ॥ केंद्रत्रिकोणके जीवे भवारिभ्रातृगे यमे । शुभनक्षत्रगे चंद्रे हयकर्माखिलं शुभम् ॥ ५४ ॥ चापलग्नं शुभं प्रोक्तं हयानां वेश्मनिर्णये । प्रवेशलग्नगे चंद्रे द्वितीये देवमंत्रिणा ॥ ५५ ॥ ज्योतिर्विदाभरणे-दाक्षायण्युर्वेंद्रसूवान्तभांत्यक्षिप्रार्णोयोडुश्च विष्टासुधीराः । लग्नाल्लोलान् त्र्यायकेंद्रस्य सौम्यैराजानेयाद्यश्वकर्माण्यथाहुः ॥ ५६ ॥ नारदः-विविष्णुचरभे क्षिप्रे मृदुभे स्थिरभेषु च । वाजिकर्माखिलं सूर्यवारे कार्यं विशेषतः ॥ ५७ ॥ घृतान्नचणकाक्षीरतृणमुद्गादि भक्षणे । अन्नप्राशनवद्दक्षं स्नानं सौम्यग्रहोदये ॥ ५८ ॥ चौलोक्तं क्षुरकर्मादौ भेषजे भेषजोदितम् । गर्भाधानोक्तमश्वानां मैथुनेतु विलोकयेत् ॥ ५९ ॥ गृहारंभोदिते काले हयशाला विधीयते । शिक्षाविद्योक्तकाले च भूषणं भूषणोदिते ॥ ६० ॥ चर्मकर्मादिकं कार्यं जययोगे शुभोदये ।। एवं खरोष्ट्रादिकं कार्यं पूर्वाह्ने वाहनादिकम् ॥ ६१ ॥ दैवज्ञमनोरंजने-पौष्णाश्विनीपवनवारुणशीतरश्मिश्चित्रादितिश्रवण

शक्रसुरेज्यधिष्णे । वारे च जीवशशिसूर्यसितेंदुजानामारोहणं गजतुरंगरथेषु शस्तम् ॥ ६२ ॥ तदन्यः—रेवतीयुगुले हस्तत्रये कर्णत्रये मृगे । पुनर्वसुद्वये कुर्याच्छनिभौमान्यवासरे॥ ६३ ॥गजाश्वरथमुख्यानामारोहं च शुभे तिथौ ॥ ६४,॥ अथाश्वशान्तिः । भूपतेर्यस्य संत्यश्वाः स राजा विजयी रणे । श्रीमान्स एव तत्तस्मात्कार्यमश्वाभिरक्षणम् ॥६५॥ सूर्ये स्वात्यर्क्षसंपाते जायंते बहवो रुजः । यदा यदा रोगजनमश्वानामथवा तदा ॥ ६६ ॥ सलोकपालं रेवंतं पूजाहोमं च कारयेत् । भानुवारे च संक्रान्तावयने विषुवद्वये ॥ ६७ ॥ दिनक्षये व्यतीपाते द्वादश्यामश्विभेपि वा । ऐशान्यामष्टभिर्हस्तैश्चतुर्भिर्वाथ मंडपम् ॥ ६८ ॥ चतुर्द्वारं वितानस्रक्तोरणाद्यैरलंकृतम् । तन्मध्ये वेदिका तस्य पंचविंशतिमांशतः ॥ ६९ ॥ मंडपस्य बहिः कुण्डं प्राच्यां पूर्वोक्तलक्षणम्। वरयेत्पूर्ववद्विप्रान्स्वस्तिवाचनपूर्वकम् ॥ ७० ॥ सूर्यपुत्रं हयारूढं पंचवक्त्रं दशांवकम् । रक्तवर्णांकुशाखड्गरेवंतं द्विभुजं स्मरेत् ॥ ७१ ॥ सूर्यपुत्र नमस्तेस्तु नमस्ते पंचवक्त्रक । नमो गंधर्वदेवाय रेवंताय नमोनमः ॥ ७२ ॥ मंत्रेणानेन रेवंतं गंधवस्त्राक्षतादिभिः । विधिवद्वेदिकामध्ये तंडुलोपरि पूजयेत् ॥ ७३ ॥ परितः स्वस्वमंत्रैस्तान् लोकपालांश्च पूजयेत् । प्राग्वदंगजयोर्मध्ये देवं तस्य समीपतः ॥७४॥ ऋग्वेदादियजुर्वेदान्याये द्वारेषु पूर्वतः । पूर्णकुंभान्रक्तवर्णान्गन्धवस्त्राद्यलंकृतान् ॥ ७५ ॥ द्वारे संस्थाप्य चार्लिंगैर्मंत्रैः कार्यं समर्चनम् । रेवंतपूजामाचार्यः कृत्वा गृह्यविधानतः ॥ ७६ ॥ स्थापयेत्तं व्याहृतिभिस्तस्मिन्कुंडे हुताशनम् । ततस्तत्राज्यभागांते मुख्याहुतिमतंद्रितः ॥ ७७ ॥ आग्नेयेति स्वाहेति हुत्वा घृतेनादौ प्रयत्नतः । रेवंतपूजामंत्रेण आद्यंतप्रणवेन च ॥७८॥ पालाशसमिधाज्यान्नैः पृथगष्टोत्तरं शतम् । आचार्यो जुहुयाद्व्रीहीन् तिलान्व्याहृतिभिस्ततः ॥ ७९ ॥ एकरात्रं त्रिरात्रं वा नवसप्तमथापि वा । अनेन विधिना कुर्यादेकभक्तो जितेंद्रियः ॥ ७० ॥ जपादिपूर्वकं सम्यक् कर्ता पूर्णाहुतिं नयेत् । ततो मंगलघोषैश्च नैवेद्यं च समर्पयेत् ॥ ८१ ॥ ततस्तद्घृतशेषेण सहकुंभोदकेन च । प्रदक्षिणं व्रजेदश्वान्स प्रीतो बलिमुत्तमम् ॥ ८२ ॥ जीमूतस्येत्यनूवाकान् चतुरो दिक्षु निक्षिपेत् । आचार्याय ततो दद्याद्दक्षिणां गोचतुष्टयम् ॥ ८३ ॥ तदर्धं वा तदर्धं वा यथा वित्तानुसारतः । ब्राह्मणेभ्यो याचकेभ्य आचार्याद्धं प्रदापयेत् ॥ ८४ ॥ ब्राह्मणान् भोजयेत्पश्चाच्छांतिवाचनपूर्वकम् । एवं यः कुरुते सम्यगश्वशांतिमनुत्तमाम् ॥ ८५ ॥ मुच्यते सर्वरोगेभ्यो वर्द्धते नात्रसंशयः । ऐश्वर्यं चिरलक्ष्मीं च लभते सर्वदा नृपः ॥ ८६ ॥ तस्मासर्वप्रयत्नेन त्विमां शांतिं समाचरेत् ॥ ८७ ॥ अथ रथकृत्यम् । गणपतिः—पुष्ये पुनर्वसुज्येष्ठानुराधारेवतीद्वये । श्रवणादित्रये हस्ततृतीये रोहिणीमृगे ॥ ८८ ॥ सार्के सौम्यदिने शस्तविलग्ने रथकर्म सत् ॥ ८९ ॥ इति श्रीज्योतिर्विद्वयादत्तात्मजरामदीनकृते संग्रहे बृहद्दैवज्ञरंजने द्व्यशीतितमं राज्याभिषेकप्रकरणं मा।सम् ।

---

# अथ त्र्यशीतितमं देवप्रतिष्ठा प्रकरणं प्रारभ्यते ।

प्रथमतः देवताघटनम् । देवादिप्रतिष्ठाप्रकरणं च । दीपिकायाम्–ध्रुवमृदुलघुवर्गे वारुणे विष्णुदैवे मरुददितिधनिष्ठे शोभने वासरे च । त्रिदशमदनजन्मैकादशे शीतरश्मौ विबुधसुकृतिरिष्टा नाडिनक्षत्रहीने ॥ १ ॥ नाडिनक्षत्राणि–वैनाशिकनक्षत्राणि । वसिष्ठः–अथ प्रतिष्ठां कथयामि सम्यक् शिवस्य विष्णोस्त्वथवा परेषाम् । सौम्यायने देवगुरौ च शुक्रे संदृश्यमाने परिचारकाणाम् ॥ २ ॥ गुरुरपि–उत्तरायणगे सूर्ये प्रतिष्ठा शोभना भवेत् । दाक्षिणायनगे भानौ प्रतिष्ठा नैव शोभना ॥ ३ ॥ अत्र सौम्यप्रकृतीनां देवानामुत्तरायणे स्थापनमुक्त्वा उग्रप्रकृतीनां दक्षिणायनेपि स्थापनं कार्यम् । तदुक्तं वैखानससंहितायाम्–मातृभैरववाराहनारसिंहत्रिविक्रमाः । महिषासुरहंत्री च स्थाप्या वै दक्षिणायने ॥ ४ ॥ शैवसिद्धांतशेखरे तु–श्रेष्ठोत्तरे प्रतिष्ठा स्यादयने मुक्तिमिच्छता । दाक्षिणे तु मुमुक्षूणां मलमासे न सा द्वयोः ॥ ५ ॥ अत्र देवताविशेषस्य मासविशेषेण प्रतिष्ठामप्याह । गणपतिः–याम्यायनेपि वाराहमातृभैरववामनान् । महिषासुरहंत्रीं च नृसिंहं स्थापयेद्बुधः ॥ ६ ॥ श्रावणे स्थापयेल्लिंगमाश्विने जगदंबिकाम् । मार्गशीर्षे हरिं चैव सर्पान्पौषेपि केचन ॥ ७ ॥ सार्पान् पौषेपि केचिनेति गणपतिना सर्वेषां पूर्वोक्तानां पौषेपि स्थापनमिति केषांचिन्मतमाह । तदुक्तं बृहस्पतिना–सर्वेषां पौषमाघौ द्वौ विबुधस्थापने शुभौ ॥ ८ ॥ अत्र मासविशेषेषु देवानां स्थापने फलविशेषमप्याह । बृहस्पतिः–पौषे राज्यविवृद्धिः स्यान्माघे मासे तु संपदः । फाल्गुने द्रव्यलाभाय चैत्रे मासि श्रियावहम् ॥ ९ ॥ अतीवसौख्यं वैशाखे ज्येष्ठे मासे जयावहः । आषाढे स्थापितो देवो यजमानविनाशनः ॥ १० ॥ सौरमासेन विज्ञेया श्रावणे राज्यराष्ट्रहा । भाद्रपदे महीनाशं चाश्वयुज्यपि राज्यहा ॥ ११ ॥ कार्तिके शत्रुवृद्धिः स्यान्मार्गशीर्षे तथैव हि ॥ १२ ॥ सर्वेषामेव जातीनां वसंतः शोभनो भवेत् । विशेषादभिषिक्तस्य नृपस्य शुभदस्तथा ॥ १३ ॥ अथ पक्षः । वासिष्ठेनोक्तः–वलक्षपक्षः शुभदः समस्तः सदैव तत्राद्यदिनं विहाय । अंत्यत्रिभागं परिहृत्य कृष्णपक्षोपि शस्तः खलु पक्षयोस्तु ॥ १४ ॥ अथ तिथीनाह । नारदः–यद्दिनं यस्य देवस्य तद्दिने तस्य संस्थितिः । द्वितीयादि द्वयोः पंचम्यादितस्तिसृषु क्रमात् ॥ १५ ॥ दशम्यादेश्चतसृषु पौर्णिमास्यां विशेषतः ॥ १६ ॥ गुरुरपि–द्वितीया च तृतीया च पंचमी सप्तमी तथा । त्रयोदशी च सर्वेषां शुभदा शोभने विधौ ॥ १७ ॥ अथ जातिपरत्वेन तिथीनाह तत्रैव । ब्राह्मणानां द्वितिया च तृतिया चातिशोभना । क्षत्रियाणां तु पंचम्यां सप्तमी शोभनप्रदा ॥ १८ ॥ वैश्यानां दशमी प्रोक्ता शूद्राणां च त्रयोदशी ॥ १९ ॥ अथ वारानाह । नारदः–कुजवर्जितवारेषु कर्तुः सूर्यबलप्रदे । चन्द्रताराबलोपेते

पूर्वाह्णे शोभने दिने ॥ २० ॥ अथ प्रत्येकवारफलमाह । वसिष्ठः–कीर्तिप्रदं क्षेमकरं कृशानुभयप्रदं वृद्धिकरं दृढं च । लक्ष्मीकरं सुस्थिरदं त्विनादिवारेषु संस्थापनमामनंति ॥ २१ ॥ अथ बृहस्पतिना जातिपरत्वेन वारा उक्ताः । विप्राणां शुभदौ वारौ स्थापने गुरुशुक्रयोः । वारौ दिवाकरेंद्वोश्च क्षत्रियाणां शुभावहौ ॥ २२ ॥ वैश्यानां बुधवारः स्यात्तैनिलस्थापने शुभः । मंदवारस्तु शूद्राणां प्रतिष्ठायां शुभावहः ॥ २३ ॥ जीवशुक्रबुधानां च सर्वेषां शोभनावहाः । पापग्रहाणां वाराश्च बलिना शुभदा स्मृताः ॥ २४ ॥ अथ नक्षत्राण्याह । वसिष्ठः–हस्तत्रये मित्रहरित्रये च पौष्णद्वयादित्यसुरेज्यभेषु । तिस्रोत्तराधातृशशांकभेषु सर्वामरस्थापनमुत्तमं स्यात् ॥ २५ ॥ देवस्य यस्योडुतिथिप्रशस्ते संस्थापने कर्मणि वासरश्च । कर्तुर्दिनेशस्य बलं सदैव ग्रामाधिपो ग्रामबलं विचार्यम् ॥ २६ ॥ अथ जातिपरत्वेन नक्षत्राणि । उत्तरात्रिकपुष्याश्च ब्राह्मणानां शुभावहाः । श्रवणे हस्तमूले च क्षत्रि शुभदा स्मृता ॥ २७ ॥ वैश्यानां स्वातिमैत्रे च पौष्णं चैव शुभावहा । शूद्राणामश्विनी श्रेष्ठा तैनिलस्थापने शुभे ॥ २८ ॥ अथ जातिपरत्वेन करणानाह बृहस्पतिः–ब्राह्मणानां शुभौ प्रोक्तौ करणौ बवबालवौ । ततो द्वौ क्षत्रियाणां तु ततो द्वौ वैश्यशूद्रयोः ॥ २९ ॥ अथ राशिं चाह । ब्राह्मणक्षत्रियाणां च शोभनाः स्थिरराशयः । उभयो राशयेर्वैश्यशूद्राणां शोभनाः स्मृताः ॥ ३० ॥ अथ कालमाह पूर्वाह्णे चोत्तमं प्रोक्तं मध्याह्ने मध्यमं बुधैः । सायाह्ने न मया प्रोक्ता स्वगृहे चाशुभा विधौ ॥ ३१ ॥ कदाचिन्निश्यपि प्रोक्ता प्रतिष्ठा या कृते युगे । कलौ युगेऽतिदोषाय प्रतिष्ठा निशि मानवैः ॥ ३२ ॥ वसिष्ठस्तु–रिक्तावमायुक्तदिनेषु निंद्ये योगेषु वैनाशिकवर्जितेषु । दिने महादोषविवर्जिते च शशांकताराबलसंयुतेपि ॥ ३३ ॥ वैनाशिकनक्षत्राणि नारदेनोक्तानि । जन्मभाद्दशमं कर्म संघातर्क्षं च षोडशम् । अष्टादशं सामुदायं त्रयोविंशद्विनाशनम् ॥ ३४ ॥ मानसं पंचविंशर्क्षं नाचरेच्छुभभेषु तु ॥ ३५ ॥ अथ लग्नशुद्धिः । वसिष्ठः–पञ्चांगशुद्धौ दिवसे दिनस्य पूर्वार्द्धभागे शुभदे मुहूर्ते । शुभग्रहे वीक्षितसंयुते वा न नैधने नैधनसिद्धिलग्ने ॥ ३६ ॥ रत्नमालायाम्–केंद्रत्रिकोणभवमूर्तिषु सद्ग्रहेषु चन्द्रार्कभौमशनिषु त्रिषडायगेषु । सान्निध्यमेति नियतं प्रतिमासु देवः कर्तुः सुतार्थसुखसंपदरोगता च ॥ ३७ ॥ गुरुः–शुक्रः स्थितांशे राशेर्वा केंद्रोपचयगे विधौ । देवप्रतिष्ठाकालेत्र दोषाः सर्वे शयुः ॥ ३८ ॥ अथ प्रसंगान्नवांशविचारः । वसिष्ठः–पंचेष्टिके जीवशशांकसूर्यमुख्यग्रहैः सौम्यनवांशयुक्तैः । लग्ने स्थिरे चोभयराशियुक्ते नवांशके चोभयगे स्थिरे वा ॥ ३९ ॥ चरोदये लग्नगते न कार्यं संस्थापनं नैव चरांशकेपि । चरोपि मुख्यः सकलांशकश्च सदा मृदुत्वात्सुरसंनिवेशे ॥ ४० ॥ नारदोपि–शुभलग्ने शुभांशे च कर्तुर्न निधनोदये । राशयः सकलाः श्रेष्ठाः शुभग्रहयुतेक्षिते ॥ ४१ ॥ अथ

लग्नदौष्ट्येपवादो वसिष्ठेन उक्तः । एकोपि जीवो बलवान् तनुस्थः सितोपि सौम्योप्यथवा बली चेत् । दोषानशेषान्विनिहंति सद्यः स्कंदो यथा तारकदैत्यवृन्दम् ॥४६॥ नारदः-गुणाधिकतरे लग्ने दोषेत्यल्पतरे यदि । सुराणां स्थापनं तत्र कर्तुरिष्टार्थसिद्धिदम् ॥ ४३ ॥ वसिष्ठः-सूर्येंदुभौमार्क्यहिकेतवश्च लग्नस्थिता नैधनदाश्च कर्तुः । सौम्यग्रहा लग्नगताः सदा ते त्वायुर्धनारोग्यकराश्च नूनम् ॥ ४४ ॥ लग्नाद्द्वितीये शुभखेचरेंद्राश्चंद्रश्च पुत्रार्थशुभप्रदाः स्युः । तत्रैव पापाः प्रतिपक्षदुःखशोकप्रदा व्याधिकराः सदैव ॥ ४५ ॥ असौम्यसौम्याः सहजे सुखस्थाश्चंद्रश्च पापे न सुखप्रदाः स्युः । आनन्ददाः पंचमगाश्च सौम्या विधुश्च पापारिपुभीतिदाः स्युः॥४६॥ शत्रुस्थिताः शत्रुविनाशदाः स्युः क्रूराः सचंद्राभयदास्तु सौम्याः । द्यूनस्थिताः सेंदुशुभा दिशंति लाभं परे प्रीतिपराः सदैव ॥ ४७ ॥ सर्वे ग्रहा नैधनदास्त्वजस्रं सौम्या असौम्याः खलु मृत्युसंस्थाः ॥ ४८ ॥ नवमःस्थानगाः सौम्याः सेंदवो विजयप्रदाः । असौम्याः स्थापने तत्र दुःखशोकभयप्रदाः ॥ ४९ ॥ दशमस्थानगाश्चंद्रसहिताः शुभखेचराः । अर्थलाभकराःपापा व्याधिशत्रुभयप्रदाः ॥ ५० ॥ लाभस्थानगताः सर्वे खेचरा बहुलाभदाः । व्ययदा व्ययगाः पापाः सेंदवः शोकदाः शुभाः ॥ ५१ ॥ बृहस्पतिः-दोषाध्याये प्रतिष्ठाये दोषास्तेत्र विरोधदाः । गुणध्यौयोदिता येत्र यथालाभं गुणाः शुभाः ॥ ५२ ॥ दोषाणामपवादेषु सत्सु दोषा न संति हि । अपवादापविद्धा ये दोषास्तानत्र चिंतयेत् ॥ ५३ ॥ एते लिंगप्रतिष्ठायां शकराकारभेदजे । रविभेदेषु सर्वेषु प्रतिष्ठाकालईरितः ॥ ५४ ॥ विष्णुभेदेषु सर्वेषु समानं सुरसत्तमः । दुर्गाया गणनाथादि भेदेप्येवं समं भवेत् ॥ ५५ ॥ चतुर्दशी चतुर्थी च चित्रा ज्येष्ठा च शोभना । गणेशस्य प्रतिष्ठायां सूर्यवारांशकादयः ॥ ५६ ॥ नवमी कृत्तिका चित्रा दुर्गायास्तु विशेषतः । प्रतिष्ठायां समुद्दिष्टा मंदवारांशकोदया ॥ ५७ ॥ अथ देवताविशेषेण मुहूर्तविशेषः विष्णुस्थापनं च । ज्योतिर्विदाभरणे-रिक्ताशिवापक्षतिदर्शमुक्तैर्लघुध्रुवादित्यमृगांत्यमैत्रैः । सकर्णयुग्मैर्गुरुसौम्यवारे नरोदये स्थापनमिष्टमस्य ॥ ५८ ॥ अथ शिवस्थापनम् । संस्थापके स्थाणुमिहाभिजिच्छ्रवाभूतेशमाचार्यहिमांशुभारिभिः । ऐनीनजीवज्ञसुभूभुवि क्वचित् व्यमाकुयोगैर्जितुमोदयेऽनिशम् ॥ ५९ ॥ अथब्रह्मास्थापनम् । तिष्याभिजितामरसादयाजभे विकर्तनाचार्यविदामहर्यतैः । संस्थापितोऽजस्तनुते चतुर्विधं नियोजद्वये ( ? ) वर्गफलं व्ययोगकैः ॥ ६० ॥ अथ शक्तिगणप्रतिष्ठा । रुरुत्तमांगे शिवफेशिफायां श्रुतौ शये शक्तिगणप्रतिष्ठा । शस्ता रववांगिरसपमेवशस्त्रंगनाजित्मविसारलग्ने ॥ ६१ ॥ अथ बलरामादिसूर्यप्रतिष्ठा । नृभोदये पुण्यभिजिच्छ्रवस्सुवा बलाननोंपद्रगणान्प्रतिष्ठयेत् । शुभे दिने भेषु च भाग्यरेवतीमित्रार्यमर्क्षेषु रविं रवौ हरौ ॥ ६२ ॥ अथ गुहादिशिवगणप्रतिष्ठा । पौष्णा-

द्वयोरंशुसितांशुजन्मनां वारेषु वाजांघ्रियुगेऽस्त्रजे क्वचित् । गुहाखुयानादिपिनाकभृद्गणा-
नास्थापयेद्युग्मकरंधभोदये ॥ ६३ ॥ अथ हनुमान्-मरुद्गण-स्थापनम् ।
महाबलर्क्षेश्रुतिशैवदोर्भगं संस्थापनं हृद्यतरं हनूमतः । प्रभाकरादित्रिदिनेषु वा गुरौ
स्थिरोदयेत्रैव मरुद्गणस्य ॥ ६४ ॥ अथ सप्तर्षिप्रतिष्ठा । सप्तर्षिसंस्थोडुषु
संप्रतिष्ठामृषिव्रजस्याहुरभेज्ययोर्वा । जीवाह्नि वा जीवगृहोदयेषु सत्केंद्रे क्वचित्सोमदि-
नेषु संतः ॥ ६५ ॥ अथ लोकपालयक्षगणस्थापनम् । सरोहिणेयाहनि
वासवर्क्षे संस्थापयेद्घोषितलोकपालान् । सितत्र्यहःशैवशिखासु शस्ता चरे च यक्षा-
दिगणप्रतिष्ठा ॥ ६६ ॥ न्यंकूह्यमांगश्रुतितिष्यहस्तैरज्वार्ययोः सर्वसुरप्रतिष्ठा । अर्हा
सभूषैरपदोषदोजैर्जीवोक्षिते वारुणवैरिलग्ने ॥ ६७ ॥ मघाशतानन्दभसौम्यशार्गिभिः-
संस्थापितः पितृगणः प्रजाश्रियैः । शूरौषधीशामरवंद्यवासरैरिक्ता विमुक्तैर्व्यलिधीर-
भोदये ॥ ६८ ॥ चैत्येथ जैनप्रतिमास्थलं न्यसेच्चरे चरर्क्षोजयवत्यनेहसि । जयासु-
पूर्णासु बुधेसिते विधौ क्वचिच्च चित्राश्विनभेपि वारे ॥ ६९ ॥ अथामरप्रतिष्ठायां
दोषानाह । वसिष्ठः-हंत्यर्थहीनं त्वमरप्रतिष्ठा कर्तारमृत्विग्वरविप्रमुख्यम् । मंत्रै-
र्विहीनेत्वथ कर्तृभावं यदा तदा लक्षणहानितश्च ॥ ७० ॥ नारदोपि-हंत्यर्थहीने
कर्तारं मंत्रहीने तु ऋत्विजम् । शिल्पिनं लक्षणैर्हीने न प्रतिष्ठासमो रिपुः ॥ ७१ ॥
विषमस्थानमाश्रित्य भग्नं यत्स्थापितं परैः । तत्र स्थानस्थिता देवा भग्नाः पूज्याः
फलप्रदाः ॥ ७२ ॥ वास्तुराजवल्लभे-ब्रह्माविष्णुशिवेंद्रभास्करगुहाः पूर्वापरास्याः शुभाः
प्रोक्तौ सर्वदिशामुखौ शिवजिनौ विष्णुर्विधाता तथा । चामुण्डाग्रहमातरो धनपतिर्द्वौ
मातरौ भैरवो देवोदक्षिणदिग्मुखः कपिवरो नैर्ऋत्यवक्त्रो भवेत् ॥ ७३ ॥ इति श्रीज्योतिर्वि-
द्यादत्तात्मजरामदीनकृते संग्रहे बृहद्दैवज्ञरंजने त्र्यशीतितमं देवप्रतिष्ठाप्रकरणं समाप्तम् ।

## अथ चतुरशीतितमं जलप्रतिष्ठाप्रकरणं प्रारभ्यते ।



दीपिकायाम्-मार्तंडेन्दूडुशुद्धौसुरजिदशयने माघषट्कस्य शुक्रे मूलाषाढोत्तराश्वि
श्रवणगुरुकरे पौष्णशक्राजचान्द्रे । मैत्रे ब्राह्मे च पूर्णा मदनरवितिथौ सद्वितीया
तृतीये कार्या तोयप्रतिष्ठा ज्ञगुरुसितदिने कालशुद्धे सुलग्ने ॥ १ ॥ तथाच गर्गः-देवता-
रामवाप्यादिप्रतिष्ठामुत्तरायणे । माघादिपंचमासेषु कृष्णेत्वापंचमीदिनम् । ॥ २ ॥
दक्षिणे त्वयने कुर्वन्न तत्फलमवाप्नुयात् । यदा तु दक्षिणायन एव जलस्थितिसं-
भवस्तदा न कालनियमः । तत्र सलिलंकारणमिति भविष्यत्पुराणे । मासस्तु तत्रैव-
यस्मिन्सलिलसंपूर्णे कार्तिके च विशेषतः । तडागस्य विधिः कार्यः स्थिरनक्षत्र-
योगतः ॥ ३ ॥ अग्निपुराणे संक्रांतिभेदेन फलभेदोऽभ्यधायि । वापीकूपतडागानां
यस्मिन्काले विधिः स्मृतः ॥ कर्कटे पुत्रलाभश्च सौख्यं तु मकरे भवेत् ॥ ४ ॥

मीनेयशोर्थलाभश्च कुंभे च सुबहूदकम् । वृषे च मिथुने बुद्धिर्वृश्चिके च जलं भवेत् ॥ ५ ॥ पितृतृप्तिश्च कन्यायां तुलायां शाश्वती गतिः । सिंहे मेषे धनुर्लग्ने लक्ष्मीश्च द्विज गच्छति ॥ ६ ॥ इति श्रीज्योतिर्विद्रयादत्तात्मजरामदीनकृते संग्रहे बृहद्दैवज्ञरंजने चतुरशीतितमं जलप्रतिष्ठाप्रकरणं समाप्तम् ।

## अथ पञ्चाशीतितमं यात्राप्रकरणं प्रारभ्यते ।

अथ यात्राकालः । बृहस्पतिः–अथातः संप्रवक्ष्यामि यात्रायाः कालमुत्तमम् । यात्राविलग्नतो नृणां शुभाशुभसमन्वयः ॥ १ ॥ तस्मात्सम्यक्परीक्ष्यैव यात्रा कार्या नृपोत्तमैः । योगो धराधिपाः कुर्युः यात्रा राज्यविवृद्धये ॥ २ ॥ मासशुद्धौ सुखं भोगो धनारोग्यं च सत्तिथौ । कार्यसिद्धिः सुनक्षत्रे करणे शोभनं धनम् ॥ ३ ॥ शुभे वारे सर्वसंपत्सौमनस्यं शुभे क्षणे । इष्टावाप्तिः शुभे योगे वाञ्छिताप्तिः शुभे विधौ ॥ ४ ॥ लग्ने शस्ते महानंदः स्वेशवीर्ये समुन्नतिः । लग्नसंग्रहवीर्ये स्युः सर्वे समुदिता गुणाः ॥ ५ ॥ रत्नावल्याम्–तिथिशुद्धे भवेत्सिद्धिः करणेन सुखं धनम् । नक्षत्रे च मुहूर्ते च यातुः सौख्यं धनागमम् ॥ ६ ॥ वारेण सौमनस्यं शुभेन चंद्रेण मित्रसंप्राप्तिः । सर्वे गुणाः समुदिता लग्नेनैकेन लभ्यंते ॥ ७ ॥ योगयात्रायाम्–आरोग्यमृक्षेण धनं क्षणेन कार्यस्य सिद्धिस्तिथिना शुभेन । लग्ने शुभे चाध्वनि सिद्धिमाहुः प्रायः शुभानि क्षणदाकरेण ॥ ८ ॥ बृहस्पतिः–तिथ्या तु बलवान्करणः करणाद्बलवान्दिनः । दिनाहृक्षो बलाढ्यः स्यात्सर्वथानुदयो बली ॥ ९ ॥ योगयात्रायाम्–उत्पातपापग्रहपीडिते भे ये यांति भूरिग्रहसंयुते च । ते पूर्ववित्तान्यपि नाशयंति धातुप्रसक्ता इव वातकेंद्राः ॥ १० ॥ क्रांतिसाम्ये भवेन्मृत्युः कुलिके च महद्भयम् । यामार्द्धे सति शोकः स्याद्भद्रायां भंगमादिशेत् ॥ ११ ॥ व्यसनं मरणं वापि व्यतीपाते च वैधृतौ । दिनक्षये द्युवृद्धौ च संक्रमे च पराभवः ॥ १२ ॥ हानिः क्रूरयुते भे च भयं दग्धे च धूमिते । यातुश्चंद्रबलाभावे यात्रा शस्ताप्यनर्थदा ॥ १३ ॥ कलहः सूतिकाशौचे रोगः स्याद्राहुसूतके । तिथिदोषे न संतुष्टिर्नरदोषे मनश्चलम् ॥ १४ ॥ रामः–व्रतबंधनदैवतप्रतिष्ठाकरपीडोत्सवसूतिकासमाप्तौ । न कदापि चलेदकालविद्युद्घनवर्षातुहिनेपि सप्तरात्रम् ॥ १५ ॥ उद्वाहे व्रतबंधे च प्रतिष्ठायां महोत्सवे । असमाप्ते न गंतव्यं मृतके सूतकेपि च ॥ १६ ॥ हारीतः–यत्किंचिच्छुभदं कर्म क्रियते च मनीषिभिः । तत्सर्वं शुभयोगेन कार्यं यात्रा विशेषतः ॥ १७ ॥ त्याज्यप्रकरणे ये दोषाः प्रोक्तास्तांश्च विवर्जयेत् । भद्रा याने परित्याज्या क्षणाश्च निंदिताह्वयाः ॥ १८ ॥ श्रीपतिः–यात्राभिधानं कथयाम्यथातः सर्वैरुपेतस्य गुणैर्जिगीषोः । अतर्किते जन्मनि तस्य याने फलाप्तिरुक्ता घुणवर्णतुल्याः ॥ १९ ॥

अज्ञातजन्मनोप्यन्यैर्यानं योज्यमिति स्मृतम् । प्रश्नोदयनिमित्ताद्यैर्विज्ञाते सदस-त्फले ॥ २० ॥ जन्मराशिरुतजन्मविलग्नं तत्पती उदयगौ यदि शस्तः । ऽयायकर्म-रिपुभान्विततताभ्यां शत्रुसंक्षयमवेहि तदानीम् ॥ २१ ॥ इदमप्यरिसंभवं यदास्ते हिबुके वा विजयस्तथापि यातुः । शिरसोदयमेति यश्च राशिर्जयकृत्सोप्युदये तथे-ष्टवर्गः ॥ २२ ॥ करोति राशिर्गमनं फलं च चरे विलग्ने शुभदृष्टियुक्ते । स्थिरोदये स्याद्गमनं न यातुः शुभाशुभैर्दृष्ट्युतेत्र वाच्यम् ॥ २३ ॥ द्विमूर्तिराशा उदयं प्रपन्ने क्रूरग्रहैर्युक्तनिरीक्षिते च । प्रयाति यद्यप्यबुधस्तदानीं निवर्तनं शत्रुजनाभिभूतः ॥ २४ ॥ लग्नोपेतौ जीवचंद्रौ प्रयाणे षष्ठे यातौ भौममंदौ जयः स्यात् । तद्वल्लाभे सौम्य-शुक्रौ च जीवे कर्मण्यर्के वांछितार्थस्य सिद्धिः ॥ २५ ॥ मनोरमा भूर्यदि पृच्छतः स्यान्मांगल्यवस्तुश्रुतिदर्शने स्तः । यद्यादरात्पृच्छति च गृहज्ञं तदादिशेदस्ति जयस्तवेति ॥ २६ ॥ मधुरफलकुसुमक्षीरद्रुमसलिलधेनुविश्रमणात् । चरणसुखा या भूमिर्मनोरमा सा विनिर्दिष्टा ॥ २७ ॥ अथ शुक्रविचारः । स्वल्पेपि नार्थः प्रति-शुक्रयाने यियासतां सिद्धिमुपैति नूनम् । कामं व्रजेद्वा प्रतिशुक्रमस्ते गते तु याया-द्द्विजगोषुरत्र ॥२८॥ न राजते भूरिगुणान्वितापि व्यर्थव्ययस्य क्षितिपस्य यात्रा । शुक्रे ऽनष्टे धनदर्पितस्य विवाहयात्रेव जरार्दितस्य ॥ २९ ॥ प्रतिशुक्रं प्रतिबुधं त्यंगारकमेव च । बलेन शक्रतुल्योपि हतसैन्यो निवर्तते ॥ ३० ॥ गर्गः—क्रे नीचे पुरस्थे वास्तंगते विबले सति । नैव यात्रां नृपः कुर्यात्तद्वत्सोमसु-पि वा ॥ ३१ ॥ श्रीपतिः—नीचगे ग्रहजिते प्रतिलोमे भार्गवे कलुषिते-तगतेपि वा । प्रस्थितो नरपतिः प्रबलोपि क्षिप्रमेव वशमेति रिपूणाम् ॥ ३२ ॥ विंविधेप्यस्फुजिति प्रयायादबुधो यदि स्यादनुकूलवर्ती । प्रतींदुजं भूमिपतेर्गतस्य न्ये गृहात्त्राणविधौ समर्थाः ॥ ३३ ॥ उदयति दिशि यस्यां याति यत्र भ्रमाद्वा चरति च भचक्रे येषु दिग्द्वारभेषु । त्रिविधमिह सितस्य प्रोच्यते सन्मुखत्वं मुनिभि-र्द्य एव त्यज्यते तत्प्रयत्नात् ॥ ३४ ॥ लग्नप्राच्यादितश्चक्रेपसव्यभ्रमणक्र-मात् । यत्र स्थाने स्थितः शुक्रः तां दिशं परिवर्जयेत् ॥ ३५ ॥ प्रतिशुक्राशानिपृष्ठि-तादिगधः कुरुते नृपतिगमने भवतः । मदिरामुदिता मदनाकुलिता प्रमदेव कुलापर मगताः ॥ ३६ ॥ वसिष्ठः—शुक्रे चास्तं गते यत्र चन्द्रे चास्तमुपागते । तयोर्वृद्धे च लये च सा यात्रा भंगरोगदा ॥ ३७ ॥ गर्गः—श्रेष्ठासिंहाजचापेर्के मध्याङ्गाक्युशनो गे । मीनकर्कालिगे दीर्घो मार्गेर्कः पृष्ठगः शुभः ॥ ३८ ॥ वराहः—यात्राजासिंहतुरगो-ते वरिष्ठा मध्या शनैश्चरबुधोशनसां गृहेषु । भानौ कुलीरवृषवृश्चिकगे विहीना स्तेति देवलमतेऽध्वनिपृष्ठतोर्कः ॥ ३९ ॥ लल्लः—अथ भवति विजयसमयश्चैत्रे ज्येष्ठे च र्गशीर्षे च । सद्योरिव्यसनेपि च महीपतेः शक्तियुक्तस्य ॥ ४० ॥ रत्नकोशे—त्रा वैशाखमासे भवति नरपतेः कोशहस्त्यश्वलाभो ज्येष्ठाषाढे कथंचिद्भवति यदि

गमो मध्यमा कार्यसिद्धिः । भाद्रे वा श्रावणे वा युवतिगृहगते चार्थलाभः प्रदिष्टः कल्याणं देशवृद्धिः सितभवनगते रोगशोकौ च मार्गे ॥ ४१ ॥ मासे पौषे तु यात्रा भवति नरपतेरर्थसिद्धिप्रदात्री माघे वा फाल्गुने वा भवति यदि गमो मध्यमा कार्यसिद्धिः । चैत्रे कार्यप्रणाशो भवति नरपतेः शत्रुसंघस्य वृद्धिः प्राहुः सर्वे मुनीन्द्राः सकलफलमिदं निष्फलं प्राहुरेके ॥ ४२ ॥ कालिदासः—ईषत्ताडिद्वासवतीमधिक्रिया घनांबरामिंद्रधनुःकटाक्षिणीम् । शिखिस्वनां वृत्तपयोधरां सुधी—प्रावृट्वशामेत्यनया नमिच्छति ॥ ४३ ॥ इयं लसच्छाद्वलकार्द्रचीवराध्वनीभुजाबंधितपांथपद्धतिः । नवांबुदासिंचितपर्वतस्तनावनीव वर्षासु चरद्वधूसखी ॥ ४४ ॥ योगयात्रायाम्—यात्रा नृपस्य शरदीष्टफला मधौ च छिद्रो रिपोर्न नियमोस्ति च केचिदाहुः । छिद्रेप्यरेर्भवति दैवयुतस्य सिद्धिः सीमान्यमामिषमिदं प्रतिभूमिपानि ॥ ४५ ॥ बादरायणः—सिंहे धनुषि मीने च स्थिते सप्त तुरंगमे । यात्रोद्वाहौ गृहारंभक्षौरकार्याणि वर्जयेत् ॥ ४६ ॥ लल्लः—तिथिं चतुर्थीं नवमीं चतुर्दशीं षष्ठीं कुहूं द्वादशिकां विहाय । अन्याः शुभाः स्युस्तिथयः प्रयाणे त्याज्या तथा योगिनि पूर्विका तिथिः ॥ ४७ ॥ रत्नकोशे—एकादशी द्वितीया त्रयोदशी पूर्णिमा तृतीया च । श्रेष्ठा प्रतिपद्दशमी सप्तमी पंचमी याने ॥ ४८ ॥ बृहस्पतिः—सर्वासु तिथयः शस्ताः शुक्ले त्वाद्यात्रिकं विना । कृष्णे चांत्यात्रिकं चैव षष्ठीं रिक्तां च वर्जयेत् ॥ ४९ ॥ योगयात्रायामपि—तिथिं चतुर्थीं नवमीं चतुर्दशीं विहाय विष्टिं करणं च गच्छतः । भवंति चामीकरवाजिवारणाः चतुर्थिपूर्वास्तु तदाप्तिवारणाः ॥ ५० ॥ अथ तिथिदोहदम् । रामः—पक्षादितो केदलतंडुलवारिसर्पिःश्राणा हविष्यमपि हेमजलं त्वपूपम् । भुक्त्वा व्रजेद्विचकमंबु च धेनुमूत्रं यावान्नपायचगुडान् रुधिरं च मुद्गान् ॥ ५१ ॥ लल्लः—पूऊ आनैदपावाई दिक्षु प्रतिपदादितः । योगिनी सन्मुखे त्याज्या द्यूते वादे रणे गमे ॥ ५२ ॥ अन्यत्रापि—प्रतिपन्नवमी पूर्वे द्वितीया दश चोत्तरे । तृतीयैकादशी वह्नौ चतुर्दशि नैर्ऋते ॥ ५३ ॥ पंचत्रयोदशी याम्ये षष्ठी भूतश्च पश्चिमे । सप्तमी पूर्णवायव्ये अमावास्याष्टमी शिवे ॥ ५४ ॥ अन्यः—शतमखेंदुहुताशनरक्षसां यमजलेशसमीरशूलिना । दिवि भुवि क्रमशः परिवर्तते सिततिथिप्रथमादिषु योगिनी ॥ ५५ ॥ योगिनी सुखदा वामे पृष्ठे वांछितदायिनी । दक्षिणे धनहंत्री च सन्मुखे मरणप्रदा ॥ ५६ ॥ निर्ऋतिवारुणवायुधनाधिपेश्वरशचीपतिवह्नियमेषु च । प्रतिपदादिकालगतिर्भवेत्यशुभदा खलु सन्मुखवामगा ॥ ५७ ॥ बृहस्पतिः—सूर्यवारे प्रयातस्य यात्रा योगविना विभोः । वायुरोगभवा पीडा कफपित्तोद्भवा तथा ॥ ५८ ॥ शक्रहनि प्राप्नोति निशानाथदिने गतः । विषाग्निशस्त्रतो घातैः पीड्यते पैत्तिकामयैः ॥ ५९ ॥ कुजवारे प्रयातो यो धनान्गंतासृगामयैः । बुध्वा स्वमंत्रशक्त्या वा जच्छत्रून् धनं लभेत् । यशसा वाहनादेश्च बुधवारे गतोन्वहे ॥ ६० ॥ धनान्-

धरादींश्च श्रीयोन्याप्नुयाद्गुरौ । धनधान्यसमृद्धिं च सर्वकार्याणि सिद्धिदम् ॥ ६१ ॥ वरस्त्रियोधनं कीर्तिर्विजयं मानसं सुखम् । शुक्रवारे गतो यात्रां लब्ध्वा जयमवाप्नुयात् ॥ ६२ ॥ युद्धे निर्जिततां गत्वा मृत्युबंधाय चाव्रजेत् । धनबन्धुविनाशश्च मंदवारे गतो नृपः ॥ ६३ ॥ गर्गः—गमनेर्कादयो वाराः क्रमेण कुर्वते फलम् । नैस्वं धनागमं रोगं धनं जयाश्रियं वधम् ॥ ६४ ॥ श्रीपतिः—शुक्रादित्यदिने न वारुणदिशं न ज्ञे कुजे चोत्तरां मंदेन्द्वोश्च दिनेन शक्रककुभं याम्यां गुरौ न व्रजेत् । शूलानीतिविलंघ्य यांति मनुजा ये वीतसौख्याशया भ्रष्टाशाः पुनरापतंति यदि ते शक्रेण तुल्या अपि ॥ ६५ ॥ दैवज्ञवल्लभे—चन्द्रे मंदे न च प्राचीं न गच्छेद्दक्षिणां गुरौ । न प्रतीचीं रवौ शुक्रे बुधे भौमे न चोत्तराम् ॥ ६६ ॥ गर्गः—नाग्निकोणे गुरौ चन्द्रे नैर्ऋत्ये नार्कशुक्रयोः । मारुते न कुजे गच्छेदीशाने न कुजार्कजे ॥ ६७ ॥ भृगुः—रवौ कुबेरे शशिवायुभागे भौमे प्रतीचीं बुधनैर्ऋते च । याम्यां गुरौ वह्निदिशास्तु शुक्रौ शनौ च कालो निवसेच्च पूर्वे ॥ ६८ ॥ प्राच्यां याने कुजे लाभौ मंदेन्द्वोर्दक्षिणे सुखम् । ज्ञे गुरौ पश्चिमे सिद्धिः शुक्रेर्के चोत्तरे शुभम् ॥६९॥ बुधवारो निषिद्धः स्यात्पशूनां गमने बुधैः । शुक्रवारे तथा स्त्रीणां योजनायाः परं सदा ॥ ७० ॥ अथ वारदोहदम् । बृहस्पतिः—सूर्यवारे घृतं प्राश्य सोमवारे पयस्तथा । गुडमंगारवारे च बुधवारे तिलानपि ॥ ७१ ॥ गुरुवारे दधिं प्राश्य शुक्रवारे यवानपि । माषान्भुक्त्वा शनेर्वारे शूलदोषोपशान्तये ॥ ७२ ॥ प्रियंवदं रवेर्वारे शय्यामध्युष्य शीतगोः । मृदं धृत्वा धरासूनोर्वारे बौधे तु रुद्रधृक् ॥ ७३ ॥ भस्मभृज्जीववारे च क्षिप्त्वा यष्टिं भृगोर्दिने । कलहो मंदवारे च यातुः तत्वान्यमी क्रमात् ॥ ७४ ॥ अर्कादौ धारयेद्याने कुंकुमं चन्दनं मृदम् । यवान्दधिघृतं तैलं वारशूलापनुत्तये ॥ ७५ ॥ तांबूलं चन्दनं मृच्च पुष्पं दधि घृतं तिलाः । वारशूलहराण्यर्कादानाद्धारणतोदनात् ॥ ॥ ७६ ॥ सोमे मंदे विंशतिः पूर्वनाड्यो भौमे सौम्ये चोत्तरे षोडशेषु । अर्के शुक्रे पश्चिमे भानुसंख्या याम्ये अष्टौ अंगिरा वारदोषाः ॥ ७७ ॥ रवौ नीलं बुधे पीतं कृष्णवर्णं शनैश्चरे । श्वेतं गुरौ भृगौ भौमे रक्तं सोमे च चित्रकम् ॥ ७८ ॥ नित्ययोगोद्भवाश्चैव नक्षत्रातिथिवारजाः । शुभाशुभं ग्रहोत्थाश्च सर्वे दोषाः शमं ययुः ॥७९॥ अथ होराकथनम् । वारात्षष्ठस्य षष्ठस्य होरा सार्द्धद्विनाडिका । अर्कशुक्रौ बुधचंद्रौ मन्दो जीवो धरासुतः ॥ ८० ॥ सूर्यस्य होरे रजकीसुवस्त्रं कुमारिका विप्रचतुष्टयं च । काकत्रयं द्वौ नकुलौ तथैव चाषस्तथैको वृषभस्तु गौश्च ॥ ८१ ॥ चंद्रस्य होरे द्विजयुग्मकाकभेरीमृदंगानकुलः खरोष्ट्रौ । हरिश्च गोमेषशुनस्तथैव पुष्पाणि नारी द्वयमेव मार्गे ॥ ८२ ॥ मार्जारयुद्धं कलहः कुटुंबे रजस्वला स्त्रीर्भवनस्य दाहः । नपुंसकः स्वात्रितयं द्विजश्च नग्ना विमुक्ता धरणी सुतस्य ॥ ८३ ॥ बुधस्य होरे शकुनश्च सर्वैः स्त्रीपुत्रयुक्ता कलशस्तु पूर्णः । सुचातकश्चाजगजौ कुमारः पुष्पाणि

नारी खलु दर्पणश्च ॥ ८४ ॥ गुरोर्द्विजातिर्गणिका च धेनुस्त्रीबालयुक्ता सज
घटश्च । ऊर्णा च काको गणिका बकश्च हंसस्यराजावहवस्तु वैश्याः ॥ ८५ ॥ शुक्र
होरे गणको द्विजेंद्रः काकात्रिकं वाथ नपुंसको वा । मद्यं हि मांसं गणिकां च धे
धान्यं च शूद्रत्रितयं च वैश्यः ॥ ८६ ॥ पतंगसूनोर्यवनश्च नम्रो रजस्वला स्त्रीमृ
कस्तथैव । पिशाचगृध्रौ विधवा च वह्निर्नपुंसकश्चाथ युवा प्रचंडः ॥ ८७ ॥ अ
यात्रानक्षत्राणि । बृहस्पतिः—पुष्याश्विहस्तमैत्राणि पौष्णवैष्णवसौम्यभम्
वासवं सर्वदिक्ष्वासु यात्रायां शोभनान्यमी ॥ ८८ ॥ पूर्वासु त्रिषु याम्यर्क्षे ज्येष्ठा
रौद्रभोरगे । सर्वाशासु गते यात्रां प्राणहानिर्भविष्यति ॥ ८९ ॥ श्रीपतिः—हस्तं
मैत्रश्रवणाश्विंतिष्यपौष्णश्राविष्ठाश्च पुनर्वसुश्च । श्रेष्ठानि धिष्णानि नवप्रया
त्यक्त्वा त्रिपञ्चादिमसप्तताराः ॥ ९० ॥ चित्राविशाखानलयाम्यसार्पवायव्यमि
श्वरदैवतानि । यात्रास्वनिष्टान्यपराणि भानि स्मृतानि नेष्टानि न निन्दितानि ॥ ९१
गर्गः—श्रेष्ठं प्रयाणमश्विन्यां स्याद्धनिष्ठानुराधयोः । पुष्ये पुनर्वसौ हस्ते रेवत्
श्रवणे मृगे ॥ ९२ ॥ नेष्टं प्रयाणमादिष्टं रोहिण्यामुत्तरात्रयम् । ज्येष्ठाशतभिषक्मू
पूर्वासु त्रिविधासु च ॥ ९३ ॥ कृतप्रयाणमष्टासु न कदाचिन्निवर्तते । चित्रात्रयम
घाश्लेषा तथार्द्राभरणीद्वयम् ॥ ९४ ॥ दैवज्ञवल्लभे—आर्द्राविशाखाबहुला च याम्य
चित्रामघास्वातिभुजंगमानि । प्रोक्तानि याने न शुभप्रदानि शेषाणि श्रेष्ठानि न
निन्दितानि ॥ ९५ ॥ पुष्ये मैत्रे करेऽश्विन्यां सर्वाशागमनं शुभम् । सर्वकाले हिता यात्रा
हस्ते पुष्ये मृगे श्रुतौ ॥ ९६ ॥ बृहस्पतिः—उत्तमं पुष्यभं प्राच्यां मध्यमं सौम्य
दैवतम् । उत्तमं मध्यमं याम्यां हस्तत्वाष्ट्रक्रमाद्भुभौ ॥ ९७ ॥ उत्तमं मध्यमे या
वायव्यां विष्णुमैत्रभे । वैष्णवं मध्यमं चोदगुत्तमे वासवाश्विभे ॥ ९८ ॥ दैवज्ञव
ल्लभे—शूलं ज्येष्ठेंदुमंदा प्राक्प्रत्यक्त्राहयर्कभार्गवाः । याम्ये वसुपंचधिष्णेज्याङ्गारा
मभमुत्तरे ॥ ९९ ॥ बृहस्पतिः—तव दिङ्मुखगो ज्येष्ठा नक्षत्रे बंधनं ययौ । बलिर्वि
दिशां दंडैः शूले यात्रा फलं फलात् ॥ १०० ॥ अजैकपादि याम्याशां पातोश्वा
लयं मुरः । त्वया नमुचिरप्येवं रोहिण्यां वारुणीं गतः ॥ १०१ ॥ अर्यम्णो सोमा
ग्यातः शंबरोऽप्याद्यमालयम् । एवं दिग्दंडशूलोत्थप्रतिलोमगते फलम् ॥ १०२
गर्गस्तु—प्राचीश्रवणशक्राभ्यां प्रतिपन्नवमी तथा । शनिसोमौ तथा प्रोक्तौ पूर्वस्य
दिशि वर्जयेत् ॥ ३ ॥ पूर्वभाद्रपदमाश्विन्यां पञ्चमी च त्रयोदशी । गुरुपंचधनिष्ठाय
याम्यां दिशि च वर्जयेत् ॥ ४ ॥ रोहिणीषु तथा पुष्यः षष्ठी चैव चतुर्दशी । शुक्र
केभौमवाराश्च पश्चिमां दिशि वर्जयेत् ॥ ५ ॥ द्वितीया दशमी चैव हस्ते चोत्तरफा
ल्गुनी । बुधभौमार्कवारेषु उत्तरां दिशि वर्जयेत् ॥ ६ ॥ दिनकरमृगपुष्यो रोहि
सूर्यशुक्रे मृगपतिधनुर्मेषे पूर्वभागे प्रशस्ता । यदि चलति कदाचित्कार्यसिद्धिं मनो
नशाति सकलशत्रुप्राप्तये दीर्घलक्ष्मीः ॥ ७ ॥ आदितिविविधतिष्ये अश्विनयाम

भागे मकरवृषभकन्याभौमवारे प्रशस्तः । यदि चलात कदाचिद्दक्षिणे दिग्विभागे भवति विबुधलोकप्राप्तये दीर्घलक्ष्मीः ॥ ८ ॥ सुरपतिहरिमूले पूर्वभाद्रा धनिष्ठा रविसुतशशिवारे मन्मथे तौलिकुंभे । यदि चलति कदाचित्पश्चिमे दिग्विभागे विलसति खलु लक्ष्मीः पङ्कजः षट्पदेन ॥ ९ ॥ तुरगवरुणपुष्याः पूर्वभाद्राधनिष्ठा अलिकिटझषलग्ने जीववारे शुभं स्यात् । यदि चलति नरेंद्रो उत्तरे दिग्विभागे भवति विबुधलोकाप्राप्तये तत्प्रशस्तम् ॥ ११० ॥ बृहस्पतिः–त्रिषूत्तरेषु रोहिण्यां विशाखासु विवर्जयेत् । अहोरात्रषडंशानां प्रथमांशं परं शुभम् ॥ ११ ॥ ज्येष्ठामू रगाद्रीसु द्वितीयांशं विना शुभम् । स्वात्यश्विनीषु पुष्येषु तृतीयांशं विना शुभम् ॥ १२ ॥ पौष्णमैत्रेंदुभेत्वाष्ट्रतुर्यांशेन विना शुभम् । पूर्वात्रिके च पैत्रे च याम्यांशं पंचमं विना ॥ १३ ॥ शेषेषु भेषु षष्ठांशे विनाह्नः शोभनो भवेत् ॥ १४ ॥ व्यासः–ध्रुवैर्मिश्रैर्न पूर्वाह्ने वासरार्द्धे न तीक्ष्णभैः । नापराह्ने तथा क्षिप्रैर्वदंति गमनं शुभम् ॥ १५ ॥ मृदुभिर्न रजन्यादौ निशामध्ये च नोग्रभैः । न चरैः शर्वरीशेषे कुर्वीत गमनं सुधीः ॥ १६ ॥ अथ नक्षत्रदोहदम् । कुल्माषास्तिलतंडुलानपि तथा माषाश्च गव्यं दधि त्वाज्यं दुग्धमैणमांसमपरं तस्यैव रक्तं तथा । तद्वत्पायसमेव चाषपललं मार्गं च शाशं तथा षाष्टिक्यं च प्रियंगवपूपमथवा चित्रांडजान्सत्फलम् ॥ १७ ॥ कौर्म्यं सारिकगौधिकं च पललं शाल्यं हविष्यं तथा तद्वत्स्यात्कृशरान्नमुद्गमपि वा पिष्टं यवानां तथा । मत्स्यान्नं खलु चित्रितान्नमथवा दध्यन्नमेवं क्रमाद्भक्ष्याभक्ष्यमिदं विचार्य सुधिया वक्ष्ये तथा लोकयेत् ॥ १८ ॥ बृहस्पतिः–अत्याप्तीयकयात्रायां नित्यमेव व्रजेत्सुधीः । अलभ्यालभ्यभक्षा ये स्मृत्वा स्पृष्ट्वाथ तान् क्रमात् ॥ १९ ॥ आज्यं तिलोदनं मस्त्यं पयश्चापि यथाक्रमम् । भक्षयेद्दोहदं विश्यमाशां पूर्वादिकां व्रजेत् ॥ १२० ॥ बृहस्पतिः–आवश्यकेथ गमने दोषैः सर्वैर्युतोपि वा । नक्षत्रवस्तुसहिते तोये स्नात्वा यथा व्रजेत् ॥ २१ ॥ प्रियंगुशालिसंयुक्तैस्तोयैः सिद्धार्थकैर्युतैः । मदयंतीयुतैः स्नात्वा दिशमैंद्रीं व्रजेन्नृपः ॥ २२ ॥ गोशृंगाच्च गिरिर्नद्यां वल्मीकाग्रात्तडागतः । हृदमृत्सहितैस्तोयैः स्नात्वा याम्यां व्रजेदथ ॥ २३ ॥ नदीकूलद्वयोत्थानमृदायुक्ताम्भसा नरः । स्नात्वा यायाद्दिशो मैत्रे नैर्ऋतीं पश्चिमां तथा ॥ २४ ॥ नदीसंगममृत्स्नात्वा वारुणा वायवे दिशौ । यायात्स बिल्वैः श्रवणे नरैः सिद्धार्थकैर्युतैः ॥ २५ ॥ श्रविष्ठा च व्रजेच्चांद्रं मधुना देवतारुणा । युतांभसा नृपः स्नात्वा भुक्त्यन्नगुडसंयुतम् ॥ २६ ॥ ज्योतिःप्रकाशे–नो लंघ्या वायुवह्निस्था रेखा सप्तर्क्षकेग्निभाक् । यदि दिग्लग्नशुद्धिः स्यान्न दुष्टं परिघादिकम् ॥ २७ ॥ गर्गः–प्रागादि सप्तसप्त स्युः कृतिकादीनि भानि तु । तत्राग्न्यनिलदिग्रेखां पारिघाख्यं न लंघयेत् ॥ २८ ॥ श्रीपतिः–प्रयोजनेष्वात्ययिकेषु भूपतिर्विलंघ्य रेखामपि परीघीं व्रजेत् । विहाय दिक्छूलसमाह्वयानुडून् यदि स्वदिग्लग्नविशुद्धिरिष्यते ॥ २९ ॥ बृहस्पतिः–

न दंडलंघने दोषो गवां स्त्रीणां विशेषतः । वाय्वाग्निदिग्गतो दंडस्तिर्यगाख्यः समाह्वयः. ॥ १३० ॥ प्राग्द्वारिकैश्च नक्षत्रैराग्नेयां शोभना गतिः । दक्षिणस्थैश्च नैर्ऋत्यां वायव्यां वारुणैरपि ॥ ३१ ॥ ईशान्यां दिश्युदक्संस्थैर्यात्रातीव शुभप्रदा । दंडशूलं विहायैव यायाद्दिङ्मुखसिद्धये ॥३२॥ गर्गः—रवींद्वनलयोश्चैव नानुकूलं शुभावहम् । तदभावे दिवारात्रौ यायाद्यातुर्वधोन्यथा ॥ ३३ ॥ श्रीपतिः—तिग्मांशुशश्यनलयोरनुकूलमाहुर्यानं प्रशस्तमुभयोरुपपत्त्यभावे । यायाद्दिवानिशमसंशयमन्यथा तु यातुर्भवंति बहुधा वधबंधदोषाः ॥ ३४ ॥ चन्द्रार्कौ ध्रुवमुत्तरायणगतौ प्रागुत्तराशां व्रजेत्तौ स्यातां यदि दक्षिणायनगतौ याम्यां प्रतीचीं व्रजेत् । तौ चाभिन्नदिशांगतौ विधुरवी नक्तं दिवा स्यात् क्रमाद्यस्तं सा बहुधा भवंति विपदो यातुर्वधाय स्फुटम् ॥ ३५ ॥ अथ चन्द्रविचारः । योगयात्रायाम्—गोचरे शुभदः शशी न चेदष्टवर्गपरिशोधितो न वा । पूर्ववायुरिव पुष्यकालजो यायिनां फलविनाशकृद्भवेत् ॥ ३६ ॥ ज्योतिःप्रकाशे—भद्राकुलिकपाताद्या दोषस्त्याज्याः प्रयत्नतः । लब्ध्वा चन्द्रबलं युद्धे धिष्णे लग्ने गमः शुभः ॥ ३७ ॥ यात्राशिरोमणौ—ऋतौ चन्द्रबलं पुंसां यात्रा शस्ताप्यनर्थदा । व्याख्या गंभीरशास्त्राणां संप्रदायं विना यथा ॥ ३८ ॥ भृगुः—मेषे च सिंहे धनपूर्वभागे वृषे च कन्या मकरे च याम्याम् । मिथुने तुले कुंभपपश्चिमायां कर्के च मीनोलिनि चोत्तरास्या ॥ ३९ ॥ सन्मुखे अर्थलाभाय दक्षिणे सुखसंपदः । पश्चिमे प्राणसंदेहो वामचन्द्रे धनक्षयः ॥१४०॥ मांडव्यः—करणभगणदोषं वारसंक्रांतिदोषं कुलिकतिथिजदोषं यामयामार्द्धदोषम् । शनिगुरुबुधदोषं राहुकेत्वादिदोषं हरति सकलदोषं चन्द्रमाः सन्मुखस्थः ॥ ४१ ॥ ज्योतिर्विवरणे—मेषाद्याश्च गता राशौ तिथ्यादौ च विमिश्रिता । वह्निभिस्तु हरेद्भागं त्रिविधश्चन्द्र उच्यते ॥ ४२ ॥ एके जलगतः सौख्ये लाभगः स्थलगोद्यमम् । शून्ये खे शून्यतां याति यात्राकाले विचारयेत् ॥ ४३ ॥ अथ चन्द्रमावर्णवाहनम् । मेषे वृषे तथा सिंहे यदि चन्द्रे भवेदिति । तदा तु रक्तवर्णं स्याद्वाहं कुंजरं मतम् ॥ ४४ ॥ वृश्चिके च तुले कर्के यदि स्याद्रजनीकरः । पीतवर्णो भवेच्चन्द्रो वाहनस्तु तुरंगमः ॥ ४५ ॥ कन्याधनुषि मिथुने यदि चन्द्रो भवेदिति । तदा च श्वेतवर्णः स्याद्वाहनो वृषभः स्मृतः ॥ ४६ ॥ कुंभे च मकरे मीने यदि चन्द्रो भवेदिति । तदा च कृष्णवर्णः स्याद्वाहनो महिषः स्मृतः ॥ ४७ ॥ रक्तवर्णे भवेद्युद्धं पीतवर्णे शुभं भवेत् । कृष्णे मृत्युं विजानीयात् श्वेतवर्णे च लाभदम् ॥ ४८ ॥ अथ नरवाहनविचारः । जन्मभाद्दिनभं यावद्गणनीयमनुक्रमात् । नवभिस्तु हरेद्भागं शेषं वाहनमुच्यते ॥ ४९ ॥ खरोऽश्वौ दंतिमहिषौ जंबुकः सिंहवायसौ । मयूरश्च तथा हंसो वाहनं नवधा मतम् ॥ १५० ॥ खरे च कलहं विद्यादश्वे बुद्धिर्विदेशके । गजे लाभं विजानीयान्महिषे व्याधिजं भयम् ॥ ५१ ॥ जंबुके च भयं घोरं सिंहे

विजयं स्मृतम् । काके चिन्ता विनिर्दिष्टा मयूरे सुखसंपदः ॥५२॥ हंसे जयो विजानी-याद्यात्राकाले नियोजयेत् ॥ ५३ ॥ वादरायणः-तिथयः पक्षगुणिताः सप्तभिर्भाजि-ताश्च ताः । स्युर्वारो वह्निगुणिता वसुभिश्चैव भाजिताः ॥ ५४ ॥ चतुर्गुणानि भान्यंग-भाजितानि यथा क्रमम् । पीडा स्यात्प्रथमे शून्ये मध्ये शून्ये महद्भयम् ॥ ५५ ॥ अंत्ये शून्ये च मरणं त्रिशून्यरहितं शुभम् ॥ ५६ ॥ गर्गः-तिथिवारं च नक्षत्र-मेकीकृत्य त्रिधा पुनः । संक्रांतिजन्मभं योज्यं तथा नामाक्षरान्वितम् ॥ ५७ ॥ द्वित्रिवेदैश्च गुणितं सप्ताष्टरसभाजितम् । आदिशून्ये भवेद्धानिमध्य शून्ये दरिद्रता ॥ ५८ ॥ त्रिशून्ये मरणं क्लेशं सर्वाङ्के विजयी भवेत् ॥ ५९ ॥ सूर्योदयाद्गतघटीदल-मिश्रिता च वारर्क्षयोगतिथयो निजभागहार्याः । तत्कालराजगमनाय विलोकनीयमु-द्दालकेन भणितं शुभदं मुहूर्तम् ॥ १६० ॥ अथ लग्नबलम् । दैवज्ञवल्लभे-शीर्षो-दये यातुरभीष्टसिद्धिः पृष्ठोदये वांछितकार्यनाशम् । यातव्यकाष्ठासुखमिष्टदं स्यादरिष्टदं दिक्प्रतिलोमलग्ने ॥ ६१ ॥ योगयात्रायाम्-लग्नेन हीनान्यगुणान्वितापि प्रीतिं न यात्रा मनसः करोति । स्वलंकृता रूपसमन्वितापि प्रभ्रष्टशीला वनितेव पुंसः ॥ ६२ ॥ लल्लः-जन्मोदये सिद्धिकरं प्रणाशं न जन्मराशेरुदये नृपस्य । स्थानात्तयोश्चोपचयोदयेषु शुभं फलं स्यादितरेषु नाशः ॥ ६३ ॥ जन्मर्क्षलग्नाष्टम-राशिलग्ने षष्ठोदये शत्रुभलग्नतो वा । तद्राशिवार्थैरथवोदयस्थैः करोति पातं विषभक्षणं स्यात् ॥ ६४ ॥ श्रीपतिः-जननसमयलग्नान्निधने जन्मभाद्वा निजरिपुभवनाद्वा शत्रुभे लग्नयाते । पतिभिरथ तदीयैर्लग्नगैः पार्थिवानां गमनमथ विषं वा भक्षित तुल्य-मेव ॥ ६५ ॥ वक्रः पंथा मीनलग्नेंशके वा कार्यासिद्धिः स्यान्निवृत्तिश्च तत्र । नेष्टः कुंभोऽप्युद्गमेंशे स्थितो वा लग्ने चापेंशे च नौ यानमिष्टम् ॥ ६६ ॥ गर्गः-दिवा दिन-बले लग्ने रात्रौ रात्रिबले तथा । गंतव्यं वा चरे लग्ने शुभयुक्ते स्थिरेपि वा ॥ ६७ ॥ दैवज्ञवल्लभे-शुभग्रहैर्जन्मनि संयुता ये ये चार्कतः सौम्ययुता द्वितीया । ते राशयो लग्नगताः प्रशस्ता ये क्रूरयुक्ता न शुभावहास्ते ॥ ६८ ॥ शस्तं न कीटालिवृषोदयेषु यानं तदंशेष्वथवा प्रयातुः । लग्नानि शस्तानि शुभग्रहाणां यन्नो प्रयाणं जनभोदये तत् ॥ ६९ ॥ चतुष्पदाद्यांघ्रिवशाविसिंहाः सरीसृपाश्चांबुचराश्च भक्ष्याः । सिंहस्य वश्या विसरीसृपास्यरूढं जनोक्त व्यवहारतोऽन्यत् ॥ १७० ॥ स्थलांबुसंभूतसरीसृ-पाख्या भवंति वश्या बलिनांशकानाम् । समा द्युसंस्था विषमा भजंते वश्या रजन्या विषमाः समानाम् ॥ ७१ ॥ स्याद्विद्विषो जन्मगृहोदयाभ्यां लग्नेष्टमे शत्रुवधः प्रयातुः । वधः प्रयातुस्त्वरिते प्रसूतौ रंध्रारिभे क्रूरशुभान्विते च ॥ ७२ ॥ ज्योतिः-प्रकाशे-सौम्यक्रूरेषु ये खेटास्तत्कालोपचयावहाः । तेषां वारांशवर्गाः स्युर्याने योज्या तनावपि ॥ ७३ ॥ श्रीपतिः-मूर्तिः कोशो धन्विनो वाहनानि मित्रं शत्रु-र्मार्गे आयुर्मनश्च । व्यापारप्राप्तिरप्राप्तिरेनं लग्नाद्भावाद्वादशैते विचिन्त्याः ॥ ७४ ॥

घ्नंति क्रूराख्यासि वर्ज्यौ हि भावान्न व्यापारं निर्हतः सूर्यभौमौ । सौम्याः पुष्णंत्ये स्वारिभावं शुक्रश्चास्तं मृत्युमूर्ती तथेंदुः ॥ ७५ ॥ ज्योतिःप्रकाशे-सर्वत्रगाः शुभ सौम्याः पापाव्ययायारिकर्मगाः । चन्द्रो नेष्टस्तनौ रन्ध्रे याने खार्किः सि स्तगः ॥ ७६ ॥ लग्नपो मृत्युपो याने रन्ध्रास्तारिव्ययोपगः । केप्याहुर्भयदो शेषस्थाने यशोर्थदः ॥ ७७ ॥ धनधीधर्मगं सूर्ये शुभमिच्छंति केचन । प्राये तद्वद्क्रूरं प्रशस्तं सर्वगं बुधम् ॥ ७८ ॥ केचिद्बुधर्व्यये चन्द्रं रिःफे रन्ध्रे गु त्यजेत् । षष्ठे शुक्रे च यात्रायां दिगीशे केन्द्रगे शुभम् ॥ ७९ ॥ राजश्रीजयधी लाभारोग्यबलोदयात् । पुष्णांति घ्नंति सूर्याद्याः सदसद्भावगाः क्रमात् ॥ १८० जन्मराशिं त्यजेल्लग्ने तथाभं नष्टवक्रिणे । अष्टमं तत्पतिं जन्म लग्नंलग्नेर्थदो गम ॥ ८१ ॥ मांडव्यः-प्रसूतौ बलहीनो यो यो विरोधी दशापतेः । सांप्रतं विबलश्चा लग्ने सौम्योपि नेष्टदः ॥ ८२ ॥ वसिष्ठः-सूर्याद्वितयिमृक्षं वेशिस्थानं प्रकीर्तित यवनैः । तच्चेष्वग्रहयुक्तं जन्मानि यात्रासु च सुलग्नम् ॥ ८३ ॥ वेशिर्विलग्नापगतो यासोर्विनापि यत्नात्कुरुते फलासिम् । शुभग्रहैर्जन्मनि संयुता ये ते राशयो ल गताः प्रशस्ताः ॥ ८४ ॥ अत्रिः-लग्नाधिपे सूर्यगतेथ नीचे पराजिते शत्रु नैधने वा । प्रयाति यद्यप्यथ राजयोगैः प्राप्नोति मृत्युं यवना वदंति ॥ ८५ ॥ एको केंद्रगो वक्री क्रूरः सौम्योथवा ग्रहः । वर्गो वा तस्य लग्नस्थो भवेद्यातुर्विनाशदः ॥८६ ज्योतिःप्रकाशे-नेष्टश्चतुष्टये वक्री तद्वर्गोपि विलग्नगः । करोति बहुधा नाशं तद्वर्गो यियासताम् ॥ ८७ ॥ श्रीपतिः-केंद्रवक्री मृतिं कुर्यात्तस्य वर्गोदिनं तथा । सुखे स्तजन्मभेङ्के च भंगः पापयुतेक्षिते ॥ ८८ ॥ बादरायणः-जन्मपौ केन्द्रगौ ग्राह तयोः शत्रुविलग्नगः । सौम्योपि नाशकृद्याने सुहृत्प्रायोपि कार्यकृत् ॥ ८९ ॥ अ लालाटीयोगः । वृद्धनारदः-दिगीश्वरो ललाटस्थो यदि वा दिग्बलान्वितः । ब बंधप्रदो यातुः केन्द्रगस्तुजयार्थदः ॥१९०॥नारदः-दिगीशः सूर्यशुक्रारराह्वर्कीदुज्ञसूरयः दिगीश्वरे ललाटस्थे यातुर्न पुनरागमः ॥९१॥ श्रीपतिः-दिशामधीशा रविशुक्रभौमतम यमेंद्विन्दुजसूरयः स्युः । ललाटगे न प्रविशेद्दिगीशे गंतव्यमस्मिन्खलु कंटकस्थे ॥९ लग्नं भानुसुतरिपुगतश्चंद्र आरो नभस्थः पातालस्थो निशिपतिसुतः खात्रिगो दे मंत्री । त्याज्यः शुक्रो व्ययभवनगतो भास्करिः सप्तमस्थो राहुर्नित्यं नवमनिध स्वां दिशं वर्जयंति ॥ ९३ ॥ निबंधसारे-प्राच्यां लग्नगतो ललाटग इनश्चंद्रोरिपुत्रोप वायव्यां यमदिश्यसृग्दशमगो ज्ञोप्युत्तरस्यां सुखे । ईशान्यां त्रिधने गुरुर्दहनो श्चायव्ययस्थो भृगुर्वारुण्यां मदगोर्कजोष्टनवगो राहुस्त्यजेन्नैर्ऋतिम् ॥ ९४ लालाटेग्निमयं करोति दिनकृत्कोशक्षयं लोहितः शत्रूणां विजयं शशांकतनयं से विमर्दं गुरुः । मृत्युं भास्करनंदनो नरपतेर्व्याधिं तथा विप्रराडेतान्येव समस्तखेच फलान्येकः सितो यच्छति ॥ ९५ ॥ रत्नावल्याम्-यात्रा दिगीशाद्यदि पंचमो

ग्रहो गृहे वीर्ययुतोधितिष्ठेत् । समुत्थिता सा कथितानि भुक्त्वा फलानि वीर्यान्नयति स्वकाष्ठाम् ॥ ९६ ॥ परस्परं त्रिकोणस्थौ मंदारौ भास्करोडुपौ । शुक्रारौ नयतः स्वाशां विनाशोक्तं फलं बलात् ॥ ९७ ॥ गर्गः—अंशाधिपलग्नपतौ जन्मपतिश्चास्तमुपगतौ यस्य । यात्रासमये मरणं तस्य भवति कतिपयाहेन ॥ १९८ ॥ साम्नो जीवसुतो नाथौ दंडस्य कुजभास्करौ । चन्द्रो दानस्य भेदस्य राहुकेतुबुधार्कजाः ॥ ९९ ॥

| साम | दंड | दान | भेद |
|---|---|---|---|
| बृ. शु. | सू. मं. | चं | बु. श. रा. के. |

यांति सामादयः सिद्धिं केंद्रोपचयसंस्थितौ । स्वनाथैर्वीर्यसंयुक्तैस्तद्वारैर्वा तदंशकैः ॥ २०० ॥ मांडव्यः—यात्रालग्ने ग्रहः स्वोच्चे दिगीशे स्वर्क्षमित्रगे । तदा यातुर्भवेत् सिद्धिर्व्यत्यये व्तत्ययं फलम् ॥ २०१ ॥ गर्गः—लग्ने यदा स्युर्गुरुशुक्रसाम्यौः सिद्ध्यंति कार्याणि च पंचमेह्नि । राज्यास्पदं वा सुखदेशलाभं मासस्य मध्ये ग्रहभावयुक्तम् ॥ २०२ ॥ जीवो बुधो वा भृगुनन्दनो वा स्थाने द्वितीये गमनस्य काले । ध्रुवस्वलाभं चतुरंगलाभे मासस्य मध्ये च चतुर्दशेह्नि ॥ ३ ॥ क्रूरा धनस्य रविराहुभौमाः सौरिश्च केतुस्त्रिभिरेव मासैः । वित्तस्य नाशं च ददाति मृत्युं सत्यं हि वाक्यं मुनयो वदंति ॥ ४ ॥ स्थाने तृतीये गुरुभार्गवौ च सोमस्य सूनुश्च निशांपतिश्च । करोति कार्यं सफलं च सर्वं पक्षद्वयेनापि दिनद्वयेन ॥ ५ ॥ क्रूराश्चतुर्थे गमने यदा तु न स्युश्च शेषाः शुभदा हि कार्ये । तत्रापि दैवेन भवेच्च सिद्धिः मासत्रयेणापि दशाहमध्ये ॥ ६ ॥ गुरुभृगुश्चंद्रबुधो यदा स्याच्छुभे च लग्ने तु सुते च युक्ता । कुर्वीत कार्यस्य च सिद्धिमिष्टां मासद्वयेनापि वदंति सत्यम् ॥ ७ ॥ जीवश्च शुक्रश्च बुधश्च षष्ठे करोति यात्रां सफलां विलग्नात् । पक्षद्वयेनापि वदंति सत्यं सौम्यर्क्षसंस्थः सबलश्च चन्द्रः ॥ ८ ॥ चेत्सप्तमस्थो गुरुसौम्यासोमाः कुर्वंति यात्रां विजयं नृपाणाम् । सर्वे नृपास्तस्य भवंति वश्या मासद्वयेनापि च पंचभिर्दिनैः ॥ ९ ॥ क्रूराश्च सर्वे यदि लग्नकाले मृत्युस्थिता मृत्युकरा भवंति । सौम्यो गुरुर्वा भृगुनंदनश्च दीर्घायुषं मृत्युकरश्च चंद्रः ॥ २१० ॥ धर्मस्थितौ वा यदि जीवशुक्रौ सोमस्य सूनुर्यदि लग्नकाले । लग्ने चरे वा यदि वा स्थिरे वा कार्यस्य सिद्धिश्च भवेच्च लाभः ॥ ११ ॥ कर्मस्थिता पापखगास्तु सौम्याः कुर्वंति कार्यं शनिवर्जितं च । लग्ने चरे वा यदि वा स्थिरे वा कार्यस्य सिद्धिश्च भवेच्च लाभः ॥ १२ ॥ कर्मस्थिताः पापखगास्तु सौम्याः कुर्वंति कार्यं शनिवर्जितं च । लग्ने चरे वा यदि वा स्थिरे च मासत्रयेणापि च चैकमासः ॥ १३ ॥ लाभस्थितौ गुरुबुधौ भृगुनन्दनो वा क्रूराश्च सर्वे शशिनैव युक्ताः । सद्यः फलाप्तिश्च भवेद्धि यात्रा पक्षैकमध्ये दिवसत्रयेण ॥ १४ ॥ पापाश्च सर्वे व्ययदा भवंति यात्राफलं गर्गमुनिप्रणीतम् । सर्वे शुभा द्वादशसंस्थिताश्च यात्रा भवेत्तत्र विचित्रलाभः ॥ १५ ॥ अथ योगयात्रायां लग्नांशविचारः । दिनकरदिवसे तथांशके वा यात्रा लग्नगते तथा रवौ । संतापयति स्मरातुरं वेश्येवार्थविवर्जितं नरम् ॥ १६ ॥ उदये शशिनो-

शुकेऽह्नि वा भवति गतो न चिरेण दुर्मनाः । प्रमदामिव गतयौवनां रत्यर्थं समवाप्य कर्कशाम् ॥ १७ ॥ भौमोदयेंऽशेऽह्नि वास्य यात्रा करोति बंधं वधमर्थनाशनम् । संसेविता पापपराङ्मुखेन मनोभवार्तेन पराङ्गनेव ॥ १८ ॥ बुधस्य लग्नांशकवासरे यात्रा नरं पीडयति प्रकामम् । भावानुरक्ता प्रवरांगनेव विदग्धचेष्टा मदनामितप्ता ॥ १९ ॥ गुरोर्विलग्नांशदिनेषु यात्रा हितानुबंधेप्सितकामदा च । जायेव मत्तमनसोनुकूला यथाभिवृद्ध्यै रतिदा हिता च ॥ २२० ॥ यात्रा भृगोरंशदिनोदये प्रीणाति कामैर्विविधैर्यियासुः । विलासिनी कामवशेन यांति भोगैरनेकैर्मदनातुरेव ॥२१॥ द्युलग्नभागेषु शनेश्च यात्रा प्राणच्छिदारान्विचिनोति दोषान् । अन्यप्रसक्ता वनितेव मोहान्निषेविता मन्मथमोहितेन ॥ २२ ॥ अथातो योगयात्रायां योगप्रशंसा तत्र बृहस्पतिः--एवं कथितकालो यो दुर्लभो यातुरंजसा । स्वल्पकालोयतस्तस्माद्योगं वक्ष्याम्यभीष्टदम् ॥ २३ ॥ नारदः--पचांगशुद्धिरहिते दिवसेपि फलप्रदा । यात्रायोगान्विचित्रांस्तान्योगान्वक्ष्येधुना ततः ॥ २४ ॥ बृहस्पतिः--योगाश्च प्रोक्तकालश्च यात्रायां तौ समौ फलौ । योगानत्र प्रवक्ष्यामि यथा प्रोक्ताः स्वयंभुवा ॥ २५ ॥ श्रीपतिः--तिथौ क्षणे भे करणे च वारे योगे विलग्ने हिमगौ नृपाणाम् । पापेपि यात्रा शुभदा योगैर्यतस्ततस्तान् कियतो विवक्ष्ये ॥ २६ ॥ महीभृतां योगवशात्फलोदये द्विजन्मनामृक्षगुणैस्तु जायते । स तस्कराद्यैः शकुनप्रभावतो जनस्य शेषस्य मुहूर्तशक्तितः ॥ २७ ॥ सागरे--योगैः फलं क्षितीशानां द्विजानां भगुणैर्भवेत् । शकुनैश्च चौराणामितरेषु मुहूर्ततः ॥ २८ ॥ बृहस्पतिः--व्रजंति चरणाद्यैस्तु शकुनैः शुभदं ययुः । मूर्खाश्च तस्कराद्याश्च क्षणवीर्याल्लभे न वा ॥ २९ ॥ भूपालवल्लभे--उपप्रशस्यते गर्गः शकुनं च बृहस्पतिः । अंगिरा मनउत्साहो विप्रवाक्यं जनार्दनः ॥२३०॥ श्रीपतिः--निमित्तराशिरेकतो नृणां मनस्तथैकतः । अतो यियासतां बुधैर्मनोविशुद्धिरिष्यते ॥ ३१ ॥ यथा योगाद्विषं पथ्यं मध्वाज्यं मृत्युदं भवेत् । तथा योगाफलं दद्युस्त्यक्त्वा खेटाः स्वकं फलम् ॥ ३२ ॥ यथा हि योगादमृतायते विषाय मध्वपि सर्पिषा समम् । तथा विहाय स्वफलानि खेचराः फलं प्रयच्छन्ति हि योगसंभवम् ॥ ३३ ॥ शौनकः--न तिथिं न च नक्षत्रं न योगं नैन्दवं बलम् न तारां वैधृतिं विष्टिं व्यतीपातादिकं यथा ॥ ३४ ॥ योगमेव प्रशंसंति वसिष्ठात्रिपराशराः । तस्मात्सर्वप्रयत्नेन याने योगान्विलोकयेत् ॥ ३५ ॥ श्रीपतिः--यमज्ञशुक्रज्यमहीसुतेषु त्रिबन्धुलग्नास्तरिपुस्थितेषु । विलीयते वैरिचमूरणाग्रे लाक्षेव वन्हौ नृपतेर्गतस्य ॥ ३६ ॥ गुरुर्लग्ने रविः षष्ठे रन्ध्रे नेंदुश्च गच्छतः । यस्य तस्यारिसेना खलमैत्रीव न स्थिरा ॥३७॥ योगयात्रायाम्--सौम्यैश्च पापैश्च चतुष्टयस्थैः कृच्छ्रेण सिद्धिमुपैति कार्यम् । प्रयाणयानप्रतिघातवक्रैर्नदीव धात्रीधरकंदरेषु ॥ ३८ ॥ बृहस्पतिः--पापश्चैकस्तृतीयस्थो लग्ने जीवोस्तगे बुधे । जलेभृगुरुपायातौ योगोयं या

रुत्तमः ॥ ३९ ॥ कुजजीवार्कशुक्रज्ञास्त्रिसुतार्थाष्टमसप्तगाः । यदि यात्रा शुभा यातुः सर्वसंपत्समृद्धिदा ॥ २४० ॥ गुरौ विलग्नगे केंद्रगते लाभगतेथवा । चन्द्रेचाष्टमगे यातुर्यात्रा शोभनदा भवेत् ॥ ४१ ॥ केंद्रत्रिकोणगाः सौम्यास्तृतीयायारिगाः परे । यदि यातुः शुभा यात्रा द्रव्यदा विजयावहा ॥ ४२ ॥ शुभेष्वेको बली केंद्रगतो वाथ त्रिकोणगः । योगोयं ब्रह्मणा प्रोक्तो यात्रायां शुभदः स्वयम् ॥ ४३ ॥ रामाचार्यः—एकोज्ञेज्यसितेषु पंचमतपःकेंद्रेषु योगस्तदा द्वौ चैतेष्वधियोग एव सकला योगाधियोगः स्मृतः । योगक्षेममथापि योगगमने क्षेमं रिपूणां वधं तद्वत्क्षेमयशोवनीश्च लभते योगाधियोगे व्रजन् ॥ ४४ ॥ इषमाससिता दशमी विजया शुभकर्मसु सिद्धिकरी कथिता । श्रवणर्क्षयुताः सुतरां शुभदा नृपतेस्तु गमे जयसिद्धिकरी॥४५॥ अग्निं हुत्वा दैवतं पूजयित्वा नत्वा विप्रानर्चयित्वा दिगीशम् । दत्वा दानं ब्राह्मणेभ्यो दिगीशं ध्यात्वा चित्ते भूमिपालोऽभिगच्छेत् ॥ ४६ ॥ उद्वृत्तप्रथमत एव दक्षिणांघ्रिं द्वात्रिंशत्पदमभिगत्य दिश्ययानम् । आरोहेत् तिलघृतहेमताम्रपात्रं दत्वादौ गणकवराय च प्रगच्छेत् ॥ ४७ ॥ दैवज्ञं पूजयित्वा तु विदुषः प्रज्ञशकृतः । प्रदक्षिणामिमां कृत्वा तिष्ठन्ध्यायेदुमापतिम् ॥ ४८ ॥ प्राङ्मुखस्त्रिपुरघ्नं च जपेद्द्विधां च मंगलम् । ॐकाराश्रीथशब्श्च ध्रुवमांगलिकेन च ॥ ४९ ॥ अन्यत्रापि—वैन्यं पृथुं हैहयमर्जुनं च शाकुंतलेयं भरतं नलं च । रामं च यो विस्मरति प्रभाते यानेथलाभो विजयश्च सिद्धिः ॥ २५० ॥ तिथ्यादिकालावयवा विलग्नं सूर्यादिखेटाः कुलदैवताश्च । भूतानि विघ्नेश्वरविप्रवेशात्कुर्वंतु कल्याणमिह प्रयाणे ॥ ५१ ॥ रामः—देवगृहाद्वा गुरुसदनाद्वा स्वगृहान्मुख्यकलत्रगृहाद्वा । प्राश्यं हविष्यं विप्रानुमतः पश्यञ्छृण्वन्मंगलमेयात् ॥ ५२ ॥ बृहस्पतिः—पूर्वं दक्षिणमुद्धृत्य पादं यात्रां नराधिपः । द्वात्रिंशच्च पदं गत्वा धारयेन्नृपतिस्वयम् ॥ ५३ ॥ दैवज्ञामात्यविप्राद्यैः पुरोगैः स्वजनैर्धृतः । दृष्ट्वाष्टौ मंगलान्गच्छेन्नृपतेर्मंगलान् शृणु ॥ ५४ ॥ पूर्णकुंभं ध्वजं छत्रं दीपं शंखं च चामरम् । अंकुशं शस्त्रमादित्यमष्टमंगलमीरितम् ॥ ५५ ॥ प्राग्यायाद्वा रणे राजा रथगोदक्षिणां दिशम् । पश्चिमां तुरगो यायादुत्तरां नरवाहनाः ॥ ५६ ॥ किंचिद्विलंब्य यातव्ये कार्येनिर्गमनं बुधैः । योगे वा प्रत्यकाले वा यात्रावत्साध्यसाधना ॥ ५७ ॥ पितापुत्रौ न गच्छेतां न गच्छेत् भ्रातरद्वयम् । नवस्त्रीभिर्न गतव्यं न गच्छेद्ब्राह्मणत्रयम् ॥ ५८ ॥ श्रीपतिः—अपेक्ष्य कार्यं स्वयमप्रयाणे महीभृतां निर्गममाहुरार्याः । छत्रायुधाद्यं मनसत्वभीष्टं प्रचालयेद्वै नृपतिर्जयार्थी ॥ ५९ ॥ दैवज्ञचिंतामणौ—वाहनं भूषणं शस्त्रं छत्रं सिंहासनादिकम् । स्वकार्यापेक्षया याने जायिकं चालयेन्नृपः ॥ २६० ॥ रामः—गेहाद्गेहान्तरमपि गमस्तर्हि यात्रेति गर्गः सीम्नः सीमांतरमपि भृगुर्बाणविक्षेपमात्रम् । प्रस्थानं स्यादिति कथयतेथो भरद्वाज एवं यात्रा कार्या बहिरिह पुरात्स्याद्वसिष्ठो ब्रवीति ॥ ६१ ॥

लल्लः—न कुर्यात्स्वगृहे गच्छन्प्रस्थानं च कदाचन । भूमिकामस्तु कुर्वीत गृहात्ति-क्रमदूरतः ॥ ६२ ॥ श्रीपतिः—वसेन्न चैकत्र दश क्षितीशो दिनानि नो सप्त च मंडलीकः । यः प्राकृतः सोपि न पंचरात्रं भद्रेण यात्रा परतः प्रयोज्या ॥ ६३ ॥ सामंततः षोडश योजनानि भुंक्ते महीमंडलिकाभिधानः । भूपालसंज्ञः शतयोजनानि स सार्वभौमः सकला धरित्री ॥ ६४ ॥ **दिक्परत्वेन प्रस्थानस्थितिादनज्ञानम्** । अन्यः—सप्ताहानेव पूर्वस्यां प्रस्थानं पंच दक्षिणे । पश्चिमे त्रीणि शस्तानि सौम्यायां तु दिन-द्वयम् ॥ ६५ ॥ स्वयं पंचदिनं तिष्ठेद्दिनं भार्या दशांबरम् । त्रिमंत्रिवाहनं सप्तस्वर्णं मासं द्विरायुधम् ॥ ६६ ॥ श्रीपतिः—एकरात्राध्युषितस्य जगुर्यात्रामत्रिगौतमच्यवनाः । पंचात्रिसप्तरात्राद्भूयो भद्रेण संयोज्या ॥ ६७ ॥ अन्यः—जन्मर्क्षे चाष्टमे चन्द्रे वारे भौमे शनैश्चरे । प्रस्थितोपि न गन्तव्यमत्यंतं गर्हितं दिनम् ॥ ६८ ॥ क्रोधक्षौररति-श्रमांमिषगुडघृताश्च दुग्धाशवक्षाराभ्यंगभयासितांबरवमीस्तैलं कटूह्यं रसम् । क्षीरः क्षौररतिः क्रमात्रिशरसप्ताहं परं तद्दिने रोगरुग्यार्तवकंसितान्यातिलकं प्रस्थानकेपीति च ॥ ६९ ॥ श्रीपतिः—सौदामिनीवर्षणगर्जितेषु नाकालजेषु प्रवसेन्नरेंद्रः । आसप्तरा-त्राद्ध्रुमद्भुतेषु दिव्यांतरिक्षक्षितिजेषु चैवम् ॥ २७० ॥ छुछुकाकभवनगोधिका रला-पिंगलापिकवधूश्च पोतकी । सूकरी पुरुषसंज्ञिताशिवा वामतः खलु यियासतां शुभाः ॥ ७१ ॥ ऋक्षो भासः छिक्करो वानरश्च श्रीकंठश्च पिपलाख्योरुरुश्च । ये स्त्रीसंज्ञा दक्षिणाः स्युः प्रशस्ताः प्रोक्ताः पूर्वैः सूरिभिस्ते प्रयाणे ॥७२॥ क्षेमंकरा नील-कंठाश्चालूकाखरजंबुकाः । प्रस्थाने वामतः श्रेष्ठाः प्रवेशे दक्षिणाः शुभाः ॥७३॥ भारद्वाजो नाकुलश्चापसंज्ञा छागो बर्ही दृष्टमात्रः शुभः स्यात् । गोधा सर्पः शशकोजाहकश्च यान दृष्टः कृकलासोपि नेष्टः ॥ ७४ ॥ मत्स्यः—औषध्यानि नियुक्तो यो धान्यं कृष्णं तु यद्भवेत् । कार्पासश्च तृणं शुष्कं शुष्कं गोमयमेव च ॥ ७५ ॥ इंधनं च तथांगारं गुडं च सर्षपाः शुभम् । अभ्यक्तो मलिनो मन्दस्तथा नग्नश्च मानवः ॥ ७६ ॥ मुक्तकेशो रुजार्तश्च काषायांबरधारिणः । उन्मत्तः कथितः सत्वो दीनोवाथ नपुंसकः ॥ ७७ ॥ अपःकंपस्तथा चर्मकेशबंधनमेव च । तथैवोद्धृतसाराणि पिण्याकादि तथैव च ॥ ७७ ॥ चाण्डालस्य शवं चैव राजबंधनपालकाः । वधकाः पापकर्माणा गर्भिणी स्त्री नपुंसकाः ॥ ७९ ॥ क्व यासि तिष्ठ आगच्छ किंते तत्र गतस्य तु । अन्यशब्दाश्च ये ऽनिष्टास्ते विपत्तिकरा अपि ॥ २८० ॥ ध्वजादौ वायसस्थानमग्निदा-हादिगर्हितम् । सबलावाहनानां च वस्त्रसंगस्तथैव च ॥ ८१ ॥ दुष्टे निमित्ते प्रथमे अमंगल्यविनाशनम् । केशवं पूजयेद्विद्वान्स्तवेन मधुसूदनम् ॥ ८२ ॥ द्वितीये च ततो दृष्टे प्रतीपे प्रविशेद्गृहे । अथेष्टानि प्रवक्ष्यामिमंगलानि तथानघ ॥ ८३ ॥ **अथ प्रशस्तशकुनाः** । प्रशस्तो वाद्यशब्दश्चाभिन्नभेरीरवस्तथा । पुरतः शब्द याहीति शस्यते नतु पृष्ठतः ॥ ८४ ॥ गच्छेति चैकपश्चाद्यः पुरस्ताद्भुवि गर्हितः ।

श्वेताः सुमनसः पृष्ठा पूर्णकुम्भस्तथैव च ॥ ८५ ॥ जलजाः पक्षिणश्चैव मांसमत्स्यस्य पार्थिवाः । गावस्तुरंगमो नागो वृद्ध एकः पशुस्त्वजा ॥ ८६ ॥ त्रिदशाः सुहृदो विप्रा ज्वलितश्च हुताशनः । गणिका च महाभागा दूर्वा चार्द्राश्च गोमयम् । रुक्मं रूप्यं च ताम्रं च सर्वरत्नानि चाप्यथ ॥ ८७ ॥ औषधानि च सर्वज्ञा यवाः सिद्धार्थका-स्तथा । खड्गं पात्रं पताका च मृत्तिकायुधपीठकम् ॥ ८८ ॥ राजलिंगानि सर्वाणि शवं रुदितवर्जितम् । घृतं दधि पयश्चैव फलानि विविधानि च ॥ ८९ ॥ स्वस्तिवृद्धि-निनादश्च नंद्यावर्तः स कौस्तुभः । वादित्राणां शुभः शब्दो गंभीरः सुमनोहरः ॥२९०॥ गांधारषड्जऋषभा ये गीताः सुस्वराः स्वराः । वायुः सशर्करोत्युष्णः सर्वविघ्नविनाश-कृत् ॥ ९१ ॥ प्रतिलोमस्तथा नीचो विज्ञेयो भयकृद्द्विजः । अनुकूलो मृदुः स्निग्धः सुखस्पर्शः सुखावहः ॥ ९२ ॥ शस्तान्येतानि धर्मज्ञ यत्र स्यान्मनसः प्रियम् । मनसस्तुष्टिरेवात्र परमं जयलक्षणम् ॥ ९३ ॥ मनोत्सुकत्वं मनसः प्रहर्षः शुभस्य लाभो विजयप्रवादः । मांगल्यलब्धिः श्रवणं च राज्ञां ज्ञेयानि नित्यं विजयावहानि ॥ ९४ ॥ क्रोशादूर्ध्वं च शकुनं शुभं वा यदि वा शुभम् । मुनिभिर्निष्फलं प्रोक्तं शकुनानां विचे-ष्टितम् ॥ ९५ ॥ स्वकीयां परकीयां वा स्त्रियं पुरुषमेव च । ताडयित्वा तु यो गच्छेत्त-द्गतं तस्य जीवनम् ॥ ९६ ॥ श्रीपतिः-नपरंविषयप्राप्तौ राजा द्विजामरसज्जनद्रविणहरणे चित्तः कुर्यान्नवा कुलयोषिताम् । विगततुरगानार्तान्नहन्यान्नभीतिनैरायुधान्प्रमुदितमनः सैन्यः शस्ते क्षणे स्वपुरं विशेत् ॥ २९७ ॥ इति श्रीज्योतिर्विद्वयादत्तात्मजरामदीनकृते संग्रहे बृहद्दैवज्ञरंजने पञ्चाशीतितमं यात्राप्रकरणं समाप्तम् ।

## अथ षडशीतितमं गृहप्रकरणं प्रारभ्यते ।

अथ गृहनिर्माणप्रयोजनम् । भविष्यत्पुराणे-गृहस्थस्य क्रियाः सर्वाः न सिद्ध्यंति गृहं विना । यतस्तस्माद्गृहारंभप्रवेशसमयं ब्रुवे ॥ १ ॥ वास्तुराजवल्लभे-श्रीपुत्रादिकभोगसौख्यजननं धर्मार्थकामप्रदं जन्तूनामयनं सुखास्पदमितं शीताम्बुघ-र्मापहम् । वापीदेवगृहादिपुण्यमखिलं गेहात्समुत्पद्यते गेहं पूर्वमुशन्ति तेन विबुधाः श्रीविश्वकर्मादयः ॥ २ ॥ कोटिघ्नं तृणजे पुण्यं मृण्मये दशसंगुणम् । इष्टके शतको-टिघ्नं शैलेऽनंतं फले गृहे ॥ ३ ॥ व्यक्ताव्यक्तं गृहं कुर्यादभिन्नाभिन्नमूर्तिकम् । यथा स्वामिशरीरं, स्यात्प्रासादमपि तादृशम् ॥ ४ ॥ तद्रूपं तत्प्रमाणं स्यात्पूर्वसूत्रं न चालयेत् । हीने तु जायते हानिरधिके स्वजनक्षयः ॥ ५ ॥ वापीकूपतडागानि प्रासाद भवनानि च । जीर्णानुद्धरते यस्तु पुण्यमष्टगुणं लभेत् ॥ ६ ॥ अथ ग्रामवासा-द्यनुकूलदिशादिविचारः । ज्योतिःसारे-ग्रामादेरनुकूलत्वं दिशो भूतग्रहस्य च । मासधिष्ण्यादिकं शुद्धं वीक्ष्यायव्ययमंशकान् ॥ ७ ॥ गुरुशुक्रार्कचन्द्रेषु स्वोच्चादि-

बलशालिषु । गुर्वर्केंदुबलं लब्ध्वा गृहारंभः प्रशस्यते ॥ ८ ॥ विवाहोक्तान्महादोषा-नृते यामित्रशुद्धितः । रिक्ताकुजार्कवारौ च चरलग्नं चरांशकम् ॥ ९ ॥ त्यक्त्वा कुजार्कयोश्चांशं पृष्ठे चाग्रे स्थितं विधुम् । बुधेज्यराशिगं चार्कं कुर्याद्गेहं शुभाप्तये ॥ १० ॥ द्वारशुद्धिं निरीक्ष्यादौ भशुद्धिं विषचक्रतः । निष्पंचके स्थिरे लग्ने द्यो-चालयमारभेत् ॥ ११ ॥ अथ ग्रामवासचक्रम् । वास्तुरत्नावल्याम्-मस्तके पंच लाभाय मुखे त्रीणि धनक्षयः । कुक्षौ पंचधनं धान्यं षट्पादे स्त्रीदरिद्रता ॥ १२ ॥ पृष्ठे चैकं पादहानिर्नाभौ चत्वारि संपदः । गुह्ये चैकं भयं पीडा हस्ते चैकं तु कंद-नम् ॥ १३ ॥ वामे चैककरे भेदो ग्रामचक्रं नराकृतिः । गणयेज्जन्मनक्षत्रं ग्रामनक्ष-त्रतः सदा ॥ १४ ॥ अन्यः-ग्रामो यत्र भवेदृक्षं तदाद्याः सप्त मस्तके । पृष्ठे सप्त हृदि सप्त पादे सप्त च तारकाः ॥१५॥ मस्तके च धनी मानी पृष्ठे हानिं च निर्धनम् । हृदये सुखसंपत्तिः पादे पर्यटनं सदा ॥ १६ ॥ अथ ग्रामवासार्थं शिवाबलि-र्निरूप्यते । तत्रैव-रात्रौ भक्त मांसादि संयुक्तं भूमौ निधाय ततः कियद्दूरं गत्वा तच्छब्दं चिन्तयेत् । नैर्ऋत्य हि शिवा रौति तदा वासं न कारयेत् । ईशाने मरणं प्रोक्तं चोत्तरे कुरु सर्वतः । वासं वायव्यकोणेषु भयं किंचित्प्रजायते ॥ १७ ॥ पश्चिमे वासकरणादानन्दः परिकीर्तितः । अष्टदिक्षु यदा रौति तदा वासं न कारयेत् ॥ १८ ॥ अथ राशिपरत्वेन ग्रामनिवासेनिषिद्धस्थानान्याह । रामदै-वज्ञः-गोसिंहनक्रमिथुनं निवसेन्न मध्ये ग्रामस्य पूर्वककुभोलिझषांगनाश्च । कर्को धनुस्तुलभमेषघटाश्च तद्वद्वर्गाः स्वपञ्चमपरा बलिनः स्युरैन्द्र्याः ॥ १९ ॥ ज्योतिः-सारे-एकभे सप्तमे ग्रामे वैरं हानिस्त्रिषष्ठके । तुर्याष्टद्वादशे रोगः शेषः स्थाने शुभं भवेत् ॥ २० ॥ ज्योतिःसारे-स्वनामराशेर्यद्राशी द्विशरो केशदिङ्मितः । स ग्रामः शुभदः प्रोक्तस्त्वशुभः स्यात्ततोन्यथा ॥ २१ ॥ अथ दशाज्ञानमावश्यम् । वा-स्तुप्रदीपे-गजशरर्तु युगाश्व महीगुणा द्विसहिता मघवादि दिशि क्रमात् । गृहपतेर-भिधापुरदिङ्मिता वसुहृता भवनस्य दशा भवेत् ॥ २२ ॥ सूर्येंदुभौमास्त्वगुजीवमंद-सौम्याश्च केतुर्भृगुजाः क्रमेण । षट्दिङ्गधृत्यवनीस्वरांकचन्द्राघना सप्त नखाश्च तद्वत् ॥ २३ ॥ क्षुण्णं गतर्क्षं निजवर्षसंख्यया भक्त भभोगेन गताः समादिकाः (२३) विंशोत्तरमितेनात्र दशा योज्याः प्रयत्नतः ॥ २४ ॥ वास्तुसारे-ग्रामस्तथ कूपस्वगेहपण्याद्रामातडागात्खलु दुर्गतो दश । वियोजनीया स्वगृहस्य देहिनां यदग्रवर्ती स्थिरसंयुतश्च ॥ २५ ॥ वास्तुरत्नावल्याम्-स्ववर्गं द्विगुणीकृत्य परवर्गेण योजयेत् । अष्टभिस्तु हरेद्भागं योधिकः स ऋणी भवेत् ॥ २६ ॥ भूपालवल्लभे-वर्गे-शस्ताक्ष्यमार्जारसिंहश्वासर्पमूषकाः । इभावौः पूर्वतस्तेषां स्ववर्गात्पंचमो रिपुः ॥ २७ ॥ अथ भूमिलक्षणम् । वर्णपरत्वेन भुवोर्वर्णरसगंधादिविचाराच्छुभाशुभौ बोद्धव्यौ । वस्तुप्रदीपे-शुक्लमृत्स्ना च याभूमिर्ब्राह्मणा सा प्रकीर्तिता । क्षत्रिया रक्तमृत्स्ना

च हरिद्वैश्या प्रकीर्तिता ॥ २८ ॥ कृष्णा भूमिर्भवेच्छूद्रा चतुर्धा परिकीर्तिता ॥ २९ ॥
ब्राह्मणी भूः कुशोपेता क्षत्रिया स्याच्छराकुला । कुशकाशाकुला वैश्या शूद्रा सर्वतृ-
णाकुला ॥ ३० ॥ ब्राह्मणी सर्वसुखदा क्षत्रिया राज्यदा भवेत् । धनधान्यकरी वैश्या
शूद्रा तु निंदिता भवेत् ॥ ३१ ॥ वसिष्ठः-श्वेता शस्ता द्विजेंद्राणां रक्ता भूमिर्महीभु-
जाम् । विशां पीता च शूद्राणां कृष्णान्येषां विमिश्रिता ॥ ३२ ॥ रसमाह नारदः-
मधुरं कटुकं तिक्तं कषायंच रसाः क्रमात् ॥ ३३ ॥ उपगंधानाह गृहकारिकायाम्-
घृतासृगन्नमद्यानां गंधश्च क्रमशो भवेत् ॥ ३४ ॥ अथ भूमेरष्टदिक्प्लवत्वफलमुक्तम् ।
कारिकायाम्-श्रियं दाहं तथा मृत्युं धनहानिं सुतक्षयम् । प्रवासं धनलाभं च विद्या-
लाभं क्रमेण च ॥ ३५ ॥ विदधात्यचिरेणैव पूर्वादिप्लवतो मही । मध्यप्लवा मही नेष्टा
न शुभा प्लवतत्परा ॥ ३६ ॥ एवमन्यैरप्युक्तम्-शंभुकोणे प्लवा भूमिः कर्तुः श्रीसुख-
दायिनी । पूर्वप्लवा वृद्धिकरी धनदा तूत्तरप्लवा ॥ ३७ ॥ मृत्युशोकप्रदा नित्यं
सर्वथा दक्षिणप्लवा । गृहक्षयकरी सा च भूमिर्या नैर्ऋतिप्लवा ॥३८॥ धनहानिकरी चैव
कीर्तिदा वरुणप्लवा । वायुप्लवा तथा भूमिर्नित्यमुद्वेगकारिणी ॥ ३९ ॥ अथ भूमि-
दोषाः । स्फुटिता च सशल्या च वल्मिकारोहिणी तथा । दूरतः परिवर्ज्येयं कर्तुरा-
युर्धनापहा ॥ ४० ॥ स्फुटिता मरणं कुर्यादूषरा धननाशिनी । सशल्या क्लेशदा
नित्यं विषमा शत्रुवर्द्धिनी ॥ ४१ ॥ वास्तुप्रदीपे-चैत्ये भयं गृहकृतं वल्मिके श्वभ्र-
संकुले विपदः । गर्तायां तु विनाशः कूर्माकारे धनविनाशः ॥ ४२ ॥ अथभूमे-
र्लक्षणानि । भुजबलभीमे गजपृष्ठलक्षणम् । दक्षिणे पश्चिमे चैव नैर्ऋते वायुकोणके ।
एभिरुच्चो भवेद्भूमौ गजपृष्ठो विधीयते ॥ ४३ ॥ गजपृष्ठे भवेद्वासः सलक्ष्मीधनपूरितः ।
आयुर्वृद्धिकरी नित्यं जायते नात्र संशयः ॥ ४४ ॥ अथ कूर्मपृष्ठम् । मध्ये तूच्चं
भवेद्यत्र नीचं चैव चतुर्दिशम् । कूर्मपृष्ठे भवेद्भूमौ तत्र वासो विधीयते ॥ ४५ ॥
कूर्मपृष्ठे भवेद्वासी नित्योत्साहसुखप्रदः । धनं धान्यं भवेत्तस्य निश्चितं विपुलं धनम्
॥ ४६ ॥ दैत्यपृष्ठो यथा-पूर्वाग्निशंभुकोणे तु उन्नतिश्च यदा भवेत् । पश्चिमे च यदा
नीचं दैत्यपृष्ठोभिधीयते ॥ ४७ ॥ दैत्यपृष्ठे भवेद्वासो लक्ष्मीर्नायाति मंदिरे । धन-
पुत्रपशूनां च हानिरेव न संशयः ॥ ४८ ॥ नागपृष्ठो यथा-पूर्वपश्चिमयोर्दीर्घो
दक्षिणोत्तर उच्चता । नागपृष्ठं विजानीयात्कर्तुरुच्चाटनं भवेत् ॥ ४९ ॥ नागपृष्ठे यदा
वासो मृत्युरेव न संशयः । पत्नीहानिः पुत्रहानिः शत्रुवृद्धिः पदे पदे ॥ ५० ॥
आयते सिद्धयः सर्वाश्चतुरस्रे धनागमः । वृत्ते तु बुद्धिवृद्धिः स्याद्भद्रं भद्रासने भवेत्
॥ ५१ ॥ चक्रे दरिद्रमित्याहुर्विषमे शोकलक्षणम् । राजभीतिस्त्रिकोणे स्याच्छकटे तु
धनक्षयः ॥ ५२ ॥ दंडे पशुक्षयं प्राहुः शूर्पे वासे गवां क्षयम् । कूर्मे तु बंधनं
पीडाः धनुःक्षेत्रे भयं महत् ॥ ५३ ॥ कुंभाकारे कुष्ठरोगो भवत्येव न संशयः ।
पवने नश्यति नेत्रं धनं च बंधुक्षयो मुरजे ॥ ५४ ॥ वसिष्ठः-मनसश्चक्षुषोर्यत्र

संतोषो जायते भुवि । तस्य। कार्यं गृहं सर्वैरिति गर्गादिसंमतम् ॥ ५५ ॥ अथ ग्रामजीवितादिज्ञानम् । नामग्रामंदिशा चैव स्वरयुक्ता त्रिभिर्भजेत् । एके जीवं द्वये मृत्युः शून्ये शून्यं प्रकीर्तितम् ॥ ५६ ॥ अथ जीवितादि भूमिज्ञानम् । व्यामविस्तारयोरैक्यं ग्रामाक्षरसमन्वितम् । चतुर्गुणं नामयुक्तं शिवनेत्रेण भाजितम् ॥५७॥ एकेन भूमिजीवः स्याद्द्वाभ्यां च समता भवेत् । शून्यशेषे तु शून्यं स्यादित्युक्तं रुद्रयामले ॥ ५८ ॥ अन्यः—भूम्यक्षरं चतुर्गुण्यं तिथिवारं च मिश्रितम् । त्रिभिर्भागं प्रदातव्यः शेषेण फलमादिशेत् ॥ ५९ ॥ एकेन जीवता भूमिः द्विशेषे भूः समावती । त्रिशेषेमृतभूमिः स्यादित्युक्तं चादियामले ॥ ६० ॥ यत्र वृक्षाः प्ररोहंति सस्योद्गर्षात्प्रवर्द्धते । सा भूमिर्जीविता वाच्या मृता चातोन्यथा भवेत् ॥ ६१ ॥ अथ राजगृहम् । वाराहीये—उत्तममष्टाभ्यधिकं हस्तग्रहं नृपगतं पृथुत्वेन । अष्टाष्टोनान्येवं पंच सपादानि दैर्घ्येण ॥ ६२ ॥ एवं पंच प्रकाराणि राजगृहाण्यभिधाय सेनापतिगृहमाह तत्रैव-षड्भिषड्भिर्हीना सेनापतिसद्मनां चतुःषष्टिः । पंचैवं विस्तारात्षड्भागसमन्विता दैर्घ्यम् ॥६३॥ अथ सचिवालयमाह । षष्टिश्चतुर्विहीना वेश्मानि भवंति पंच सचिवस्य । स्वाष्टांशयुतदैर्घ्यं तदर्धतो राजमहिषीणाम् ॥ ६४ ॥ षड्भि षड्भिश्चैवं युवराजस्यापवर्जिताशीतिः । अंशोन्विता च दैर्घ्यं पंच तदर्द्धैस्तदनुजानाम् ॥ ६५ ॥ नृपसचिवन्तरतुल्यं सामंतप्रवरराजपुरुषाणाम् । नृपयुवराजविशेषः कंचुकिवेश्या कलाज्ञानी ॥ ६६ ॥ अध्यक्षाधिकृतानां सर्वेषामेव कोशरतितुल्यम् । युवराजमंत्रिविवरं कर्मताध्यक्षदूतानाम् ॥ ६७ ॥ चत्वारिंशद्धीना चतुश्चतुर्भिस्तु पंच यावदिति । षड्भागयुता दैर्घ्ये दैवज्ञपुरोधसोर्भिषजः ॥६८॥ चातुर्वर्ण्यव्यासो द्वात्रिंशत्स्याचतुश्चतुर्हीनाः । आषोडशादितपरं न्यूनतरमतीव हीनानाम् ॥६९॥ सदशांशं विप्राणां क्षत्रस्याष्टांशसंयुतं दैर्घ्यम् । षड्भागयुतं वैश्यस्य भवति शूद्रस्य पादयुतम् ॥ ७० ॥ नृपसेनापतिगृहयोरंतरमाने कोशरतिभवने । सेनापतिचातुर्वर्ण्यविवरतो राजपुरुषाणाम् ॥ ७१ ॥ अथ पारसवादीनां स्वमानसंयोगदलसमं भवनम् । हीनाधिकं स्वमानादशुभकरं वास्तु सर्वेषाम् ॥ ७२ ॥ पश्वाश्रमिणामामितं धान्यायुधवह्निरतिगृहाणां च । नेच्छंति शास्त्रकारा हस्तशतादुच्छ्रितं परतः ॥ ७३ ॥ वास्तुनि यो विस्तारः स एवोच्छ्राय निश्चयः शुभदः । शालैकेषु गृहेष्वपि विस्ताराद्द्विगुणितं दैर्घ्यम् ॥ ७४ ॥ अथ पिंडसाधनम् । रामदैवज्ञः—एकोनितेष्टर्क्षहताद्वितिथ्योरुपोनितेष्टायहतेन्दुनागैः । युक्ताद्युनैश्चापि युता विभक्ता भूपाश्विभिः शेषमितो हि पिंडः ॥ ७५ ॥ स्वेष्टाय नक्षत्रभवोथ दैर्घ्यहृत्स्याद्विस्तृतिर्विस्तृतिहृच्च दैर्घ्यता । आयध्वजो धूम्रहरिश्च गोखरे भध्वांक्षका पिंडमिहाष्टशेषिते ॥ ७६ ॥ टोडरानंदे—विस्तारेणाहतं दैर्घ्यं विभजेदष्टभिस्ततः । यच्छेषं स भवेदायो ध्वजाद्यास्ते स्युरष्टधा ॥७७॥ ध्वजो धूम्रो हरिः श्वागौः खरेभौ वायसोष्टमः

पूर्वादिदिक्षु चाष्टानां ध्वजादीनामवस्थितिः ॥ ७८ ॥ कीर्तिः शोको जयो वैरं धनं निर्धनता सुखम् । रोगश्चेति गृहारंभे ध्वजादीनां फलं क्रमात् ॥ ७९ ॥ अन्योपि—ध्वजे बहुधनं प्रोक्तं धूम्रे चैव भ्रमं भवेत् । सिंहे चाविरला लक्ष्मीः श्वाने च कलहं भवेत् ॥ ८० ॥ धनं धान्यं वृषे चैव खरेषु स्त्रीविनाशनम् । गजाख्ये पुत्रलाभश्च ध्वांक्षे सर्वस्य शून्यता ॥ ८१ ॥ स्वस्वस्थाने ध्वजः श्रेष्ठो गजसिंहस्तथा वृषः । ध्वजः सर्वगतो देयो वृषं नान्यत्र दापयेत् ॥ ८२ ॥ वृषं सिंहं गजं चैव खेटे कर्कटकीटयोः । द्विपः पुनः प्रयोक्तव्यो वापीकूपसरेषु च ॥ ८३ ॥ मृगेंद्रमासने दद्याच्छयनेषु पुनर्गजः । वृषं भोजनपात्रेषु च्छत्रादिषु पुनर्ध्वजम् ॥ ८४ ॥ अग्निवेश्मसु सर्वेषु गृहे वन्ह्युपजीविनाम् । धूम्रं नियोजयेत्केचिच्छ्वानं म्लेच्छादिजातिषु ॥ ८५ ॥ खरो वेश्यागृहे शस्तो ध्वांक्षश्चापि कुटीषु च । वृषसिंहौ गजश्चापि प्रासादपुरवेश्मसु ॥ ८६ ॥ वसिष्ठस्तु—गजाये वा ध्वजाये वा गजानां सदनं शुभम् । अश्वालयं ध्वजाये च खराये वृषभेपि वा ॥ ८७ ॥ उष्ट्राणां मंदिरं कार्यं गजाये वा वृषे ध्वजे । पशुसद्म वृषाये च ध्वजाये वा शुभप्रदम् ॥ ८८ ॥ शय्यासु वृषभः शस्तः पीठे सिंहः शुभप्रदः । अन्यत्र छत्रवस्त्राणां वृषाये वा ध्वजेपि वा ॥ ८९ ॥ पादुकोपानहौ कार्यौ सिंहाख्येप्यथवा ध्वजे । उक्तानामप्यनुक्तानां मंदिराणां ध्वजः शुभः ॥ ९० ॥ च्यवनः—महानसेग्निशालायां गृहेवाग्न्युपजीविनाम् । धूम्रं दद्यात्तथा श्वानं यवनांत्यजयोर्गृहे ॥ ९१ ॥ खरो वेश्यागृहे योज्यो ध्वांक्षः पक्षिपतेर्गृहे । वृषं सिंहं गजं दद्यात्प्रासादे पुरमंदिरे ॥ ९२ ॥ वस्त्रेषु धर्मशालायां कुंभस्तंभे ध्वजे ध्वजः । गोगजो भूगृहे देयो,साधारणतृणौकसि ॥ ९३ ॥ यंत्रे शस्त्रे रथे सिंहो भाण्डागारे शुभो गजः । धान्याम्बुस्थानगोश्वेभशालायां वृषभः शुभः ॥ ९४ ॥ अन्यः—ब्राह्मणस्य ध्वजं दद्यात्सिंहं दद्यात्तु क्षत्रियः । वैश्यस्य च वृषं दद्याद्गजं शूद्रे सदार्पयेत् ॥ ९५ ॥ चर्मकारगृहे धूम्रः श्वानोपि रजकस्य च । खरे चैव तथा वेश्या ध्वांक्षे चान्यत्र जातिषु ॥ ९६ ॥ अथ केषु केषु आयादिकं न भाव्यमित्युक्तम् । दैवज्ञवल्लभे—अलिंदिनीव्यूहविनिर्गमाद्याश्चतुर्दिशं ये गृहभूषणाये । आयादिकं तेषु न चिन्तनीयं यतो न ते वास्तुपरिग्रहे स्युः ॥ ९७ ॥ चिन्तामणौ—यत्र दैर्घ्यं गृहादीनां द्वात्रिंशद्धस्ततोधिकम् । न तत्र चिन्तयेद्विद्वान् गुणानायव्यादिकान् ॥ ९८ ॥ वसिष्ठोपि—एकादशयवादूर्ध्वं द्वात्रिंशद्धस्तकावधि । तावदायादिकं चिंत्यं तदूर्ध्वं नैव चिन्तयेत् ॥ ९९ ॥ मासादि शुद्धिरपि नेति राजमार्तंडे—आयव्ययौ मासशुद्धिं चिन्तयेन्न महालये ॥ १०० ॥ च्यवनोपि—आयव्ययौ भूमिशुद्धिं तृणगेहे न चिन्तयेत । शिलान्यासादि नो कुर्यात्तथागारे पुरातने ॥ १०१ ॥ मार्तंडेपि—द्वात्रिंशाधिकहस्तमंब्धिवदनं-तार्णत्वलिंदादिकं नेष्वायादिकमीरितं तृणगृहं सर्वेषु मासस्मृदितम् ॥ १०२ ॥ अथ गृहे वाराद्यानयनम् । मुहूर्तचिन्तामणौ—पिंडेनवासांगगजाग्निनागनागाब्धिनागैः-

गुणिते क्रमेण । विभाजिते नागनगांकसूर्येनागर्क्षतिथ्यर्क्षखभानुभिश्च ॥ ३ ॥ आये
वरांशको द्रव्यमृणमृक्षतिथिर्युतिः । आयुश्चाथ गृहेशर्क्षगृहमैक्यं मृतिप्रदम् ॥ ४ ॥
अन्यत्रापि–गृहैर्विगुण्यं स्वगृहस्य पिंडं विभाजितं पर्वतभिर्मुनींद्राः । शेषं भवेद्वार
रवींदुभौमा बुधो गुरुर्भार्गवसूर्यनंदनः ॥ ५ ॥ वाराः सूर्यारशन्यंशाः सदा वह्निभय
प्रदाः । गृहपिंडरसैर्गुण्यं ग्रहैश्चापि विभाजितम् ॥ ६ ॥ यच्छेषं स भवेदंशस्त
स्येशाश्चापि कीर्तिताः ॥ ७ ॥ अर्कश्चन्द्रः कुजो राहुर्जीवमन्दज्ञकेतवः । भृगुपुत्र
क्रमेणैव अंशाधीशाः प्रकीर्तिताः ॥ ८ ॥ पिंडाष्टगुणितं चात्र सूर्यभिश्च विभाजितम्
अवशिष्टं भवेद्द्रव्यं तत्तन्नामाब्रवीदिदम् ॥ ९ ॥ वस्त्राणि शस्त्राणि च पुस्तकानि
द्रव्याणि धान्यानि वसुंधरा च । कुटुंबविद्यापशुवाटिकानि भांडानि भूषाणि धनानि
द्वादश ॥ ११० ॥ इहाग्निगुणितं पिंडमष्टभिर्भाजितं च यत् । अवशिष्टमृणसंज्ञं स्या
त्तस्येशाः कथिताः पुरा ॥ १११ ॥ गृहपिंडं गजैर्हत्वा सप्तविंशतिभिर्भजेत् । यच्छे
तद्भवेदृक्षमश्विन्यादि बुधैः क्रमात् ॥ १२ ॥ नक्षत्रफलं तु ताराद्वारा । उक्तं च–वि
पत्प्रदा विपत्तारा प्रत्यरिः प्रतिकूलदा । निधनाख्या तारका तु सर्वथा निधनप्रद
॥ १३ ॥ कश्यपः–दत्ते दुःखं तृतीयर्क्षं पंचमर्क्षं यशःक्षयम् । आयुःक्षयं सप्तमर्क्षं
कर्तृभाद्गृहभावधि ॥ १४ ॥ वसिष्ठः–गृहस्य तत्कृतस्त्वेकं धिष्ण्यं चेन्निधनप्रदम्
॥ १५ ॥ अन्योपि–गृहगहेशयोर्भैक्यं मृतिः स्यान्नियमेन तु ॥ १६ ॥ वास्तुसारे–
अश्विन्यादि त्रयं मेषे सिंहे प्रोक्तं मघात्रयम् । मूलादित्रितयं चापे शेषेषु नवराशयः
॥ १७ ॥ अत्र विवाहवन्मेलापकं विचार्यं परंत्वत्र नाडी अन्यथा ज्ञेया । तदुक्तम्
सर्वं विवाहवज्ज्ञेया विपरीता तु नाडिका । एकनाडी यदा जातस्त्वन्यमेव न चिन्तयेत्
॥ १८ ॥ वृद्धगर्गः–प्रभुः पण्यांगनामित्रं देशग्रामं परं गृहम् । एकनाडिस्थितं भव्यं
विरुद्धं वेधवर्जितम् ॥ १९ ॥ ज्योतिःसागरेपि–सेव्यसेवकयोश्चैव गृहतत्स्वामिनो
रपि । परस्परं मित्रयोश्च एकनाडी प्रशस्यते ॥ १२० ॥ गृहपिंडं गजैर्हत्वा तिथिभि
र्भागमाहरेत् । शेषं चात्र तिथिर्ज्ञेयं वास्तुशास्त्रविशारदैः ॥ २१ ॥ अन्योपि–
शक्राहतं क्षेत्रफलं त्रिंशद्भक्तावशेषकम् । प्रतिपदादितिथिर्ज्ञेयं दर्शं रिक्तां विवर्जयेत्
॥ २२ ॥ अथ योगानयनम् । संग्रहकारः–गृहपिंडं युगैर्हत्वा भक्ता नक्षत्रसंख्यया
विष्कंभादि युतिर्ज्ञेया नामतुल्यफलं विदुः ॥ २३ ॥ अतिगंडधृतिः शूलगंडव्याघात
वज्रकाः । व्यतिपातपरिघश्चैव वैधृतिर्वर्जिता गृहे ॥ २४ ॥ गृहस्य पिंडं गजभिर्वि
गुण्यं विभाजितं शून्यदिवाकरेण । यच्छेषमायुःकथितं मुनीन्द्रैरायुष्यपूर्णे भवने शुभं
स्यात् ॥ २५ ॥ अथ गृहस्यायुःपूर्णे सति कस्मिन्दोषेण गृहविनाशमिति ज्ञानम्
राजमार्तंडे–हस्तात्मकं क्षेत्रफलं गजाहतं संवत्सरैर्भाजितलब्धकं यत् । तत्खेंदुयुग्
भवनस्य जीवनं यच्छेषितं भूतहृतं विलीयते ॥ २६ ॥ पृथिव्यापोनलो वायुराकाश
इति पंचभिः । गृहस्यायुष्यसंपूर्णे विनाशो जायते ध्रुवम् ॥ २७ ॥ अथ दानादि

मंडलज्ञानम् । स्वामिहस्तप्रमाणेन दीर्घविस्तारसंयुतः । नवभिस्तु हरेद्भागं शेषं मण्डलमुच्यते ॥ २८ ॥ दाता च भूपतिश्चैव क्लीवश्चौरो विचक्षणः । षष्ठो भोगी धनाढ्यश्च दरिद्रो धनदस्तथा ॥ २९ ॥ अथ क्षेत्रप्रमाणशुद्धिः । ग्रन्थान्तरे-चरणात्कर्णपर्यंतं दण्डं सरलवंशजम् । पूर्वतः पश्चिमं यावदुत्तरां दक्षिणां तथा ॥ १३० ॥ तयोश्च दंडयोर्योगं कृत्वा भूमौ विलिख्य तम् । अष्टभिश्च हरेद्भागं शेषांकेन शुभाशुभम् ॥ ३१ ॥ प्रथमं रजकस्थानं चन्द्रवत्फलमादिशेत् । द्वितीयं चर्मकारस्य क्षुत्पिपासाकुलो गृही ॥ ३२ ॥ तृतीये ब्राह्मणस्थानं जनोद्वासकरं महत् । चतुर्थे शूद्रकस्थानं धनधान्यप्रदायकम् ॥ ३३ ॥ पंचमे योगिनः स्थानं महदौदास्यकारकम् । षष्ठे तु गोपकस्थानं सर्वसिद्धिप्रदायकम् ॥ ३४ ॥ सप्तमे क्षत्रियस्थानं सदा युद्धकरं नृणाम् । अष्टमे चक्रिणःस्थानं मरणं रोगकारकम् ॥ ३५ ॥ मुहूर्तचिन्तामणौ-भं नागतष्टं व्यय ईरितोसौ ध्रुवादि नामाक्षरयुक् सपिण्डः । तष्टो गुणैरिंद्रकृतांतभूपा ह्यंशा भवेयुर्न शुभोंतकोत्र ॥ ३६ ॥ टोडरानन्दे-तत्र चार्केष्टभिर्भक्तेर्योङ्कः स स्याद्गृहे व्ययः । पैशाचस्तु समायः स्याद्राक्षसोप्याधिके व्यये ॥ ३७ ॥ आयान्यूनतरः पक्षो व्ययस्यैषा विचारणा । मूलराशौ व्यये क्षिप्ते ग्रहनामाक्षरेषु च ॥ ३८ ॥ ततो हरेत्त्रिभिर्भागं यच्छेषं सोंशको भवेत् । इंद्रो यमश्च राज्यस्यादंशकाश्च त्रयस्त्विमे ॥ ३९ ॥ अथ ध्रुवादिज्ञानमाह । वेदघ्नपिंडे नृपभाजिते च शेषं भवेन्नाम ध्रुवादिकं गृहम् । क्षुण्णं नगैर्वेदहृतं च वर्णव्ययो भवेन्नागहृते च ऋक्षे ॥ १४० ॥ पिंडे ध्रुवादिकं युक्तं सव्यतंत्रिभिभाजितम् । शेषमिंद्रयमीशाः स्युस्तृतीयं भूपसंज्ञितम् ॥ ४१ ॥ अंशवत्सूरिभिर्योज्यं मित्रशत्रुसमादिकम् । गृहेशाधिपतिर्मित्रं यदि स्याद्ध्वजनायकः ॥ ४२ ॥ तदा स्वपदमाप्नोति विपरीते पदच्युतिः । वारेशो यदि मित्रं स्यात्तदा सौभाग्यदो भवेत् ॥ ४३ ॥ शौर्यशून्यतरस्थानं समेन स्वल्पलाभदः । स्वर्णशयोर्यदा मित्रं तदा स्वर्णेशवृद्धिदम् ॥ ४४ ॥ हानिः स्यादन्यथा सर्वं समे वृद्धिः क्षये क्षतिः । ऋक्षेशो यदि मित्रं स्याच्छ्रियं मोदप्रदः सदा ॥ ४५ ॥ एवं क्रमेण ज्ञातव्या सव्यासव्यफलं क्रमात् । तिथ्याधिपतिर्मित्रं चेत्सदेवो रक्षकः सदा ॥ ४६ ॥ बाधा स्याद्यदि शौर्यत्वं तत्कृताविविधापदः । योगक्रमेण यन्नाम तदीशे यदि मित्रता ॥ ४७ ॥ तदुद्भवं फलं श्रेष्ठं विपरीतं पदच्युतिः ॥ गृहायुष्यपतिर्मित्रं पूर्णशौर्यं न किंचन ॥ ४८ ॥ इदमेव फलं स्थूलं रचितं विस्तृतेर्भयात् । अथ मासशुद्धिः । वास्तुराजवल्लभे-चैत्रे शोककरं गृहादिरचितं स्यान्माधवेर्थप्रदं ज्येष्ठे मृत्युकरं शुचौ पशुहरं तद्वृद्धिदं श्रावणे । शून्यं भाद्रपदे त्विषे कलिकरं भृत्यक्षयं कार्तिके धान्यं मार्गसहस्ययोर्दहनभीर्माघे श्रियः फाल्गुने ॥ ॥ ४९ ॥ वास्तुप्रदीपे-चैत्रे व्याधिमवाप्नोति यो गृहं कारयेन्नरः । वैशाखे धनरत्नानि ज्येष्ठे मृत्युं तथैव च ॥ १५० ॥ आषाढे भृत्यरत्नं वै पशुवर्गमवाप्नुयात् ।

श्रावणे मित्रलाभं तु हानिं भाद्रपदे तथा ॥ ५१ ॥ भार्याहानिमिषे मासि कार्त्तिके
धनधान्यकम् । मार्गशीर्षे तथा वित्तं पौषे तस्करतो भयम् ॥ ५२ ॥ लाभं तु बहुशो
विंद्यादग्निर्माघे विनिर्दिशेत् । कांचनं फाल्गुने विंद्यादिति मासफलं बुधैः ॥ ५३ ॥
श्रीपतिरपि—शोको धान्यं मृतिपशुहती द्रव्यवृद्धिर्विनाशो युद्धं भृत्यक्षतिरथ फलं
श्रीश्च वह्नेर्भयं च । लक्ष्मीप्राप्तिर्भवति भवनारंभकर्तुः क्रमेण चैत्रादूचे मुनिरिति फलं
वास्तुशास्त्रोपदिष्टम् ॥ ५४ ॥ नारदोपि—सौम्यफाल्गुनवैशाखमाघश्रावणकार्त्तिकाः ।
मासाः स्युर्गृहनिर्माणे पुत्रारोग्यफलप्रदाः ॥ ५५ ॥ वासिष्ठः—मासे तपस्ये तपसि
माधवे नभसि त्विषि । ऊर्जे च गृहनिर्माणं पुत्रपौत्रधनप्रदम् ॥ ५६ ॥ अन्यः—
वैशाखे श्रावणे मार्गे माघे फाल्गुनके तथा । कन्यायुग्मधनुर्मीने भिन्ने सूर्ये गृहं
शुभम् ॥ ५७ ॥ **संक्रांतिवंशेन मासाः** । नारदः—गृहसंस्थापनं सूर्ये मेषस्थे
शुभदं भवेत् । वृषस्थे धनवृद्धिः स्यान्मिथुने मरणं ध्रुवम् ॥ ५८ ॥ कर्कटे शुभं
प्रोक्तं सिंहे भृत्यविवर्द्धनम् । कन्या रोगं तुला सौख्यं वृश्चिके धनवर्द्धनम् ॥ ५९ ॥
कार्मुके च महाहानिर्मकरे स्याद्धनागमः । कुंभे तु रत्नलाभः स्यान्मीने सद्म भयाव-
हम् ॥ १६० ॥ श्रीपतिरपि—मीनचापमिथुनांगनागते कारयेन्न गृहमेव भास्करे ॥६१॥
वास्तुमंडने—जीर्णोद्धारे जलाग्न्यादिभयतः पतनं गृहम् । श्रावणोर्जे तथा माघे कार-
येत्सुखदं गृहम् ॥ ६२ ॥ देवालयं तडागं च वाटिकोद्धरणं गृहम् । गृहमासोदितं
शस्तं माघेपि मुनिसंमितम् ॥ ६३ ॥ तृणदारुगृहारंभे मासदोषो न विद्यते । पाषा-
णेष्टयादि गेहानि निंद्यमासे न कारयेत् ॥ ६४ ॥ वास्तुशास्त्रे—शस्तं पशुगृहं ज्येष्ठे
आश्विने धान्यनीडकम् । पानीया शालिकागेहं चैत्रे धारा तथा गृहम् ॥ ६५ ॥
व्यवहारोच्चये—शुक्लपक्षे भवेत्सौख्यं कृष्णे तस्करतो भयम् ॥ ६६ ॥ वासिष्ठः—गीर्वाण-
पूर्वगीर्वाणमंत्रिणोर्दृश्यमानयोः । शुक्लपक्षे दिवा कार्यं न निर्माणं च रात्रिषु
॥ ६७ ॥ **तिथिमाह** । दारिद्र्यं प्रतिपत्कुर्याच्चतुर्थी धनहारिणी । अष्टम्युच्चाटनं चैव
नवमी शस्त्रघातिनी ॥ ६८ ॥ अमायां राजभीतिश्च चतुर्दश्यां स्त्रियक्षयः ॥ ६९ ॥
भृगुरपि—रिक्ताष्टमी दर्शरवींदुभौमा विवर्जनीया विदुषा प्रयत्नतः ॥ १७० ॥ अथ
**नक्षत्राणि** । वास्तुप्रदीपे—चित्रानुराधामृगरेवतीषु स्वातौ च तिष्ये च तथोत्तरासु
ब्राह्मे धनिष्ठाशततारकासु गेहादिकारंभणमामनंति ॥७१॥ ऋक्षोच्चये—चित्रा शतभिषा
स्वाती हस्तः पुष्यपुनर्वसू । रोहिणी रेवती मूला श्रवणोत्तरफाल्गुनी ॥ ७२ ॥
धनिष्ठा चोत्तराषाढा तथा भाद्रोत्तरान्विता । अश्विनी मृगशीर्षं च अनुराधा तथैव च
॥ ७३ ॥ वास्तुपूजनमेतेषु नक्षत्रेषु करोति यः । समाप्नोति नरो लक्ष्मीमिति प्राह
पराशरः ॥ ७४ ॥ गर्गः—त्र्युत्तरेपि च रोहिण्यां पुष्ये मैत्रे करद्वये । धनिष्ठाद्वि-
तये पौष्णे गृहारंभः प्रशस्यते ॥ ७५ ॥ वाराहीये—हस्तादित्यशशांकपुष्यपवनप्रा-
जेशमित्रोत्तरा चित्राश्विश्रवणेषु वृश्चिकघटौ त्यक्त्वा विरिक्ते तिथौ । शुक्राचार्यशशै

अरज्ञशशिनो वारेनुकूले विधौ सद्भिर्वेश्मानि सूतिकागृहविधिः क्षेमंकरः कीर्तितः ॥७६॥ वास्तोः कर्माणि धिष्णवारतिथयोश्विन्युत्तरा रेवती हस्तादित्रयमैत्रतोयवसुभं पुष्यो मृगो रोहिणी । निंद्यौ भूसुतभास्करौ च शुभदा पूर्णा च नन्दातिथिर्नेष्टा वैधृतिगंडशूलपरिघव्याघातवज्रावपि ॥ ७७ ॥ विष्कंभो व्यतिपातकौ च नः शुभौ योगाः परे शोभनाः शस्तं नागबवाख्यतैतिलगरं युग्मं तार्थिं वर्जयेत् । मौहूर्ते त्वथ विश्वमष्टनवमं पंचत्रिरागाद्रिकं श्रेष्ठं च द्वितियं तुला वृषघटौ युग्मं धनुः कन्यके ॥ ७८ ॥ द्व्यंगे वा स्थिरभे च सौम्यसहिते लग्ने शुभैर्वीक्षिते सौम्यैर्वीर्यसमन्वितैश्च दशमे निर्माणमाहुर्बुधाः ॥ ७९ ॥ मत्स्यपुराणे-वज्रव्याघातशूलेषु व्यतीपातातिगंडयोः । विष्कंभगंडपरिघ वष्टयोगे न कारयेत् ॥ १८० ॥ श्वेते मैत्रेथ मोंहेद्रे गांधर्वभगरोहिणी । तथा वैरोचसावित्रिमुहुर्ते गृहमारभेत् ॥ ८१ ॥ श्रीपतिः-द्व्यंगे स्थिते वा भवने विलग्ने सौम्यग्रहैर्युक्तनिरीक्षिते च । कर्मस्थितैर्वीर्ययुतैश्च सौम्यैर्निर्माणमाहुर्भवनस्य संतः ॥ ८२ ॥ पापैस्त्रिषष्ठायगतैस्त्रिकोणकेंद्राश्रितैः साधुभिरालयस्य । वदंति निर्माणमिहाष्टमस्थः क्रूरस्तु कर्तुर्मरणं करोति ॥ ८३ ॥ रामः-भौमार्करिक्तामाद्यूने चरोनांगे विपंचके । व्यष्टांत्यस्थैः शुभैर्गेहारंभस्त्र्यायारिगैः खलैः ॥ ८४ ॥ वास्तुप्रदीपे-नष्टेंदुरिक्ताकुजसूर्यवर्ज्ये चरो न भे सिंहविहीनलग्ने । पापैस्त्रिषष्ठायगतैः शुभैश्च व्यष्टांत्यगैर्गेहविधिः शुभः स्यात् ॥ ८५ ॥ गृहारंभस्य प्राशस्त्यमुक्तं वास्तुप्रदीपे । शनौ स्वाती सिंहलग्ने शुक्लपक्षश्च सप्तमी । शुभयोगः श्रावणश्च सकाराः सप्त कीर्तिताः ॥ ८६ ॥ सप्तानां यो गतो वास्तुः पुत्रवित्तप्रदः सदा । गजश्च धनधान्यानि पुरे तिष्ठंति सर्वतः ॥ ८७ ॥ अथ भूमिसुप्तिलक्षणम् । ग्रन्थान्तरे-प्रद्योतनात्पंचनगांकसूर्यनवेंदुषड्विंशमितानि भानि । शेते मही नैव गृहं विधेयं तडागवापीखननं न शस्तम् ॥ ८८ ॥ वास्तुभूषणे-स्यान्नाडी शयने शशीमित १ तिथौ तुर्ये ४ तथार्के १२ मिंता । ऋक्षे २७ भूपतिभि १९ नगैः ७ परिमिते शेषे भवेज्जाग्रतिः ॥८९॥ नारदीये-नभस्यादिषु मासेषु त्रिषुत्रिषु यथा क्रमम् । पूर्वादि दिग्गुशिरावामपार्श्वशायी प्रदक्षिणा ॥ १९० ॥ वास्तुसारे-वृषवास्तुचक्रम् । सूर्यभाद्गणयेद्वास्तु चक्रं च दिनभावधिम् । अश्व ७ रुद्र ११ दशर्क्षं च १० अशुभं शुभदं क्रमात् ॥ ९१ ॥ राजमार्तंडे-वृषचक्रं वृषाकारं सर्वावयवसंयुतम् । यस्मिन्नृक्षे स्थितो भानुस्तत्रादौ त्रीणि मस्तके ॥ ९२ ॥ अग्रपादे च चत्वारः पुनश्चत्वारि पश्चिमे । पृष्ठे त्रीणि च धिष्ण्यानि कुक्षौ चत्वारि दक्षिणे ॥ ९३ ॥ पुच्छे त्रीणि च धिष्ण्यानि कुक्षौ चत्वारि वामके । मुखे त्रीणि च धिष्ण्यानि अष्टाविंशतितारकाः ॥ ९४ ॥ शिरसो वज्रपातः स्यादुद्वेगश्चाग्रपादयोः । स्थिरत्वं पश्चिमे पादे पृष्ठे चैव धनागमः ॥ ९५ ॥ दक्षकुक्षौ जयो लाभः पुच्छे स्वामिविनाशनम् । वामकुक्षौ च दारिद्र्यं मुखे पीडा निरंतरम् ॥ ९६ ॥ सूर्यभात्तु त्यजेत्सप्त ततश्चैकादशे धनम् । ततोन्यभेषु दुष्टं

स्यादिति वास्तुनि कीर्तितम् ॥ ९७ ॥ अथ वास्तुपुरुषस्य कुत्र स्थले स्थिति-रिति निर्णयमाह । सवेदास्तिथयो द्विघा नामाक्षरसमन्वितम् । त्रिभिश्चैव हरेद्भागे शेषं पुरुष उच्यते ॥ ९८ ॥ एके च वसते स्वर्गे द्वाभ्यां पातालमेव च । शून्ये तु मृत्युलोके स्यादिति पाराशरोऽब्रवीत् ॥ ९९ ॥ स्वर्गे वासं भवेल्लाभं पातालेषु श्रियः सदा । मृत्युलोके भवेन्मृत्युरिति चिन्त्यं गृहारभेत् ॥ २०० ॥ शिल्पशास्त्रे-वास्तो शिरसि पुच्छे च याम्यकुक्षौ च पृष्ठतः । आयुः कामं खनेन्नैव वामकुक्षौ खनि शुभः ॥ १ ॥ लल्लः-त्यजेद्दशशिरो भागे बाह्ये सप्त दशांशकान् । मध्ये नाभिं विजानीयात्तत्र शंकुं प्रतिष्ठयेत् ॥ २ ॥ कूर्मचक्रम् । ज्योतिःसागरे-तिथिस्त पंच गुणिता कृत्तिकाद्यृक्षसंयुता । तथा द्वादशमिश्रा च नव भागेन भाजिता ॥ ३ ॥ जलवेदामुनिश्चन्द्रस्थले पंचद्वयं वसुः । त्रिषट्कनव चाकाशे त्रिविधं कूर्मलक्षणम् ॥ ४ ॥ जले लाभस्तथा प्रोक्तः स्थले हानिस्तथैव च । आकाशे मरणं प्रोक्तमिदं कूर्मस्य चक्रकम् ॥ ५ ॥ स्याच्चतुर्विंशविंशाष्टिद्वादशांगुलकैः क्रमात् । विप्रादीनां शंकु मानं स्वर्णवस्त्राद्यलंकृतम् ॥ ६ ॥ खदिरार्जुनशालोत्थं पूगपत्रतरूद्भवम् । रक्तचन्दन पालाशरक्तशालविशालजम् ॥ ७ ॥ निंबकारंजकुटजं बैणवं बिल्ववृक्षजम् । शंकुं त्रिधा विभज्याद्यं चतुरस्रं ततः परम् ॥ ८ ॥ अष्टास्रं च तृतीयांशमनम्रमृजु मव्रणम् । एवं लक्षणसंयुक्तं परिकल्प्यं शुभे दिने ॥ ९ ॥ अथ देवालयादौ राहुमुखन्यासः । मुहूर्तचिन्तामणौ-देवालये गेहविधौ जलाशये राहोर्मुखं शंभु दिशोर्विलोमतः । मीनार्कसिंहार्कमृगार्कतस्त्रिभे खाते मुखात्पृष्ठविदिक् शुभा भवेत् ॥ १० ॥ गर्गः-वृषभादित्रये वेद्यां सिंहादि गणयेद्गृहे । देवालये च मीनादि तडागे मकरादिकम् ॥ ११ ॥ अन्यस्तु-सिंहे कन्यातुलायां भुजगपतिमुखं शंभुकोणेऽग्नि खातं वायव्यं स्यात्तदास्यं अलिधनुमकरे ईशखातं वदंति । कुंभे मीने च मेषे निर्ऋति दिशिमुखं खातवायव्यकोणे चाग्नेःकोणे मुखं वै वृषमिथुनगते कर्कटे रक्षखातम् ॥१२॥ अन्यः-सिंहत्रयेर्के चाग्नेय्यां ईशाने वृश्चिकत्रयम् । कुंभत्रये तु वायव्यां नैर्ऋत्यां वृषभत्रये ॥ १३ ॥ अथ दिक्शोधनम् । बृहन्नारदीये-प्रासादे सदने लिंगे द्वारे कुंडे विशेषतः । दिङ्मूढे कुलनाशः स्यात्तस्मात्संशोधयेद्दिशम् ॥ १४ ॥ सिद्धांतशिरोमणौ-वृत्तेम्भः सुसमीकृतक्षितिगते केंद्रस्थशंकोः क्रमाद्भागं यत्र विश त्यपैति च यतस्तत्रापरैन्द्रौ दिशौ । तत्कालापमजीवयोस्तु विवराद्भाकर्णमित्याहता-ल्लंबज्यातमितांगुलैरयनदिश्यैन्द्रीस्फुटा चालिताः ॥ १५ ॥ तन्मत्स्यादथ या-म्यसौम्यककुभौ सौम्याध्रुवे वा भवेदेकस्मादपि भाग्रतो भुजमितां कोटीमितां शं-कुतः । न्यस्येद्याष्टिमृजुं तथा भुवि यथा षष्ट्यग्रयोः संयुतिः कोटिः प्राच्यपरा भवे-दिति कृते बाहुश्च याम्योत्तरे ॥१६॥ सुगमोपायस्तु ग्रहलाघवे-वृत्ते समभूगतेतुकेंद्रास्थि-तशंकोः क्रमशो विशत्यपैति । छायाग्रमिहापरां च पूर्वां ताभ्यां सिद्धयाति मेरुदि-

च याम्या ॥ १७ ॥ अथ नक्षत्रवेधवशेन दिक्ज्ञानमुक्तम् । मुहूर्तमार्तंडे-प्राग्साध्योज्जयनीस्थलाद्यमादिशि त्वाष्ट्रानिलाभ्यंतरात्सौम्योतोभ्युदयाद्धुदग्ध्रुवमुखाद्दिङ्मूढके स्यान्स्मृतिः ॥ १८ ॥ अथ ध्रुवमत्स्यताराद्वयदर्शनद्वारा दिक्ज्ञानमुक्तम् । वास्तुराजवल्लभे-तारे मार्कटिके ध्रुवस्य समतां नीतेवलंबेनते दीपाग्रेण तदैक्यतश्च कथिता सूत्रेण सौम्या दिशः । शंकौ नेत्रगुणे तु मंडलवरे छाया तयोर्मत्स्ययोर्जाता यत्र युतिस्तु शंकुतलतो याम्योत्तरे स्तः स्फुटे ॥ १९ ॥ नारायणस्तु मार्तंडे-द्विघ्नायाममितं द्विपाशमजरत्सूत्रं विधायांकपे त्र्यायामांघ्रिमिते च विस्तृतिदले तौ कर्षकोणाभिधौ । पाशौ क्षेत्रविरामशंकुनिहतौ कृत्वाद्यमाकर्षयेत्कोणेशंकुरितीतरो विनिमयाद्रज्वंतयोश्चापरौ ॥ १२० ॥ अथ **गृहभूमिसाधनाय सूत्रनियममाह** । विश्वकर्मप्रकाशे-विप्रस्य दर्भजं सूत्रं मौंजं तु क्षत्रियस्य च । कार्पासं च भवेद्वैश्यं शूद्रस्य शणकल्पितम् ॥ २१ ॥ वसिष्ठः-षड्वर्गशुद्धसूत्रेण सूत्रिते धरणीतले । सूत्रिते समये तस्मिन् सूत्रं केनापि लंघितम् ॥ २२ ॥ तदस्थितं विजानीयात्पुरुषस्य प्रमाणतः । अभ्यक्तो दृश्यते यस्यां दिशि शल्यं समादिशेत् ॥ २३ ॥ तस्यामेव तदस्थीनि सप्तत्र्यंगुलमानतः । सूत्रिते समये यत्र श्वा सूत्रोपरि संस्थितः ॥ २४ ॥ तदस्थि तत्र जानीयात्षष्ठ्यंगुलमितक्षितौ । उन्मादे चागते तस्मिन्समये यत्र संस्थिते ॥ २५ ॥ तदस्थि तत्र जानीयाद्धस्तद्वयमिते क्षितौ । चाण्डाले जटिले वापि तदा तस्यां दिशि स्थिते ॥ २६ ॥ तदस्थि तत्र जानीयाद्दशात्यंगुलमानतः । नृगजाश्वपशूनां हि त्वेकस्मिन् यत्र संस्थितम् ॥२७॥ तदस्थि तत्र जानीयात्षष्ठ्यंगुलमितक्षितौ । तस्मिन्नवसरे यत्र गृहदाहो भवेद्यदि । मेषास्थि तत्रजानीयात्पुरुषाष्टप्रमाणतः ॥ २८ ॥ सूत्रे विसूत्रिते तस्मिन् भिन्ने कुंभेथवा यदि । आदिशेन्निधनं तत्र दंपत्योः क्रमशस्तदा ॥ २९ ॥ अन्यस्तु-चतुष्कोणोद्धृतं सूत्रं पश्चात्फलनिरीक्षयेत् । समे शुभं फलं प्रोक्तमधिके अशुभप्रदम् ॥ २३० ॥ अग्न्याधिके भवेद्रोगं नैर्ऋते भयदायकम् । वायव्ये क्षयहेतुश्च ईशाने निर्जनं भवेत् ॥ ३१ ॥ अथ **भूमिशोधनार्थं शल्योद्धारः** । ज्योतिर्निबंधे-स्मृत्वेष्टदेवतां प्रश्नवचनस्याद्यमक्षरम् । गृहीत्वा तु ततः शल्याशल्यं सम्यग्विचार्यते ॥ ३२ ॥ अकचटतपयशपयावर्णा पूर्वादिवर्णीतः । शल्यकरा इह नान्ये शल्यगृहे निवसतां नाशः ॥ ३३ ॥ पृच्छायां यदि अः प्राच्यां नरशल्यं तदा भवेत् । सार्द्धहस्तप्रमाणेन तच्च मानुष्यमृत्युकृत् ॥ ३४ ॥ आग्नेय्यां यदि कः प्रश्ने शशशल्यं करद्वये । राजदंडो भवेत्तत्र भयं नैव निवर्तते ॥३५॥ याम्यायां दिशि च प्रश्ने कुर्यादाकटि संस्थितम् । नरशल्यं गृहेशस्य मरणं चिररोगता ॥३६॥ नैर्ऋत्यां दिशि टः प्रश्ने सार्द्धहस्तादधस्तले । शुनोस्थि जायते तच्च बालानां जनयेन्मृतिः ॥ ३७ ॥ तः प्रश्ने पश्चिमायां तु शिशोः शल्यं प्रजायते । सार्द्धहस्तमिते तत्र स्वामिनं नेच्छाति ध्रुवम् ॥ ३८ ॥ वायव्यां दिशि यः प्रश्ने तुषांगाराश्चतुः

करे । कुर्वंति मित्रनाशं च दुःस्वप्नदर्शनं तथा ॥ ३९ ॥ उदीच्यां दिशि यः प्रश्ने
तदा शल्यं कंटेरधः । तद्गृहं निर्धनायत्वं कुबेरसदृश यदि ॥ २४० ॥ ऐशान्यां
दिशि शः प्रश्ने गोशल्यं सार्द्धहस्ततः । तद्गोधनानां नाशाय जायते गृहमेधिनाम्
॥ ४१ ॥ हपयामध्यमे कोष्ठे वक्षोमात्रे भवेदधः । नृकपालमथो भस्म लौहं तत्कुल
नाशकत् ॥ ४२ ॥ ग्रन्थांतरे—गृहस्य पिंडिका चैव कृत्वा च नवखंडकान् । तेषु तेषु
च भागेषु पूर्वादिक्रमतो बुधैः ॥४३॥ व क च त ण ह स य ज एतान्यक्षराणि पूर्वादि
नव कोष्ठेषु लिखेत् । ब्राह्मणपुष्पं क्षत्री नदी वैश्यो देवं शूद्रो फलम् । यत्र पुष्पाक्षरं
भवति तत्र शल्यं ज्ञेयम् अन्याक्षरे शल्यं नास्ति । ॐ धरणी विदारिणी भूत्यैः स्वा
हा रक्षामंत्रं वारत्रयं पठित्वा हस्तं पृथिव्यां धृत्वा ब प्रश्ने पूर्वस्यां दिशि मनुज
शल्यं सार्द्धहस्तमात्रे मनुजस्मरणं कथयति । कप्रश्ने आग्नेय्यां खरशल्यं कटिमात्रे नृप
दडं वा गोमरणं कथयति । च प्रश्ने दक्षिणस्यां वानरशल्यं कटिमात्रे गृहनाथस्य
मृत्युं कथयति । त प्रश्ने नैर्ऋत्याम् अश्वशल्यं सार्द्धहस्तमात्रे वित्तराज्यमृत्युभयम् ।
ण पश्ने वायव्यां पुरुषशल्यं दुःखप्रदर्शनं कथयति । स प्रश्ने कौबेर्यां द्विजशल्यं
कटिमात्रे निर्धनं कथयति । प प्रश्ने ईशान्यां ऋक्षशल्य सार्द्धहस्तमात्रे गोधननाशं
कथयति । य प्रश्ने नरकपालं भस्मशल्यं हृदिमात्रे कुलनाशनं कथयति । गृहे शल्यं
नास्ति तदा शुभं स्यात् । स्वरोदये । अहिचक्रं प्रवक्ष्यामि यथा सर्वज्ञभाषितम् ।
द्रव्यं शल्यं तथा शून्यं येन जानंति साधकाः ॥४४॥ निधिर्निर्वर्तनकस्थं संभ्रांतो यत्र
भूतले । तत्र चक्रमिदं स्थाप्यं स्थानद्वारमुखस्थितम् ॥ ४५ ॥ ऊर्ध्वरेखाष्टकं लेख्यं
तिर्यग्रेखा च पंचकम् । अहिचक्रं भवत्येव अष्टाविंशतिकोष्टकान् ॥ ४६ ॥ अष्टाविं
शति भान्यत्र कृत्तिकादिक्रमेण च । तत्र पौष्णाश्वियाम्यर्क्षं कृत्तिका मध्यभाग्य
भम् । उत्तराफाल्गुनी लेख्यं पूर्वपंक्त्यां भसप्तकम् ॥ ४७ ॥ अहिर्बुध्न्याजपादर्क्षं शतभं
ब्राह्मसार्पभम् । पुष्यं हस्तं समालेख्यं द्वितीयं पंक्तिमास्थितम् ॥ ४८ ॥ विधिं विष्णुं
धनिष्ठाख्यं सौम्यं रुद्रं पुनर्वसुम् । चित्राभं च तृतीयायां पंक्तिधिष्ण्यस्य सप्तकम्
॥ ४९ ॥ विश्वर्क्षतोयभं मूलं ज्येष्ठामैत्रे विशाखिका । स्वाती पंक्त्यां चतुर्थ्यां तु कृत्वा



चक्रं विलोकयेत् ॥२५०॥ एवं प्रजायते चक्रे प्रस्तारः पन्नगाकृतिः । द्वारशाखे मघायाम्ये द्वारस्था कृत्तिका मता ॥ ५१ ॥ याते त्वाष्ट्रे चित्रदेशे विचिंत्ये मैत्रे पित्रे मालवद्याप्रसिद्धम् ॥ पौष्णं त्याज्यं वैष्णवे चोत्तरास्युर्जायात्सर्वं सर्वदेशे निषिद्धा ॥ ५२ ॥ अश्वीशपूर्वषाढादि त्रिकपंचचतुष्टयम् । रेवतीपूर्वभाद्रदोर्भानि शेषानि भास्वतः ॥५३॥ उदयादिगता नाड्यो भग्नाषष्ट्याप्तशेषके । दिनेंदुर्भुक्तयुक्तासौ भवेत्तत्कालचन्द्रमाः ॥ ५४ ॥ अस्योदाहरणमग्रे लिखितम् । चन्द्रवत्साधयेत्सूर्यमृक्षस्थं चेष्टकालिकम् । पश्चाद्विलोकयेत्तौ चेत्स्वक्षेत्रेष्वन्यभेषु च ॥ ५५ ॥ षष्टिघ्नं तन्निशानाथं शरवेदाप्तकं पुनः । युगैः शेषं भवत्येवं प्रागादिककुभं क्रमात् ॥ ५६ ॥ चन्द्रऋक्षे यदार्केंदू तदास्ति निश्चितं निधिः । भानुक्षेत्रे स्थितौ तौ चेत्तदा शल्यं च नान्यथा ॥ ५७ ॥ शशांके चन्द्रभे द्रव्यं शल्यं भवति भानुभे । स्वस्वभे द्वितयं ज्ञेयं नास्ति किंचिद्विपर्यये । स्थितं न लभ्यते द्रव्यं चन्द्रे क्रूरग्रहान्विते ॥ ५८ ॥ ग्रहदृष्टिवशात् सोपि विज्ञेया नवधा बुधैः । हेम रौप्यं च ताम्रारं रत्नं कांस्यायसं त्रपु ॥ ५९ ॥ नागचन्द्रं विजानीयाद्भास्करादि ग्रहेक्षिते । मिश्रैर्मिश्रे भवेद्द्रव्यं शून्यं दृष्टिविवर्जितम् ॥ २६० ॥ सर्वग्रहेक्षिते चन्द्रे निर्दिष्टोसौ महानिधिः । पुष्टे चन्द्रे भवेत्पुष्टं क्षीणे चन्द्रेल्पको निधिः ॥ ६१ ॥ ग्रहदृष्टिवशात्सोपि विज्ञेया नवधा बुधैः ॥ ६२ ॥ हेमं तारं च ताम्रं च पाषाणं मृण्मयायसम् । सूर्यादिगृहगे चन्द्रे द्रव्यभांडं प्रजायते ॥ ६३ ॥ शुभक्षेत्रगते चन्द्रे द्रव्यलाभो न संशयः । पापक्षेत्रे न लाभः स्याज्ज्ञातव्या ज्योतिषां वरैः ॥ ६४ ॥ भुक्त्यराश्यंशमानेन भूमाने कांविको करैः । नीचे द्विघ्नं परे नीचे जलस्थोसौ महानिधिः ॥ ६५ ॥ स्वोच्चस्थेत्यूर्ध्वगं द्रव्यं नवमांशं क्रमेण च । परमोच्चे परे तुंगे भित्तिस्थमृक्षसंक्रमे ॥ ६६ ॥ चन्द्रांशभुक्तमानेन द्रव्यसंख्या विधीयते । तस्माद्दशगुणा वृद्धिः षड्वर्गेषु बलं क्रमात् ॥ ६७ ॥ अधिष्ठितं भवेद्द्रव्यं यत्र चंद्रो ग्रहान्वितः । तदाधिष्ठायको ज्ञेयो भास्करादिग्रहैः क्रमात् ॥ ६८ ॥ ग्रहं मुग्धग्रहं चैव क्षेत्रपालं च मातृकम् । द्वीपेशभीषणं रुद्रयक्षनागं विदुः क्रमात् । ॥ ६९ ॥ ग्रहे होमः प्रकर्तव्यो मुग्धे नारायणी बलिः । क्षेत्रपाले सुरामांसं मातृकायां महाबलिः ॥ २७० ॥ द्वीपशेद्वीपिकापूजा भीषणे भीषणार्चनम् । रुद्रे च रुद्रजो जाप्यो यक्षे यक्षादि शांतिकम् ॥ ७१ ॥ नागे नागगणाः पूज्या गणनाथेन संयुता । लक्ष्मी धरादितत्त्वानि सर्वकर्माणि पूजयेत् ॥ ७२ ॥ निवर्तनैकमध्येव संभ्रांतं यत्र भूतले । तत्र चक्रं लिखेद्धीमान् द्रव्यशल्यस्य निर्णयः ॥ ७३ ॥ एवं कृते विधानेन निधिः सास्योपि सिद्ध्यति । निधिप्राप्ता नरा लोके वंदनीया न संशयः ॥ ७४ ॥ ॐ पद्मासने चंद्रतपसे नमः । ऐं ह्रीं क्लीं ह्रूं वदवद वाग्वादिनी स्वाहा । अस्तभांतस्थाने भूत्वा त्रिसंध्यां जपेत् । घृतमधुहविष्यं होमयेत् । अष्टोत्तरशतं जाप्यं जपेत्तदा निधेरुत्पाटनयोग्यो भवेत् । चन्द्रार्कौ तत्कालानयनस्योदाहरणं यथा मार्गशिर शुक्ल ३

सोमे इष्टं २१ । २९ वृषलग्ने काश्चित्प्रश्नः कृतः अहो मम गृहे निधिर्वर्तते नवेति संदेहः तस्मिन्दिने तत्समये उत्तराषाढस्य भजातः १२।९ इदमुदयादिगता नाड्यः भम्नां ३२९ । ४२ षष्ट्या ६० ते लब्धं ५ शेषं २९ । ४२ दिनेंदु भुक्तर्क्षं २० युतं जातं २९ पूर्वाभाद्रपदगत उत्तराभाद्रपदस्य गतदंडादिकं चन्द्रं २९ । ४२ अथ तात्कालिकसूर्यानयनं मार्गशिरकृष्ण १२ ॥ भौमे ज्येष्ठायामर्कः ४९ । ३२ षष्टि ६० हीने १० । २८ इदं भोग्यं पुनः मार्गशिरशुक्ल १० सोमे मूलेष्वर्कः ५३ । ५५ इदं भक्तं अनयोर्योगः १ । ४ । २३ तयोर्भुक्तभोग्ययोर्मध्यदिवसैः १२ युते १३ । ४ । २४ जातं सूर्यस्य एकर्क्ष भोगमानं दिनात्मकं भवति । अस्मिन्षष्टि हृते लब्धं ० । १३ । ४ । २३ घट्यात्मकं स्यात् । इदं सूर्यस्य एकघटीमानम् अत्रेष्टघटी २१ । २९ ज्येष्ठाभोग्यघट्यो १० । २८ योगः ३१ । ५३ ज्येष्ठार्कात् प्रश्नदिवसैर्मध्यदिवसं ५ युतं जातं ज्येष्ठाभुक्तदिनादिकं ५ । ३१ । ५३ सवर्णितं ११९४७८० अस्मिन् सूर्यस्यैकघटीप्रमाणेन १३ । ४ । २३ सवर्णितेन ४७०६३ भक्ते लब्धं २५ । २३ ज्येष्ठानक्षत्रेषु रवेर्भुक्तघटी स्यात् । इयं २५ । २३ रवेरुदयादिगता नाड्यः भम्ना ६८९ । २१ षष्ट्याप्ते लब्धं ११ शेषं २९ । २२ अश्विन्यादि रवेर्भुक्तर्क्षं १७ युतं २८ सप्तविंशतिभिस्तष्टे शेषम् । १ अतः अश्विनी गतभरणी नक्षत्रस्य तात्कालिकोर्कगतघटी २९ पलं २१ स्यात् । अन्यत्रापि—नाडीष्टाभ २७ हतं खतर्क ६० भजितं लब्धं दिनर्क्षे युतं तं तत्कालशशी रवेर्भुयुतं भानुश्च तत्कालसौ । यत्रस्थौ शशिभास्करौ च गुणयेद्वह्निस्थपंक्तिद्वये एकीकृत्य विभज्य त्वाष्ट्रनयनं शेषं धनस्थान्विदुः । अथ वास्तुकुंडलीफलम् । वास्तुरत्नप्रदीपे—लग्नके वज्रपातः स्यात् कोशहानिश्च शीतगौ । मृत्युर्विश्वंभरापुत्रे दारिद्र्यं रविनंदने ॥ ७५ ॥ जीवे धर्मादिकामाः स्युः सुतोत्पत्तिश्च भार्गवे । चन्द्रजे कुशला शक्तिर्जनस्यायुः प्रवर्द्धते ॥ ७६ ॥ द्वितीयस्थे रवौ हा निश्चंद्रे शत्रुक्षयो भवेत् । भूसुते बंधनं प्रोक्तं नानाविघ्नाश्च भानुजे ॥ ७७ ॥ बुधे द्रविणसंपत्तिर्गुरौ धर्मसमागमः । यथा कामाविनोदेन भृगौ कालं व्रजेदिह ॥ ७८ ॥ सौम्यग्रहास्तृतीयस्थाः पापा अपि विशेषतः । सिद्धिः स्यादचिरादेव यथाभिलषितं प्रति ॥ ७९ ॥ चतुर्थस्थानगे जीवे पूजा संपद्यते नृपात् । चन्द्रजे च सदा लाभो भूमिलाभस्तु भार्गवे ॥ २८० ॥ वियोगः सुहृदां भानौ मित्रभेदो धरासुते । बुद्धिनाशो निशानाथे महालाभोर्कनंदने ॥ ८१ ॥ पंचमस्थे सुराचार्ये मित्रवस्तुधनागमः । शुक्रे पुत्रधनप्राप्तिर्हेमाभरणमिंदुजे ॥ ८२ ॥ सुतदुःखं सदा सूर्ये शशांके कलहागमः । भौमे कामाविरोधः स्याच्छनौ कामविमर्दनम् ॥ ८३ ॥ षष्ठस्थानगते सूर्ये पूजा संपद्यते नृपात् । चन्द्रे पुष्टिः कुजे प्राप्तिः सौरे शत्रुबलक्षयः ॥ ८४ ॥ गुरौ चार्थोदयः प्रोक्तो भृगौ विद्यागमो भवेत् । मानज्ञानस्य कौशल्यं नक्षत्रपतिनंदने ॥ ८५ ॥ लग्नात्सप्तमगे जीवे बुधे दैत्यपुरोहिते । गजवाजिधरित्रीणां

क्रमाद्रोगं विनिर्दिशेत् ॥ ८६ ॥ भास्करे कीर्तिभंगः स्यात्कुजे विग्रहमादिशेत् । चन्द्रे मंदे युते मांद्यं हीनांगत्वं भयं तथा ॥ ८७ ॥ निधनस्थे सहस्रांशौ शत्रुतो विपदः सदा । हानिः शीतमयूखे च मंगले रविजे भयम् ॥ ८८ ॥ बुधे मानधनप्राप्तिः सुरेज्ये विजयो महान् । शुक्रे स्वजनतो दद्यात्सुखं पुंसां विशेषतः ॥ ८९ ॥ नवमस्थानगे जीवे बुद्धिभाग्याभिवर्द्धनम् । बुधे विविधभोगाप्तिः शुक्रे मंदोदयो भवेत् ॥ २९० ॥ चन्द्रे धातुक्षयः प्रोक्तो धर्महानिश्च भास्करे । कुजे सामर्थ्यहानिः स्याद्रविजे कामदूषणम् ॥ ९१ ॥ दशमस्थानगे शुक्रे शयनासनसिद्धयः । सुराचार्ये महत्सौख्यं विजयश्च तथा बुधे ॥ ९२ ॥ मार्तंडे धनवृद्धिश्च चन्द्रे कोशविवर्द्धनम् । भौमे बलं सदा पुंसां शनौ कीर्तिविलोपनम् ॥ ९३ ॥ लाभस्थानगताः सर्वे प्रयच्छंति शुभं फलम् । व्यये सर्वे सदौदास्यं प्रदिशंति विशेषतः ॥ ९४ ॥ अथ विशेषफलं योगजमाह । रामदैवज्ञः—जीवार्कविच्छुक्रशनैश्चरेषु लग्नारियामित्रसुखत्रिकेषु । स्थितिः शतं स्याच्छरदां सितार्कोरिज्ये तनुभ्यंगसुते शतं द्वे ॥ ९५ ॥ लग्नांबरायेषु भृगुज्ञभानुभिः केंद्रे गुरौ वर्षशतायुरालयम् । बंधौ गुरुर्व्योम्नि शशी कुजार्कजौ लाभे तदाशीति समायुरालयम् ॥ ९६ ॥ स्वोच्चे शुक्रे लग्नगे वा गुरौ वेश्मगतेथ वा । शनौ स्वोच्चे लाभगे वा लक्ष्म्या युक्तं चिरं गृहम् ॥ ९७ ॥ द्यूनाम्बरे यदैकोपि परांशस्थो ग्रहो गृहम् । अब्दान्तः परहस्तस्थं कुर्याच्चेद्वर्णपोऽबलाः ॥ ९८ ॥ पुष्यध्रुवेंदुहरिसर्पजलैः सजीवैः तद्वासरेण च कृतं सुतराज्यदं स्यात् । द्वीशाश्वितक्षवसुपाशि शिवैः सशुक्रैर्वारे सितस्य च गृहं धनधान्यदं स्यात् ॥ ९९ ॥ नारदः—श्रवणाषाढयोश्चैव रोहिण्यां चोत्तरात्रयम् । गुरुवारे कृतं वेश्म राजयोगः सहोच्यते । तद्गृहे जातपुत्रस्य राज्यं भवति निश्चितम् ॥ ३०० ॥ वसिष्ठः—इज्योत्तरात्रयाहींदुविष्णुधातृजलोडुषु । गुरुणा सहिते धिष्ण्ये कृतं गेहं श्रियान्वितम् ॥ १ ॥ अश्विनीशततारासु विशाखाभाद्रचित्रकैः । धनिष्ठादितिभे शुक्रे संयुक्ते शुक्रवासरे ॥ २ ॥ तद्वेश्मनि प्रजातस्तु कुबेरसदृशो भवेत् ॥ ३ ॥ अन्यत्रापि—मूलं च रेवती चैव कृत्तिकाष्टकमेव च । एषु भौमेन युक्तेषु वारे तस्यैव निर्मिते ॥ ४ ॥ अग्निना दह्यते कृत्स्नं पुत्रनाशश्च जायते ॥ ५ ॥ हस्तार्कमैत्रत्वाष्ट्रदस्रचतुरस्रोडुभेपि च । सबुधे बुधवारे च धनपुत्रसुखप्रदम् ॥ ६ ॥ अजपाद्द्वितये याम्यमित्रेंद्रानलभेपि च । समंदे मंदवारे च गृह्यते यक्षराक्षसैः । पुत्रे जातेऽथवा तास्मिन् गृह्यते यक्षराक्षसैः ॥ ७ ॥ रामदैवज्ञोपि—सारैः करेज्यांतमघांबुमूलैः कौजेह्निवेश्माग्निसुतार्तिदं स्यात् । सज्ञैः कदास्त्रार्यमतक्षहस्तैः ज्ञस्यैव वारे सुखपुत्रदं स्यात् ॥ ८ ॥ अजैकपादाहिर्बुध्न्यशक्रमित्रानिलांतकैः । समंदैर्मंदवारे स्याद्रक्षोभूतयुतं गृहम् ॥ ९ ॥ गृहे शतघ्नी सुखविच्चनाशोर्केद्वीज्यशुक्रे विबलेस्तनीचे । कर्तुः स्थितिर्नो विधुवास्तुनोर्भे पुरस्थिते पृष्ठगते खनिः स्यात् ॥ ३१० ॥ यदुक्तं शंभुना—गृहाय लब्धं ऋक्षं च यत्र ऋक्षे

च चन्द्रमाः । शलाका सप्तके देयं कृत्तिकादि क्रमेण च ॥ ११ ॥ वामदक्षिणभो
तत्प्रशस्तं शान्तिकारकम् । अग्रे पृष्ठे न दातव्यं यदीच्छेच्छ्रियमात्मनः ॥ १२ ॥
भृगुः—चक्रे सप्तशलाकाख्ये कृत्तिकादीनि विन्यसेत् । ऋक्षं चन्द्रस्य वास्तोश्च पुरः
पृष्ठे च नो शुभम् ॥ १३ ॥ अथाधिकारिणः । स्वामिहस्तप्रमाणेन ज्येष्ठपत्नी
करेण वा । गर्भमात्रं भवेद्देहं नृणां प्रोक्तं पुरातनैः ॥ १४ ॥ अथ हस्तमानम् ।
ज्योतिर्विदाभरणे—षडक्षतैराजमिहांगुलं भवेत्सप्ताक्षतैर्वैष्णवमैशमंगुलम् । यवोदरै
भिरत्रतत्करोजिनांगुलैस्तैश्च धनुश्चतुष्कम् ॥ १५ ॥ प्रासादकुंडादिकपीठवेदिक
द्विजालयेषु स्मृतमाजमंगुलम् । जलाशयारामविधौ नृपालये निधौ हितं वैष्णवमन्य
दन्यगम् ॥ १६ ॥ भृगुः—विप्रः शीर्षं नृपो वक्षो वैश्यश्चोरू परः पदौ । स्पृष्ट्वा रेखां गृहा
रंभे कुर्यादग्नेः प्रदक्षिणम् ॥ १७ ॥ वास्तुराजवल्लभे—परीक्षितायां भुवि विप्रराजं
समर्चयेचंडिकया समेतम् । क्षेत्राधिपं चाष्टदिगीशदेवान्सुपुष्पधूपैर्बलिभिः सुवा
॥ १८ ॥ खातं भूमिपरिक्षणे करामितं तत्पूरयेत्तन्मृदा हीने हीनफलं समे समफलं
लाभो रजो वर्द्धते । तत्कृत्वा जलपूर्णमाशतपदं गत्वा परीक्ष्यं पुनः पादोनर्द्धविही
नकेथ निभृते मध्याधमेष्टांबुभिः ॥ १९ ॥ वास्तुरत्नप्रदीपे—कर्तुश्च हस्तप्रमितं ख
नित्वा खातं पयोभिः परिपूरितं चेत् । वत्स्येत्सुखार्थी परिपूरितं स्याच्छुष्कं भवेत्तत्क्ष
णमेव नाशः ॥ ३२० ॥ स्थिरे जले वै स्थिरता ग्रहस्य स्याद्दक्षिणावर्तजलेन सौख्यम् ।
क्षिप्रं जलं शोषयतीह खातो मृत्युर्हि वामेन जलेन कर्तुः ॥ २१ ॥ अथ खनन
काले पाषाणादि दर्शनफलम् । तत्रैव—खाते यदि श्मा लभते हिरण्यं तथे
ष्टिकायां च समृद्धिरत्र । द्रव्य च रम्याणि सुखानि धत्ते ताम्रादिधातुर्यदि तत्र वृद्धिः
॥ २२ ॥ पिपीलिका षोडशपक्षनिद्रा भवंति चेत्तत्र वसेन्न कर्ता । तुषास्थिचीराणि
तथैव भस्मान्यण्डानि सर्पा मरणप्रदाः स्युः ॥ २३ ॥ वराटिका दुःखकलिप्रदात्री
कार्पास एवातिददाति दुःखम् । काष्ठं प्रदग्धं यतिरोगभीतिर्भवेत्कालिः खर्परदर्श
नेन ॥ २४ ॥ लौहेन कर्तुर्मरणं निगद्यं विचार्य वास्तुं प्रदिशंति धीराः ॥ २५ ॥ बृह
स्पतिः—कृष्णाष्टम्यां च सप्तम्यां रौद्रभे यस्य कस्य चित् । राशौ लग्ने कुजांशे च
शिलाभेदः प्रचोदितः ॥ २६ ॥ अथ इष्टिकादाने तन्नामानि । विजया मंगला
चैव निर्मला सुखदेति च । चतुर्द्धा इष्टिका प्रोक्ता गृहे च वरुणालये ॥ २७ ॥ ति-
थ्यंगुलानि विजया मंगला सप्तचन्द्रकैः । पक्षेन्दुभिर्निर्मला स्यात्सुखदारामपक्षभिः
॥ २८ ॥ प्रमाणमिष्टिकायाश्च गर्गाद्यैर्मुनिभिः स्मृतम् ॥ २९ ॥ अथ तस्याश्चक्रम् ।
पंचत्रीणि त्रिकं पंच सप्तपंचावनीयभात् । सौख्य मृत्युक्रमेणैव इष्टिकारंभकर्मसु
॥२३०॥ तदाह चक्रम् । सप्तपंचमुनिर्वेदपंचाभिः शोकलाभरुजभीतिभिः सुखम् । भौ-
मभाच गणयेत्सुधीः सदा इष्टिकोपरि सुवाह्निदीपनम् ॥ ३१ ॥ अन्यः—मृत्स्येष्टिका
स्वर्णरत्नधान्यशैवालसंयुताम् । ताम्रपात्रस्थितं सर्वं खातमध्ये नियोजयेत् ॥ ३२ ॥

अथ शिलान्यासः । वराहः–छत्रसुगंधयुतः कृतं धूपविलपनस्तंभः । स्थाप्यस्तथैव काया द्वारोच्छ्रायः प्रयत्नेन ॥ ३३ ॥ दक्षिणपूर्वे कोणे कृत्वा पूजां शिलां न्यसेत्प्रथमाम् । शेषाः प्रदक्षिणस्तंभाश्चैवं प्रतिस्थाप्याः ॥ ३४ ॥ शारंगधरः–प्रासादेषु च हर्म्येषु गृहेष्वन्येषु सर्वदा । आग्नेयां प्रथमं स्तंभं स्थापयेत्तद्विधानतः ॥ ३५ ॥ ब्रह्मशंभुः–सूत्रभित्तिशिलान्यासं स्तंभस्यारोपणं तथा । पूर्वदक्षिणयोर्मध्ये कुर्यादित्याह कश्यपः ॥ ३६ ॥ अथ स्तंभनामानि । टोडरानन्दे–समचतुरस्रो रुचको वज्रोऽष्टास्र द्विवज्रको द्विगुणः । द्वात्रिंशता तु मध्ये प्रलीनको वृत्त इति वृत्तः ॥ ३७ ॥ अथ गृहोच्चमानम् । वाराहीये–विस्तारषोडशांशः स चतुर्हस्तो भवेद्गृहोच्छ्रायः । द्वादशभागेनोनो भूमौ भूमौ समस्तानाम् ॥ ३८ ॥ व्यासोत्षोडशभागः सर्वेषां सद्मनां भवति भित्तिः । पक्केष्टकाकृतानां दारुकृतानां तु न विकल्पः ॥ ३९ ॥ एकादशभागयुतः स सप्ततिर्नृपवलेशयोर्व्यासः । उच्छ्रायोंगुलतुल्यो द्वारस्यार्द्धेन विष्कंभः॥२४०॥ उच्छ्रायासप्तगुण्यादशीति भागः पृथुत्वमेतेषाम् । नवगुणितेऽशीत्यंशः स्तंभस्य दशांशहीनोऽग्रे ॥ ४१ ॥ अथ दिक्परत्वेन गृहोच्चनीचमाह । स्यादुन्नतिः पूर्वनते नराणां वास्तौ धनं दक्षिणभागतुंगे । क्षयो धनानां विनते प्रतीच्यामुदृच्यैर्विनाशो ध्रुवसुत्तरेतु ॥४२॥ वाराहः–प्रागुत्तरोन्नते धनसुतक्षयः सुतवधश्च दुगधे ॥४३॥ अथ एकभित्तिस्थगृहद्वयकरणे निषेधमाह । वसिष्ठः–एकभित्तिषु संवद्धं कारयेद्यो गृयद्वयम् । यमतुल्यतदा नाम भर्तुर्गेहं विनाशनम् ॥ ४४ ॥ अथ दिक्परत्वेन उपकरणगृहाणि । मुहूर्तचिन्तामणौ–स्नानस्य पाकशयनास्त्रभुजेश्च धान्यभांडारदैवतगृहाणि च पूर्वतः स्युः । तन्मध्यतस्तु मथनाज्यपुरीषविद्याभ्यासारुयरोदनरतौषध सर्वधाम ॥ ४५ ॥ तथा च वसिष्ठः–ऐन्द्र्यां दिशि स्नानगृहमाग्नेय्यां पचनालयम् । याम्यायां शयनं वेश्म नैर्ऋत्यां शस्त्रमंदिरम् ॥ ४७ ॥ पश्चिमायां भोजनगृहं वायव्यां धान्यमंदिरम् । उदीच्यां हाटकं सद्म ऐशान्यां देवमंदिरम् ॥४७॥ नारदस्तु–भाण्डागारं तूत्तरस्यां वायव्यां पशुमंदिरम् ॥ ४८ ॥ तथा च वसिष्ठः–इंद्राग्न्योर्मथनं मध्ये याम्याग्न्योर्घृतमंदिरम् । यमराक्षसयोर्मध्ये पुरिषत्याग मंदिरम् । ॥ ४९ ॥ राक्षसजलयोर्मध्ये विद्याभ्यासस्य मंदिरम् । तोयेशानिलयो र्मध्ये रोदनस्य च मंदिरम् ॥ ३५० ॥ कामोपभोगशमनं वायव्योत्तरयोर्गृहम् । कौबेरेशानयोर्मध्ये चिकित्सामंदिरं सदा ॥ ५१ ॥ गृहं शरीरयोर्मध्ये सर्ववस्तुषु संग्रहम् । सदनं कारयेदेवं क्रमादुक्तानि षोडश ॥ ५२ ॥ ऐंद्रे तु विक्रमस्थानमाग्नेय्यां पचनालयम् । वारुण्यां भोजनगृहं नैर्ऋत्यां सूतिकागृहम् ॥ ५३ ॥ अथ द्वारनिर्णयः । ज्योतिःसारे–पूर्वे ब्राह्मणराशीनां वैश्यनां दक्षिणे शुभम् । शूद्राणां पश्चिमे द्वारं नृपाणामुत्तरे मतम् ॥ ५४ ॥ अथायवशेन रामदैवज्ञः–ध्वजादिकाः सर्वदिशि ध्वजे मुखं कार्यं हरौ पूर्वयमोत्तरे तथा । प्राच्यां वृषे प्राग्यमयोर्गजे तथा

पश्चादुदक्पूर्वयमे द्विजादितः ॥ ५५ ॥ श्रीपतिः-कर्कनक्रहरिकुंभगतेऽर्के पूर्वपश्चिम मुखानि गृहाणि । तौलिमेषवृषवृश्चिकयाते दक्षिणोत्तरमुखानि च कुर्यात् ॥ ५६ ॥ अन्यथा यदि करोति दुर्मतिर्व्याधिशोकधननाशमाप्नुयात् ॥ ५७ ॥ वास्तुप्रदीपे मांडव्यः-नवभागं गृह कृत्वा पंचभागं तु दक्षिणे । त्रिभागमुत्तरे कार्यं शेषं द्वारं प्रकीर्तितम् ॥ ५८ ॥ अथ पूर्वादि चतुर्दिक्षु द्वारनिवेशनफलान्याह । वराहमिहिरः-अनलभयं स्त्रीजन्म प्रभूतधनता नरेंद्रतो लब्धिः । क्रोधादिकत्वमनृतं क्रौर्यं चौर्यं क्रमात्पूर्वे ॥ ५९ ॥ अल्पसुतत्वं प्रेष्यं नीचत्वं भक्षपानसुतलब्धि । रौद्रकृतघ्नमधनं सुतवीर्यघ्नं च याम्येन ॥ ३६० ॥ सुतपीडा १ रिपुवृद्धि २ धनपुत्राप्ति ३ स्समार्थ गुणसंपत् । धनलाभो नृपतिभयं धनक्षयो रोग इत्यपरे ॥ ६१ ॥ वधबंधौ रिपुवृद्धि धनसुतलाभः समस्तगुणसंपत् । पुत्रधनाप्तिर्वैरं सुतकृतदोषः स्त्रियो नैःस्वम् ॥ ६२ ॥ पूर्वा ऐशान्याद्यान्याग्नेयादक्षिणानि पानीयात् । द्वाराणि नैर्ऋत्यादीनि पश्चिमान्युत्तराणि वायोश्च ॥ ६३ ॥ अथैशानादि चतुष्कोणानां द्वारफलं तत्रैव-दुःखशोकौ धनप्राप्तिर्नृपपूजा महद्धनम् । स्त्रीजन्मपुत्रता हानिः प्राच्यां द्वारफलानि च ॥ ६४ ॥ निधनं बंधनं भीतिः पुत्राप्तिश्च धनागमः । यशोलब्धिश्चोरभयं व्याधिभीतिश्च दक्षिणे ॥ ६५ ॥ निःस्वं स्त्रीदुःखयोगश्च लक्ष्मीप्राप्तिर्धनागमः । सौभाग्यं धनलाभश्च दुःखं शोकश्च पश्चिमे ॥ ६६ ॥ शत्रुवृद्धिर्महद्दुःखं हानिः संपत्सुखागमः । प्राप्तिदुःखं शोकबाधा चोत्तरस्यां दिशि क्रमात् ॥ ६७ ॥ मुहूर्तमार्तंडे-पूर्वादौ त्रिषडायपंचमलवे द्वाः सव्यतोकोद्धृते वैध्येद्वंशसमुच्छ्रिताब्धिलवकौ सर्वासु दिक्षूदिता ॥ ६८ ॥ वास्तु-दैर्घ्ये नवांशात्पदमत्र सव्याद्द्वारं शुभं प्राक् त्रिचतुर्थभागे । चतुर्थषष्ठे दिशि दक्षिणस्यां पश्चाच्चतुः पंचमके तथोदक् ॥ ६९ ॥ द्वारमायामतः कार्यं पुत्रपौत्रधनप्रदम् । विस्तारकोणं द्वारं यः दुःखशोकभयप्रदम् ॥ २७० ॥ विश्वकर्माप्रकाशे-गृहमध्ये कृतं द्वारं द्रव्यधान्यविनाशनम् ॥ ७१ ॥ भारद्वाजः-शिरा मर्माणि वंशाश्च नाल मध्यं च सर्वशः । विहाय वास्तुमध्यं च द्वाराणि विनिवेशयेत् ॥ ७२ ॥ विश्वकर्माप्रकाशे-देवागारे विहारे च प्रजायां मंडपेषु च । प्रतोल्यां च मखे चैव मध्ये द्वारं निवेशयेत् ॥ ७३ ॥ अथ द्वारचक्रम् । ज्योतिर्विदाभरणे-दिनकरकिरणाक्रांतर्क्षतो द्वारचक्रेयुगयमदृग्वेदद्विवेद द्विरामैः । नितमुडुगणभागं विन्यसेदूर्ध्वतोंतर्नियममखिलदिग्नाप्यधः कोणभं सत् ॥ ७४ ॥ रामदैवज्ञः-सूर्यर्क्षाद्युगभैः शिरस्यथ फलं लक्ष्मी ततः कोणभैर्नागैरुद्वसनं ततो गजमितैः शाखासु सौख्यं भवेत् । देहल्यां गुणभैर्मृतिर्गृहपतेर्मध्यस्थितैर्वेदभैः सौख्यं चक्रमिदं विलोक्य सुधिया द्वारं विधेयं शुभम् ॥ ७६ ॥ अथ देहलीचक्रम् । मूले भौमं त्रिऋक्षं गृहपतिमरणं पंचगर्भे सुखं स्यान्मध्ये देयाष्टऋक्षं धनसुखसुखदं पुच्छदेशेष्टहानिः । पश्चादेयाष्टऋक्षं गृहपतिसुखदं भाग्यपुत्रार्थदेयं सूर्याक्षाँचन्द्रऋक्षं प्रतिदिन गणयेन्भौम-

चक्रं विलोक्य ॥ ७६ ॥ अथ कपाटचक्रम् । मुहूर्तकल्पद्रुमे-सूर्यर्क्षाद्युगनागाष्ट-गुणवेदैः शुभाशुभम् । शिरः कोणद्वारशाखा देहलीमध्यगैः क्रमात् ॥ ७७ ॥ अश्विन्या-मुत्तराहस्तपुष्यश्रुतिमृगेषु च । रोहिण्यां स्वातिमैत्र्ये च द्वारशाखां प्ररोपयेत् ॥ ७८ ॥ मुहूर्तमुक्तावल्याम्-भवेत्पूषणी मैत्रपुष्ये च शाक्रे करे दस्रचित्रानिले चादितौ च । गुरुश्चन्द्रशुक्रार्कसौम्ये च वारे तिथौ नंदपूर्णा जया द्वारशाखा ॥७९॥ गुरुः-ध्रुवभे शुभवारे च स्थिरलग्ने शुभे तिथौ । द्वारि स्थाप्योमृतं चित्रवर्गसंपद्वि-वर्द्धनः ॥ ३८० ॥ चरस्थिरे च नक्षत्रे बुधशुक्रदिने तिथौ । शुभे कपाटयोगा सा द्वि-स्वभावोदये गृहम् ॥ ८१ ॥ वास्तुसौख्ये मांडव्यः-सूत्रशंकुशिलाद्वारतुलाच्छाद-नपूर्वकम् । कार्यं स्तंभप्रतिष्ठोक्ते धिष्ण्ये वारे तिथौ तथा ॥ ८२ ॥ ज्योतिःप्रकाशे-अस्तदोषोत्र न ग्राह्यः प्रति दैवसिको बुधैः । नास्तदोषः सदा भानोर्न मैत्रेंद्रस्य नी-चता ॥ ८३ ॥ अथ द्वारवेधं तत्परिहारं चाह । श्रीवराहः-मार्गतरुकोण स्तंभभ्रमविद्धमशुभदं द्वारम् । उच्छ्राया द्विगुणमिता त्यक्त्वा भूमिं न दोषाय ॥ ८४ ॥ नारायणोपि-कोणाध्वभ्रमकूपकर्दमतरुद्वास्तंभदेवेक्षितं सद्मोच्चं द्विगुणा-धिकांतरभवे वेधे न दोषः किल ॥ ८५ ॥ पुनर्वराहः-रथ्याविद्धं द्वारं नाशाय कुमा-रदोषदं तरुजम् ॥ पंकद्वारेशोको व्ययोंबुनि श्राविणी प्रोक्तः ॥ ८६ ॥ कूपेनाप-स्मारो भवति विनाशश्च देवताविद्धे । स्तंभेन स्त्रीदोषाः कुलनाशो ब्राह्मणोभिमुखे ॥ ८७ ॥ उन्मादः स्वयमुद्घटिते पिहिते च स्वयं कुलविनाशः । मानाधिक नृपभयदं दस्युभयं व्यसनदं नीचम् ॥ ८८ ॥ द्वारं द्वारस्योपरियत्तन्न शिवाय संकटं यच्च । आध्यातं क्षुद्भयदं कुब्जं कुलनाशनं भवति ॥ ८९ ॥ पीडाकरमतिपीडितमंतर-विनतं भवेदभावाय । बाह्यावनते प्रवासो दिग्भ्रांते दस्युभिः पीडा ॥ ३९० ॥ अन्यः-पृष्ठतः पार्श्वयोर्वापि न वेधं चिन्तयेद्बुधः । प्रासादे वा गृहे वापि वेधमग्रे विनिर्दिशेत् ॥ ९१ ॥ प्रथमांतयामवर्ज्यं द्वित्रिप्रहरसंभवा । छायावृक्षगृहादीनां सदा दुःखप्रदा-यिनी ॥ ९२ ॥ अथ शालाध्रुवाद्यानयनम् । चिन्तामणौ-दिक्षु पूर्वादितः शाला ध्रुवा भूद्वौं कृता गजाः । शालाध्रुवांकसंयोगः सैको वेश्मध्रुवादिकम् ॥ ९३ ॥ ध्रुवं धान्यं जयं नंदं खरं कान्तं मनोरमम् । सुमुखं दुर्मुखोग्रं रिपुदं वित्तदं नाशं चाक्रंदं विपुलं विजयाख्यं स्यात् ॥ ९४ ॥ तच्च रत्नमालायाम्-गृहपिंडं युगैर्हत्वा षट् चन्द्रैर्भागमाहरेत् । शेषांके तु स्मृतं नामध्रुवादि क्रमतो बुधैः ॥ ९५ ॥ ध्रुवं च धान्यं च जयं च नंदं खरं च कांतं च मनोरमं च । सुवक्रसंज्ञं खलु दुर्मुखोग्रं क्रूरं विपक्षं धनदं क्षयं च ॥ ९६ ॥ आक्रंदसंज्ञं विपुलाह्वयं च स्यात्षोडशं तद्विजयाभिधानाः ॥ ९७ ॥ नारायणस्तु-एकादि द्विगुणोत्तराध्रुवमुखा दिक्ष्वंकका: स्युः क्रमाच्छाला-शांकयुतिः कुयुग्ध्रुवमुखान्योकांसि संति स्फुटम् । आषष्ठादश मंत्रयोदशमिभे वर्णापरे त्र्यक्षरा षष्ठांत्यं चतुरक्षरं खलु गृहं स्युः षोडशैवं गृहाः ॥ ९८ ॥ वाराहीये-उत्तरशालाहीनं हिरण्यनामं त्रिशालकं धन्यम् । प्राक्शालया वियुक्तं सुक्षेत्रं वृद्धिदं

वास्तु ॥ ९९ ॥ याम्याहीनं चुल्ली त्रिशालकं वित्तनाशकरमेतत् । पक्षघ्नमपरया व-
र्जितं सुतध्वंसवैरकरम् ॥ ४०० ॥ सिद्धार्थमपरयाम्ये यमशूर्पं पश्चिमोत्तरे शाले ।
दण्डाख्यमुदक्पूर्वे वाताख्यं प्राग्युता याम्ये ॥ ४०१ ॥ पूर्वापरे तु शाले गृहचुल्ली
दक्षिणोत्तरे काचम् । सिद्धार्थेऽर्थावाप्तिर्यमशूर्पे गृहपतेर्मृत्युः ॥ २ ॥ दण्डवधो
दण्डाख्ये कलहोद्वेगः सदैव वाताख्ये । वित्तविनाशश्चुल्ल्यां ज्ञातिविरोधः स्मृतः
काचे ॥ ३ ॥ नारदः—गृहपादा गृहस्तंभा समासस्त्याश्च नासमाः ॥ ४ ॥ अथ गृ-
हस्रावमाह । नारदः—गृहादीनां गृहस्रावं क्रमशोऽष्टविधंस्मृतम् । पांचालमानं
वैदेहं कौरवं च कुजन्यजम् । मागधं शूरसेनं च गांधारावंतिकं स्मृतम् ॥ ५ ॥ तच्च-
तुर्भागविस्तारसोत्सेधं यत्तदुच्यते । पांचालमानं सर्वेषां साधारणमतः परम्
॥ ६ ॥ आवंतिमानं विप्राणां गांधारं क्षत्रियस्य च । कौजन्यमानं वैश्यानां विप्रा-
दीनां यथोत्तरम् ॥ ७ ॥ यथोदितजलस्रावं द्वित्रिभूमकवेश्मनः ॥ ८ ॥ अन्योपि-
पूर्वे वहति शुभं किंचिदग्निकोणे धनक्षयम् ॥ ९ ॥ दक्षिणे प्राणसंदेहो नैर्ऋत्ये प्राण-
घातकः । पश्चिमे पुत्रनाशाय वायव्य सुखमेव च ॥ ४१० ॥ उत्तरे राजसंमानं
ईशाने सुखसंपदः ॥ ११ ॥ व्यासः—अन्यवेश्म स्थितं दारु नैवान्यस्मिन्प्रयोजयेत्
न तत्र वसते कर्ता वसन्नापि न जीवति ॥ १२ ॥ शारंगधरः—नूतने नूतनं काष्ठं
जीर्णे जीर्णं प्रशस्यते । जोण च नूतनं काष्ठं न जीर्णे नूतनं शुभम् ॥ १३ ॥ समरां-
गणे—इष्टकालोष्टपाषाणमृत्तिकाजीर्णपायसम् । तृणं पर्णं बुधैः प्रोक्तं दारु नूनं विहाय
वै ॥ १४ ॥ गुरुः—कृष्णपक्षे चतुर्दश्यां रेवती रोहिणीयुता । यदा तदा गुरौ लग्ने
गृहार्थं तु हरेद्द्रुमान् ॥ १५ ॥ शुक्रे लग्ने गुरौ केंद्रे खगे राशौ गृहोपरि । तृणादिभिः
समाच्छाद्यो न चैवाग्निगृहे भयम् ॥ १६ ॥ चरस्थिरे च नक्षत्रे बुधशुक्रदिने तिथौ ।
शुभे कपाट्योगा सा द्विस्वभावोदये गृहम् ॥ १७ ॥ कालिदासः—गृहे न रामायणभा-
रताह्वयं चित्रं कृपाणाहदमिंद्रजालवत् । शिलोच्चयारण्यमयं सदासुरं भीष्मं कृताक्रंद
नरं त्वनं वरम् ॥ १८ ॥ वाराहशार्दूलशिवापृदाकवो गृद्ध्राभिधोलूककपोतवायसाः ।
सश्येनगोधादिवकारिपत्रिणो विचित्रिता नो शरणे शुभावहाः ॥ १९ ॥ उलूखलं पिष्ट-
यंत्रमग्निस्थानं जलाश्रयम् । वेश्मनोर्दक्षिणे पार्श्वे पितॄणां पादशौचनम् ॥ ४२० ॥
अथ गोशालायां भूमिशोधनादिकं पूर्ववत् कृत्वा आयादिकं संशोध्य तत्रायं
विशेषः—स्वनामाक्षराणां युतं दैर्ध्यव्यामैः प्रमाणैः स्वहस्ताद्रजैर्भक्तशेषः । रसाग्नि
गजैर्लाभदाः स्युः पशूनां शशी युग्मवेदेषु सप्ताशुभं स्यात् ॥ २१ ॥ अन्यत्रापि-
स्वामिहस्तप्रमाणेन दीर्घविस्तारसंयुतम् । अष्टभिश्च हरेद्भागं शेषं च रणि उच्यते
॥ २२ ॥ पशुहानिः पशुरोगः पशुलाभः पशुक्षयः । पशुनाशः पशुवृद्धिःपशुभेदो
बहुः पशुः ॥ २३ ॥ अथाश्वशालानिर्माणप्रकारः । वास्तुराजवल्लभे—तुरंगमानां
गृहवामभागे शाला चतुष्षष्टिकरा विधेया । शतार्द्धतो मध्यमिका च दैर्घ्ये कनायसा
तैर्दशभिर्विहीनाम् ॥ २४ ॥ व्यासे च ज्येष्ठा तिथिहस्तमाना त्रयोदशैकादशकैः

क्रमेण । तद्बाह्यभित्तिश्च करप्रमाणं पंचार्द्धपंचाग्निकरोदरास्यात् ॥ २५ ॥ स्वगृहस्य वामभागे चतुःषष्टिकरात्मिका । तुरंगमानां शाला श्रेष्ठा भवतीति । शतार्द्धकरात्मिका पंचाशद्धस्तमिता वाजिशाला मध्या स्यात् । चत्वारिंशत्करात्मिका कनीयसी कनिष्ठा इत्यर्थः । पूर्वक्रमेण विस्तारप्रमाणमाह व्यासेचेति । व्यासे विस्तारेति विहस्ततुल्या पंचदशकरात्मिका श्रेष्ठा त्रयोदशकरात्मिका मध्या एकादशहस्तात्मिका कनिष्ठा स्यात् । तद्बाह्यभित्तिः क्रमात्पंचार्द्धं सार्द्धसप्तमितं उत्तमं पंचकरा मध्यमा । अग्निकरा त्रिहस्ता कनिष्ठा इत्यर्थः । तेजोहानिमयी हया विदधते पूर्वापरस्यां नृणां ते याम्योत्तरतो सुखाहि सततं कीर्तिर्यशोधान्यकम् ॥ २६ ॥ अथ गजशालानिर्माणम् । वास्तुराजवल्लभे–सिंहद्वारं पूर्वमानेन कार्यं त्रिद्व्येका वा मालिकास्तंभशीर्षे । स्यातां मध्ये तोडकौ रक्षणार्थं तुल्यौ भागे नाधिकौ वापि सार्द्धौ ॥ २७ ॥ भागे दक्षिणवामके च करिणां शाला हरेर्द्वारतः कर्तव्या सुदृढोन्नतावकलशैर्घंटादिभिर्भूषिताः । संकीर्णा रसतो नगैर्निगदितो मंद्रोमृगश्चाष्टमः सर्वेषूत्तमभद्रजाति रुदितो नंदैः करैरुच्छ्रितः ॥ ४२८ ॥ इति श्रीज्योतिर्विद्वयादत्तात्मजरामदीनकृते संग्रहे बृहद्दैवज्ञरंजने षडशीतितमं गृहप्रकरणं समाप्तम् ।

## अथ सप्ताशीतितमं वास्तुप्रकरणं प्रारभ्यते ।

वराहः–पुरभवनग्रामाणां ये कोणास्तेषु निवासतां दोषाः । श्वपचादयोऽन्त्यजास्ते तेष्वेव विवृद्धिमायांति ॥ १ ॥ अथ सद्मनश्चतुर्दिक्षु वृक्षफलम् । वास्तुराजवल्लभे–वृक्षा दुग्धसकंटकाश्च फलिनस्त्याज्या गृहादूरतः शस्ते चंपकपाटले च कदली जाती तथा केतकी । यामादूर्ध्वमशेषवृक्ष सुरजा छाया न शस्ता गृहे पार्श्वेकस्य हरेरवीशपुरतो ज्ञानानुगुण्याः क्वचित् ॥ २ ॥ सदुग्धवृक्षा द्रविणस्य नाशं कुर्वंति ते कंटकितोरिभीतिम् । प्रजाविनाशं फलिनः समीपे गृहे च वर्ज्याः किलधौतपुष्पाः ॥ ३ ॥ दुष्टा भूतसमाश्रिता विटपिनः छिंद्याद्यथाशक्तितः तं वासं च शमीमशोकवकुलौ पुन्नागसचंपकौ । द्राक्षापुष्पकमंडपं च तिलकान्कृष्णां वपेद्दाडिमी सौम्यादेः शुभदौ कापित्थनवटौवोदुंबराश्वत्थकौ ॥ ४ ॥ वास्तुप्रदीपे–क्षीरवृक्षावटाश्वत्थरक्तपुष्पद्रुमास्तथा, । सकंटकाशाल्मली च प्लक्षोदुंबरसंज्ञकौ ॥ ५ ॥ अग्निकोणे सदा दुष्टा मृत्युपीडाप्रदायकाः । पुन्नागफलिनीनिंबदाडिमीशोकजातिकाः ॥ ६ ॥ नागकेशरशेफानि जपाकुसुमकेशरे । जयंती चंदनं प्राक्त वचा चैवापराजिता ॥ ७ ॥ मधुबिल्वाम्रभृंगाश्च नागरंगगुपादिकाः । यत्र यत्र स्थिताश्चैते नारिकेरादयः शुभाः ॥ ८ ॥ अश्वत्थं च कदंब च कदलीबीजपूरकम् । गृहे यस्य प्ररोहंति स गृही न प्ररोहति ॥ ९ ॥ सर्वत्र पनसः शस्तो दक्षिणे सकुशः खशः ॥ १० ॥ इति श्रीज्योतिर्विद्वयादत्तात्मजरामदीनकृते संग्रहे बृहद्दैवज्ञरंजने सप्ताशीतितमं वास्तुप्रकरणं समाप्तम् ।

# अथ गृहसारिणी कोष्टकम् ।

| दीर्घ. | विस्तार. | पिंड. | आय. | वार. | अंश | द्रव्य. | ऋण. | नक्षत्र. | तिथि. | योग. | ग्रहयु. | व्यय. | आयेश. | व्ययेश | अंशेश | द्रव्येश | ऋणेश. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | ३ | ३ | ३ | ६ | ० | ० | १ | २४ | ९ | १२ | २४ | ८ | मं | शु | बृ | र | शु |
| ३ | ५ | १५ | ७ | २ | ० | ० | ५ | १२ | १५ | ६ | १२० | ४ | शु | शु | बृ | श | बु |
| ३ | ७ | २१ | ५ | ७ | ० | ० | ७ | ६ | ३ | ३ | ४८ | ६ | बृ | शु | बृ | रा | बृ |
| ३ | ९ | २७ | ३ | ५ | ९ | १२ | १ | २७ | ६ | २७ | ९६ | ३ | बु | शु | बृ | र | मं |
| ३ | १३ | ३९ | ७ | १ | ० | ० | ५ | १५ | १५ | २१ | ७२ | ७ | शु | शु | बृ | श | रा |
| ३ | १५ | ४५ | ५ | ६ | ० | ० | ७ | २ | १५ | १८ | १२० | १ | चं | मं | चं | मं | बु |
| ५ | ७ | ३५ | ३ | ७ | ३ | ४ | १ | १० | १० | ९ | ४० | २ | बु | मं | चं | र | चं |
| ५ | ९ | ४५ | ५ | ६ | ० | ० | ७ | ९ | १५ | १८ | १२० | १ | बृ | सू | बृ | रा | सू |
| ५ | ११ | ५५ | ७ | ५ | ६ | ८ | ५ | ८ | ५ | ४ | ८० | ८ | शु | श | मं | श | शु |
| ५ | १३ | ६५ | १ | ४ | ३ | ४ | ३ | ७ | १० | २७ | ४० | ७ | चं | मं | चं | मं | रा |
| ५ | १५ | ७५ | ३ | ३ | ९ | ० | १ | ६ | १५ | ३ | १२० | ६ | बु | शु | बृ | र | बृ |
| ५ | १७ | ८५ | ५ | २ | ६ | ८ | ७ | ५ | ५ | २६ | ८० | ५ | बृ | श | मं | रा | श |
| ७ | ९ | ६३ | ७ | ७ | ० | ० | ५ | १८ | ९ | ९ | २४ | २ | शु | शु | बृ | श | चं |
| ७ | ११ | ७७ | ५ | ७ | ३ | ४ | ७ | २२ | १ | ११ | १६ | ६ | बृ | मं | चं | रा | बृ |
| ७ | १३ | ९१ | ३ | ७ | ६ | ८ | १ | २६ | ८ | १३ | ८१ | २ | बु | श | मं | र | चं |
| ७ | १५ | १०५ | १ | ७ | ० | ० | ३ | ३ | १५ | १५ | १२० | ३ | सू | शु | बृ | मं | मं |
| ७ | १७ | ११९ | ७ | ७ | ३ | ४ | ५ | ७ | ७ | १७ | ११२ | ० | शु | मं | चं | श | रा |
| ७ | १९ | १३३ | ५ | ७ | ६ | ८ | ७ | ११ | १८ | १९ | १०४ | ३ | बृ | श | मं | रा | मं |
| ७ | २१ | १४७ | ३ | ७ | ३ | ४ | ३ | १९ | १३ | २३ | ८८ | ३ | चं | मं | चं | मं | मं |
| ७ | २३ | १६१ | १ | ७ | ३ | ४ | ३ | १९ | १३ | २३ | ८८ | ३ | चं | मं | चं | मं | मं |
| ७ | २५ | १७५ | ७ | ७ | ६ | ८ | ५ | २३ | ५ | २५ | ८० | ७ | शु | श | मं | श | रा |
| ७ | २७ | १८९ | ५ | ७ | ९ | ० | ७ | २७ | १२ | २७ | ७२ | ३ | बृ | शु | बृ | रा | रा |
| ९ | ११ | ९९ | ३ | २ | ० | ० | १ | ९ | १२ | १८ | ७२ | १ | बु | शु | बृ | सू | सू |
| ९ | १३ | ११७ | ५ | ३ | ० | ० | ७ | १८ | ६ | ९ | ९६ | २ | बृ | शु | बृ | रा | चं |
| ९ | १५ | १३५ | ७ | ४ | ० | ० | ५ | २७ | १५ | २७ | १२० | ३ | शु | शु | बृ | श | मं |
| ९ | १७ | १५३ | १ | ५ | ० | ० | ३ | ९ | ९ | १८ | २४ | १ | चं | शु | बृ | मं | सू |
| ९ | १९ | १७१ | ३ | ६ | ० | ० | १ | १८ | ३ | ९ | ५८ | २ | बु | शु | बृ | सू | चं |
| ९ | २१ | १८९ | ५ | ७ | ० | ० | ७ | २७ | १२ | २७ | ७३ | ३ | बृ | शु | बृ | रा | मं |
| ९ | २३ | २०७ | ७ | १ | ० | ० | ५ | ९ | ६ | १८ | ९६ | १ | सू | शु | बृ | श | सू |
| ९ | २५ | ९ | १ | ४ | ० | ० | ३ | १८ | १२ | ९ | ७२ | २ | चं | शु | बु | मं | चं |

| दै.घ. | विस्तार | पिंड. | अ.ग. | वा. | अंग. | द्रव्य. | ऋण. | नक्षत्र. | तिथि. | य.ग. | गतायु. | व.प. | आयेश | व्ययेश | अंशेश | द्रव्येश | ऋणेश |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ९ | २७ | २ | ३ | ५ | ० | ० | १ | २७ | ६ | २७ | ९६ | ३ | बु | शु | बृ | सू | सू |
| ९ | २९ | ५५ | ५ | ६ | ० | ० | ७ | ९ | १५ | १८ | १२० | १ | बृ | शु | बृ | श | सू |
| ९ | ३१ | ६१ | ७ | ७ | १ | ० | ५ | १८ | १ | १ | २४ | २ | शु | शु | बृ | श | चं |
| ९ | ३३ | ८१ | १ | १ | ० | ० | ३ | २७ | ३ | २७ | ४८ | ३ | चं | शु | बृ | मं | मं |
| ११ | १५ | ४३ | ७ | ६ | ३ | ४ | ५ | १० | ४ | ५ | ६४ | २ | शु | मं | चं | श | चं |
| ११ | १५ | १६५ | ५ | १ | ० | ० | ७ | २४ | १५ | १८ | १२० | ८ | बृ | शु | बृ | रा | शु |
| ११ | १७ | १८७ | ३ | ३ | ६ | ० | १ | ११ | ११ | १९ | ९६ | ३ | बु | श | मं | सू | मं |
| ११ | १९ | २०९ | १ | ५ | ३ | ४ | ३ | २५ | ७ | २६ | १२० | १ | चं | मं | चं | म | सू |
| ११ | २१ | १५ | ७ | २ | ० | ० | ५ | १२ | १५ | ६ | १२० | ४ | शु | शु | शु | श | ब |
| ११ | २३ | ३७ | ५ | ४ | ६ | ८ | ७ | २६ | ११ | १३ | ९६ | २ | बृ | श | मं | शु | च |
| ११ | २५ | ५९ | ३ | ६ | ३ | ४ | १ | १३ | ७ | २० | ११२ | ५ | बु | मं | चं | स | श |
| १३ | १८ | ११६ | ३ | ५ | ० | ० | १ | ११ | १५ | २४ | १२० | ५ | बु | शु | बृ | सू | श |
| १३ | १९ | ५ | ५ | ३ | ३ | ४ | ७ | १३ | १० | २० | ४० | ५ | बृ | मं | चं | रा | श |
| १३ | १९ | ३१ | ७ | ६ | ६ | ८ | ५ | ५ | ८ | १६ | ८ | ५ | श | श | मं | श | शु |
| १३ | २१ | ५७ | १ | २ | ० | ० | १ | २४ | ६ | १२ | ९६ | ८ | चं | शु | शु | म | शु |
| १३ | २३ | ८३ | ३ | ५ | ३ | ४ | १ | १६ | ४ | ८ | ६४ | ८ | बु | मं | चं | शु | श |
| १५ | १७ | ३९ | ७ | १ | ० | ० | ५ | १५ | १० | २१ | ७२ | ७ | शु | श | बृ | श | रा |
| १५ | १९ | ६९ | ५ | ५ | ० | ० | ७ | १२ | १० | ६ | ७२ | ४ | बृ | शु | बृ | रा | बु |
| १५ | २१ | ९९ | ३ | २ | ० | ० | १ | ९ | १ | १८ | ७२ | १ | बृ | मं | च | रा | सू |
| १५ | २३ | १२९ | १ | ६ | ९ | १२ | ३ | ६ | १० | ३ | ७२ | ६ | च | शु | बृ | म | बृ |
| १५ | २५ | १५९ | ७ | ३ | ९ | १२ | ५ | ३ | १३ | १५ | ७२ | ३ | श | शु | बृ | श | मं |
| १५ | २७ | १८९ | ५ | ७ | ९ | १२ | ७ | २७ | १० | २७ | ७२ | ३ | बृ | शु | बृ | श | मं |
| १७ | १९ | १०७ | ३ | ४ | ३ | ४ | १ | १९ | १ | २३ | १६ | ३ | बु | मं | चं | सू | मं |
| १७ | २१ | १४१ | ५ | २ | ० | ० | ७ | २१ | ३ | २४ | ४८ | ५ | बृ | शु | बृ | रा | श |
| १७ | २३ | १७५ | ७ | ७ | ६ | ८ | ५ | २३ | ५ | २५ | ८० | ७ | शु | श | म | बृ | रा |
| १७ | २५ | २०९ | १ | ५ | ३ | ४ | ३ | २५ | ७ | २६ | १२० | १ | चं | मं | च | मं | सू |
| १९ | २१ | १८३ | ७ | २ | ० | ० | ५ | ६ | ९ | ३ | २४ | ६ | शु | शु | बृ | श | बृ |
| १९ | २३ | ५ | ५ | ३ | ३ | ४ | ७ | १३ | १० | २० | ४० | ५ | बृ | म | मं | श | श |
| १९ | २५ | ४३ | ३ | २ | ६ | ८ | १ | २० | १५ | १० | १०४ | ५ | बु | श | मं | सू | ब |
| १९ | २७ | ८१ | १ | १ | ० | ० | ३ | २७ | ३ | २७ | ४८ | ३ | चं | शु | बृ | मं | मं |

| दीर्घ. | विस्तार. | पिंड. | आयु | वार | अंश. | द्रव्य | ऋण | नक्षत्र. | तिथि | योग. | ग्रहायु. | व्यय. | आयेश. | व्ययेश. | अंशेश. | द्रव्येश. | ऋणेश. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १९ | २९ | १३९ | ७ | ७ | ३ | ४ | ५ | ७ | ७ | १७ | ११२ | ७ | शु | मं | चं | श | रा |
| २१ | २३ | १११ | ३ | ४ | ० | ० | १ | ३ | ३ | १५ | ४८ | ३ | बु | शु | बृ | सू | मं |
| २१ | २५ | ९३ | ५ | ४ | ० | ० | ७ | १५ | ९ | २१ | २४ | ७ | बृ | शु | बृ | रा | रा |
| २१ | २७ | १३५ | ७ | ४ | ० | ० | ५ | २७ | १५ | २७ | १२० | ३ | शु | शु | बृ | श | मं |
| २१ | २९ | १७७ | १ | ४ | ० | ० | ३ | १२ | ६ | ६ | ९६ | ४ | चं | शु | बृ | मं | बु |
| २१ | ३१ | ३ | ३ | ६ | ० | ० | १ | २४ | ९ | १२ | २४ | ८ | बु | शु | बु | स | शु |
| २१ | ३३ | ४५ | ५ | ६ | ० | ० | ७ | ९ | १५ | १८ | १२० | १ | बृ | शु | बृ | ग | सू |
| २३ | २५ | १४३ | ७ | ६ | ३ | ४ | ५ | १० | ४ | ५ | ६४ | २ | शु | मं | चं | श | चं |
| २३ | २७ | १८९ | ५ | ७ | ० | ० | ७ | २७ | १२ | २७ | ७२ | ३ | बृ | शु | बृ | रा | मं |
| २३ | २९ | ११ | ३ | ३ | ६ | ८ | १ | १७ | २ | २७ | ३२ | १ | बु | श | मं | स | सू |
| २३ | ३१ | ५१ | १ | ५ | ३ | ४ | ३ | ४ | १३ | २ | ८८ | ४ | चं | मं | चं | मं | मं |
| २३ | ३३ | १११ | ७ | ५ | ० | ० | ५ | २४ | ३ | १२ | ४८ | ८ | शु | शु | बृ | श | शु |
| २३ | ३५ | १५७ | ५ | ६ | ६ | ८ | ७ | १४ | ११ | ७ | ५६ | ६ | बृ | श | मं | रा | बृ |
| २५ | २७ | २७ | ३ | ५ | ० | ० | १ | २७ | ६ | २७ | ८६ | ३ | बु | शु | बृ | सू | मं |
| २५ | २९ | ५७ | ५ | ७ | ३ | ४ | ७ | २२ | १ | ११ | १६ | ६ | बृ | मं | चं | रा | बु |
| २५ | ३१ | १२७ | ७ | २ | ६ | ८ | ५ | १७ | ११ | २२ | ५६ | १ | शु | श | मं | श | सू |
| २५ | ३३ | १७७ | १ | ४ | ० | ० | ३ | १२ | ६ | ६ | ९६ | ४ | चं | शु | बृ | मं | [illegible] |
| २५ | ३५ | ११ | ३ | १ |  | ४ | १ | ७ | १३ | १७ | ८८ | २ | शु | मं | चं | श | चं |
| २५ | ३९ | ६१ | ५ | ५ | ९ | ० | ७ | १२ | १२ | ६ | ७२ | ४ | बृ | शु | बृ | रा | व |
| २५ | ४१ | १६१ | १ | ७ | ३ | ४ | ३ | १९ | १३ | २३ | ८८ | ३ | चं | मं | चं | मं | मं |
| २७ | २९ | १३५ | ७ | ४ | ० | ० | ५ | २७ | १५ | २७ | १२० | ३ | शु | शु | श | श | म |
| २७ | ३१ | १८९ | ५ | ७ | ० | ० | ७ | २७ | १२ | २७ | ७२ | ३ | बृ | शु | बृ | रा | म |
| २७ | ३३ | ५७ | ३ | ५ | ० | ० | १ | २७ | ६ | २७ | ९६ | ३ | बु | श | बृ | स | म |
| २७ | ३५ | ८१ | १ | १ | ० | ० | ३ | २७ | ३ | २७ | ४८ | ३ | चं | शु | बृ | मं | मं |
| २७ | ३७ | १३५ | ७ | ४ | ० | ० | ५ | २७ | १५ | २७ | १२० | ३ | श | शु | बृ | श | मं |
| २७ | ३९ | १८९ | ५ | ७ | ९ | ० | ७ | २७ | १२ | २७ | ७२ | ३ | बु | शु | बृ | सू | मं |
| २७ | ४१ | ५७ | ३ | ५ | ० | ० | १ | २० | ६ | २७ | ९६ | ३ |  |  |  |  |  |
| २७ | ४३ | ८१ | १ | १ | ० | ० | ३ | २७ | ३ | २७ | ४८ | ३ | चं | शु | बृ | मं | मं |
| २७ | ४५ | १३५ | ७ | ४ | ० | ० | ५ | २७ | १५ | २७ | १२० | ३ | शु | श | बृ | श | मं |
| २७ | ४७ | १८९ | ५ | ७ | ० | १२ | ७ | २७ | १५ | २७ | ७२ | ३ | बृ | शु | बृ | रा | मं |

| दीर्घ | विस्तार. | पिंड | आय | वार. | अंश | द्रव्य. | ऋण. | नक्षत्र | तिथि | याग | ग्रहायु | व्यय | आयेश. | व्ययेश. | अंशेश. | द्रव्येश. | ऋणेश. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| २७ | ४९ | ८७ | ३ | ५ | ० | ० | १ | २७ | ६ | २७ | ९६ | ३ | बु | शु | बृ | सू | मं |
| २७ | ५१ | ८१ | १ | १ | ० | ० | ३ | २७ | ३ | २७ | ४८ | ३ | चं | शु | बृ | मं | मं |
| २९ | ३१ | ३५ | ३ | ७ | ३ | ४ | १ | १० | १० | ५ | ४० | २ | बु | मं | चं | शु | चं |
| २९ | ३३ | ९३ | ५ | ४ | ९ | ० | ७ | १५ | ९ | २१ | २४ | ७ | बृ | शु | बृ | रा | रा |
| २९ | ३५ | १५१ | ७ | १ | ६ | ८ | ५ | २० | ८ | १० | ८ | ४ | शु | श | मं | श | बु |
| २९ | ३७ | २०९ | १ | ५ | ३ | ४ | ३ | २५ | ७ | २६ | १२० | १ | चं | मं | चं | मं | सू |
| २९ | ३९ | ५१ | ३ | ४ | ० | ० | १ | ३ | ३ | १५ | ४८ | ३ | बु | शु | बृ | सू | मं |
| २९ | ४१ | १०९ | ५ | १ | ६ | ८ | ७ | ८ | २ | ४ | ३२ | ८ | बृ | श | मं | रा | शु |
| २९ | ४३ | १६७ | ७ | ५ | ३ | ४ | ५ | १३ | १ | २० | १६ | ५ | शु | मं | चं | श | शु |
| २९ | ४५ | ९ | १ | ४ | ९ | ० | ३ | १८ | १२ | ९ | ७२ | २ | चं | शु | बृ | मं | चं |
| २९ | ४७ | ६७ | ३ | १ | ६ | ८ | १ | २३ | ११ | २५ | ५६ | ७ | बु | श | मं | सू | रा |
| २९ | ४९ | १२५ | ५ | ५ | ३ | ४ | ७ | १ | १० | १४ | ४० | १ | बृ | मं | चं | श | सू |
| २९ | ५१ | १८३ | ७ | २ | ९ | १२ | ५ | ६ | ६ | ३ | २४ | ६ | शु | शु | बृ | श | बृ |
| २९ | ५३ | २५ | १ | १ | ६ | ८ | ३ | ११ | ५ | १९ | ८० | ३ | चं | श | मं | मं | मं |
| ३१ | ३३ | १५९ | ७ | ३ | १ | ० | ५ | ३ | १५ | १५ | ७२ | ३ | शु | शु | बृ | श | मं |
| ३१ | ३५ | ५ | ५ | ३ | ३ | ४ | ७ | १३ | १० | २० | ४० | ५ | बृ | मं | चं | रा | श |
| ३१ | ३७ | ६७ | ३ | १ | ६ | ८ | १ | २३ | ११ | २५ | ९६ | ७ | बु | श | मं | स | रा |
| ३१ | ३९ | १२९ | १ | ६ | ९ | १२ | ३ | ६ | १२ | ३ | ७२ | ६ | चं | शु | बृ | मं | बृ |
| ३१ | ४१ | १९१ | ७ | ४ | ३ | ४ | ५ | १६ | १३ | ८ | ८८ | ८ | श | मं | च | श | शु |
| ३१ | ४३ | ३७ | ५ | ४ | ६ | ८ | ७ | २६ | ११ | १३ | ५६ | २ | बृ | श | मं | रा | चं |
| ३१ | ४५ | ९९ | ३ | २ | ९ | १२ | १ | ९ | १२ | १८ | ७२ | १ | बु | शु | बृ | सू | सू |
| ३१ | ४७ | १६१ | १ | ७ | ३ | ४ | ३ | १९ | १३ | २३ | ८८ | ३ | चं | मं | चं | मं | मं |
| ३१ | ४९ | ७ | ७ | ७ | ६ | ८ | ५ | २ | ११ | १ | ५६ | २ | शु | श | मं | श | चं |
| ३१ | ५१ | ६९ | ५ | ५ | ० | ० | ७ | १२ | १२ | ६ | ७२ | ४ | बृ | शु | बृ | शु | बु |
| ३१ | ५३ | १३१ | ३ | ३ | ३ | ४ | १ | २२ | १३ | ११ | ८८ | ६ | बु | मं | चं | सू | बृ |
| ३३ | ३५ | ७५ | ३ | ३ | ० | ० | १ | ६ | ० | ३ | १२० | ६ | बु | शु | बृ | सू | शु |
| ३३ | ३७ | १४१ | ५ | २ | ० | ० | ७ | २१ | ३ | २४ | ४८ | ५ | बृ | शु | बृ | रा | श |
| ३३ | ३९ | २०७ | ७ | ११ | ० | १२ | ५ | ९ | ६ | १८ | ९६ | १ | शु | शु | बृ | श | सू |
| ३३ | ४१ | ९७ | १ | २ | ९ | १२ | १ | २४ | ६ | १२ | ९६ | ८ | चं | शु | बृ | मं | शु |
| ३३ | ४३ | १२३ | ३ | १ | ० | ० | १ | १२ | ९ | ६ | २४ | ४ | बु | श | बृ | सू | बु |

| दैर्घ्य. | नि.तार | पिंड | आय. | वार. | अंश. | द्रव्य. | ऋण. | नक्षत्र. | तिथि. | योग. | ग्रहायु | द्रव्यश. | आयश | व्ययश | अंशश | द्रव्यश | ऋणश. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ३३ | ४५ | १८९ | ५ | ७ | ९ | १२ | ७ | २७ | १२ | २७ | ७२ | ३ | | | | | |
| ३३ | ४७ | ३९ | ७ | १ | ९ | ० | ५ | १८ | १ | २१ | ७२ | ७ | शु | शु | बृ | ग | ग |
| ३३ | ४९ | १०५ | १ | ७ | ० | ० | ३ | ३ | ६ | १५ | १२० | ३ | चं | शु | बृ | सू | चं |
| ३३ | ५१ | १७१ | ३ | ६ | ० | ० | १ | १८ | ३ | ९ | ४८ | ५ | बु | शु | बृ | सू | चं |
| ३३ | ५३ | २१ | ५ | ७ | ० | ० | १ | ६ | ३ | २ | ४८ | ६ | बृ | शु | बृ | ग | बृ |
| ३३ | ५५ | ९७ | ७ | ६ | ० | ० | ५ | २१ | ६ | २४ | ९६ | ५ | शु | शु | बृ | श | श |
| ३५ | ३७ | २१५ | ७ | ३ | ३ | ४ | ५ | ९ | १० | २३ | ५० | ३ | शु | मं | चं | श | मं |
| ३५ | ३९ | ६९ | ५ | ५ | ० | ० | ७ | १२ | १२ | ६ | ७२ | ४ | बृ | शु | बृ | ग | बु |
| ३५ | ४१ | १३९ | ३ | ५ | ६ | ८ | १ | ५ | २ | १६ | ३२ | ५ | शु | श | मं | सू | श |
| ३५ | ४३ | २०९ | १ | ५ | ३ | ९ | ३ | २५ | ७ | २६ | १२० | १ | चं | म | चं | म | सू |
| ३५ | ४५ | ६३ | ७ | ७ | ९ | ० | ५ | १८ | ९ | ९ | २४ | २ | श | शु | बृ | श | चं |
| ३५ | ४७ | १३३ | ५ | ७ | ६ | ८ | ७ | ११ | १४ | १९ | १०४ | ३ | बृ | शु | बृ | रा | चं |
| ५ | ४९ | २०३ | ३ | ७ | ३ | ४ | १ | ४ | ४ | २ | ६४ | ४ | बु | श | मं | श | मं |
| ३५ | ५१ | ५७ | १ | २ | ० | ० | १ | २४ | ६ | १२ | ९६ | ८ | चं | मं | चं | मं | बु |
| ३५ | ५३ | १२९ | ७ | २ | ६ | ८ | ८ | १९ | ५ | २ | ५६ | १ | शु | शु | बृ | श | श |
| ३५ | ५५ | १९७ | ५ | २ | ३ | ४ | ७ | १० | १ | ५ | १६ | २ | बृ | श | मं | रा | सू |
| ३७ | ३९ | १४७ | ३ | ७ | ० | ० | १ | १५ | ६ | २१ | ९६ | ७ | बु | शु | बृ | सू | श |
| ३७ | ४१ | ५ | ५ | ३ | ३ | ४ | ७ | १३ | १० | २० | ४० | ५ | बृ | मं | चं | रा | श |
| ३७ | ४३ | ७९ | ७ | ४ | ६ | ८ | ५ | ११ | ८ | १९ | ३२ | ३ | शु | श | मं | श | मं |
| ३७ | ४५ | १५३ | १ | ५ | ९ | ० | ३ | ९ | ९ | १८ | २४ | १ | बु | मं | चं | सू | रा |
| ३७ | ४७ | ११ | ३ | १ | ३ | ४ | १ | ७ | १३ | १७ | ८८ | ७ | बु | मं | चं | सू | रा |
| ३७ | ४९ | ८५ | ५ | २ | ६ | ८ | ७ | ५ | ५ | १६ | ८० | ५ | बृ | श | मं | रा | श |
| ३९ | ५१ | १५९ | ७ | ३ | ० | ० | ५ | ३ | १३ | १५ | ७२ | ३ | श | श | बृ | श | श |
| ३९ | ५३ | १७ | १ | ६ | ३ | ४ | ३ | १ | १ | १४ | १६ | १ | चं | मं | चं | मं | सू |
| ३९ | ५५ | ९१ | ३ | ७ | ६ | ८ | १ | २६ | ८ | १३ | ८ | २ | बु | श | मं | सू | चं |
| ३७ | ५७ | १६५ | ५ | १ | ० | ० | ७ | २४ | १५ | १२ | १२० | ८ | बृ | शु | बृ | मं | शु |
| ३७ | ५९ | २३ | ७ | ४ | ३ | ४ | ५ | २२ | ४ | ११ | ६४ | ६ | शु | मं | च | श | बृ |
| ३९ | ४१ | ८७ | ७ | ६ | ० | ० | ५ | २१ | ६ | २४ | ६९ | ५ | शु | शु | बृ | श | श |
| ३९ | ४३ | १६५ | ५ | २ | ० | ० | ७ | २४ | १५ | १२ | १२० | ८ | बृ | शु | बृ | रा | शु |
| ३९ | ४५ | २७५ | ३ | ५ | ० | ० | १ | २७ | ६ | २७ | ९६ | ३ | बु | श | बृ | सू | मं |

| दीर्घ. | विस्तार. | पिंड. | आय. | वार. | अंश. | द्रव्य. | ऋण. | नक्षत्र. | तिथि. | य ग. | ग्रहायु. | व्यय. | आयेश. | व्ययेश. | अंशेश. | द्रव्येश. | ऋणेश. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ३९ | ४७ | १०५ | १ | ७ | ० | ० | ३ | ३ | १५ | १५ | १२० | ३ | चं | शु | बृ | मं | मं |
| ३९ | ४९ | १६३ | ७ | २ | ० | ० | ५ | ६ | ९ | ३ | २४ | ६ | शु | शु | बृ | श | बृ |
| ३९ | ५१ | ४५ | ५ | ६ | ० | ० | ७ | ९ | १५ | १८ | १२० | १ | बृ | शु | बृ | रा | सू |
| ३९ | ५३ | १२३ | ३ | १ | ० | ० | १ | १२ | ९ | ६ | २४ | ४ | बु | शु | बृ | सू | बु |
| ३९ | ५५ | २०१ | १ | ३ | ० | ० | ३ | १५ | ३ | २१ | ४८ | ७ | चं | शु | बृ | मं | रा |
| ३९ | ५७ | ६३ | ७ | ७ | ० | ७ | ५ | १८ | ९ | ९ | २४ | २ | शु | शु | बृ | चं | बु |
| ३९ | ५९ | १४१ | ५ | २ | ० | ० | ७ | २१ | ३ | २४ | ४८ | ५ | बृ | शु | बृ | रा | श |
| ३९ | ६१ | ३ | ३ | ६ | ० | ० | १ | २४ | ९ | ११ | २४ | ८ | बु | शु | बृ | सू | शु |
| ४१ | ४५ | ११७ | ५ | ३ | ० | ० | ७ | १८ | ६ | ९ | ९६ | ३ | बृ | शु | बृ | रा | चं |
| ४१ | ४७ | १९९ | ७ | ६ | ६ | ८ | ५ | २६ | २ | १३ | ३२ | २ | शु | श | मं | श | चं |
| ४१ | ४९ | ६५ | १ | ४ | ३ | ४ | ३ | ७ | १० | १७ | ४० | १ | चं | मं | चं | मं | रा |
| ४१ | ५१ | १४७ | ३ | ७ | ० | ० | १ | १५ | ६ | २१ | ९६ | ७ | बु | शु | बृ | सू | रा |
| ४१ | ५३ | १३ | ५ | ५ | ६ | ८ | ७ | २३ | १४ | २५ | १०४ | ७ | बृ | श | मं | रा | रा |
| ४१ | ५५ | ९५ | ७ | १ | ३ | ४ | ५ | ४ | १० | २ | ४० | ४ | शु | मं | चं | श | बु |
| ४१ | ५७ | १७७ | १ | ४ | ० | ० | ३ | १२ | ६ | ६ | ९६ | ४ | चं | शु | बृ | मं | बु |
| ४१ | ५९ | ४३ | ३ | २ | ६ | ८ | १ | २० | १४ | १० | १०४ | ४ | बु | श | मं | सू | बु |
| ४१ | ६१ | १२५ | ५ | ५ | ३ | ४ | ७ | १ | १० | १४ | ४० | १ | बृ | मं | चं | रा | सू |
| ४१ | ६३ | २०७ | ७ | १ | ९ | १२ | ५ | ९ | ६ | १८ | ९ | १ | शु | श | बृ | रा | शु |
| ४१ | ६५ | ७३ | १ | ६ | ६ | ८ | ३ | १७ | १४ | २२ | १०४ | १ | चं | श | मं | मं | सू |
| ४३ | ४५ | २०७ | ७ | १ | ० | ० | ५ | ९ | ६ | १८ | ९६ | १ | श | श | बृ | श | सू |
| ४३ | ४७ | ७७ | ५ | २ | ३ | ७ | ७ | २२ | ११ | १६ | १ | ६ | बृ | मं | शु | रा | बृ |
| ४३ | ४९ | १६३ | ३ | ४ | ६ | ८ | १ | ८ | १४ | ४ | १०४ | ८ | बु | श | मं | सू | शु |
| ४३ | ५१ | ३३ | १ | ३ | ० | ० | ३ | २१ | ९ | १४ | २४ | ५ | चं | शु | बृ | मं | श |
| ४३ | ५३ | ११९ | ७ | ० | ३ | ४ | ५ | ७ | ७ | १७ | ११२ | ७ | शु | मं | चं | श | रा |
| ४३ | ५५ | २०५ | ५ | ४ | ६ | ८ | ७ | २० | ५ | १० | ८० | ४ | बृ | श | मं | रा | बु |
| ४३ | ५७ | ७५ | ३ | ३ | ० | ० | १ | ६ | १५ | ३ | १२० | ६ | बु | शु | बृ | सू | बृ |
| ४३ | ५९ | १६१ | १ | ० | ३ | ४ | ३ | १९ | १३ | २३ | ८८ | ३ | चं | मं | च | मं | मं |
| ४३ | ६१ | ३१ | ७ | ६ | ६ | ८ | ५ | ५ | ८ | १६ | ८ | ५ | शु | शु | मं | श | श |
| ४३ | ६३ | ११७ | ५ | ३ | ० | ० | ७ | १८ | ६ | ९ | ९६ | २ | बृ | शु | बृ | रा | चं |
| ४३ | ६५ | २०३ | ३ | ७ | ३ | ४ | १ | ४ | ४ | २ | ६४ | ७ | बु | मं | चं | सू | बु |

| दैर्घ्य. | विस्तार. | पिंड. | आय. | वार. | अंश. | द्रव्य. | ऋण. | नक्षत्र. | तिथि. | योग. | गृहायु. | व्यय. | आयेश. | व्ययेश. | अंशेश. | द्रव्येश. | ऋणेश. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ४३ | ६७ | ७३ | १ | ६ | ६ | ८ | ३ | १७ | १४ | २२ | १०४ | १ | चं | श | मं | सू | सू |
| ४५ | ४७ | १७१ | ३ | ६ | ० | ० | १ | १८ | ३ | ९ | ४८ | २ | बु | शु | बृ | सू | चं |
| ४५ | ५९ | ४३ | ५ | ६ | ० | ० | ७ | ९ | १५ | १८ | १२० | १ | बृ | श | बृ | रा | सू |
| ४५ | ६१ | १३५ | ७ | ४ | ० | ० | ५ | २७ | १५ | २७ | १२० | ३ | शु | शु | बृ | सू | मं |
| ४५ | ६३ | ९ | १ | ४ | ० | ० | ३ | १८ | १२ | ९ | ७२ | २ | चं | शु | बृ | मं | चं |
| ४५ | ६५ | ९९ | ३ | २ | ० | ० | १ | ९ | १२ | १८ | ७२ | १ | बु | शु | बृ | सू | सू |
| ४५ | ५७ | १८९ | ५ | ७ | १ | ० | ७ | २७ | १२ | २७ | ७२ | ३ | | | | | |
| ४५ | ३९ | ६३ | ७ | ७ | १ | १२ | ५ | २७ | ९ | ९ | २४ | २ | | | | | |
| ४५ | ६१ | १५३ | १ | ५ | १ | १२ | ३ | ९ | ९ | १८ | २४ | १ | | | | | |

## अथाष्टाशीतितमं गृहप्रवेशप्रकरणं प्रारभ्यते ।

तत्प्रवेशं त्रिविधमुक्तं वसिष्ठेन । तदाह—अपूर्वसंज्ञं प्रथमं प्रवेशं यात्रावसाने च सपूर्वसंज्ञम् । द्वंद्वाह्वयश्चाग्निभयादिजातस्त्वेवं प्रवेशस्त्रिविधः प्रदिष्टः ॥ १ ॥ प्रवेशमाह नारदः—प्रवेशो मध्यमो ज्ञेयो सौम्यकार्तिकमासयोः । माघफाल्गुनवैशाखज्येष्ठमासेषु शोभनः ॥ २ ॥ वसिष्ठसंहितायाम्—माघेर्थलाभः प्रथमप्रवेशे पुत्रार्थलाभः खलु फाल्गुने च । चैत्रेर्थहानिर्धनधान्यलाभो वैशाखमासे पशुपुत्रलाभः ॥ ३ ॥ ज्येष्ठेषु मासेषु परेषु नूनं हानिप्रदं पुत्रभयप्रदं च ॥ ४ ॥ ज्योतिःप्रकाशे—गृहारंभोदितैर्मासैर्धिष्ण्ये वारे विशेद्गृहम् । विशेत्सौम्यायने हर्म्यं तृणागारं तु सर्वदा ॥ ५ ॥ वास्तुप्रदीपे—वैशाखमासेपि च फाल्गुनेपि ज्येष्ठे प्रवेशः शुभदो गृहस्य । यात्रानिवृत्तावथवा नवस्य भूमीभुजां द्विर्भवनास्थिरेषु ॥ ६ ॥ अथ जीर्णगृहप्रवेशे विशेषमाह—जीर्णे गृहेग्न्यादिभयान्नवेपि मार्गोर्जयोः श्रावणकेपि सत्स्यात् । वेशोंबुपेज्यानिलवासवेषु नावश्यमस्तादि विचारणात्र ॥ ७ ॥ सामान्यतस्त्रिविधस्यापि प्रवेशस्य विधानादुत्तरायणीयमासास्त्रिविधगृहप्रवेशे शुभाः । दक्षिणायनीयमासाः श्रावणादयस्तु जीर्णगृहप्रवेशविषयाः । अतएव नारदो मार्गकार्तिकयोर्नूतनप्रवेशे मध्यमतामाह । अर्थादेव जीर्णगृहप्रवेशः शुभः । अत्रैव जीर्णे गृहेग्न्यादिभयान्नवेपि आवश्यकादिविचारे शुक्रास्तगुर्वस्तबाल्यवार्द्धकसिंहस्थगुर्वादित्यदोषाणां विचारो नास्ति । अस्तादयः कालदोषाः तथा गृहप्रवेशः कार्यः । सोपि पंचांगमात्रमंगीकृत्य विहितनक्षत्रेष्वेव कार्यः । तथा च ज्योतिःप्रकाशे—नित्ययाने गृहे जीर्णे प्राशने परिधानके । वधूप्रवेशे मांगल्ये न मौढ्यं गुरुशुक्रयोः ॥ ८ ॥ वसिष्ठः—न स प्रवेशो ह्यथ

कालशुद्धिर्नर्दुदुसौ पूर्विकयोः कदाचित् । प्रवेशपंचांगदिने सुलग्ने वास्त्वर्चनं पूर्व-वदेव कार्यम् ॥ ९ ॥ क्रूरग्रहाधिष्ठितविद्धभं च विवर्जनीयं त्रिविधप्रवेशे । शुक्ले च पक्षे सुतरां प्रवृद्ध्यै कृष्णे च यावद्दशमी च यावत् ॥ १० ॥ चित्रोत्तरा धातृशशांकमित्रवस्वंत्यवारीश्वरभेषु नूनम् । आयुर्धनारोग्यसुपुत्रपौत्रसुकीर्तिदः स्यात्त्रिविध प्रवेशे ॥ ११ ॥ बृहद्योगयात्रायां वराहः–पौष्णे धनिष्ठास्वथ वारुणेषु स्वायंभुवर्क्षेषु त्रिषूत्तरासु । अक्षीणचंद्रे शुभवासरे च तिथावरिक्ते च गृहप्रवेशः ॥ १२ ॥ शारंगधरः–शुभप्रवेशो देवेज्यशुक्रयोर्दृश्यमानयोः । वस्वीज्यवारुणस्वातीहस्तमैत्रास्थिरोडुषु ॥ १३ ॥ व्यर्कारवारे तिथिषु रिक्तामावर्जितेषु च । दिवा वा यदि वा रात्रौ प्रवेशो मंगलप्रदः ॥ १४ ॥ वृत्तशते–पुष्ये मैत्रे मृगे स्वात्यां ध्रुवे त्वाष्ट्रे च पूषभे । वासरे वारुणे शस्ते नवालयनिवेशने ॥ १५ ॥ वैद्यनाथः–त्र्युत्तरे रोहिणीयुग्मे रेवत्यां वासवद्वये । पुष्ये त्वाष्ट्रद्वयेमैत्रे प्रवेशोऽभिहतः करे ॥ १६ ॥ रत्नमालायाम्–पुष्ये धनिष्ठा मृदुवायुमूलस्थिराश्विनी विष्णुजलेशहस्ते । एषु प्रवेशो बहुपुत्रपौत्रैः चिरंवसेद्भूरिसमागमैश्च ॥ १७ ॥ अथ लग्नशुद्ध्यादिकम् । रामदैवज्ञः–त्रिकोणकेंद्रायधनत्रिगैः शुभैर्लग्ने त्रिषष्ठायगतैश्च पापकैः । शुद्धांबुरन्ध्रे विजनुर्भे मृत्यौ व्यर्कारिक्ता चरदर्शे चैत्रे ॥ १८ ॥ अग्रेसुपूर्णं कलशं द्विजांश्च कृत्वा विशुद्धभकूटशुद्धम् ॥ १९ ॥ वसिष्ठः–कृत्वा शुक्रं पृष्ठतो वामतोर्कं विप्रान्पूज्यानग्रतः पूर्णकुंभम् । रम्यं हर्म्यं तोरणं स्रग्वितानैः सम्यक् स्त्रीभिर्गीतवाद्यैः विशेत्तत् ॥ २० ॥ श्रीपतिः–कृत्वा विप्रान्सजलकलशं चाग्रतो वामतोर्कं स्नातः स्रग्वी विमलवसनो मंगलैर्वेदघोषैः । व्यस्तैर्यात्रा कथितशकुनैर्द्वारमार्गेण राजा हर्म्यं पुष्पप्रकररुचिरं तोरणाढ्यं विशेच्च ॥ २१ ॥ वसिष्ठः–राशिकूटादिकं सर्वं दंपत्योरिव चिंतयेत् ॥ २२ ॥ वामगतार्कज्ञाने पूर्वादिमुखे गृहप्रवेशम् । रामदैवज्ञः–वामो रविर्मृत्युसुतार्थलाभतोर्के पंचसु प्राग्वदनादि मंदिरे । पूर्णातिथौ प्राग्वदने गृहे शुभो नंदादिके याम्यजलोत्तरानने ॥ २३ ॥ उक्तंच–रंध्रयात्पुत्राद्धनाद्दारात्पंचस्वर्के स्थिते क्रमात् । पूर्वाशादिमुखं गेहं विशेद्वामो भवेद्यतः ॥ २४ ॥ अथ प्रवेशे कलशवास्तुचक्रमाह । रामः–चक्रेभूरविभात्प्रवेशसमये कुंभेग्निदाहः कृतः प्राच्यामुद्वसनं कृतायमगता लाभः कृतः पश्चिमे । श्रीर्वेदा कलिरुत्तरे युगमिता गर्भे विनाशो गुदे रामास्थैर्यमत स्थिरत्वमनलः कंठ भवेत्सर्वदा ॥ २५ ॥ ॥ ज्योतिःप्रकाशे–भूवेदपंचकात्रेस्त्रिः प्रवेशे कलशेर्कभात् । मृतिगातिर्धनं श्रीः स्याद्वैरं रुक् स्थिरता सुखम् ॥ २६ ॥ अन्यत्रापि–प्रवेशे कलशेर्कर्क्षात्पंचनागाष्ट षट् क्रमात् । अशुभं च शुभं ज्ञेयमशुभं च शुभं तथा ॥ २७ ॥ चक्रावलोकनात् । यद्राशिगोर्कः खलु तद्दिशिष्याद्राहुः सदा गच्छति मासि मासि । द्विरागमे वापि गृहप्रवेशे राहुः प्रशस्तः किल दक्षपृष्ठे ॥ २८ ॥ अथ कलशचक्रे शुभस्थानत्वं याते सत्वे विहितनक्षत्राणां परिग्रहो युक्तः । तत्रापि यद्दिङ्मुखे प्रवेशे विधिस्थिते दिङ्नक्षत्रापरिग्रहः । यथा पूर्वस्यां प्रवेशे विधिस्थिते

रोहिणी मृगो वा ग्राह्यः । दक्षिणमुखगृहप्रवेशे उत्तराफाल्गुनी चित्रे एवं माभिमुखे अनुराधोत्तराषाढे उत्तराभिमुखे उत्तराभाद्रपदरेवत्यौ ग्राह्ये । इति लितोर्थः । अथ प्रवेशे कर्तव्यतामाह । एवं सुलग्ने स्वगृहं प्रविश्य वितान श्रुतिघोषयुक्तम् । शिल्पज्ञदैवज्ञविधिज्ञपौरान्राजार्चयेद्ध भूमिहिरण्यवस्त्रैः ॥ २ नारदः–अकपाटमनाच्छन्नमदत्तबलिभोजनम् । गृहं न प्रविशेदेव विपदामाक तत ॥ ३० ॥ अथ यानविवर्तितनरस्य प्रवेशमुहूर्तमाह । सवासव मृदुध्रुवेष्वथ स्थिरोदये शुद्धलयांत्यकटक । न द्वादशी पक्षति दर्शसप्तमी रि रिक्ताजदिनेष्वतंत्रकृत ॥ ३१ ॥ गुरूशनोर्ज्ञेंदुदिनेषु वारुणानिलश्रविष्ठेज्य स्थिरोडुभिः । यातावरिक्तान्यकुयोगविष्टचभैर्नृभाजिलग्ने गमनस्थलं विशेत् ॥ ३ वृत्तशते–भूपानां मृदुभिर्ध्रुवैः प्रविशनं यात्रानिवृत्तौ शुभं स्याद्भूयो गमनं च घुभैरुद्रैर्मृतिर्भूपतेः । तीक्ष्णैर्भूपकुमारकस्य नृपतेः पत्न्या विशाखाह्वये धि हव्यभुजो गृहं प्रविशतां संदह्यते वह्निना ॥ ३३ ॥ वास्तुप्रदीपे–वैशाखमासो फाल्गुनेपि ज्येष्ठे प्रवेशः शुभदो गृहस्य । यात्रानिवृत्तावथवा नवस्य भूमीभुजां वनास्थिरेषु ॥ ३४ ॥ जन्मर्क्षलग्नोपचयोदयेषु मृदुध्रुवर्क्षैः शुभदः प्रवेशः । उग्र दारुणभैः कुमारो राज्ञी विशाखासु विनाशमेति ॥ ३५ ॥ इति श्रीज्योतिर्विद्ग त्तात्मजरामदीनकृते संग्रहे बृहद्दैवज्ञरंजने अष्टाशीतितमं गृहप्रवेशप्रकरणं समा

## अथ स्ववंशवर्णनं प्रारभ्यते

आसीद्भरदाशपुर्यामपिहरपुरादुत्तरे योजनानामंतर्वाणाख्यसंख्ये गणकवर श्रद्धया रामशर्मा । वंशे पांडेयख्याते सकलगुणनिधिः शास्त्रविद्वेदपाठी त ज्योतिर्वेत्ता प्रभवति सततं श्रीगयादत्तशर्मा ॥ १ ॥ जिल्ले आजमसंज्ञके प वेलादउत्सावदे ग्रामस्याद्भरदाशनामकपुरे श्रीकाशिराजाश्रितः । वेदेष्वंकंकु १ संमिते नृपशके श्रीरामदीनः सुधीर्ज्योतिःशास्त्रविचारसारग्रथितः ज्योतिर्विदां प ॥ २ ॥ तुष्यंति सुजना बुध्वा विशेषान्मदुदूरितान् । अबोधेन हसंतो मां तोषमे दुर्जनाः ॥ ३ ॥ नहि तोषं विना हास्यमुत्पद्यते इति भावः । श्रीभगवतीप्रसादस् मत्यत्रापि संग्रहे । जम्बवारिग्रामवासीसोजौनपुर्याख्यमंडले ॥ ४ ॥ इति श्रीज्य विद्गयादत्तात्मज रामदीनकृते संग्रहे बृहद्दैवज्ञरंजने स्ववंशानुवर्णनं समाप्तम् ।

समाप्तोयं ग्रन्थः ।


## पुस्तक मिलनेका ठिकाना

गङ्गाविष्णु श्रीकृष्णदास,
"लक्ष्मीवेंकटेश्वर" स्टाम् प्रेस,
कल्याण–मुंबइ.

खेमराज श्रीकृष्णदास,
"श्रीवेङ्कटेश्वर" स्टीम् प्रेस,
खेतवाडी–मुंबई.